॥ महाकविश्रीहर्षविरचितम् ॥

# ॥ नैषध महाकाव्यम् ॥

नारायणपण्डितकृतप्रकाशाख्यया

टीकया समेतम्

उत्तरार्धम्

रू श्रीनाथरुचिवरेण

सम्पादितम्

तच्च

शाके १८१२ वत्सरे १९४७

श्रीकाश्यां

बाबू कीलेश्वरीसहस्याज्ञया

भैमप्रभाकराख्य यन्त्रालये

{ मुद्रितम् }

मि० आषाढ शुदि १५

## द्वादशः सर्गः ।

---

ॐ गणेशाय नमः ।

प्रियाह्रियालभ्य विलम्बमाविला विलासिनः कु
ण्डिनमण्डनायितं । समाजमाजग्मुरथो रथो
त्तमास्तमासमुद्रादपरेपरे नृपाः ॥ १ ॥

इदानीं नूतनसमागतराजवर्णनार्थं द्वादशं सर्गमारभते ॥ प्रियेति ॥ अथो अनन्तरं अपरे अन्ये नृपा आसमुद्रात् समुद्रमवधीकृत्य दिगन्तेभ्यः सकाशादित्यर्थः । तं कुण्डिनस्य मण्डनायितं भूषणवदाचरितमलङ्कारकं समाजं स्वयम्वरसभामाजग्मुः । किम्भूताः प्रियाभ्यः स्वनायिकाभ्यः सकाशाद्या ह्रीः तासामनुरागजनितमुखदाक्षिण्येन कृत्वा विलम्बं स्थैर्यमालभ्य आविलाः व्याकुलान्तःकरणाः । प्रियामुखदाक्षिण्यानुरोधेनास्माकं विलम्बे जाते भैमीस्वयम्वरो जातो नाऽभूदिति बुद्ध्या नातिमोरसाहाः । तथा विलासिनः शृङ्गारभङ्गीसहिताः । तथा रथोत्तमाः श्रेष्ठरथा इत्यनेन विलम्बे जातेऽपि शीघ्रागमनं सूचितं । विलासिनः वीकपलसेति घिनुण् ( पा० ३ । २ । १४३ । ) रथैरुत्तमा इति समासः । अपरेऽपरे । वीप्सायां द्विरुक्तिः ॥ १ ॥

ततः स भैम्या ववृते वृते नृपैर्विनिःश्वसद्भिः सद
सि स्वयम्वरः । चिरागतैस्तर्किततद्विरागितैः स्फु
रद्भिरानन्दमहार्णवैर्नवैः ॥ २ ॥

तत इति । ततः सदसि समाजे स भैम्याः स्वयम्वरो ववृते । किम्भूते सदसि । भैम्याः स्वस्मिन् वैराग्येण विनिःश्वसद्भिर्दीर्घं मुक्तश्वासैश्चिरागतैः पूर्वमायातैर्नृपैर्वृते । तथा तर्किता ऊहितास्तेषु पूर्वा

गतेषु राजसु विरागिता भर्पाद्धैम्या यैस्तै । स्फुरद्भि शृङ्गारभङ्ग्या प्रकाशमानै । तथा एतेन वृतान् स्वयवरशेषं मासानस्मानिय प्रायेण घरिष्यतीति बद्धा आनन्दस्य महार्णवैरगाधसमुद्रै प्रमुदिततरैनंपैस्त-त्कालमागतैर्नृपैर्वृ॑ते ॥ २ ॥

चलत्पदस्तत्पदयन्त्रणेङ्गितस्फुटाशयामासयति स्म राजके । श्रमं गता यानगतापि भीमजेत्यु दीर्य धुर्यः,कपटाज्जनीजनः ॥ ३ ॥

चलदिति । चलन्ति पदानि यस्य पुरस्तात् गच्छन् धुर वहति धुर्यं शिविकादण्डवाही जन· जनीं भैमी राजके राजसङ्घमध्ये आसयति स्म अस्थापयत् । किं कृत्वा । यानगतापि शिविकारोहणेनापि गमने सत्यपि इयं भैमी श्रमङ्गता नि सहा जातेति कपटाद्व्याजाद् उदीर्य उक्त्वा । किम्भूता शिविका पटान्तरितेन सत्पदेन भैमीचरणेन य धन्त्रण यन्त्रणा या पीडन धुर्यजनस्य तदेव यदिङ्गित अवस्थापनसूचिका चेष्टा तेन स्फुट आशयो नयनपदिद्रष्टामात्रविषयोऽभिप्रायो यस्यास्ता । जनीं । जायतेऽस्या गर्भ इति जनिघसिभ्या चेति औणादिक इ प्रत्यये जनिवध्योरिति ( पा० ७ । ३ । ३५ । ) वृद्धिनिषेधे कृदिकारादिनि (पा० ४ । १ । ४१ । सू० वार्तिकेन ङीप् ॥ ३ ॥

नृपानुपक्रम्य विभूषितासनान् सनातनी सा सुपुवे सरस्वती । विहारमारभ्य सरस्वतीः सुधा सरःस्वतीवार्द्रतनूरनूदिताः ॥ ४ ॥

नृपानिति । सा सनातनी नित्या सरस्वती देवता विभूषित स्वीयसौन्दर्ये णालङ्कृतमासन यैस्तान्नृपानुपक्रम्योद्दिश्य सरस्वतीर्वाच सुपुवे उवाचेत्यर्थः । किम्भूता वाच । सुधासरस्सु अमृतसमुद्रेषु विहार जलक्रीडामारभ्य कृत्वाऽतीवातितरामार्द्रतनूः । तथाऽनु पश्चाद्दिवत्वर्थे च उदिताः तस्माभिर्गता । अति मधुरा इत्यर्थ । समाभवा । अत्यपत्यादस्यु स्नुटष ॥ ४ ॥

**वृणीष्व वर्णेन सुवर्णकेतकीप्रसूनपर्णा*दृतुपर्ण**
**माहृतं निजामयोध्यामपि पावनीमयं भवन्मयो**
**ध्यायति नावनीपतिः ॥ ५ ॥**

वृणीष्वेति । गौरत्वलक्षणेन वर्णेन सुवर्णकेतकीप्रसूनस्य गौरत्वलक्षणाद्वर्णादादृतं प्रेमास्पदीकृतं तस्मादधिकं वा अतिगौरं सुकुमारशरीरं ऋतुपर्णनामानं नृपं त्वं वृणीष्व । अयमवनीपतिः भवन्मयस्त्वदेकचित्तः सन् निजामात्मीयां परम्परायातां पावनीं पवित्रीकरणशीलामयोध्यां मुक्तिपुरीमपि न ध्यायति न स्मरति । परमानन्दरूपत्वान्मुक्तेस्सकाशादपि तव प्राप्तिरेतस्याधिकेत्यर्थः । अन्योऽपि विलासी गुणवतीमपि निजां प्रियामचिन्तयन्नन्यामेव ध्यायतीत्युक्तिः । त्वय्यतितरामनुरक्तोऽयमेतं वृणीष्वेति भावः । वर्णात् । पञ्चमी विभक्ते इति (पा० २।३।४२।) पञ्चमी । भवन्मयः । सर्वनाम्नो वृत्तिमात्रे स्त्रियाः पुंवत् (पा० ६।३।३४।) सू० वार्तिकेन पुंवद्भावः ॥ ५ ॥

**न पीयतां नाम चकोरजिह्वया कथञ्चिदेतन्मुख**
**चन्द्रचन्द्रिका । इमां किमाचामयसे न चक्षुषी**
**चिरं चकोरस्य भवन्मुखस्पृशी ॥ ६ ॥**

नेति । हे भैमि चकोरजिह्वया एतस्य ऋतुपर्णस्य मुखमेव चन्द्रस्तस्य चन्द्रिका प्रसन्नतारूपा ज्योत्स्ना कथञ्चित्केनापि प्रकारेण न पीयतां नाम । चकोरजिह्वया सत्य चन्द्रचन्द्रिका पीयते । इयं त्वलीकमुखचन्द्रिकेति पीयतां मा वा । अत्रास्माकमौदासीन्यमित्यर्थः । परन्तु चिरं भवन्मुखस्पृशी त्वदीयमुखसेवनतत्परे चकोरस्य चक्षुषी इमां एतन्मुखचन्द्रचन्द्रिकां किमिति न आचामयसे पाययसे अपि तु पाययस्व । अलीकत्वात्तादृग्रसाभावात् चकोरजिह्वया पानेऽकृतेऽपि तथा सुन्दरत्वात् वर्णनायामस्मदादीनामशक्तत्वेऽपि तादृगाह्लादकत्वस्य सौन्दर्यस्य च प्रत्यक्षेण द्रष्टुं शक्यत्वादेतन्मुखचन्द्रचन्द्रिका चक्षुषी पाययस्वेत्यर्थः । अथ चकोरजिह्वया भवन्मुखसेवया अकृतत्वादेतन्मुखचन्द्रचन्द्रिकापानं कर्तुमशक्यमिति युक्तं । तदीयचक्षुर्भ्यां तु चिरकालमु-

* वर्णादिति टीकासम्मतः पाठः ।

त्तमस्य भवन्मुखस्य सेवनात् तयोरेतन्मुखचन्द्रचन्द्रिकापानं युक्तं । उत्तमसेवया हि दुष्प्रापमपि वस्तु सुप्रापं भवतीत्याशयः । चिरकालसे- तन्मुखकान्तिं सादरं किं न पश्यस्यपि तु पश्यैनं पिबेतिभावः । यद्वा जिह्वाया अल्पएवास्वादो सामर्थ्यादेतन्मुखचन्द्रचन्द्रिकाया अ- तितुच्छत्वाच्चकोरजिह्वयेव कथञ्चिन्न पीयतां नाम । त्वन्मुखस्पृशोश्च- कोरनेत्रयोस्तु पानं युक्तमल्पीयसोरपि नेत्रयोर्भूयसी विषयस्य ग्रहणे सामर्थ्यसद्भावात् किं पुनर्विशालयोरनयोरिति भावः । एते चकोरस्येव नेत्रे भवन्मुखं स्पृशत इति नेत्रयोरमणीयत्वं चन्द्रिकापानयोग्यत्वं वि- लोकनचातुर्यं च सूचितं । अत्र चक्षुः प्रत्यवसानार्थत्वाद्गतिबुद्धीत्यादि- ना (पा० १ । ४ । ५२ ।) चक्षुषोः कर्मत्वं । णिचश्चेति (पा० १ । ३ । ७४ ।) कर्त्रभिप्राये क्रियाफलविवक्षायामात्मनेपदे प्राप्तेऽपि निगरणच्चा- न्निगरणचलनार्थेभ्यश्चेति (पा० १ । ३ । ८७ । परस्मैपदप्राप्तेराचामयस इति चिन्त्य । एवं सति चकोरस्य चक्षुषी चिरं भवन्मुखस्पृशी वर्त्तेते। अतः त्वन्मुखसेवां बहुकालं कुर्वीत इत्यर्थः । अत एवैनामेतन्मुखच- न्द्रचन्द्रिकां किं नाचामयसे सामर्थ्याच्चक्षुर्भ्यामिति शेषः । इति समा- धानं । आचमनमाचामः सोऽस्या अस्तीति आचामवतीं करोतीत्यर्थे तत्करोतीति (पा० ३ । १ । २६ ।) सूत्रस्थवार्त्तिकण्यन्तस्य लक्षणप्रतिप- दोक्तपरिभाषया प्रतिपदोक्तप्रत्यवसानाभावात् निगरणादि (पा० १ । ३ । ८७ ।) सूत्रेणानुवृत्तपरस्मैपदसंज्ञया परस्मैपदस्य विधानात्संज्ञा- पूर्विका विधिरनित्य इति परिभाषयात्र परस्मैपदं न भवतीति वा । आचाम इति न कम्यमिचमाम् इति मित्वनिषेधाद्ध्रस्वत्वाभाव ॥ ६ ॥

**अपां विहारे तव हारविभ्रमं करोतु नीरे पृष-**
**दुत्करस्तरन् । कठोरपीनोच्चकुचद्वयीतटत्रुटत्तरः**
**सारवसारवोर्म्मिजः ॥ ७ ॥**

अपामिति । हे भैमि आरवेण सहिताः सारवाः सरवाश्च सारवाः स्वरवसुमा ऊर्मयस्तेभ्यो जातः पृषदुत्करो बिन्दुसमूहः अपां विहारे जलेन सह जलक्रीडायां सत्यां तव हारविभ्रमं त्वामन्यस्थिहारविला

सं करोतु । किम्भूतः । नीरे तरन् प्लवमानः । तथा कठोराऽतिकठिना पीना उच्चा त्वदीया कुचद्वयी स्तनद्वयी तस्यास्तटे परिसरे त्रुटत्तर अतिशयेन त्रुट्यन् विशीर्यमाणतर । जलक्रीडावशाद्विच्छिन्नस्त्वदीया मुक्ताहार इव शोभतां । अथ च पश्यतो लोकस्य भैमीहारः किमयमिति विशिष्टां भ्रान्तिं जनयतु । विगतहारे देशे हारविलास इति विरोधश्च । अथ च पृषदुत्करो शरीरमद्दु क्रीडाप्रदेशे क्रीडां करोत्विति युक्तं । मत्स्यक्रीडाप्राप्त्यर्थं मन वृणीष्वेतिभावः । देविकायां सरव्यां च भवेद्विकसारवाविल्यसरः । दाविदनायनादिसूत्रेण (पा० ६ । ४ । १७४ ।) साधुः ॥ ७ ॥

अखानि सिन्धुः समपूरि गङ्गया कुले किलाऽस्य प्रसभं स भंत्स्यते । विलङ्घ्यते चास्य यशः शतैरहो सतां महत्सम्मुखधावि पौरुषं ॥ ८ ॥

अखानीति । अस्य कुले वंशे पूर्वजैः सगरपुत्रैः इन्द्रनीताश्वान्वेषणार्थं सिन्धुः समुद्रः पातालपर्यन्तं अखानि खातः । कपिलशापदग्धानां तेषामेवोद्धरणार्थं भगीरथेनानीतया गङ्गया समपूरि पूर्णीकृतः । तथा श्रीरघुनाथेन रावणवधार्थं प्रसभं हठेन स सिन्धुः भंत्स्यते बन्धनं नेष्यते किलेति पुराणप्रसिद्धमेतत । स एवेदानीं अस्य यशःशतैः विलङ्घ्यते च । महं समुद्रमेव प्रति पौरुष किमिति कृतवन्त इत्यत आह अहो युक्तमेतत् । सतां महतां पौरुष महतामेव सम्मुखं धावति प्रसरतीत्येवंशील । कुद्रास् कृपयोपेक्षत एवमिधा अस्य पूर्वजाः । श्रीरघुनाथस्य यस्मिन् वंशे समुत्पत्स्यते तस्मिन् वंशे समुत्पन्नोऽयं अस्य यशांसि समुद्रपारमामोति एन वृणीष्वेति भाव । भंत्स्यते । बधं कर्मणि लृटि बभ्रातेश्चलं च रूप ॥ ८ ॥

एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनां । एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्त्तीः खटिकाः क्षिणोति ॥ ९ ॥

एतदिति । एतस्य यशस एव क्षीरधेर्यः पूरः तं गाहते एवंशील एतदीययशोवर्णकं कवीनां वचनं अगाधे अतलस्पर्शे स्थाने पतति नि मज्जति । स्तोतुमसामर्थ्याद्वागगोचरोऽस्य यशःसमुद्र इत्यर्थः । अ न्योऽपि समुद्रः प्रवाहावगाही अगाधे ब्रुडति । तथा एतस्य शौर्या दीनां गुणानां गणनार्थं अङ्कपातोऽङ्कविन्यासः प्रत्यर्थिनां वैरिणां कीर्त्ते रेव खटिका. क्षिणोति हिनस्ति । यदङ्कविन्यासे हि खटिकाक्षयो भवति । एतद्गुणा अप्यतिभूयस्त्वाद्गणयितुमशक्याः । एतद्गुणानां पुर स्तादरिकीर्त्तिर्न प्रतिभासत इत्यर्थः । एनं वृणीष्वेत्यर्थः । क्षिणोति । लघूपधत्वात् (पा० ७ । ३ । ८६ ।) गुणप्रसक्तावपि सञ्ज्ञापूर्वकविधेर नित्यत्वाद्गुणाभाव. ॥ ९ ॥

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यताम
ध्युष्टापि हि कोटिरस्य समरे रोमाणि रुरवां
कुराः । नीतः संयति बन्दिभिः श्रुतिपथं यन्ना
मवर्णावलीमन्त्रः स्तम्भयति प्रतिक्षिति*भुजां
दोस्तम्भकुम्भीनसान् ॥ १० ॥

भास्वदिति । हे भैमि भास्वतो वंशस्तस्य करीरतां तदङ्कुरत्वं दधा नः सूर्यवंशोत्पन्नो यशःस्वी वर्त्तमानः अथ च मुक्तायुक्तत्वाद्भास्वा न्यो वंशो वेणुस्तदङ्कुरत्व दधदतितेजस्वी अयमृतुपर्णनामा वीरः कथं केन प्रकारेण कथ्यतां वर्ण्यतां अपितु वर्णयितुं न शक्यत इत्यर्थः । हि यस्मात समरे यस्य मानवस्य अध्युष्टापि सार्द्धत्रयोति प्रसिद्धापि कोटिः सार्द्धत्रिकोटीनि मानुषशरीरे स्थितानि रोमाणि सर्वस्यान्तर्थी ररसांशमेकस्याङ्कुराश्चाङ्कुराः वीररसोत्साहेन सङ्ग्रामे रोमाञ्चयुक्तोऽयं भवतीत्यर्थ. । तथा अस्य नामवर्णावलीमन्त्रः ऋतुपर्ण इति नामाक्ष रपङ्क्तिरूपो मन्त्रः संयति बन्दिभिः श्रुतिपथं कर्णपथं नीतः प्रापि तः सन् प्रतिक्षितिभुजां रिपूणां दोषां बाहव एव स्तम्भास्त एव की र्त्यादिरूपा ये कुम्भीनसाः सर्पास्तान् स्तम्भयति । एतन्नामनाम्नाकर्ण नाद्रिपूणां बाहवो युद्धाय न प्रभवन्तीत्यर्थ. । सिद्धवैदिकम

* प्रतिनृपाणामिति टीकाकृतः पाठान्तरः ।

त्रयधवाम्बु फणिनां स्तम्भा भवति । अभ्युदृतेति मार्द्वकोटित्रयस्य मञ्जा । अङ्कुरो नित्यपुलिङ्गः । कृशानिसो लेलिहान इत्यमर. ॥ १० ॥

ताट्टग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्त्तृ
तां शङ्के यत्प्रतिविम्बमम्बुधिपय.पूरोदरे वाड
वः । व्योमव्यापिविपक्षराजकयशस्तारा: परा
भावुकः कासामस्य न स प्रतापतपनः पारदृगि
रां गाहते ॥ ११ ॥

तादृगिति । हे भैमि अस्य राज्ञ. स प्रताप एव तपन सूर्यं कासाङ्गिरा ध्वर परतीर न गाहते । कस्यापि वर्णयितुमशक्यइत्यर्थः । स क । अहं तादृग्दीर्घं चतुर्दशमन्वन्तरपरिमितत्वान्महापरिमाण विरिञ्चिवासर ब्रह्मदिन तस्य विधौ करणे यस्य यदीयप्रतापतेजोरूपस्य सूर्यस्य कर्तृता निर्मातृता जानामि । सूर्यस्य दिवसकर्तृत्वाद् ब्राह्ममपि दिन दिनत्वात् सूर्येण कर्त्तव्य तच्चतुर्युगसहस्रपरिमाणत्वादेतद्दिनन्निर्मात्रा सूर्येण निर्मातुमशक्यमिति तद्विलक्षणेन चिरकालस्थायिनाऽतिदीर्घेणैतदीयप्रतापतपनेनैव निर्मातु शक्य न त्वन्येनेत्यहमन्ये इत्यर्थः । तथा अहं अम्बुधिपयस पूरे प्रवाहमध्ये वाडवो वडवानल यस्यैतदीयप्रतापतपनस्य प्रतिविम्बरूप इति शङ्के । जलानलयो सहावस्थानविरोधात् वाडवोऽग्निर्न भवति किन्तु प्रतापसूर्यस्य सलिले प्रतिविम्ब भवति । किम्भूत स. । व्योमव्यापिन्या विपक्षराजकस्य रिपुराजकस्याल्पत्वाद्यशांस्येव तारा नक्षत्राणि स्वप्रभावेण पराभावुक तिरस्कर्ता । सूर्येणापि व्योमव्यापिभिरिचन्द्रस्य चान्द्रकीरूप यशो नक्षत्राणि च पराभूयन्ते । एतत्प्रतापसूर्यस्य पुरस्ताद्वैरियशांसि न प्रसरन्तीत्यर्थः । पराभावुकः । लषपतपदस्थाभूवृषेत्युकञ् ३ । २ । १५४ ॥ तद्योगे न लोकेति षष्ठीनिषेधात् (पा० २ । ३ । ६९ ।) तारा इति द्वितीया ॥ ११ ॥

द्वेप्याकीर्त्तिकलिन्दशैलसुतया नद्याऽस्य यद्दोर्द्वयी

कीर्त्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे ।
तत्तस्मिन्विनिमज्य बाहुजभटैरारम्भि रम्भापरीर
म्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १२ ॥

द्वयेति । अस्य राज्ञः दोर्द्वयी बाहुद्वयं तया जनिता कीर्त्तिश्रेणिः कीर्त्तिपरम्परा तन्मयी तद्रूपा श्वेतत्वाद्गङ्गा द्विष्याणां रिपूणां पलायनाज्जनिताऽकीर्त्तिः सैव कलिन्दशैलसुता यमुना तया नद्या सह यस्मात् रणप्राङ्गणे सङ्ग्रामभूमौ समागममगात् संयोगं प्राप तत्तस्मात् कारणात् तस्मिन् प्रयागसञ्ज्ञके गङ्गायमुनासङ्गमे बाहुजभटैः क्षत्रिययोधैः शूरतरैः विशेषेण निमज्य तत्क्षणात् देहं त्यक्त्वा रम्भापरीरम्भानन्दस्य निकेते नन्दनवने देवोद्याने क्रीडायां यः आदर आसक्तिस्तस्या डम्बरो बाहुल्यं आरम्भि आरब्धं । योऽपि प्रयागे निमज्जति सोऽपि सितासिते* सरिते इत्यादि श्रुत्या नन्दनवने रम्भाद्यप्सरोभिः सह क्रीडति । बाहुजः क्षत्रियो विराडित्यमरः । आरम्भि । रभेरशब्लिटोरिति नुम् (पा० ७ । १ । ६३ ।) परीरम्भेति । उपसर्गस्य घञीति (पा० ६ । ३ । १२२) दीर्घः ॥ १२ ॥

इति श्रुतिस्वादिततद्गुणस्तुतिः* सरस्वतीवाङ्मय
विस्मयोत्थया । शिरस्तिरःकम्पनयैव भीमजा
न तं मनोरन्वयमन्वमन्यत ॥ १३ ॥

इतीति । भीमजा शिरसस्तिरःकम्पनयैव वक्रचालनयैव कृत्वा तं मनोरन्वयं सूर्यपुत्रं मनुवंशसमुत्पन्नमृतुपर्णं नान्वमन्यत नाङ्गीचकार । किम्भूता । इति पूर्वोक्तप्रकारेण श्रुतिभ्यां कर्णाभ्यां स्वादिता सादरमाकर्णिता तद्गुणस्तुतिर्यया । किम्भूतया । सरस्वत्या वाङ्मयेन जनितो विस्मय आश्चर्यं तस्मादुत्थयोत्पन्नया । शिरःकम्पनस्योभयसूचक

---

* सितासिते सरिते यत्र सङ्गथे तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ॥ इति काचिदृक् ॥

* गुणस्तुतिरिति पाठान्तरः । सं० मु० पु० ।

त्वादाश्चर्याभिनयकृतः कम्पस्तन्निराकरणार्थो जात इत्यर्थः । अस्य मनुवंशत्वात्स्वस्य सोमवंशे साभिलाषत्वात् कन्याभिलषितसौन्दर्याद्यवस्थानाद्वाऽननुरागः ॥ १३ ॥

युवान्तरं सा वचसामधीश्वरा स्वरामृतन्यक्कृतमत्तकोकिला । शशंस संसक्तकरैव तद्दिशा निशाकरज्ञातिमुखीमिमां प्रति ॥ १४ ॥

युवेति । सा वचसामधीश्वरा सरस्वती निशाकरस्य ज्ञातिः सदृशं मुखं यस्यास्तां चन्द्राननामिमां प्रति युवान्तरं अन्यं वरं शशंस वर्णयामास । किंभूता । स्वरामृतेन न्यक्कृतस्तिरस्कृतः मत्तो वसन्तहृष्टः कोकिलो यया । तथा हि तद्दिशा यस्यां दिशि वर्णनीयो युवा तिष्ठति तद्दिशा तदीयया दिशाऽभिमुख्येन संसक्तकरेव सम्बद्धहस्ता हस्तेन स निर्दिश्येति यावत् । सरस्वतीं वाणीं माधुर्य्यगुणेनैवाशृणोन्नतु राजन्यनुरागेणेति स्वरामृतपदेन सूचितं । ईश्वरेति । स्थेशेति वरच् (पा० ३ । २ । १७५ ।) अथ मार्गेश्वरीत्यादेः कथं साधुत्वं । अन्येभ्योऽपि दृश्यन्त इति (पा० ३ । २ । ७५ ।) ईशेर्वनिपि ङीब्रयोः सतोरित्यवेहि ॥ १४ ॥

न पाण्ड्यभूमण्डनमेणलोचने विलोचनेनापि नृपं पिपासति । शशिप्रकाशाननमेनमीक्षितुं तरङ्गयाऽपाङ्गदिशा दृशस्त्विषः ॥ १५ ॥

नेति । हे एणलोचने मृगाक्षि त्वं पाण्ड्यभूमण्डनं नेत्राभ्यां न पिपाससि परमेकेनापि न पाण्ड्यदेशस्य चूडामणिं मुकुटरत्नभूतं नृपं पिपासस्यपि न पश्यसि तावत् पातुमिच्छस्यपि नेत्यपरेर्थः । अनुचितमेतदित्यर्थः । अथवा तावत्र पिपाससि परं विलोचनेनापि न पिपाससीति द्वाभ्यां नेत्राभ्यां न पिपाससि परमेकेनापि न पिपाससीति वा । तस्मात् त्वं शशिवत् प्रकाशं प्रसन्नं आननं यस्य तमेनं नृपं ईक्षितुं दृशस्त्विषः नेत्ररश्मीन् अपाङ्गदिशा नेत्रप्रान्तदेशेन तरङ्गय अतिसुन्दरमेनं कटाक्षैर्विलोकयेति भावः ॥ १५ ॥

भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्त्तुमभ्यासप रम्परापरा । अहो महावंशममुं समाश्रिता स कौतुकं नृत्यति कीर्त्तिनर्त्तकी ॥ १६ ॥

भुवीति । हे भैमि महावंशं महाकुलीनं अमुं समाश्रिता एतदीयेति यावत् एवंविधा कीर्त्तिरूपा नर्त्तकी सकौतुकं यथा तथा धनाभिलाषराहित्येन नृत्यति अहो आश्चर्यं लोकगत कौतुकं नर्त्तकीगतमिति न पौनरुक्तं । किम्भूता । पूर्वं भुवि भ्रमित्वा सकलं भूमण्डलं व्याप्येत्यर्थः । पश्चादनवलम्बं यथा तथाम्बरे गगने विहर्त्तुं चरणाभ्यासपरम्पराया परा आसक्ताऽभ्यासपरम्परया चापरोत्कृष्टा एतदीया कीर्त्तिर्भूलोकं पूर्वमभिव्याप्य लोकान्तरं व्याप्नोतीत्यर्थः । तेनाध्वनवलम्बनेन महोत्साहवन्तममुमिति वा । नर्त्तक्यपि पूर्वं भूमौ भ्रमित्वा निराश्रयं गगने नर्त्तितुं अभ्यासपरा सती महान्तं वेणुमाश्रित्य वेणोरुपरि सकौतुकं नृत्यति । अथच महान्तं पृष्ठवंशं आश्रिता नर्त्तकीति वा । या हि झटिति भूमावपि गन्तुं न शक्नोति सा निरालम्बं महान्त वेणुमाश्रित्य नृत्यतीत्यतीव चित्रं इत्यादि ज्ञातव्यं । वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि चेति विश्वः ॥ १६ ॥

इतो भिया भूपतिभिर्वनं घनादटद्भिरुच्चैरटवीत्वमीयुषी । निजापि साऽथापि चिरात्पुनः पुरी पुनः स्वमध्यासि विलासमन्दिरं ॥ १७ ॥

इत इति । इत अस्माद्राज्ञः सकाशात् भिया भयेन घनाद्वनान्तर मटद्भिर्गच्छद्भिर्भूपतिभिरुच्चैरतिशयेनाटवीत्वमरण्यामीत्वमीयुषी प्राप्ता या प्रसिद्धा निजा स्वीयापि पुरी चिराद्वनान्तरभ्रमात् पुनरथापि प्राप्तं । तया तत्र पुर्यां स्वं स्वीयं विलासमन्दिरं रतिगृहं पुनरप्यध्यास्यधिष्ठितं वनपुर्येत्यर्थः । राज्यभ्रंशदशापेक्षया ऽनेकवारं तत्रागत्य पुनरन्यत्र गत्वा पुनस्तत्रागच्छन्तीत्यर्थः । अनेन वैरिनगराण्युद्वासितानीति भावः । उपेयिवानित्यत्र सूत्रे (पा० ३ । २ । १०९ ) उपसर्गस्यात न्त्रत्वादीयुषीत्यत्र कसुः ॥ १७ ॥

आसीदासीममूमीवलयमलयजालेपनेपथ्यकीर्त्तिः
सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः।
वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपाति
भूयश्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखे
न्दुः ॥ १८ ॥

आसीदिति । हे भैमि अस्माद्वीरात्पर उत्कृष्टोऽन्यो राजा क आसीद्भवेद्वा अपि तु एवंविधोऽयमेव नत्वन्यः कश्चिदित्यर्थः । किम्भूतः । सीमा समुद्रलक्षणा आ अभिव्याप्य सीमासहितं भूमीवलयं तस्य मलयजालेपेन चन्दनाङ्गरागस्वरूपं नेपथ्यं भूषणं तदेव कीर्त्तिर्यस्य कीर्त्तिचन्दनधवलितसमुद्रमुद्रितभूमण्डलः । तथा सप्तानामकूपारपारीणां समुद्रपरतीराणां समाहारः सप्ताकूपारपारी सैव सदनं निवासस्थानं यस्य सप्तसमुद्रपरतीरवासी यो जनो लोकस्तेन घनमविच्छिन्नं उद्गीतं उच्चैर्गीयमानश्चापप्रतापो यस्य चापस्य प्रतापश्च या यस्य सः । तथा पदयुगे चरणयुगले युगपत्समकालमेव पातिनः पतनशीला नमस्कारकारिणो भूपास्तेषामतिभूयांसि अतिबहूनि यानि चूडारत्नानि तान्येव निर्मलत्वादुज्ज्वलत्वादुडुपत्न्यो नक्षत्ररूपाश्चन्द्रस्त्रियः तासां कराणां किरणानां परिचरणं सत्वरं मञ्जरणं तेन अथ च तासां हस्तैर्यत्परिचरणं चरणसेवा तया कृत्वाऽमन्दं नन्दन्तोऽतितरां समृद्धकान्तयः नखा एवेन्दवश्चन्द्रा यस्य चरणपतितसकलराजशिरोमणिकिरणसंवर्द्धितनखकान्तिः । यशस्वी प्रतापवान् अत एव सर्वनृपतिवन्द्यचरणः एतादृश कोऽपि नास्ति तस्मादेनं वृणीष्वेति भावः । अन्याऽपि पत्नीकृतचरणसंवाहनेन नन्दति ॥ १८ ॥

भङ्गाकीर्त्तिमषीमलीमसतमप्रत्यर्थिसेनाभटश्रेणीति
न्दुककाननेषु विलसत्यस्य प्रतापानलः । तस्मा
दुत्पतिता स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुट

**भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः ॥ १९ ॥**

भङ्गेति । यस्य प्रतापानलः भङ्गेन पराजयेन ज्वलिताऽकीर्त्तिः सैव श्यामत्वान्मषी तया मलीमसतया ध्वलिततरां मलिनीभूताः प्रत्यर्थिसेनाभटाः शत्रुसैनिकशूराः तेषां श्रेणी समूहः सैव श्यामत्वात्तिन्दुककाननानि तेषु विलसति विशेषेण दीप्यते । तस्मादेतदीयात्प्रतापानलादुत्पतिता वल्गिता भालाल्ललाटादुद्भूतं भवाक्षि हरतृतीयनेत्रं भानुः सूर्यः हुतभुग्वह्निः जम्भारेरिन्द्रस्य दम्भोलिर्वज्रः एते स्फुलिङ्गाः स्फुटाग्निकणा इव जगदुत्सङ्गे जगतां भूम्यादीनां मध्ये स्फुरन्ति शोभन्ते । तिन्दुकवनानि हि श्यामानि भवन्ति तत्र पतितोऽग्निः चटचटाशब्दं कुर्वन् स्फुलिङ्गान् मुञ्चति । महतस्त्वपि हरनेत्रादिषु स्फुलिङ्गत्वारोपेण प्रतापानलस्यातितरां माहात्म्यं सूचितं । यस्य कथा एवम्भूताः स कथंभूतो भवतीति ॥ १९ ॥

**एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं**
**सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमाभ्रमाधायि**
**भिः । पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामरश्रे**
**णीमध्यचरः पुनः क्षितिधरक्षेपाय धत्तेधियं॥२०॥**

एतदिति । हे भैमि एतस्य पाण्ड्यस्य उग्रसमरस्य प्रेक्षार्थं उपनम्रा समागताऽमरश्रेणी देवसङ्घः तन्मध्यचरः तस्य मध्ये विद्यमानो देवत्वं प्राप्त इति यावत् राजभूतः पृथुर्वैन्यः पृथ्वीन्द्रः पुनः क्षितिधराणां पर्वतानां क्षेपाय दूरोत्सारणाय धियं बुद्धिं धत्ते । किं कृत्वा संग्रामाङ्गणस्य सीम्नि मर्यादायां जङ्गमानां स्थानात् स्थानान्तरं गच्छतां गिरीणां स्तोमस्य समूहस्य भ्रान्तिं कुर्वाणैः एतद्दन्तिबलैः एतस्य दन्तिसैन्यैः निखिलां भुवं आलिङ्गिताङ्गीं व्याप्तदेशां विलोक्य । पूर्वं पृथुना स्वधनुः कोट्या जङ्गमपर्वतानुत्सार्य ग्रामादिविभागः कृतः । एतद्दन्तान् दृष्ट्वा गजाणद्गणापेनागतेन पृथुना पुनः पर्वता इ-

ति धृत्वा एतदुत्सारणे पुनरपि वृद्धिं कृतेत्यर्थः । चतुरतरगणबाहुल्य दारुणरणरसिकत्वञ्च सूचितं ॥ २० ॥

अथ स दासीङ्गितविद्विदर्भजामितो ननु स्वामिनि पश्य कौतुकं । यदेष सौधाग्रनटे पटाञ्चले चलेऽपि काकस्य पदार्पणाग्रहः ॥ २१ ॥

अथसेति । इङ्गितवित् भैम्यभिप्रायज्ञा काचिद्दासी विदर्भजा अथ स बभाषे । ननु हे स्वामिनि इतोऽस्या दिशि त्वं कौतुकं पश्य । किं तत् । सौधं सुधाधवलितगृहं तस्याग्रमूर्द्धदेशस्तत्र वर्त्तमाने नटे चलत्वात् नर्त्तकतुल्ये वायुवशाच्चलेऽपि पटाञ्चले पताकावसनाञ्चले यत् एष काकस्य पदार्पणे चरणस्थापने आग्रहः तत्रोपवेशनार्थं पौनःपुन्येन प्रवृत्तिर्निर्बन्धः तत्कौतुकं पश्येति सम्बन्धः । अननुरक्तायां भैम्यां शृङ्गारचेष्टां भावयतः पाण्ड्यस्यास्य यथा पटाञ्चले उपवेशनार्थं काकस्याग्रहोऽनुचितस्तथा । एतस्य पाण्ड्यस्याग्रे भैम्यां दुरभिनिवेश इति सूचनार्थं तस्यालीकृतसद्वर्णननिवारणार्थं वा इयमुक्तिः । इतः एतद्वर्णनकौतुकात् सकाशादिति वा ॥ २१ ॥

ततस्तदप्रस्तुतभाषितोत्थिते सदस्तदश्वेति हसैः सदःसदां । स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः सिते हि जायेत शितेः सुलक्ष्यता ॥ २२ ॥

तत इति । ततः तस्या दास्याः पूर्वोक्तमप्रस्तुतं भाषितं वचनं तस्मादुत्थितैः सदःसदां सभ्यानां हसैः हास्यैः तत्सदः सा सभा अश्वेति श्वेतीकृतं । तद्वचनं श्रुत्वा सभ्या हसन्ति स्मेत्यर्थः । अतः सदःश्वेतीकरणाद्धेतोरस्य भूपतेर्म्लानिः लज्जा वैवर्ण्यं स्फुटा अजनि । अथार्थान्तरन्यासमाह । हि यस्मात् सिते शुभ्रवस्तुनि शितेः कृष्णवर्णस्य सुलक्ष्यता प्रकटता जायेत । सभ्यहास्यवशात् सोऽधिकविवर्णो जात इत्यर्थः । स स्वत एव श्यामः सभ्यहास्यवशादधिकश्यामो जात इति वार्थः । अश्वेति । श्वितिङ् श्वैत्ये इत्यस्मात् ण्यन्तात्कर्म्मणि लुङात्मनेपदं २२ ॥

ततोऽनु देव्या जगदे महेन्द्रभूपुरन्दरं सा जगदेकवन्द्यया। तदार्जवार्जिततर्जनीकया जनी कयाचिदपराचितस्वरूपया ॥ २३ ॥

तत इति। ततः कयाचिल्लोकोत्तरया अनिरूपितरूपया देव्या वाग्देव्या महेन्द्रभुवः महेन्द्रनामकपर्वतसम्बन्धिनो देशस्य पुरन्दरं स्वामिनं अनु लक्षीकृत्य सा जनी स्वयम्वरा जगदे उक्ता। किम्भूतया जगत् एका देवतान्तरपरित्यागेन वन्द्यया। यतः परा श्रेष्ठा चिद्ज्ञानलक्षणं स्वरूपं यस्यास्तया। तथा तस्या भैम्या यदार्जवं ऋजुता तेनावर्जिता वर्णनार्थमूर्ध्वीकृता तर्जनी यया। तस्मिन् वर्णनीये नृपे विषये वा देव्या एव वा यदार्जवं कृपा तया। जगदे कर्मणि लङ्। वाचयमपुरन्दरौ चेति निपातनात् पुरन्दरः साधु। तर्जनीकयेति नद्यृतश्चेति कप्। (पा० ५।४।१५३) अनुर्लक्षणे (१।४।८४) कर्मप्रवचनीयत्वात् पुरन्दरमिति द्वितीया ॥ २३ ॥

स्वयम्वरोद्वाहमहे वृणीष्व हे महेन्द्रशैलस्य महेन्द्रमागतं। कलिङ्गजानां स्वकुचद्वयश्रिया कलिङ्गजानां शृणु तत्र कुम्भयोः ॥ २४ ॥

स्वयमिति। हे भैमि स्वयम्बर उद्वाहलक्षणे महे उत्सवे आगतं महेन्द्रशैलस्य महेन्द्रं स्वामिनं वृणीष्व। तत्र पर्वतोपलक्षिते देशे कलिङ्गदेशे जातानां गजानां कुम्भयोः स्वकुचद्वयश्रिया सह कलिं समानशोभात्वद्वयाभिलापनिमित्तं कलहं शृणु। हस्तिकुम्भास्त्वत्कुचसाम्यमभिलषिष्यन्ति परं न प्राप्स्यन्तीति भावः। स्वयम्वरोद्वाह एव महः उत्सवो यस्यास्तत्सम्बुद्धिरिति वा ॥ २४ ॥

अयं किलायात् इलीरिपौरवागभयाद्याटस्य रिपुर्वृथा वनं। श्रुतास्तदुत्स्वापगिरस्तदक्षराः पठद्भिरस्यासि शुकैर्वनेऽपि सः ॥ २५ ॥

अयमिति । अयं कलिङ्गदेशाधिप आयातः किल श्रूयत इति इंर-यन्तीति इंरिणः पौरास्तेषां वाक् तस्याः सकाशाद्भय तस्माद्धेतोः अस्य रिपुर्यद्वनं अयात् पलाय्य गतवान् तद्यथा । रिपुरिति जात्येकवचनं । वैयर्थ्यं हेतुमाह । तान्येव अथ समायात इत्येवंरूपाण्यक्षराणि गाढ़ सा: श्रुताः शुकैरेवाकर्णिताः तस्मै तदीयरिपोरुत्थापगिरः अतिशयित निद्राम्लापवाधः एकस्याप्यक्षरस्य त्यागं विना पठद्भिः शुकैर्वनेऽपि स रिपुरत्रासि भीषितः । पलाय्य वने गतानामपि रिपूणां उत्थापप्र-लापितात्मा गिरो बहुशः पठद्भिः शुकैर्वनेऽपि त्रासिता वैरिणः स्थातुं न शक्नुवन्तीत्यर्थः । अतिशूरोऽयमिति भावः ॥ २५ ॥

इतस्त्वसद्विद्रुतभूभृदुज्झिता प्रियाऽथ दृष्टा वनमा नवीजनैः । शशंस पृष्टाद्भुतमात्मदेशजं शशि त्विषः शीतलशीलतां किल ॥ २६ ॥

इत इति । इत अस्माद्राज्ञः सकाशात्त्वत्तो भीता अत एव विद्रुताः पलायिता भूभृतो राजानः तैरुज्झिता परित्यक्ता प्रिया स्वस्वमा-येश्वरी वनमानवीजनैर्भिल्लिजनैर्दृष्टा । अथ पश्चात् आत्मदेशज भवत्या देशे किमपूर्वमिति अद्भुतं पृष्टा सती शशित्विषश्चन्द्रस्य शीतलशील-तां किल प्रसिद्धां हिमस्वभावत्वमेव स्वदेशजातमाश्चर्यं शशंस अकथ-यत् । स्वदेशे वियोगाभावाच्चन्द्रकराणां शीतलत्वं वने च वियोगादुष्ण त्वमित्यर्थः । प्रियेति जात्येकवचनं । भर्तृत्यक्ता वियोगज्वरभराक्रान्ता सती वने चन्द्रकान्तिमुष्णामनुभवतीत्यर्थः ॥ २६ ॥

इतोऽपि किं वीरयसे न कुर्वतो नृपान्धनुर्ज्या णगुणैर्वशंवदान् । गुणेन शुद्धेन विधाय निर्भरं तमेनमुर्वीवलयेश्वरी वरं ॥ २७ ॥

इत इति । हे भैमि त्वं इतोऽपि राज्ञः सकाशात् किमिति न वीर यसे शूरा भवसि अपि तु तस्मादपि शूरा भव । किं वीरा न भवस्यपि तु वीरा भवस्येवेति वा । किंभूतादितः । नृपान् शत्रून् धनुश्च बाणाश्च

• अधीत्य मुखान्तर एव तां गिरमिति पाठान्तरः । परन्तु एव न टीकासम्मतः ।

गुणैश्च चापशरमौर्व्वीरूपैर्बहुभिरुपकरणैः कृत्वा वशंवदान् वश्यान् कु-
र्वतः । किम्भूता त्वं । उर्वीवलयरूढशोभारूपाऽतिसुन्दरी । किं कृत्वा ।
तमेन बहुभिर्धनुरादिभिरुपकरणैर्विद्विषां जैत्रं गुणेन केवलेन चापादि-
क्लेशसंस्पर्शरहितेन सौन्दर्य्यादिना गुणेन मौर्व्या च कृत्वा निर्भरमति-
शयं आयासरहितं वा यथा तथा वशं विधाय । बहुसाधनैः पराजय
तोऽस्यैकेनैव साधनेन जयकरणादित्यर्थः मौर्व्वीमात्रेण जयादाश्चर्य्यं च ।
अयं सर्वेभ्योऽपि वीरः अस्मादपि त्वमित्यपरोऽर्थः । वीरयसे । शूरवी
रविक्रान्ताविति चुरादिः ॥ २७ ॥

**एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसर-
न्ती स्वक्रीडाहंसमोहग्रहिलशिशुमृशप्रार्थितोन्नि-
द्रचन्द्रा । आक्रन्दद्भूरि यन्नयनजलमिलच्चन्द्र
हंसानुबिम्बप्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसी
न्न्यश्वसीच्च ॥ २८ ॥**

एतदिति । एतस्माद्भीतानामरीणां नारी एतद्भीतारिनारी गिरि-
बिले पर्वतकन्दरायां विगलद्वासराऽतिवाहितदिवसा । तथा रात्रौ निः-
सरन्ती बिलाद्बहिर्निर्गच्छन्ती । तथा तदनन्तरं स्वः स्वकीयो मदीयः
क्रीडाहंस एवायमिति मोहो भ्रान्तिस्तया ग्रहिलः मदीयमेनं हंसं दे-
हीति आग्रहवान् शिशुस्तेन भृशं प्रार्थितो याचित उन्निद्रश्चन्द्रो यामे-
वम्भूता सती चन्द्रदाने सामर्थ्याभावात् तदाग्रहशान्त्यभावात् दुःखव-
शाद्यस्माद्भूरि बहु आक्रन्दत रोदि तस्माद्धेतोर्बहुतरे नयनजले मिलन्
प्रतिबिम्बरूपेण संक्रामन् यश्चन्द्ररूपो हंसस्तस्य योऽनुबिम्बः मिलन्
यश्चन्द्रहंसस्यानुबिम्बो वा तस्य प्रत्यासत्त्या सामीप्येन मदीयः क्रीडा-
हंसोऽयमागत इति बुद्ध्या प्रहृष्यतो मोदमानस्य तनयस्य विहसितैर्हा-
सैः एतया तदाग्रहशान्तेराश्वसीत् आश्वासं प्राप । परित्यक्तस्वोपस्करपत्
स्मरणात् कनकवस्त्रं तृषैव भ्रान्तोऽसीत्यादिमननमि कृत्वा न्यश्वसीच्च
शोकनिःश्वासं चामुञ्चत् । आश्वसीत् । लङि रुदश्च पञ्चभ्य इत्यपृक्त-
स्यार्धधातुकस्येडागमः । लुङि वा ह्म्यन्तक्षणेति वृद्धिनिषेधे रूपं । न्यश्व

षीत्"। लहि अङ्गाग्यंगालवयोरित्यपृक्तसार्व्व धातुकस्याडागमः पा० ७।
३।९९) ॥ २८ ॥

अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति
ध्यायती कम्पं सात्त्विकभावमञ्चति रिपुक्षोणी
न्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे
यास्यद्भिरूर्ध्वं निजः पन्था भास्वति दृश्यते
बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २९ ॥

अस्मिन्निति । हे भैमि अस्मिन् राज्ञि दिग्विजयायोद्यते सति रिपवश्च ते क्षोणीन्द्रा राजानस्तेषां दारा. प्रिया वशवर्त्तिनी धरा पृथ्वी अयं राजा मे पति स्वामी स्याद्भूयादिति ध्यायती चिन्तयन्ती सती सात्त्विकेषु मध्ये कम्पलक्षणं सात्त्विकभाव मञ्चति गच्छति । अन्यस्वामिसूचक भूकम्पलक्षणं भौममुत्पात प्राप्नोतीत्यर्थः । एवमन्याप्येव ध्यायती सात्त्विक भाव प्राप्नोति । तथा समरे अस्यैवाभिमुखं शस्त्राघातैर्निपत्य ऊर्ध्वं उत्कृष्टदेशमयोत्तम स्वर्गलोक यास्यद्भिः गमिष्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्यमण्डलमध्ये निजः स्वीयो बिलमय. पन्था दृश्यते । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ परिव्राड् योगयुक्तश्च रणे चाभिमुखो हत इति वचनात् । अथ च सूर्ये बिलरूपो ऽरुत्पातोऽपि म्रियमाणैर्दृश्यते । अतिशूरोऽयमिति भावः ॥ २९ ॥

विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात्कोऽपि निवर्त्तते यदि भटः कीदृग्जगत्युद्भटः । आगच्छन्नपि सम्मुखं विमुखतामेवाधिगच्छत्यसौ द्रागेतच्छुरिकाग्रेण टणिति च्छिन्नापसर्पच्छिराः ॥ ३० ॥

विद्राण इति । त्रस्ते भीतेऽत एव रणचत्वरात् रणाङ्गणात् विद्राणे पलायिते समस्तेऽरिगणे मध्ये कोऽपि भटः शूरः कोपाद्यदि पुनर्नि-

वर्त्तते । यतो जगति कीर्त्त्या यशसा उद्भटः ख्यातः असौ भटः अस्य सम्मुखमागच्छन्नपि विमुखतामेव विगतमुखत्वं प्राप्नोति अधिगच्छति । अयं च सम्मुखमागच्छन्नपि पराङ्मुखो जात इति विरोधाभासः । यतः । द्राक् शीघ्रं एतस्य छुरिकारयेण ठणिति यथा तथा खण्डितकन्धरः पतत् शिरो यस्य सः । ठणिति लोहकण्ठास्थिसङ्घट्टजशब्दानुकरणं । अतिशूरोऽयमिति भावः ॥ ३० ॥

ततस्तदुर्वीन्द्रगुणाद्भुतादिव स्वमक्षु पद्मेऽङ्गुलिनालदायिनी । विधीयतामाननमुद्रणेति सा जगाद वैदग्ध्यमयेङ्गितैव तां ॥ ३१ ॥

तत इति । ततः सा भैमी तां वाणीं प्रतिवचनमन्तरेणैव इति जगाद । इति किं । आननमुद्रया मौनं विधीयतामिति । किम्भूता । तस्य उर्वीन्द्रस्य गुणाकर्णनसमुत्पन्नादद्भुतादाश्चर्यादिव स्वमक्षु पद्मे अङ्गुलिरूपं नालं तस्य दायिनी अत एव वैदग्ध्यमयं एतच्चातुर्यबहुलमिङ्गितं चेष्टितं यस्याः सा । वचननिषेधार्थं आश्चर्याभिनयार्थं च मुखेऽङ्गुलिर्दीयते । वर्णननिषेधार्थे दत्ताङ्गुलिस्तद्गुणाद्भुतादिवेति लोकैरुत्प्रेक्षितमित्यर्थः । पद्मे च नालं भवति ॥ ३१ ॥

अनन्तरं तामवदन्नृपान्तरं तदध्वदृक्पारतरङ्गरिङ्गणा । तूष्णीमवत्पुष्पशरं सरस्वती स्वतीव्रतेजःपरिभूतभूतलं ॥ ३२ ॥

अनन्तरमिति । अनन्तरं तद्वर्णननिषेधानन्तरं सरस्वती नृपान्तरं तां भैमीं प्रत्यवदत् । किम्भूता तस्य वर्णनीयनृपान्तरस्याध्वनि सदृशि दृगसाराणामतिविशालानां तरङ्गाणां दृग्व्यापाराणां रिङ्गणं गतिर्यस्याः । दृग्व्यापारदर्शितवर्णनीयनृपान्तरा । किम्भूतं नृपान्तरं । तूष्णीभवन् हीनीभवन्पुष्पशरः कामो यस्मात् तं । तथा स्वतीव्रतेजसा परिभूतं वशीकृतं भूतलं भूमण्डलं येन [illegible] । तरङ्गिवेल्लनेति च पाठः ॥ ३२ ॥

तदेव किन्तु क्रियते न का क्षतिर्यदेपतद्भूतमु

खेन काङ्क्षति । प्रसीद काञ्चीमयमाच्छिनत्तु ते प्रसह्य काञ्चीपुरभूपुरन्दरः ॥ ३३ ॥

तदिति । हे भैमि एष काञ्चीपुरस्य सम्बन्धिन्या भुवः पुरन्दरः तस्य त्वां प्रति प्रहितस्य दूतस्य मुखेन सन्देशवचनेन कृत्वा यत्त्वदीयचरणादि काङ्क्षति तदेव किं न क्रियते अपि तु तदेव क्रियताम् । एतदुक्तं कुर्वन्त्यास्तव का क्षतिः का हानिरपि तु न कापि । अस्मिन् प्रसीद । अयं नवरतौ लज्जया अमन्यमानाया अपि ते काञ्चीं मेखलाबन्धं प्रसह्य हठात् आच्छिनत्तु शिथिलयतु । अधीरतया सन्धिहस्तो घनदत्तहमानस्त्रोटयतु वा । एनं वृणीष्वेति भावः ॥ ३३ ॥

मयि स्थितिर्नम्रतयैव लभ्यते द्विषेव तु स्तब्धतया विलङ्घ्यते । इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद् द्विषाम् ॥ ३४ ॥

मयीति । चापं दधत् आशुगं वैरिषु क्षिपन्नयं राजा इति पूर्वोक्तं द्विषां नयं नीतिं सम्यक् उपादिशदिव । इति किं । हे द्विषः । मयि मत्समीपे नम्रतयैव विनीततयैव स्थितिर्निवासो ऽथ च स्वराज्ये स्थितिर्लभ्यते । स्तब्धतयाऽविनीततया तु पुनर्द्विषेव विलङ्घ्यतेऽतिक्रम्यते । चेन्मयि नम्रा भविष्यथ तर्हि चापवत् स्थितिं प्राप्स्यथ । अन्यथा बाणवत् दूरं यास्यथेति वचनं विनैवाचष्टेत्यर्थः । नम्रस्तब्धशब्दयोर्वक्रावक्रविनीताविनीतार्थपरतयोत्प्रेक्षा ॥ ३४ ॥

अदःसमित्सम्मुखवीरयौवतत्रुटद्भुजाकम्बुमृणालहारिणी । द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ ३५ ॥

अद इति । अस्य राज्ञः यशोरूपा मरालावलिर्हंसपङ्क्तिर्द्विषतां भटानां गणाः समूहास्तेषां स्त्रैणं स्त्रीवृन्दं तस्य दृगम्बुनिर्झरे नेत्रबाष्पप्रवाहे खेलति । किम्भूता । अदः समिति अमुष्य रणे सम्मुखागता ये वीरास्तेषां यौवतं स्त्रीसमूहः तस्य वैधव्यवशात् त्रुटन्तो ये भुजाकम्बवः

शङ्खवलयानि च एव मृणालानि हरति अपनयति नाशयति चेत्येवशी-
ला । हंसाली मृणालाहारान्निर्भरोदके क्रीडति । रणे सम्मुखागतानां
शत्रूणां वधात् तत्स्त्रियः शङ्खवलयानि स्फोटयन्ति रुदन्ति च तेन
चास्य कीर्तिर्भवति ॥ ३५ ॥

सिन्दूरद्युतिमुग्धमूर्द्धनि धृतस्कन्धावधिध्यामि
के व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे
धावति । जानीमो नु यदि प्रदोषतिमिरव्यामि
श्रसन्ध्याधियैवाऽस्तं यान्ति समस्तबाहुजभुजा
तेजःसहस्रांशवः ॥ ३६ ॥

सिन्दूरेति । नु भोमि समरस्यारम्भे उद्धुरे उद्युक्तेऽस्य सिन्धुरे गजे
धावति सति समस्ता बाहुजाः क्षत्रियास्तेषां भुजातेजांस्येव सहस्रांश-
वः सूर्याः, यदस्तं विनाशमस्तावलम्बं यान्ति गच्छन्ति तत्प्रदोषतिमि-
रेण रजनीमुखसम्बन्धिना तमसा श्यामिका मिलिता या सन्ध्या तस्या
धिया बुद्ध्या भ्रान्त्यैवेति वयं जानीमः । वाक्यार्थः कर्म । द्विपराज-
स्योः सन्धौ भयः सान्ध्यो रागस्तद्भ्रान्त्येत्यर्थः । किम्भूते सिन्धुरे ।
सिन्दूरद्युत्या मुग्धो मनोज्ञः मूर्द्धा यस्य तस्मिन् । तथा धृता स्कन्धा
वधीकृत्य श्यामिका स्वाभाविकी कज्जललेपनजा वा कालता येन
तस्मिन् । तथा उच्चतया व्योमान्तः स्पृशि गगनमध्यस्पर्शिनि । तथा
समरारम्भाद्युत्तूर्यश्रवणात्कोपदुःसहे वा । यद्यस्तं यान्ति तर्हि सा-
यङ्कालतिमिरसंयुक्तसन्ध्याधियैवेति वा । सन्ध्यापि किञ्चित्कज्जलतुल्य
तिमिरयुक्ता सिन्दूरवच्च रक्ता रक्ता चाद्दिगन्तस्पर्शिनी चेति पूर्वो-
क्तविशिष्टहस्तिदर्शने सति साच सन्ध्येतिबुद्ध्येव तेजःसूर्याणामस्तग-
मन युक्तं । एवंविध गजं दृष्ट्वा सर्वेऽपि पलायन्त एवेत्यर्थः । जानी
मोऽथ यदीति पाठे यथगन्ता यदित्यर्थे तदा तदित्यर्थे च यः । स्था-
नेव स्थानिकेति तत्रार्थे कमत्यये । प्रत्ययस्थादित्यादीत्वं ( पा ७ । ३ ।
४४ ) ॥ ३६ ॥

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फु

टासीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभं । उज्झित्वा निजसद्म पद्ममपि तद्व्यक्ताव नद्धीकृतं लूनातन्तुभिरन्तरस्य भुजयोः श्रीरस्य विश्राम्यति ॥ ३७ ॥

हित्वेति । श्रीर्लक्ष्मीरस्य भुजयोरन्तर्मध्ये विश्राम्यति शोभा च । किं कृत्वा । दैत्यरिपोर्विष्णोः स्वभवनं स्वस्य गृहं उरः हित्वा । तथा तन्निजसद्म सद्ममपि उज्झित्वा । किम्भूतमुरः । लक्ष्म्या त्यक्तत्वात् शून्यत्वलक्षणेन दोषेण स्फुटं आसीदन्तः स्थिरीभवन्तः मर्कटकीटाः ऊर्णनाभकीटास्तेषां कारणेन निर्वृत्तं तैरचितं कृत्रिमं सितछत्रं इव सितछत्रं मण्डलाकारं श्वेतं गर्भाण्डस्थापनस्थानं तद्वद् आचरन् तद्रूपीभवन् कौस्तुभाख्यो मणिर्यत्र । किम्भूतं पद्मं । तैर्लूनातन्तुभिः मर्कटीसूत्रैः मर्कटीसूत्रसदृशैः कमलसूत्रैरित्यर्थः । व्यक्तं प्रकटमवनद्धीकृतं बद्धं विसतन्तूनामेव लूतातन्तुत्वेनोक्तिः । परस्परमतिदूरे द्वेऽपि भवने प्रति गतागताभ्यां श्रान्ता सती गृहद्वयं परित्यज्यातिसमीपयोर्नोरस्य भुजयोरेव भवनयोः सुखेन निषीदत्यत्रैव स्थिरीभवतीत्यर्थः । कौस्तुभस्य धवलत्वाल्लूताछत्रत्वेन कमलसूत्राणाञ्च सादृश्यात् लूतातन्तुत्वेनोत्प्रेक्षा । लूता स्त्री तन्तुवाये स्यादित्यमरः ॥ ३७ ॥

सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्त्तिपूर्त्ताद्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः । यद्बिन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरो यस्यासौ जलदेवतास्फटिकभूर्जागर्त्ति यागेश्वरः ॥ ३८ ॥

सिन्धोरिति । अयं सिन्धोर्जैत्रं समुद्रस्य जेतृ पवित्रमुज्ज्वलं पावनञ्च तत्कीर्त्तिपूर्त्ताद्भुतं यशोरूपतडागाश्चर्यं असृजत् निर्ममे । यत्र कीर्त्तितडागे जगन्ति स्नान्ति उज्ज्वलीभवन्ति स्नानं च कुर्वन्ति । यद्वर्णनविषये के वा कवयः स्फुरत्सूक्तनाम्नो अपि वाचंयमा मौनिनो न

सन्ति अपि तु सर्वेऽपि मौनिन एव भवन्ति इत्यर्थः । अथ च के वयो जलपक्षिणः कवयः । यत्र के जलपक्षिणः के वा तापसा न सन्ति अपि तु महति तडागे बहवः पक्षिणस्तापसाश्च विद्यन्ते । इन्दुवंश कीर्तितडागस्य बिन्दुश्रियं अञ्चति प्राप्नोति यदपेक्षया चन्द्रोऽल्पीयानित्यर्थः । अथ च महतस्तडागस्य जलबिन्दुशोभामिन्दुरञ्चति यदीयो बिन्दुरिवेन्दुरित्यर्थः । यस्य च जलं आविश्य प्रविश्येव दृश्येतरोऽस्मदादिमेश्वरोऽविषयभूतोऽसौ जगति विद्यमानः स्फटिकाश्म एव भूर्यस्य स कैलास एव वागेश्वरः स्फाटिकश्रीशिवलिङ्गरूपी जलदेवता जागर्ति स्फुरति । समलावस्थाज्जलं क्षिप्तः स्फटिको न दृश्यते इयमेव स्फटिक परीक्षा । तज्जयजलतरैस्तत्कीर्तिकल्लोलप्लावित इव कैलासो न दृश्यते । इन्दुगलं चाविश्य जले प्रतिबिम्बितः सन् यदिन्दुश्रियमञ्चतीति वा अस्याविन्दुरिव यस्य जलमाविश्यादृश्यः स्फटिकनिर्मितो वागीश्वरः सन् जलदेवता जागर्ति । कीर्तिमध्यपाती चन्द्रोऽपि समवर्णत्वान्न दृश्यत इत्यर्थ इति वा । स्पृशेदिति वचनात्पर्वातिरिक्ते काले समुद्रस्यास्पृश्यत्वात् अस्य तु सर्वदा पवित्रत्वात् । समुद्रस्य च भूलोकस्यैव कतिपयस्यैव जनस्य स्नानार्हत्वादस्य तु लोकत्रयस्नानार्हत्वात्तस्य वर्णयितुं शक्यत्वादस्य चाशक्यत्वात्तस्य च चन्द्रैकसद्मत्वादस्य च बिन्दुरूपचन्द्रत्वात् समुद्रे श्रीविष्णुरूपाया जलदेवतायाः सुप्तत्वादत्र च वागीश्वरस्य जागरात् । यद्विधो यशस्वी कोऽपि नास्तीति भावः । वागीश्वर इति असौ जलदेवता जागर्ति । असौ का वा स्फटिकभूः वागीश्वरः कैलासो जागर्तीति । वाचि यमो व्रत इति (पा ३।२।४०) एवि वाचंयमपुरन्दरौ चेति (पा० ६।३।६९) साधुः ॥ ३० ॥

अन्तःसन्तापभाग्भिः स्थगयति न दृशस्ताभिरा
कर्णाविष्यन्त्यहृद्गेनानस्तिलोमाप्यरचयति पुलकश्रे
णिमानन्दकन्दां । न क्षोणीभङ्गभीरुः कलयति
च शिरःकम्पनं तन्न विद्मः शृण्वन्नेतस्य की
र्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ ३१ ॥

अन्तरिति । यस्मात् उरगपतिः शेषः अन्तः मन्तोषवाप्पैरानन्दाश्रुभिः कृत्वा दृशौ नेत्राणि न स्थगयति नाच्छादयति । यतस्ताभिर्दृग्भिः एतद्गुणानाकर्णयिष्यन् सन् चक्षुःश्रवस्त्वादश्रुभिर्नेत्राच्छादने गुणानाकर्णनशङ्कया आनन्दाश्रुभिर्दृशौ नाच्छादयति । तथा आनन्द एव कन्दो मूलं यस्यास्तां पुलकश्रेणिं रोमाञ्चपङ्क्तिमपि आरचयति करोति । यतः अमस्तिरोमाऽविद्यमानरोमा । तथा मन्तःपात् शिरःकम्पनं न करोति । यतः क्षोणीभङ्गभीरुः । यद्यहं मूर्धानं कम्पयिष्यामि तर्हि भूमिः पतिष्यतीति भिया । तस्मात् कारणादेतस्य कीर्तीः शृण्वन् शेषोऽन्तःकरणे समुत्पन्नां प्रीतिं कथं केनान्येन प्रकारेणाविष्करोति प्रकटयति च य तत्र खिन्नः । आश्चर्यरूपकीर्तिरयमिति भावः । सहस्रमुखत्वाद् दृश इति बहुत्वं ॥ ३९ ॥

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यदण्डानयं सं
रम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् ।
सा सेवास्य पृथुः प्रसीदसि तया नास्मै कुतस्त्व
त्कुचस्पर्द्धागर्द्धिषु तेषु तान् धृतवते दण्डान्
प्रचण्डानपि ॥ ४० ॥

आचूडेति । संरम्भे युद्धसम्भ्रमे सति जये पटुरयं राजा रिपवश्च ते राजानश्च तेषां कुञ्जरघटाकुम्भस्थलेषु दूरनिखाततया स्थिरान् शल्यप्रलोहस्य सम्बन्धिनो दण्डान् शरान् प्रासान् वा आचूडाग्र पुङ्खाग्र मर्यादीकृत्य यदमज्जयन्निचखान । सा एतत्कर्तृका त्वदीया पृथुर्महती सेवा तया सेवया त्वं अस्मै कुतो न प्रसादसि । किम्भूताय । तव कुचस्पर्द्धागर्द्धिषु कुचसाम्याभिलाषिषु तेषु कुम्भस्थलेषु तान् पूर्वोक्तान् प्रचण्डान्दण्डान् धृतवते कृतवतेऽपि । येन हि महती सेवा क्रियते तस्मै प्रसन्नीभूयते । अतिशूरोऽयं तस्माद् वृणीष्वेत्यर्थः ॥ ४० ॥

स्मितश्रिया सूक्ष्मणलीयमानया वितीर्णया तद्गु
णशर्मणेव सा । उपाहसत् कीर्त्यमहत्त्वमेव तं

गिरां हि पारे निषधेन्द्रवैभवं ॥ ४१ ॥

स्मितेति । सा भैमी स्मितश्रिया ॥ राजानं उपाऽमत् हसितवती यतः कीर्त्यं वर्णयितुं शक्यं महत्त्व यस्य एवम्भूतमेव । हि यस्मात् निषधेन्द्रवैभव नलसामर्थ्यं गिरा पारे वागगोचर वर्णयितुमपि न शक्यत इत्यर्थः । नलादेतस्य न्यूनत्वादुपहास इत्यर्थः । किम्भूतया स्मितश्रिया । तद्गुणश्रवणा तदीयगुणाकर्णनसमुत्पन्न न मुखेन विलोर्ण्य॑येव दत्तयेव कृतयेव । तथा सृक्कि प्रान्ते लीयमानया संसर्गिणया । कीर्त्यमिति असद्गुणारोपणार्थमूचक पद ॥ ४१ ॥

निजाक्षिलक्ष्मीहसितैणशावकामसावभाणीदपरं परन्तपं । पुरेव तद्दिग्वलनश्रियो भ्रुवा भ्रुवा विनिर्दिश्य सभासभाजितं ॥ ४२ ॥

निजेति । असौ वाणी अपरमन्य परन्तपं राजानं भ्रुवा पुरेव पूर्वमेव विनिर्दिश्य दर्शयित्वा तां भैमीं अभाणीत् उवाच । किम्भूता ता । निजाक्षिलक्ष्म्या नेत्रकान्त्या हसित एणशावको मृगशिशुर्यया । किम्भूतया भ्रुवा । तस्य वर्ण्यमानस्य राज्ञः दिशा तत्सम्मुख वलनेन दृक्पातेन कृत्वा याः श्रियस्तासां भुवा स्थानभूतया । किम्भूतमेन । सभया सभास्थैर्मनोहारिणया सभाजित दृष्ट पूजित वा । रिपुतापकारत्वात् इत्यर्थं कनामान वा ॥ ४२ ॥

कृपा नृपाणामुपरि क्वचिन्न ते न तेन हाहा शिरसा रसाद्दृशां । भवन्तु तावत्तव लोचनाञ्चला निपेयनेपालनृपालपालयः ॥ ४३ ॥

कृपेति । हे भैमि ते तव नृपाणां मध्ये क्वचिदप्युपरि कस्याप्युपरि एषा नास्ति हाहा कष्ट किमप्यवलोकस्यापि नेति मयुक्तमित्यर्थः । किम्भूतानां । त्वत्प्रेमावसावतः अज्ञाया नतेन शिरसा रसाया भूमौ दृग्येषां दृशां पश्यन्तीति च । अन्यत्र कृपा मा भूदाम तावत् किन्तु तव लोचनाञ्चलाः अपाङ्गदृशः निपेय सादरावलोकनाई ये नेपालानां देशानां नृपाणां राजा स पिबन्ति सादर पश्यन्ति एवम्भूता अलयो भ्र-

सरभूता भवन्तु । एवं तावत् कटाक्षैर्विलोकयेत्यर्थः ॥ ४३ ॥

ऋजुत्वमौनश्रुतिपारगामिता यदीयमेतत्परमे
वहिंसितुं । अतीव विश्वासविधायि चेष्टितं वहु
महानस्य स दाम्भिकः शरः ॥ ४४ ॥

ऋजुत्वेति । ऋजुत्वमवक्रता नम्रत्वं प्रियवादित्वादिरूपा विनीत-
ता च तथा मौनं निःशब्दत्वं वाङ्नियमश्च श्रुतिपारगामिता आकर्ण-
पूर्णता वेदपारगामिता च एवरूपमतीवातिशयं विश्वासविधायि वि-
श्वासकारि विगतश्वासकारि मनसि हितमत्ययकारकञ्च अलीकपवना-
भ्यासवशाद्वा श्वासनाशकारि यदीयमेतच्चेष्टितं परं शत्रु स्वव्यतिरिक्तञ्च
सर्वं जनं हिंसितुमेव हन्तुमेव प्राणप्रियधनग्रहणार्थमेव च न तु तस्य
व्यसनमात्रप्रयोजनं च धार्मिकादिगुणार्जनप्रयोजनं । सोऽस्य बहुरबहु-
र्महान् अकृर्णोऽतिदीर्घश्च शरः दाम्भिको दम्भेन चरति इति रूपकं ।
अतिशूरोऽपमिति भावः । दाम्भिके यावद्वृत्तं तत् सर्वं एतस्य शरे
विद्यत इत्यर्थः । दाम्भिकेन यत्क्रियते तदेतच्छरेण क्रियत इत्यर्थ इ-
ति वा । दम्भो हिंसा माया च प्रयोजनमस्य प्रयोजनमिति (पा ५
१ । १८९) ठञ् । तेन चरति वा चरतीति (पा ४ । ४ । ८) ठक् ॥४४॥

रिपूनवाप्यापि गतोऽवकीर्णितामयं न यावज्ज
नरञ्जनव्रती । भृशं विरक्तानपि रक्तवत्तरान्
निकृत्य यत्तानसृजासृजद्युधि ॥ १५ ॥

रिपूनिति । यावन्तो जनास्तावतां रञ्जने तदेव व्रते तदस्यास्तीति
एवभूतोऽय राजा रिपूनपि अवाप्य प्राप्यापि वा अवकीर्णितां क्षतव्र
तत्वं न गतः प्राप्त । यद्यस्मात् स्वशरीरादिविषये भृशं विरक्तानऽन-
नुरागिणोऽपि अथ चैनं दृष्ट्वा विगतरुधिरानपि तान् रिपून् युधि नि-
कृत्य बाणैश्छित्त्वाऽसृजा रुधिरेण कृत्वा रक्तवत्तरान् रक्तवन्तोऽनुरागि-
णोऽथच रक्तं विद्यते येषु ते रक्तवन्तः अतिशयेन रक्तवन्तो रक्तवत्तरा
एवभूतानसृजत् चकार । वैरिणामपि रञ्जनात् व्रतक्षतत्वं न जात-

सित्यर्थः । रक्षयत्तरान् रक्षयतुमेतुप् च ॥ ४५ ॥

**पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः। यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना कथञ्चित् क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥**

पततीति । पतङ्गः सूर्यः एतस्य तेज एव हुतभुगग्निः तस्मिन् यदि कदाचित् कस्मिन्नपि समये पतति तदा तर्हि अङ्गीकृततमः भृशमङ्गीकृतः पतङ्गानां शलभानां देहदाहलक्षणा या आपदस्तासां उदयो येनैवम्भूत एव स्यात् तत्र तथाऽतितरां सन्तापवशात् पीडितः स्यात् । एतत्तेजोऽपेक्षया सूर्यो हीनो यश्चापेक्षया शलभतुल्य इत्यर्थः । तथाऽमुष्य यशः कथञ्चित् केनापि प्रकारेण उपार्जयितुमसमर्थेनैव विधिना ब्रह्मणाऽतिमहान् क्षीराम्भोनिधिरपि तस्यैतदीययशसः प्रतिनिधिस्तुल्यः कृतः कथञ्चित् कृत इति वा । यश इव यशः सदृशमिति वा । मुख्याभावे हि प्रतिनिधिरपि क्रियते । क्षीरादप्युज्ज्वलमस्य यश इत्यर्थः । एवंविधः प्रतापवान् यशस्वी च कोऽपि नास्तीति भावः। मुख्यापेक्षया प्रतिनिधेर्न्यूनत्वादेकद्वीपव्यापिनः क्षीरोदादशेषद्वीपव्यापिन्याः कीर्तेराधिक्याच्च ॥ ४६ ॥

**यावत्पीलस्त्यवास्तूभवदुभयहरिल्लोमलेखोत्तरीये सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः । यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रावद्री सन्ध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ४७ ॥**

यावदिति । हे भैमि सेतुप्रालेयशैलौ श्रीरघुनाथकृतः सेतुः प्रालेयशैलश्च हिमाचलस्तौ यावत् यावन्तं देशमभिव्याप्य तिष्ठत यावत्कालं नौ वर्तेते वा एतस्य नरपतेः कीर्तिस्तावत्पर्यन्तं चरति भ्रमति ।

किंभूतौ सेतुशैलौ । पुलस्त्यगोत्रापत्ययोरावणकुबेरयोरयास्तू अगृहभूमिभूते ऽपि वास्तूभवन्त्यौ गृहभूमित्वं प्राप्ते नमे द्वे ऽपि ये हरितौ दक्षिणोत्तरे दिशौ तयोः क्रमेण श्यामत्वाच्छुभ्रत्वाच्च रोमरेखा रोमाली उत्तरीयं पूर्व्वकायावरणवस्त्रं तद्रूपौ । समुद्रबन्धनशिलापरम्परा दक्षिणदिशो रोमस्थानीया । हिमाचलश्च उत्तरदिग्वस्त्रस्थानीयः । तथा प्राक् च प्रत्यक् च प्राञ्चौ प्राचीप्रतिच्यौ दिशौ तयोः परिवृढौ स्वामिनाविन्द्रवरुणौ तयोर्ये नगरे तयोर्यदारम्भणं आरम्भः तस्मिन् स्तम्भयोरिव सुन्दरी मुद्रा आकारो ययोस्तावुभावद्री उदयास्ताचलौ च यावत्तं देशमभिव्याप्य तिष्ठतः पूर्व्ववत् । किंभूतावद्री । प्रातःसायंसन्ध्ये एव रक्तत्वात्पताकारूपी ताभ्यां रचिता निर्म्मिता शिखायां शिखरे शोभा रक्ता शोभा ययोस्तौ । पौलस्त्येति । गोत्रापत्ये गर्गादित्याद्यञ् (पा० ४। १।१०५) वास्तूभवदिति । च्वौ चेति (पा०७।४।२६।) दीर्घः । उभाववयवौ ययोस्ते उभय्यौ ते हरितौ चेति समासे पुंवद्भावः इति वा॥४७॥

युद्धा चाभिमुखं रणस्य चरणस्यैवादसीयस्य वा
वृद्धान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः । छिन्नं वावनतीभवन्निजभियः खिन्नं भरेणाथवा राज्ञानेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ ४८ ॥

युद्धेति । अनेन राज्ञा अरीणां शिरः भूमौ हठात् बलात्कारेण विलोठितं झटिति छेदात् स्फुरद्भूमग्नमभूत् । किम्भूतानामरीणां । आदसीयस्य अमुष्यायं आदसीयस्तस्य रणस्याभिमुखं सम्मुखं प्रारम्भमिलदीकृत्य वा बाणावलीः शरपङ्क्तीरुन्मुच्य मुक्त्वा युद्धा वा निपततां बाणपङ्क्तिवर्षणेन युद्धं कृत्वा रणभूमौ पतितानामिति यावत् । अथ च अन्तःकरणे स्वपरान्तरं स्वस्यात्मनः परस्य चान्तरं न्यूनाधिकत्वतारतम्यं बुद्धा वा आदसीयस्य चरणस्यैव अभिमुखं बाणावलीरुन्मुच्य निरायुधीभूय निपततां एतच्चरणयोर्दण्डवन्नमस्कारं कुर्व्वतां । किम्भूत शिरः । रणस्य सम्मुखे छिन्नं वा बाणै खण्डितं सद्धाऽवनतीभवत् न

स्वीयं भूमौ पतितं सत् । तथा चरणपर्दें । अथवा निजभियो भरेण स्वीयभयबाहुल्येन वा खिन्नं सत् अवनतीभवत् । द्वितीयपक्षे चरणाद्विलोठितं पादमर्दाग्रभागस्पर्शकारीकृत । वैरिणो यदि युध्यन्ते तर्हि म्रियन्त एव । ये च विचारका भीरवश्च ते शस्त्राणि परित्यज्य राजानमेव शरणं गच्छन्ति जीवन्तीति । एवकारेणान्यः शरण्यो न विद्यत इति सूचितं । अन्यदपि भाराक्रान्तं नम्रम्भवति । वा शब्दः प्रत्येकविकल्पे ॥४८॥

न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं समा
कृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क्वच न विशिखान् किन्तु प
तितद्विपद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति॥४९॥

नेति । युद्धकौतुकदर्शिनां नृणां दृष्टिः अस्य विशिखान् क्वच न कस्मिन्नपि तूणादुद्धारे निषङ्गात् उपादानकाले न पश्यतीति सर्वत्र सम्बन्धः । तथा कस्मिन्नपि गुणघटने मौर्व्याः सन्धानकाले न । आश्रुतिशिखं कर्णाग्रं मर्यादीकृत्य समाकृष्टौ च न कस्मिन्नपि सम्यगाकर्षणकाले न । तथा मोचनानन्तर वियति कस्मिन्नपि गगनदेशे न । तथा कस्मिन्नपि लक्ष्ये वेध्यवेधे न । तथा शत्रून्निर्भिद्य ततो निर्गत्य भुवि कस्मिन्नपि भूप्रदेशे पतितान्न पश्यन्ति । तर्हि किन्तु पतितानां बाणाघातकृतमर्मवेधवशाद्गतप्राणानां भूमिष्ठानां द्विपतां वक्षःश्वभ्रैः दूरं प्रहृत्य वहिर्निर्गतशरकृतच्छिद्रैः कृत्वा याऽनुमितिरनुमानज्ञानं अमून् बाणान् गोचरयति ज्ञापयति । चेदनेन बाणा न मुक्तास्तर्हि तेषां वक्षसि छिद्राणि कथं भवेयुरित्याद्यनुमितिः । चक्षुः श्वभैरिति पाठे चक्षुःस्थेव विध्यतीति भावः ॥ ४९ ॥

दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं किय
दस्य वर्ण्यते । क्षण प्रभूते जगति स्थिते गुणै
रिहाप्यते सङ्कटवासयातना ॥ ५० ॥

दमेति । हासयतीति हासिकाऽतिनोधा चेटी दमस्वसुश्चित्तं हृद्गतं

मवाद्यतुल्यनिरपेक्ष तस्मिन्नरत्नं वाऽवेत्य मत्वा देवी सरस्वती जगाद । हे देवि त्वं अस्य कियत् एनदीय कियच्चरितं वदसि वर्णयिष्यसि अपि तु बहुत्वात् प्रत्येकं वर्णयितुं न शक्यत इत्यर्थः । गुणैः सौन्दर्यादिभिः प्रभूते महति जगति स्थितेऽपि इह नृपे सङ्कटवासरूपा सम्मर्दरूपा सलिरूपा यातना सङ्कटावासेन या यातना तीव्रवेदना आप्यते प्राप्यते इति भण कथय । सर्वे गुणाः सर्वं जगदपवित्यज्यास्मिन्नेव सम्मर्देन नियसन्तीति एकैनैवकारेण वर्णय । पृथग्वर्णनाऽसामर्थ्यादित्यर्थः । वाक्यार्थः कर्म । अथ च भूयसि । वर्तमाने जगति मध्ये गुणैरिहैव कष्टरूपवसतिपीडा प्राप्यते न त्वन्यत्र । एतस्मिन्निवासे गुणा वद्धिगन्ता एवानर्हत्वादेकोऽपि गुणोऽत्र नास्तीति भणोत्युपहास । अस्य कियद्वक्ष्यसि कथय । अत परं मा स्म वादी । तस्मान्निर्गुणमेनं गुणित्वेन कियन्तं कालं वर्णयिष्यसीति कथयेति वा । स्थितेरिति पाठे गुणविशेषण । प्रभूतेरिति च ॥ ५० ॥

ब्रवीति दासीह किमप्यसङ्गतं ततोऽपि नीचेव मतिप्रगल्भते । अहो सभा साधुरितीरिणः क्रुधा न्यषेधदेतत्क्षितिपानुगान् जनः ॥ ५१ ॥

ब्रवीतीति । जन. प्रेक्षक क्रुधा स्वस्वामिवर्णनविघातसमुत्पन्नेन क्रोधेन इतीरिणो भाषमाणानेतस्य क्षितिपस्यानुगाननुचरान्न्यषेधत् निवारयामास । इति किं । इह सभायां भैम्या दासी किमपि असङ्गतमयुक्तं ब्रवीति वदति का कस्येत्यादि भाषते । ततोऽपि दास्या अपि नक्तञ्चारिणीवा इव चेटी अति प्रगल्भते नितरां धृष्टतया भाषते । नियामक कोऽपि नास्ति । अहो अयुक्तत्वादाश्चर्यं साधु सभा । विरुद्धलक्षणया काका वा अकारप्रश्लेषेण वा असाधुरेतादृशी सभा न कुत्रापीति । ब्रवीति वर्तमानसामीप्ये भूते लट् (पा ३ । ३ । १३१ ।) शशंसेति पाठ समीचीन । गल्भङ् धृष्टत्वे ॥ ५१ ॥

अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मुखसम्मुखेन सा । दमस्वसारं वदति स्म देवता

गिरामिलाभूवदतिस्मराश्रियं ॥ ५२ ॥

अथेति । अथ कृपामयी बहुलकृपा सा गिरा देवता मुखेन अन्यं नृप उद्दिश्य दमस्वसार वदति स्म । किम्भूतेन । तस्योद्देश्यस्य नृपस्य दिङ्मुख दिग्विभाग तस्य सम्मुखेन । किम्भूतं नृपं । इलाभूवत्पुरूरवस मिव । किम्भूतां । अतिस्मरा अतिक्रान्तस्मरा श्रीर्यस्यास्तां ॥ ५२ ॥

विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वग
चन्द्रिकाञ्चलैः । त्रपामपाकृत्य निभान्निभालय
क्षितिक्षितं मालयमालयं रुचः ॥ ५३ ॥

विलोचनेति । हे भैमि त्वं अपाङ्गाध्वगाया नेत्रप्रान्तरूपमार्गगामिन्याश्चन्द्रिकाया नेत्रमध्यगनीलगोलकस्याञ्चलैरिवाञ्चलैरतिदीर्घैर्विलोकनव्यापारैः कटाक्षैरिति यावत् तैं कृत्वा निभात् वस्त्वन्तरविलोकनव्याजात् त्रपामपाकृत्य मालय मलयाद्रिस्वामिनं मायाः सम्पद्रूपाया लक्ष्म्या आलय वा क्षितिक्षित निभालय विलोकय । किम्भूत । रुचः कान्तेः आलयं स्थानीभूतं । किम्भूतैरञ्चलैः । विलोचने एव इन्दीवरे नीलोत्पले नीलोत्पलतुल्ये नेत्रे तयोर्मध्ये वास स्थितिस्तया वासितैर्भावितैः नयननीलिम्ना नीलीकृतैरित्यर्थः । तथा सितैः शुभ्रैः । नील श्वेतकान्तिभिः कटाक्षैर्विलोकयेत्यर्थः । अथ च विलोचनतुल्यानां नीलोत्पलानां वासेन परिमलेन सुगन्धीकृतैः सितैः तिर्य्यगायतशीलत्वाद पाङ्गतुल्यमार्गगामिन्या ज्योत्स्नाया अञ्चलैः करैरुपलक्षित । तथा रुचः कान्तेः आलय स्थान । तथा स श्रियः आलयो यस्य श्रियमीलिनिर्यासिन चन्द्रमसैव राजानं त्रपामपाकृत्य पश्येत्यर्थः । स श्रिये मा च पद्मायामिति विश्वः । निभालय । चुरादावात्मनेपदिनः पाठात् परस्मै पदं चिन्त्य । निभालन निभालस्तद्वान्निभालयांस्तादृशा कुर्विति । तत् करोतीति णिच् (पा० ३ । १ । २६ । सू० १ या०) मतुल्लोपे साधनीयं ५३॥

· इमं परित्यज्य परं रणादरिः स्वमेव भग्नः आ
रणं मुधाविशत् । न वेत्ति यत्तानुमितः कृतस्म
यो न दुर्गया शैलभुवापि शक्यते ॥ ५४ ॥

त्वमिति । हे भैमि रणाद्भग्नः पलायितः कृतस्मयः कृतगर्वः अ-रिः एतस्य शत्रुः परं शत्रुभूतमथ चातिमहान्तं त्वमं परित्यज्य स्वमेव स्वी यमेव शरणं गृहं मुधा वृथाऽऽविशत् । त्वदीयोऽहं मा रक्षेत्युक्त्वा एन मेव शरणं रक्षितारं कृतगर्वत्वादप्राप्य स्वगृहं वृथैव गत इत्यर्थः । य द्यस्मात् दुर्गया विषमया शैलस्य भू: तया गिरिदुर्गेणेत्यर्थः । तथापि इतोऽस्मान्नृपात् त्रातु न शक्यते इति न वेत्ति । गिरिदुर्गं प्रविष्टोऽपि बलात् ततोऽपाकृष्य हन्यते स्वगृहं प्रविष्टो हन्यत इति किं वाच्य । अ तः स्वगृहप्रवेशो व्यर्थ इत्यर्थः । अथ च पर्वतपुत्र्या दुर्गयापि त्रातुं न शक्यते । तद्रूपं इत्थैव शरणागतस्य रक्षत्ययमिति भाव । शरणं गृ-हरक्षित्रोरित्यमरः ॥ ५४ ॥

अनेन राज्ञाऽर्थिषु दुर्भगीकृता भवन् घनध्वा नजरत्नमेदुरः । तथा विदूराद्रिरदूरतां गमी यथा स गामी तव केलिशैलतां ॥ ५५ ॥

अनेनेति । घनद्रुमो योऽतिप्रसिद्धो विशेषेण दूरोऽद्रिरयं च रोह-णाचलस्तथा तेन प्रकारेण अदूरता सामीप्यं गमी गतो यथा येन प्रका रेण तव केलिशैलतां क्रीडापर्वतत्वं गामी गमिष्यति । किंभूतः । अ तिवदान्यमानेन राज्ञाऽर्थिषु याचकेषु विषये दुर्भगीकृत. उपेक्षाविषय-ता अयाचनीयतां प्रापितः । अत एव व्ययाभावात् नवा घना मेघा-स्तेषां ध्वानः शब्दस्तस्माज्जातैरत्नैर्मेदुरः परिपुष्टो भवन् । विदूराद्री हि नवमेघशब्दाद्रत्नशलाका उत्पद्यन्ते ताश्च याचकैर्नीयन्ते । अस्मिं-स्तु वदान्ये सति तत्र कस्यापि याचकस्यागमनाद्यभावाद्रत्नैः कृत्वा स्व दुपचयात् यावन्मेदुरो भवति स एव रत्नमयत्वात्तव क्रीडापर्वतस्थाने भविष्यति । अति वदान्योऽयमिति भावः । भवद्घनध्वानेति पाठे भवद्-भ्य उत्पन्नेभ्यो घनध्वानेभ्य इति व्याख्येयं । गमी गामीति पूर्ववत् ॥५५॥

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजा तच्छायान्तःपातचन्द्रायितचरणनखश्रेणिरेणेय नेत्रे । दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन

पीनं भूलोकस्यैष भर्त्ता भुजभुजगयुगं सांयुगीनं बिभर्त्ति ॥ ५६ ॥

नम्रेति । हे ऐणेयनेत्रे ऐणेयो हरिणपोतस्तन्नेत्रवन्नेत्रे यस्यास्तत्सं बुद्धिः । एण्यवयवभूते वा नेत्रे यस्याः । भूलोकस्य भर्त्ता एष राजा संयुगे साधु सांयुगीनं रणरसिकं भुजद्वयरूपं भुजगयुगं सर्पद्वयं बिभर्त्ति । किंभूतः । नम्राः प्रत्यर्थिपृथ्वीपतयः शत्रुनृपास्तेषां मुखान्येव कमलानि तेषां लज्जया म्लानता तद्रूपा भृङ्गेभ्यो जाता छाया भ्रमरसम्बन्धिनी या शोभा कज्जलता तस्या अन्तःपातेन नखमध्ये प्रतिबिम्बितेन चन्द्रायिता चन्द्रवदाचरिता चरणनखश्रेणिर्यस्य । किंभूतं । दूराणां सदर्पाणामरीणां प्राणास्त एवातिप्रियत्वादमृतरसस्तस्य लहरीणां तरङ्गाणां भूरि घस्मरतरा पानेन पीनं पीवरं । समर्थनृपप्राणवियोगकरणेनोर्जस्वि समानाकारत्वादतिक्रूरकर्मत्वाच्च भुजयोः सर्पत्वं । सर्पाणाञ्च पवनाशनत्वात् प्राणाख्यैः पवनैः पीनत्वं युक्तं । दर्परहितांश्चरणपातिनो वैरिणो रक्षति सदर्पाननम्रान्मारयत्ययमिति भावः । ऐणेयं । एण्या अपत्यं स्त्रीभ्यो ढक् (पा० ४ । १ । १२०) । एण्या अवयवा इत्यर्थे एण्या ढञ् (पा० ४ । ३ । १५९) । सांयुगीनं । साध्वर्थे प्रतिजनादित्वात् खञ् (पा० ४ । ४ । ९९) ॥ ५६ ॥

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयः फणसमुचितः काययष्टीनिकायः । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदःकीर्त्तिपूरः ॥ ५७ ॥

अध्याहार इति । अमुष्य कीर्त्तिपूरः क्व कस्मिन् जगति न जागर्त्ति न प्रकाशते अपि तु स्वर्गपातालमर्त्यलोकेषु स्फुरति । लोकत्रयव्यापित्वं क्रमेणाह । किंभूतः । स्मरहरशिरसि यश्चन्द्रः तस्य यः शेष एककला तस्या अध्याहारो लक्षणया पञ्चदशकलाभिः पूरकः । स्वर्गङ्गत्वा शिवशिरःस्थितचन्द्रो येन षोडशकलः क्रियत इत्यर्थः । अन्यथाप्यपूर्णवाक्ये

किमपि योग्यं पदान्तरमध्याहृत्य वाक्यपूरणं क्रियते । तथा शेषस्याहेः सर्पराजस्य भूयांसः सहस्रमङ्ख्याकाः फणास्तेषां समुचितो योग्योऽतिदीर्घः काययष्टीनिकायः शरीरदण्डिकासमूह. । फणसहस्रस्य शरीरं सहस्रेण भवितव्यं । पाताल गत्वा नदीयशिष्टशरीरपूरणं क्रियत इत्यर्थः । तथा मुनेरगस्त्यस्य चुलुकेन सङ्कुचितहस्तपानं तस्माद्यस्त्रासो भयं तस्य नाशे निरासे यभि सामर्थ्येनोपायः साधनं दुग्धाम्भोधेः । कायव्यूहः शरीरसङ्घः । पूर्वमेकाकित्वेन पानाद्भयमभूदिदानीमेतद्यशो रूपानेकशरीरधारणात् एकस्यानेकपाने सामर्थ्याभावाज्जलमात्रस्य च क्षीरतामादनाद्दुग्धयशसोय सरूपत्वाद्दुग्धे यशोभ्रमो यशसि दुग्धभ्रम इति दुग्धयशसोर्निर्द्धेतुमशक्यत्वात् पानाभावात् । भयाभावसाधनभूतः क्षीरोदधेः कायव्यूहरूप इत्यर्थः ॥ ५७ ॥

राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं कृतं लक्षैर्लक्ष्यभिदो दृशैव जयतः पद्मानि पद्मैरलं । कर्त्तुं सर्व्वपरच्छिदः किमपि नो शक्यं परार्द्धेन वा तत्सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्व्रतेतद्द्विषां ॥ ५८ ॥

राज्ञामिति । नाम्ना शतघ्नीं यत्तु शतीलोहकण्टकसञ्चितां हेतिं शस्त्रं कलयतो धारयतः अस्य राज्ञः शतेन किं कृतं । तेन शस्त्रेण धारणात् तैरनेकैरप्यस्य किमपि कर्त्तुं न शक्यत इत्यर्थः । अथ च यः शतमारणसमर्थं शस्त्रं गृह्णाति तस्य शतसङ्ख्यामितैराजभिः किमपि कर्त्तुं न शक्यते । तथा राज्ञां लक्षैः किं । कृतं पूर्य्यतां । यतः लक्षं वेध्यं भिनत्तीति लक्ष्यभित्तस्य लक्ष्यभिदः । यो हि कुत्रचिदप्यप्रतिहतसायकस्तस्य लक्षसङ्ख्यैरपि किमपि कर्त्तुं न शक्यत इत्यर्थः । तथा राज्ञां पद्मैः पद्मसङ्ख्यैः राजभिरपि किं । तैरप्यस्य किमपि कर्त्तुं न शक्यते । यतो दृशैव पद्मानि कमलानि पद्मसङ्ख्यकान्वैरिणश्च जयतः । यो हि कमलतुल्यनेत्रस्तस्य शत्रुतः पराभवो न । अथ च यो भ्रूक्षेपमात्रेण पद्मसङ्ख्यापरिमितान् राज्ञो जयति तस्य पद्मसङ्ख्यैः राजभिः किञ्चित्

कर्तुं न शक्यते । तथा या समुच्चये राज्ञां परार्द्धेनापि परार्द्धसङ्ख्यै राजभिः यस्य किमपि कर्तुं नो शक्यं । यतः सर्वे च ते परे शत्रवश्च तांश्छिनत्ति तस्य । यो हि वैरिमात्रहनने समर्थस्तस्य परार्द्धसङ्ख्याः शत्रवः किं कुर्वन्ति । तत्तस्मादेतस्य द्विषा सङ्ख्याद्रूपाद्पगतं पलायनं अयं च परार्द्धरूपाया सङ्ख्याया अप्यपगमं परित्यागमसङ्ख्यात्वं विना काचिद्गतिर्नास्ति यत एते असङ्ख्ये यावद्भविष्यन्तस्तावज्जीविष्यन् असङ्ख्येयस्य नास्ति तस्मात्पलायनमेव जीवनोपायः । पलायितान्न घ्नन्तीत्यर्थः । लक्षं शरव्ये सङ्ख्यायां । शतघ्नीं । अमनुष्यकर्तृके चेति टक् (पा ३ । २ । ५३) ॥ ५८ ॥

वयस्ययाऽऽकूतविदा दमस्वसुः स्मितं वितत्या भिदधेऽथ भारती । इतः परेषामपि पश्य या चतां भवन्मुखेन स्वनिवेदनत्वरां ॥ ५९ ॥

वयस्ययेति । अथ दमस्वसुराकूतविदाऽभिप्रायज्ञया वयस्यया सख्या स्मितं वितत्य हसितं कृत्वा भारतीति अभिदधे उक्ता । इति किं । हे भारति त्वं भवन्मुखेन त्वन्मुखेन स्ववर्णनं याचतां प्रार्थयमानानामितोऽस्मात्पार्श्वात्परेषामन्येषां राज्ञां स्वनिवेदने स्ववर्णने एव त्वरां कालक्षेपासहनत्वं पश्य एतद्वर्णनाद्विरमेति भावः । अन्यानपि वर्णयेत्यर्थः ॥५९॥

कृताऽत्र देवी वचनाधिकारिणी त्वमुत्तरं दासि ददासि का सती । इतीरिणस्तन्नृपपारिपार्श्विकान् स्वभर्तुरेव भ्रुकुटिर्न्यवर्त्तयत् ॥ ६० ॥

कृतेति । स्वभर्तुः स्वस्वामिन एव भ्रुकुटिः कोपवशाद्भ्रूभङ्ग इति पूर्वोक्तं ईरिणो भाषमाणांस्तान् नृपपारिपार्श्विकान् राजसेवकान् न्यवर्त्तयत् न्यषेधत् । भ्रूक्षेपमात्रेण तेनैव ते निवारिता इत्यर्थः । इति किं । हे दासि अत्र राजवर्णने वचनाधिकारिणी भाषणाधिकारिणी देवी कृता त्वं का सती का भवन्ती केन प्रयुक्ता सती अत्र वाचाली कुलटा का त्वमुत्तरं ददासि । अत्र त्वं वक्तुमयोग्येति । पारिपार्श्विकान् । परिपार्श्वं वर्त्तते परिमुखञ्चेति (पा० ४ । १ । २९) चकाराट्ठक् ॥ ६० ॥

घराधिराजं निजगाद भारती तदुन्मुखेपद्वलिता
ङ्गसूचितं* । दमस्वसारं प्रति सारवत्तरं कुलेन
शीलेन च राजसूचितं ॥ ६१ ॥

धरेति । भारती दमस्वसारं प्रति धराधिराजं नृपं निजगाद कथयामासेत्यर्थः । किंभूतं । तस्य वर्ण्यनीयस्य नृपस्य उन्मुखं सम्मुखं ईषद्वलितेन किञ्चित्परिवर्त्तितेनाङ्गेन करादिना सूचितं ज्ञापितं । तथा सारवत्तरमतिबलिष्ठं । तथा कुलेन शीलेन स्वभावेनाचरणेन वा राजसु मध्ये सूचितं योग्यं श्रेष्ठं । कुलशीलाभ्यां सारवत्तरं श्रेष्ठतरं वा ॥ ६१ ॥

कुतः कृतैव वरलोकमागतं प्रति प्रतिज्ञाऽनवलो
कनाय वा । अपीयमेनं मिथिलापुरन्दरं निपी
य दृष्टिः शिथिलास्तु ते वरं ॥ ६२ ॥

कुत इति । हे भैमि ते त्वया आगतं स्वयम्वरार्थे वरलोकं परिषोतृवृन्दं प्रति लक्षीकृत्य अनवलोकनाय अदर्शनायैवममुना दृश्यमानेन प्रकारेण प्रतिज्ञा कुतः कस्मात् कारणात् कृता वापि त्वयुक्तमेतत् । वेति पाठे कुतो वेत्यन्वयः । अनवलोकनायैवेति अवधारणार्थो वा । न केवलं वरणायैव किन्तु अनवलोकनायापीति अप्यर्थो वा । किन्तर्हि कर्त्तव्यमित्यत आह । हे भैमि ते इयं दृष्टिः एनं मिथिलाया नगर्य्याः पुरन्दरं स्वामिनं निपीयैव शिथिलाऽस्तु एतद्वरं । सर्व्वथाऽनवलोकनाद्विलोकनं वरमिति राजान्तरवदनानुरागेऽपि न विलोकयेत्यर्थः । अन्ये यद्यपि नावलोकितास्तथाप्येनं विलोकय । विलोकनेनापि एनं सभावयेत्यर्थः । पूर्व्वश्लोके सामान्यस्य उक्तत्वात् । अन्वादेशे (पा २ । ४ । ३४) एनमिति समर्थनीयं ॥ ६२ ॥

न पाहि पाहीति यदब्रवीररमु ममौष्ठ तनैवमभ
ूदिति क्रुधा । रणाङ्कितावस्थ विरोधिमूर्द्धभिर्वि
दश्य दन्तैर्निजमोष्ठमास्यते ॥ ६३ ॥

* वलिताल्पसूचितमिति पाठान्तरं । स० मू० ।

न पाहीति । अस्य विरोधिमूर्द्धभिर्वैरिशिरोभिः इति क्रुधा रणाङ्कितौ निजमोष्ठं दन्तैर्विदश्य विशेषेण दष्ट्वा आस्यते स्थीयते । इति किं । हे ओष्ठ त्वं अमुं नृपं प्रति पाहि पाहि इति यत्र अवदीः तेन कारणेन समौष्ठविलुञ्चनपूर्वकं स एवमभूदिति । पाहि पाहीति यो वदति तमयं रक्षति । पाहीति पदोच्चारणे प्रथमं तवैव सामर्थ्यं पकारस्यौष्ठ्यत्वात् तथा च सदर्पत्वात्तदनुच्चारणान्मामयं मारितवानिति त्वमेवापराधीत्यर्थः । शवमुष्टिन्यायेन दष्टैव न तु मुक्तेति ज्ञायत इत्यनेन सूचितः ॥ ६३ ॥

भुजेऽपसर्पत्यपि दक्षिणे गुणं सहेषुणाऽऽदाय पुरः
प्रसर्पिणे । धनुः परीरम्भमिवास्य सम्मदान्
महाहवे दित्सति वामबाहवे ॥ ६४ ॥

भुज इति । महाहवे महति रणसम्मर्दे दक्षिणेऽपसव्ये अथ च सरले अनुकूलेऽपि भुजे इषुणा सह गुणं मौर्वीमपि आदाय गृहीत्वाऽपसर्पति कर्णपश्चाद्देशं गच्छति सति पुरः प्रसर्पिणे रिपुसम्मुखयायिने दृढतरमुष्टयेऽस्य वामबाहवे सव्यभुजाय धनुः सम्मदादिव दृढतरत्वजाताद्दर्पादिव परीरम्भमालिङ्गनं दित्सति दातुमिच्छति । दित्सतीयेति वा । अन्यस्मिन्नपि गुणिनि विश्वासपात्रे सङ्ग्रामात् स्वजनमादाय पलायिते सति सङ्ग्रामं कर्तुं सम्मुखाय वामाय दुष्टायापि अयमेव साधुरिति मत्वा मुख्यगेन केनचित्सख्येनालिङ्गनं दीयते । दृढमुष्टिरतिशूरोऽयमिति । सङ्ग्रामे कर्णान्तपर्यन्तमाकर्षणाद्धनुश्चक्रीकृत्य शरान्मुञ्चतीत्यास इति भावः । वामबाहव इति । ददातियोगाच्चतुर्थी ॥ ६४ ॥

अस्यारिवीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः
सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् ।
तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रि
यः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवा
दः किमु ॥ ६५ ॥

धस्येति । अस्योर्वीरमणस्य राज्ञः यद् यशः एतादृशं । कीदृशं यशः । पर्व्वणि भवः पार्व्वणः पूर्णो विधुश्चन्द्रः तस्य द्वैराज्यं द्वयोराज्ञोः कर्म्म तत्र सज्जं तत्परं पार्व्वणचन्द्रसदृशमित्यर्थः । तथा सर्व्वदिक्षु उज्ज्वलस्य धवलस्य शर्व्वपर्व्वतस्य हरनिवासभूतकैलासस्य शिखश्रीः श्वेतकान्तिस्तद्विषये यो गर्व्वस्तस्य निर्व्वासि निराकारकं । कैलासादपि धवलतरं एवम्भूतं यत् यशः तदम्बुप्रतिबिम्बितं सामुद्रशङ्खप्रतिबिम्बं किमु । तथा शरदि पर्जन्यराजिर्मेघपङ्क्तिस्तस्याः श्रीर्धवलिमशोभा तस्याः पर्य्यायः किमु । शब्दस्य शब्दान्तरेणोच्चारः पर्य्यायः । तथा दुग्धसिन्धोः क्षीरोदस्य पयसां दुग्धानां सर्व्वेण प्रकारेणानुवादः पुनरभिधानं किमु । चन्द्रादितुल्यमेतद्यश इति भावः । अन्तोऽपि स विष्टितद्वैराज्यः प्रतिपक्षं निरस्यति ॥ ६५ ॥

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावट
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नाथ
क्कः । उन्नीतस्तुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुरक्षु
ण्णासु क्षितिषु क्षिपन्निव यशःक्षौणीजबीजव्र
जं ॥ ६६ ॥

निस्त्रिंशेति । अस्य नृपस्यायं दृश्यमानः करः कैरेवम्भूत इव न तर्कितः तर्कितः अपि तु मर्त्यैरप्येवमेव तर्कितः । कीदृशः करः । निस्त्रिंशेन खड्गेन कृत्वा त्रुटितायाः खण्डनं प्राप्तायाः अरिवारणघटायाः वैरिगजपरम्परायाः कुम्भानां गण्डस्थलानां अस्थिकूटा अस्थिसमूहास्तेषामवटस्थाने गर्त्तलक्षणस्थाने स्थायुकः स्थितिशीलो मौक्तिकोत्करो मुक्तासङ्घस्तस्य किरः विक्षेपकः तथा चत्वारि करिनररथतुरगलक्षणानि अङ्गानि येषामेवम्भूतानि सैन्यानि येषु ते समराः सङ्ग्रामास्तेषु त्वङ्गन्तश्चित्रं गच्छन्तस्तुरङ्गास्तेषां क्षुरैश्चरणाग्रनखतीक्ष्णाग्रैः क्षुण्णासु विदारितासु कृष्टासु क्षितिषु रणक्षेत्रभूमिषु यशोलक्षणस्य क्षौणीजस्य तदुत्पादकं बीजव्रजं बीजसङ्घं क्षिपन्निव वपन्निव । यशोवृक्षस्य शुभ्रत्वात्तत्कारणेन बीजेन शुभ्रेणैव भवितव्यं । अरिकरिकुम्भस्थमुक्ताफलानि

बीजस्थाने जातानीत्यर्थः । अन्योऽपि पात्रस्थं बीजमष्टुं स्फरणाकृष्य हलकृष्टासु भूमिषु वपति । वैरिकरिणां हननादेतस्य वपुः यशो जातमिति । तैर्दस्यारक्षुराः खुरा इति तुल्यः शब्दः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्ग इति । इमप्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं निस्त्रिंशाद्यर्थमिति डः । स्यायुक्तं । मपपनपंदस्येत्युकञ् (पा० ३ । २ । १५४) । किरतीति किरः । इगुपधेति कः (पा० ३ । १ । १३५) ॥ ६६ ॥

अर्थिभ्रंशवहूभवत्फलभरव्याजेन कुब्जायितः सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः । आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं याचकश्रेणीवर्जनदुर्यशोनिबिडितव्रीडस्तु रत्नाचलः ॥ ६७ ॥

अर्थीति । स कल्पद्रुमः प्रसिद्धः केवलं कल्पितप्रदः । अस्मिन् राजनि अतिदानं अतिशयितं दानं भजति अकल्पितसम्पिद्दति सति अर्थिभ्रंशाद्याचकैर्वर्जनात् पूर्वमत्यान्यपि व्ययाभावाद्बहूभवन्ति बहूनि जायमानानि फलानि तेषां भरव्याजेन भारगौरवमिषेण कुब्जायितः सर्वथदाक्षरितोऽतिनम्रः सन् कथमप्यास्तां महता क्लेशेन । अप च लज्जागोपनप्रकारेणापि तिष्ठतु कालं यातिवाहयतु । नम्रत्वेन लज्जागोपनं युक्तमिति भावः । तु पुनः रत्नाचलः याचकश्रेण्या वर्जनात् परित्यागात् जातेन दुर्यशसाऽपकीर्त्या निबिडिता घनीकृता व्रीडा लज्जा यस्य सः याचकाभावान्निर्व्ययया रत्नसम्पदा कृत्वा च वृद्ध्याऽनुस्यूता वृद्धिस्तेनोदग्रः उन्नतशिरस्कोऽथ वा नम्रः एव कथमास्तेऽपि तु लज्जितस्योन्नत्यमयुक्तमेवेत्यर्थः । कल्पवृक्षस्य स्वर्गस्थितत्वाद्द्रावनया फलभरव्याजेन नम्रतया च लज्जापरिहारः सम्भवः । रोहणाद्रेस्तु भूकलोकनियमाद्दूरावस्थाभावेऽपि याचकैर्वर्जनाल्लज्जानिशमनमिति युक्तं तत्तु तस्यनास्तीत्याश्चर्यं । कल्पवृक्षमेरुभ्यामप्ययमधिको दाताशूर इति भावः । कुब्जायितः । लोहितादेराकृतिगणत्वादाचारे क्यष् (पा० ३ । १ । १३) ॥ ६७ ॥

सृजामि किं विघ्नमिदं नृपस्तुताविति ह्रितैः पृच्छति तां सखीजने । स्मिताय वक्त्रं यदवक्रयद्वधूस्तदेव वैमुख्यमलक्षि तन्नृपे ॥ ६८ ॥

सृजामीति । वधूर्भैमी सखीजने इङ्गितैर्भ्रूभङ्गादिचेष्टितैः कृत्वा तां भैमीमिति पृच्छति सति स्वाभिप्रायज्ञापनार्थं स्मिताय वक्त्रं यत् अवक्रयत् वक्रं चक्रे तद्वदनवक्रणमेव तन्नृपे तस्मिन् राज्ञि वैमुख्यं पराङ्मुखत्वं अलक्षि अलक्षित । अन्यतो विलोकनादेवात्रानादरोऽस्या इतीति सखीभिर्लक्षितेन राज्ञा वा लक्षितमित्यर्थं । इति किं । हे भैमि अहं अयच्चार्थी नृपस्य इदं नृपस्तस्य स्तुतौ विघ्नं सृजामि किं । वैलक्ष्यमिति पाठे अप्राधान्यतया यस्मान्मुखमवक्रयत् तस्मादेव भूपगतमेव वैलक्ष्यं मालिन्यं लोकैरलक्षितमित्यर्थः । स्मिताय । स्मितं कर्तुं क्रियार्थोपपदेति चतुर्थी (पा० २ । ३ । १४) ॥ ६८ ॥

दृशाथ निर्दिश्य नरेश्वरान्तरं मधुस्वरा वक्तुमधीश्वरा गिरां । अनूपयामास विदर्भजाश्रुती निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥ ६९ ॥

दृशेति । अथ मधुरस्वरा गिरामधीश्वरा वक्तुं वर्णयितुं दृशा नेत्रव्यापारेण नरेश्वरान्तरं नृपान्तरं निर्दिश्य दर्शयित्वा विदर्भजाश्रुती भैम्याः कर्णौ निजास्य स्वीयवदनमेव चन्द्रस्य सुधाभिरमृतरूपाभिरुक्तिभिः कृत्वा अनूपयामास परिपूर्णे चकार तथा चेत्यर्थः । अनुगता आपो यत्रानूपो देशः । ऋगादिना समासान्ते ऊदनोर्देशे इत्यूकारः (पा० ६ । ३ । ९८) । अनूपे जलप्लुते चकार । तत्करोतीति णिच् । लक्षणया मधुस्वराकर्णनस्तिमिते चकारेत्यर्थः । अपूपुरच्छ्रीभुव श्रुती पुनरिति पाठे णौ चङ्युपधाया इति कि वाच्यमित्युपधाह्रस्व (पा० ७।४।१) ॥ ६९ ॥

स कामरूपाधिप एष हा त्वया न कामरूपाधिक ईक्ष्यतेऽपि यः । त्वमस्य सा योग्यतमाऽसि वल्लभा सुदुर्लभा यत्प्रतिमल्लभा परा ॥ ७० ॥

स इति । एष कामरूपाख्य देशविशेषस्याधिप । अथ च मदनरूप स्यापि स्वामी तद्रूपधारणादित्यर्थः । स कं । यस्त्वया न ह्यद्यतेऽपि न नाभिलष्यत इति तु किं वाच्यमित्यर्थः । हा कष्टमनुचितमेतत् । यतः कामाद्रूपेणाधिक अतिसुन्दरः । अथवा कामाद्रूपेणाधिको नेति काकु- र्वा । यतोऽयं कामादधिकस्तस्मादस्य योग्यतमा सा त्वं वल्लभाऽसि नितरामुचिता प्रेयसी भवसि । सा का । परा उत्कृष्टा यस्यास्तव प्रति मल्ला तुल्या भाकान्तिः सुतरां दुर्लभा यस्याः । सदृशी कान्तिः कस्या- श्चिदपि न दृश्यते । त्वय्यपि सुन्दरत्वादित्यर्थः । अथ च पराऽन्या स्त्री यस्यास्तुल्यकान्तिर्दुर्लभा सातिसुन्दरी त्वमित्यर्थः । त्वमतिसुन्दरी अस्य सुतरामयोग्येत्यर्थ इति वा व्याख्यानान्तरं क्लिष्टत्वादुपेक्ष्यम् । सुदु- र्लभा । नञ्सुदुर्भ्यां केवलाभ्यामिति नुमनिषेधः (पा० ७।१।६८) ॥ ७०॥

अकर्णधाराशुगसम्भृतां गतां गतैररित्रेण विना
स्य वैरिभिः । विधाय यावत्तरणेर्भिदामहो नि
मज्य तीर्णः समरे भवार्णवः ॥ ७१ ॥

अकर्णेति । अस्य वैरिभिः समरे निमज्ज्य निपत्य यावान् सकलस्त- रणिः सूर्यस्तन्मण्डलस्येत्यर्थः । भिदां भेदं विधाय कृत्वा भवः संसार एव दुस्तरत्वादर्णवस्तीर्णः मोक्षप्राप्तेरपुनरावृत्तेरित्यर्थः । अहो आ- श्चर्यं शूरतरोऽयमित्यर्थः । किम्भूतैः । अरिभ्यस्त्रायत इत्यरित्रं कवचं तेन विनाऽथवारिरस्मात् सकाशाद्वक्रेणान्येन शूरतरेण विना न विद्यन्ते कर्णाः कर्णाकारा लोहकण्टका यासां एवंविधा धारा येषामेवंभूताः । कर्णान् धरन्ति कर्णधाराः न कर्णधारा अकर्णधारा एवम्भूता या आ शुगा बाणाः अङ्कुशाः शरास्तैः सम्भृतानि प्रोतानि अङ्गानि अवयवा ये- षां तेषां भावस्तत्ता तां गतैः प्राप्तैः प्रत्यवयवविद्धैरित्यर्थः । यावत् ता- रण्यां । अथ च कर्णधारी नाविकः आशुगो वायुस्ताभ्यां कृत्वा संभृ- तानि परिपुष्टानि अङ्गानि रज्जुस्तम्भादीनि तरणोपायभूतानि च येषां कर्णधाराशुगाभ्यां युता वा संभृताङ्गानि येषां एवम्भूता ये न भवन्ति तद्भावं गतैः । अरित्रेण जलक्षेपणकाष्ठेन विना तस्याप्यभावे यावत्तरणे

सकलाया नौकाया भेदं विधाय सकलां नौकां स्फोटयित्वा निमज्य बु-डित्वा घर्णवस्तीर्णः । हे भव शिव इदं अत्याश्चर्यं कर्णधाराद्यभावे नौकाद्यभेदे बुडित्वा तरणं तत्रापि समुद्रस्येति अत्याश्चर्यं अघट-मानघटने च आश्चर्यसूचकं शिवनामोच्चारणं क्रियते । कर्णधारस्तु ना-विकः । नौकादण्डः क्षेपणी स्यादरित्रं । स्त्रियां नौस्तरणिस्तरिः । उ-मणिस्तरणिर्मित्र इत्यमरः ॥ ७१ ॥

अमुष्य भूलोकभुजो भुजोष्मभिस्तपर्तुरेव क्रिय
तेऽरिवेश्मनि । प्रपां न तत्रारिवधूस्तपस्विनी
ददातु नेत्रोत्पलवासिभिर्जलैः ॥ ७२ ॥

अमुष्येति । भूलोकभुजो भूपालस्यामुष्य भुजोष्मभिर्बाहुप्रतापैः अ-रिवेश्मनि अतिसन्तापकारित्वात्तपर्तुरेव ग्रीष्मर्तुरेव यद्यस्मात् क्रियते तस्मात् तत्र ग्रीष्मर्तौ तपस्विनी दीनारिवधूः नेत्राण्येवोत्पलानि तेषु वासिभिर्जलैः अश्रुभिः । अथ च नेत्रतुल्यकमलानां यो वासः परिम-लः स विद्यते येषु तैर्जलैः कृत्वा प्रपां पानीयशालां न ददातु अपि तु ददात्वेव ।-तपस्विनी ग्रीष्मर्तौ सुगन्धिभिरुदकैः प्रपां करोति । अनेन पतिमारणात् शोकव्याप्ता सर्वाप्यरिनारी रुरोदैवेति भावः । प्रपापानी-यशालिकेत्यमरः ॥ ७२ ॥

एतद्गत्राविघातसज्ञदसृगसुहृद्वंशसार्द्रेन्धनै तदुद्दो
रुद्दामप्रतापज्वलदनलमिलद्धूमधूमाय । ए
तद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य ना
सीत् एतन्नासीरवाजिव्रजखुरजरजोराजिराजि
जिस्थलीषु ॥ ७३ ॥

एतदिति । आजिस्थलीषु सङ्ग्रामभूमिषु एतन्नासीरस्य एतत्सेनामु-खस्य पुरो गच्छन्तो वाजिव्रजास्तेषां खुरेभ्यश्चरणाग्रेभ्यो जातैरुद्धूलिता रजोराजिः रेणुपङ्क्तिः एतस्य दिग्जैत्रयात्रा दिग्जयकारिण्यो या यात्राः वैरिसम्मुखं गतास्तासु असममतुल्यं समरस्य भरं सम्मर्दं पश्यतः कस्य

जनस्य एतेन राज्ञा दत्तेभ्योऽसिघातेभ्यः स्रवदसृग्रक्तं येषां एतेन द त्तोऽसिघातो येभ्य अत एव स्रवदसृजो वासुहृद्गणा अरिसङ्घा अथ च तद्रूपा येऽवयवास्त एव सार्द्राण्यन्धनानि दाह्यकाष्ठानि यस्यैवंभूत एतस्य दोर्लीलोद्भवोद्दामप्रतापस्तीव्रप्रतापः स एव ज्वलन्देदीप्यमानोऽनलः तस्य मिलन् सम्भवन् भूना बाहुल्यं यस्यैवंभूतो बहुतरो धूमस्तस्य भ्रमाय सादृश्याद्धूमेऽपि रजसि धूम इति बुद्धये नासीदपि तु सर्वस्यापि । आर्द्रेणेन्धनेनाग्निं दहतो बहुर्भूयान् धूमो भवति । सर्वेऽप्यरय एतत्प्र तापवह्निना दग्धाः । अप्रतिहतप्रतापमिति भावः । सार्द्रमित्यार्द्रं पर्य्या यः । मिलद्भूमभूमेति पाठे मिलतो धूमस्य बाहुल्यं तद्भ्रान्त्यै ॥ ७३ ॥

क्षीरोदन्वदपः प्रमथ्य मथितादेशोऽमरैर्निर्मिते स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहास नं । केषां नाजनि वा जनेन जगतामेतत्कवि त्वामृतस्त्रोतःप्रोतपिपासुकर्णकलशीभाजाभिषे कोत्सवः ॥ ७४ ॥

क्षीरेति । केषां जगतां भुवनानां सम्बन्धिना जनेनास्य राज्ञो यश सोऽभिषेक एवोत्सवो नाजनि नाकारि अपि तु स्वर्गादिस्थितेन सर्वे णापि लोकेनैतदीययशसोऽभिषेकः कृतः । विशेषणाधिष्ठानमाह । किम्भूतस्य यशसः । क्षीरोदन्वदपः क्षीरोदन्वान् क्षीरसमुद्रस्तस्यापो ज लानि दुग्धरूपाणि प्रमथ्य मन्दराचलेन हत्वा प्रकर्षेण विलोड्यामरै- र्मथनक्रियायोगान्मथितमिति आदेशो मन्त्रायां निर्मिते कृतायां अथ च निर्जलं सम्यमथितं दधि मथितमित्युच्यते । ततश्च क्षीरस्यापि मथ नक्रियायोगादमरैर्मथनाश्रितरूपे आदेशे निर्मिते सति पाले स्थित्य- नुसारतः क्षीरोदस्योदके दुग्धरूपे अभिषवे कृते भुक्तीत्यर्थः । क्षीरोदरूपं सिंहासनं शुभ्रत्वसाम्यात्पीठतया तस्यातिशुभ्रत्वात्सद्रूपं यद्भद्रपीठं तास्लेना गमाय च सुखेन आयासरहितं यथा तथा आक्रम्यमुपवेशनयोग्यं सृजतः कुर्वतः क्षीरोदपदमधितिष्ठत इत्यर्थः । किम्भूतेन जनेन । एत द्विषयं कवित्वं एतत्सम्बन्धिकविभिर्निर्मितं कीर्तिवर्णनरूपं कवित्वं

तदेव स्वादुतरत्वादमृतं तस्य स्रोतसि प्रवाहे प्रोतौ स्यूतौ भृतौ सा-दरमाकर्णनेच्छू अथ च जलभरणेच्छू कर्णावेव कलशौ महान्तौ कलशौ भाजा भजता । लोके हि कस्मिंश्चिद्राजनि केनचिन्मथिते तदीय सिंहासनमधिष्ठितोऽन्यस्य केनचिद्वारिपूर्णेन कलशेनाभिषेकः क्रियते । घनीरूपतया उपवेशनयोग्यता सूचयितुं मथितादेशे कृते सतीत्युक्तं । जलोपरि उपवेशनासम्भवात् । क्षीरोदादपि विमलतरं मद्दीयधैर्यमयशो वैदेशिकैर्लोकत्रयसञ्चारि कृतमिति भावः । तक्रं ह्युदश्विन्मथितं पा-दाम्ब्वर्धाम्बु निर्जलमित्यमरः । क्षीरोदस्यदप० । उदन्वानुदधौ चेति (पा० ८ । २ । १३) साधु । ऋक्पूरित्यप्रत्ययः (पा० ५ । ४ । ७४) । स्वाक्रम्य । पोरदुपधादिति यत् (पा० । ३ । १ । ९८ । अजनि । क-र्मणि चिण् (पा० ३ । १ । ६६) ॥ ७४ ॥

समिति पतिनिपाताकर्णनद्रागदीर्णप्रतिनृपति मृगाक्षीलक्षवक्षःशिलासु । लिखितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्त्तिप्रशस्तिः ॥ ७५ ॥

समितीति । अस्य राज्ञः कीर्तिप्रशस्तिर्वर्णनपङ्क्तिः समिति सङ्ग्रामे पतीनां निपातो मरणं तस्याकर्णनेन द्रुक् शीघ्रं अदीर्णानि प्रतिनृपतिमृगाक्षीणां लक्षस्य वक्षांसि तान्येव तद्वणमेवाविदीर्णत्वाच्छिलास्तासु शोकवशादुरस्ताडने व्यस्तयोर्दृढनिवेशितयोर्हस्तयोः प्रखरा अतितीक्ष्णा नखरा नखा एव टङ्काः पाषाणदारणलोहविकारास्तैरचितलिपिरिव रचितलेखनेवास्तीति शेषः । अन्यस्यापि कीर्तिप्रशस्तिः शिलासु टङ्किकाभिरुत्कीर्य लिख्यते । सर्वेऽप्यरयोऽनेन हतास्तत्राद्यर्य-शोकवशादुरस्ताडनं कुर्वन्ति अतिशूरत्वादस्य कीर्तिर्भवतीत्यर्थः । द्रुदशोकेऽप्यदीर्णत्वाच्छिलात्वं । शोकातुरस्योरस्ताडनं जातिः । टङ्कः पाषाणदारणः इत्यमरः । समिदाजौसमितृषु चेति ॥ ७५ ।

विधाय ताम्बूलपुटीं कराङ्गां बभाण ताम्बूल

करङ्कवाहिनी । दमस्वसुर्भावमवेत्य भारती नया
ऽनया वक्त्रपरिश्रमं श्रमं ॥ ७६ ॥

विधायेति । ताम्बूलस्य करङ्कः सुवर्णादिरचितहंसाद्याकारं ताम्बूलधारणपात्रं पटीति लोके तस्य वाहिनी धारिणी काचित् सखी दमस्वसुर्भावं तद्ग्रहणनिषेधरूपं अवेत्य ज्ञात्वा भारतीं इति अभाणा । किं कृत्वा । ताम्बूलपुटीं पूगीफलचूर्णखदिरपर्णानि यत्रैकत्र क्रियन्ते । यां मध्यदेशभाषया गुलविडेति व्यवहरन्ति । तां देव्यै दातुं कराङ्गुलीस्त्रीयकातलमध्यगतां वा कृत्वा करङ्कं गृहीत्वेत्यर्थः । इति किं । हे देवि त्वं अनया वीटिकया एतद्दीयमहुवर्णनजनितं वक्त्रस्य सफलं परिश्रमं श्रमं नय बहुवर्णनजनित शोषशान्तिं प्रापयेति । एतत्स्तुतेर्विरमेत्यर्थः । अन्योऽपि शुकमुखो वीटिकया श्रमं श्रमं नयति ॥ ७६ ॥

समुन्मुखीकृत्य बभार भारती रतीशकल्पेऽन्यनृपे
निजं भुजं । ततस्त्रसद्बालपबालोचनां शशंस
संसज्जनरञ्जनीं जनीं ॥ ७७ ॥

समिति । भारती रतीशकल्पे कामतुल्ये ऽन्यनृपे निजं भुजं बाहुं सम्यग् उन्मुखीकृत्य बभार भैम्यै तं दर्शयितुं तदभिमुखं चकार । ततः अनन्तरं त्रसद्बालपबालोचना भीतबालहरिणनेत्रा संसज्जनानां सभ्यानां रञ्जनीं अनुरागजनिकां जनीं वधूं भावीनीं तां भैमीं शशंस अभाषीत् । रतीशतुल्य इति च पाठः । रञ्जनीं । णुगमाभावाल्लोपाभावः (पा० ६ । ४ । २४ । सू० ३ वार्त्तिके ।) ॥ ७७ ॥

श्रयं गुणौघैरनुरज्यदुत्कलो भवन्मुखालोकरसो
त्कलोचनः । स्पृशन्तु रूपामृतवापि नन्वमुं त
यापि दृक्कारतरङ्गभङ्गयः ॥ ७८ ॥

श्रयमिति । हे भैमि गुणौघैः सौन्दर्यादिगुणसङ्घैः अनुरज्यन्तोऽनुरक्ता भवन्तः प्रजा लक्षणया तद्देशनिवासिनो लोका यत्र । एष च गुणौघैरनुरज्यन् तारङ्गाथतु पदिः कलाथत्र सैकतमानिशोऽयं नृपः ।

यस्मात् भवन्मुखालोके रसेनानुरागेणोत्कलोचन उत्कण्ठितनेत्रोऽस्तीति शेषः। तस्मान्नु हे रूपामृतवापि सौन्दर्यामृतदीर्घिके सुन्दरि तथापि दृशोस्तारा उज्ज्वला विशाला वा चञ्चला वा तरङ्गाः पुनर्व्या पारूपाः कल्लोलास्तैर्वा भङ्गयः प्रकारविशेषा अमुं स्पृशन्तु। अय त्वां पश्यति त्वमप्येनं कटाक्षैः पश्य योग्यत्वादिति भावः। अनुरज्यदुत्कल इत्यनेन जनानुरञ्जनात् सम्पदाधिक्यं सूचितं। अन्यस्यामपि जनवाप्यां चञ्चलतरङ्गभङ्गयो भवन्ति। अनुरज्यदिति। श्यना डिस्वात्कलोपः (पा० १। ४। २४) ॥ ७८ ॥

**अनेन सर्वार्थिकृतार्थताकृता ऽऽहृतार्थिनौ कामगवीसुरद्रुमौ। मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥ ७९ ॥**

अनेनेति। कामगवीसुरद्रुमौ कामधेनुकल्पवृक्षौ मिथः अन्योन्यं क्रमेण पयःसेचनपल्लवाशने दुग्धसेचनपल्लवभोजनं प्रदाय प्रकर्षेण दत्वा दानस्य व्यसनं अतिशये प्रत्यहमवश्यकरणीयतया प्राप्तस्याग्रहं समाप्नुतः समाप्तिं नयतः। कस्मादित्यत आह। किम्भूतौ। सर्वार्थिनां सर्वयाचकानां अभीष्टदानात् या कृतार्थता जन्मसाफल्यलक्षणं कृतार्थत्वं तां करोत्येवभूतः कृत् तेनानेनातिदानात् सम्प्रत्याहृता आनीता अर्थिनो याचकायेयोस्तौ। अर्थ्यन्तराभावात् कामगव्या कल्पवृक्षस्य दुग्धसेकः कृतस्तेन च पल्लवा भक्षयितुं तस्यै दत्ता इत्यर्थः। दानशूरोऽयमिति भाव ॥ ७९ ॥

**नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान् पततः पदद्वये। तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥**

नृपेति। अयं नृपः निजे पदद्वये प्रणामवशात् पततः नम्रान् यान् नृपान् कराभ्यां कृपया शिरसि धृत्वा उदतोलयत् उत्थापयामास। तदीया राजकीया याश्चूडामुकुटास्तासां कुरुविन्दरश्मिभिः माणिक्यशोभाभिः स्फुटेयमेतस्य करपादयोः रञ्जना रक्तिमा स्फुटा दृश्यत इति शेषः ॥८०॥

यत् कस्यामपि भानुमान्न ककुभिस्थेमानमाल म्बते जातं यद्घनकाननैकशरणप्राप्तेन दावा ग्निना । एषैतद्भुजतेजसा विजितयोस्तावत्तयो रौचिती धिक्तं वाडवमम्भसि द्विपि भिया येन प्रविष्टं पुनः ॥ ८१ ॥

यदिति । भानुमान् सूर्यः कस्यामपि ककुभि दिशि स्थेमानं स्थिरत्वं यत् नालम्बते नाङ्गीकरोति किन्तु सर्वदा परिभ्रमत्येव । दावाग्निना वनवह्निना च घनं अतिगहनं काननं तल्लक्षणम् एकं केवलं शरणं रक्षितारं प्राप्तेन तदेकाश्रयेण यज्जातं । एतस्य भुजतेजसा विशेषेण जितयोस्तयोः सूर्यदावानलयोस्तावन्निश्चितं एषा औचिती युक्तकारिता । भीतस्य व्याकुलता वनाश्रयणञ्च युक्तं इत्यर्थः । मानी हि जितः सन् लज्जया मुखमदर्शयन् पुनर्दर्शनभयेनैकस्मिन्देशे वासं त्यक्त्वा सर्वत्र परिभ्रमति सर्वथाऽन्यस्य प्रवेष्टुमशक्यं घनं गहनं वा विशति । तावता युक्तमेव कृतमित्यर्थः । तं वाडवं वडवानलं पुनर्धिक् येनास्य भिया द्विपि सपत्नशत्रौ अम्भसि समुद्रजले प्रविष्टं निमग्नं । मानी हि पराजितोऽपि वैरिणः शरणं नैति अयन्तु गत इति अभिमानित्वाभावान्निन्द्य एवेत्यर्थः । अपि च वाडवो ब्राह्मणः । ततश्च ब्राह्मणस्याश्रयेऽपि भयेन प्रवेशो युक्तः । शत्रुणा च तस्य रक्षणं युक्तं इति च सूचितं । सूर्यादेरप्येतदीयं तेजोऽधिकतरमिति भावः । स्थेमानमिति । स्थिरशब्दात् पृथ्वादिभ्य इमनिजिति (पा० ५ । १ । १२२) प्रियस्थिरेति । स्थादेशः (पा० ६ । ४ । १५७) । शरणं प्राप्तेन । द्वितीयाश्रितेति समासः (पा० २ । १ । २४) ॥ ८१ ॥

अमुष्योर्वीभर्तुः प्रसमरचमूसिन्धुरभवैरवैमि प्रारब्धे चमुभिरयथायसमये । न कम्पन्ता मन्त्रः प्रतिनृपभटा म्लायतु न तद्वधूवक्त्राम्भोजं भयतु न च तेषां कुदिवसः ॥ ८२ ॥

अमुष्येति । अमुष्योर्वीभर्तुरंणसंरम्भात् प्रसृमराः प्रसरणशीलाः सिन्धुराः सेनागजास्तेभ्यो भवैः समुत्पन्नैर्वमथुभिः करिकराग्रजातैर्मदजलबिन्दुभिर्जलबिन्दुभिर्वा अवश्यायसमये नीहारकाले हिमर्तौ प्रारब्धे निर्म्मिते सति प्रतिनृपभटा वीरा अपि रिपुनृपा अन्तस्तन्मध्ये स्वीयमनसि वा न कम्पन्तां अपि त्वस्माद्भयेन युक्त एव कम्पस्तेषां । तथा तेषां रिपूणां वध्वो रमण्यस्तासां वक्त्राम्भोज न म्लायतु अपि तु भाविनः प्राणेशवधस्य निश्चितत्वात्तासां मुखस्य म्लानिरुचितैव । तथा स प्रसिद्धो रणवासरस्तेषां वैरिणां तत्स्त्रीणां च कुत्सितो दिवसोऽशुभरूपो वासरो न भवत्वपि तु भवत्वेव । वधनिश्चयाद्वैरिणां तत्स्त्रीणाञ्च शोकवशादित्यहमवैमि । हिमर्तौ शरीरकम्पः कमलम्लानिर्दुर्दिनञ्च भवति । शूरतरोऽयं गजपतिरिति भाव.। सिन्धुरभैरिति पाठे जगसङ्घैः कर्तृभिः वमथुभि. कृत्वेति व्याख्येय । वमथुः करिसीकरः । अवश्यायस्तु नीहार इत्यमरः । प्रसृमरेति । सृघस्यद इति क्मरच् (पा० ३ । २ । १६०) अवश्यायेति । श्याद्व्यधेति ण॰ (पा० ३ । १ । १४१) । तेषां । पुमान् स्त्रियेत्येकशेषः (पा० १ । २ । ६७ ।) ॥ ८२ ॥

आत्मन्यस्य समुन्नितीकृतगुणस्याहोतरामौचिती यद्गात्रान्तरवर्जनादजनयद्भूजानिरेष द्विषां । भूयोऽहं क्रियते स्म येन च हृदा स्कन्धो न यश्चानमत् तन्मर्म्माणि दलं दलं समिदलंकर्म्मीणमाणव्रजः ॥ ८३ ॥

आत्मनीति । आत्मनि स्वीये स्वरूपे समुन्नितीकृतगुणस्य मेलितसौन्दर्यादिसर्वगुणस्यास्य राज्ञ. अहोतरामतिशयेनौचितीयं । यत एष भूजानिर्भूपतिर्द्विषां गात्रान्तराणां हृत्स्कन्धेतराणां वर्जनात् अवयवान्तर परित्यज्येत्यर्थ· । येन च हृदा भूयः पुनः पुनरतितरा अहङ्क्रियते स्म अहङ्कारिणा जातमित्यर्थः । यश्च स्कन्धः नानमन् नम्रो न भूतः तस्यैव स्कन्धस्य मर्म्माणि अतिमृदूनि जीवस्थानानि दलं दलं खण्डं खण्डं अजनयत् चकार नान्येषां । किंभूतः । समिति सङ्ग्रामे अलङ्कर्मीणो

मलङ्कर्मीणोऽरिमारणसमर्थं बाणव्रजो यस्य । अपराधी हि राज्ञा द-ण्ड्य. । तत्रकस्यैवापराधो नान्येषां तस्यैव दण्डं कृतवान्नान्येषामि-त्यतितरामस्यौचितीत्यर्थं । अयञ्च सगुणं सदपोनमन्नाद्य मारयति शरणागतांस्तु रक्षतीति भाव । कर्मक्षमोऽलङ्कर्मीण इत्यमर । अलङ्क-र्मणो, पर्यादयो ग्लानाद्यर्थे चतुर्थ्यं ति समासे (पा० २।२।१८ सू०वा०) अलङ्कर्मंशब्दात्स्वार्थे, अषडक्षाशितग्वलङ्कर्मेति खः (पा० ५।४।७)॥८३॥

दूरं गौरगुणैरहङ्कृतिभृतां जैत्राङ्ककारे चरत्येतद्दो
र्यशसि प्रयाति कुमुदं बिभ्यन्न निद्रां निशि ।
धम्मिल्ले तव मल्लिकासुमनसां माल्यं भिया ली
यते पीयूषमयकैतवाद्धृनदरः शीतद्युतिः स्वि
द्यति ॥ ८४ ॥

दूरमि ति । गौरगुणै धवलवर्णैः कृत्वा दूरं भृशं अहङ्कृतिभृतां अ-हङ्कारवतां वस्तूनां जैत्रञ्च तदङ्ककारि च तस्मिन् जयाङ्ककारिणि एत-द्दोर्यशसि एतस्य बाहुयशसि सकलेषु जगत्सु चरति प्रसरति सति अ-य च स्वप्रतिमल्लगवेषणाय भुवनं परिभ्रमति सति बिभ्यत् भीतं कुमुद निशि निद्रां स्वप्नमथ च सङ्कोचं न प्रयाति । तथा मल्लिकासुमनसां मा ल्यं माला तस्माद्भिया तव धम्मिल्ले केशपाशे ग्रन्थनविशेषे लीयते आ त्मानं गोपायति । अथवा अदृश्य तिष्ठति । तथा शीतद्युतिश्चन्द्रो धृ-तदर. प्राप्तभय सन् पीयूषस्रवकैतवादमृतस्रवव्याजात् स्विद्यति स्वे द मुञ्चति । अथ च हिमकणान् मुञ्चति । एकयोक्ता धवलकारं इति या । कुमुदादिभ्योऽप्यधिक धवलमेतद्यश इति भाव । यद्दिनं धा रयेन्न त्वमिति केशान्तर्गतमाल्यधारणात्स्त्रियाः सदाधारत्वं सूचित ॥८४॥

एतद्गन्धगजस्तृषाम्भसि भ्रमं कराठान्तमज्जत्त
नुः फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशः
स्पर्द्धिभिः । दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः करा

रम्भोत्रमिव्याजादभ्रमुवल्लभेन विरहं निर्वापयत्य

म्बुधेः ॥ ८५ ॥

एतदिति। एतस्य गन्धगजः यः सप्तसु स्थानेषु स्रवति स गन्धगजः। स्वदानमलमूत्रादिगन्धेन जितान्यकरी। विरोधिकरिगन्धमसहमान इति वा गन्धगजः। कराम्भोवमिव्याजात् शुण्डादण्डाग्रेण मुखधृतगण्डूषजलवमननिपातात् अम्बुधेः समुद्रस्याभ्रमुनाम्न्याः करिण्या वल्लभस्यैरावणस्य विरहं पुत्रवियोगजनितं शोकं निर्वापयति शमयति। किंभूतः। भृशं नितरां तृषा पिपासया सफेनत्वात्क्षीराब्धेः पुरः प्रसर्पणेन कण्ठान्तं ग्रीवां मर्यादीकृत्य मज्जन्ती जले क्रीडन्ती जलप्रवेशाद्दृश्यमाना तनुर्देहो यस्य एवम्भूतः। तथा स्वकीया दिक् प्राची तस्याः करी ऐरावणोऽन्ये वा तत्रत्याः करिणस्तेषां जयक्रीडा तयोपार्जितैर्यशोभिः सह स्पर्धिभिस्तद्वदुज्ज्वलैः फेनैः जलावगाहनोद्भूतैर्निमग्नदेहो र्ध्वदेशे पाण्डुरितः धवलीकृतः। तथा दन्तद्वन्द्वस्य दंतद्वयस्य जलेऽनुबिम्बनं प्रतिबिम्बस्तेन कृत्वा चत्वारो दन्ता यस्य सः। जलमध्ये विद्यमानत्वाद्धवलत्वाच्चतुर्दन्तत्वाच्चैरावण एवायमिति भ्रान्त्या समुद्रः सुखी भवतीत्यर्थः। आसमुद्रं दिग्विजयीत्यर्थः ॥ ८५ ॥

अथैतदुर्वीपतिवर्णनाद्भुतं न्यमीलदास्वादयितुं

हृदीव सा। मधुस्रजा नैषधनामजापिनी स्फु

टीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६ ॥

अथेति। अथ सा भैमी न्यमीलत् अक्षिपक्ष्मसङ्कोचं चकार। किंभूता। अक्षिमीलया मधुस्रजा वरणमधूकमालया नैषधस्य नाम जपति तच्छीलाऽत एव स्फुटीभवत् प्रत्यक्षायमाणः ध्यानेन चिन्तनातिशयेन पुरः स्फुरन् समवस्थिततयाऽवभासमानो नलो यस्याः सा। तन्नोत्प्रेक्षते। एतस्योर्वीपतेर्वर्णनया समुत्पन्नमद्भुतमाश्चर्यं हृदि विद्यमानं आस्वादयितुमिव। आश्चर्यस्य चेतसि वर्तमानत्वात्तदनुभवार्थं नेत्रे अप्यन्तः प्रविष्टे इवेत्यर्थः। नले एवानुरक्ता सती नेत्रनिमीलनेनैव तं नृपं निराचकारेति भावः। अन्योऽपि जपमालयाभीष्टदेवतामन्त्रजपं कुर्वन् तां साक्षात्कर्तुं नेत्रे निमील्य ध्यानेन तां साक्षात्करोति ॥८६॥

प्रशंसितुं संसदुपान्तरञ्जिनं श्रिया जयन्तं जग
तीश्वरं जिनं । गिरः प्रतस्तार पुरावदेव ता
दिनान्तसन्ध्यासमयस्य देवता ॥ ८७ ॥

प्रशंसितुमिति । दिनान्तसन्ध्यासमयस्य देवता सरस्वती पुरावदेव पूर्ववदेव ता अतिगम्भीरमधुरा गिरः प्रतस्तार ववाच । किं कर्त्तुं । संसदः सभाया उपान्तौ उभयपार्श्वौ रञ्जयत्येवं शीलं श्रिया शरीरशोभया कृत्वाऽतिसुन्दरं जिनं बुद्धदेवं जयन्तं जगत्याः पृथिव्या ईश्वरं राजानं प्रशंसितुं वर्णयितुं । श्रिया संसदुपान्तरञ्जिनं जयन्तं जगति श्री र्यादिना इन्द्रपुत्रतुल्यं कीकटदेशप्रभुत्वाज्जिनं बौद्धं राजानमिति वा जयन्तनामानं वा । जगदीश्वरमिति पाठे जिनविशेषणं ॥ ८७ ॥

तथाधिकुर्य्या रुचिरे चिरेप्सिता यथोत्सुकः
सम्प्रति सम्प्रतीच्छति । अपाङ्गरङ्गस्थललास्यल
म्पटाः कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥

तथेति । हे रुचिरे सुन्दरि त्वं तथा तेन प्रकारेणाधिकुर्य्याः अधिकारं कुर्य्याः । तथा कथ । यथा येन प्रकारेण कीकटाधिपः मगधदेशस्वामी तत्कटाक्षेषु उत्सुकः सन् चिरेप्सिता. तव कटाक्षधारास्तिर्य्यगवलोकनपरम्परा सम्प्रतीदानीं सम्प्रतीच्छति अङ्गीकरोति । किंभूता धाराः । अपाङ्गौ नेत्रप्रान्तस्तल्लक्षणं रङ्गस्थलं नाट्यशाला तत्र लास्यं सविलासमन्दगती लम्पटाः । चिरेप्सिता स्वमिति वा । चिरेत्यकारान्तमव्ययं तेन समासः । एवमेवंजातीयेऽन्यत्रापि ज्ञातव्यं ॥ ८८ ॥

इदंयशांसि द्विपतः सुधारुचः किमङ्कमेतद्द्वि
पतः किमाननं । यशोभिरस्याखिललोकधावि
भिर्विभीपिता धावति तामसी मपी ॥ ८९ ॥

इदमिति । अखिलेषु लोकेषु धाविभिः प्रसरणशीलैः लोकत्रयमनुधावद्भिरित्यर्थः यशोभिः विशेषेण भीपिता लोकत्रयाभिर्धाविता तामसी कज्जलराशिरिव मषी इदयशांसि अस्य कीर्त्तिं द्विपतः असह-

मानस्य सुधारुचश्चन्द्रस्याङ्कं कलङ्कमथच सन्निधिं धावति शीघ्रं गच्छति प्रविशति किं । किंवा एतद्द्विषत एतच्छत्रोराननं प्राप्नोतीति संशयः । एतद्यशोभिश्चन्द्राङ्कमात्रमुखातिरिक्तस्य सकलस्यापि जगतः श्वेतीकरणा-त्तत्र निवस्तुमशक्ता सती मलिनं चन्द्रकलङ्कमेतच्छत्रुमुखञ्च प्रायेण गता । यो हि येन पराभूयते स तद्वैरिणमाश्रयतीत्यर्थः । अयमति-तरां यशस्वीति भावः । अन्योऽपि भीषितः स्वगोत्रं याति । श्यामस्य च श्यामश्च यस्तु सगोत्रमिति । तामसी तमः सम्बन्धिनी रात्रिः नवी श्यामयस्तुमात्रगता श्यामिका च यद्य क्रमं चन्द्राङ्कं शत्रुमुख धावति किमिति वा । निरन्तरोद्योतकरणादेतत्कीर्त्या निष्काशितैव तामसी स्त्रीभावभीरुर्भर्तुश्चन्द्रस्योत्सङ्गं गता । अत एव रात्रिकालिमा चन्द्राङ्के दृश्यते । सर्वस्यापि श्वेतीकरणात् श्यामिकापि निर्वासिताऽन्यत्र स्थातु-मशक्नुवती रिपुमुखं गता । अत एव विवर्णीभूतेषु वैरिमुखेषु कालि-का दृश्यते । एतद्द्विषतः । द्विषःशतु वेति ( पा० २ । ३ । ६९ सू० ६ वा० ) षष्ठीसमासः ॥ ८९ ॥

इदं न पद्मार्थिभिरुज्झितेऽर्थिभिर्मणिप्ररोहेण
विवृध्य रोहणः । कियद्दिनैरम्बरमावरिष्यते
मुधा मुनिर्विन्ध्यमरुद्ध भूधरं ॥ ९० ॥

इदमिति । अतिवदान्यतयास्य नृपस्य प्रार्थनशीलैरर्थिभिर्याचकैर-नेनैव समस्तकामानां पूरितत्वादुज्झित परित्यक्तः अत एव स्वच्छया भावात्मणिप्ररोहेण विवृध्य अङ्कुरोत्पत्त्या विशेषेण वृद्धिं प्राप्य रोहणो मेरुः कियद्भिः कतिपयैरल्पैरेव दिनैः अम्बरमावरिष्यति आच्छादयि-ष्यति यतस्तस्मान्मुनिरगस्तिर्विन्ध्यनामानं भूधरं मुधैवारुद्ध मदागमन पर्यन्तं त्वया न वर्द्धितव्यमिति नियमेन वृथैव आवद्धमकरोत् । तद्वृद्ध्यभावेऽपि रोहणेनैव सूर्य्यगतेः प्रतिबन्धकस्य करिष्यमाणत्वादग स्त्यप्रयासस्य वैयर्थ्यमेव जातमित्यर्थः । अगस्त्येन विन्ध्यरोधस्तु पुरा णप्रसिद्धः । अतिवदान्योऽयमिति भावः । आवरिष्यते । विकल्पत्वा-दिटो दीर्घतेति (पा० ७ । २ । ३८) । लङात्मनेपदं ॥ ९० ॥

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क

मादेतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः।
लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशः
पारदैरस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पु
नर्निर्म्मितः ॥ ९१ ॥

भूपक्रस्येति । वय विक्रमस्य भरेण बाहुल्येन क्रमात्परिपाट्यात् उपार्जितानि एतस्य भूपक्रस्य पृथ्वीन्द्रस्य यशांसि कैरक्षरैर्वर्णैः स्तुमहे वर्णयामः । यशसां भूयस्त्वाद्वर्णानां पञ्चाशत्त्वात् स्तोतुं न शक्नुमः । सामान्याकारेण कथञ्चिद्वर्णयन्त इत्यर्थः । किम्भूतानि । महेभाः प्रतिष्ठा घना गजा ऐरावतो वा तेषां दशनैः सह स्पर्द्धन्त एवंशीलानि तद्वद्धवलानि । स्वर्णगिरिर्मेरुरन्येषां राज्ञां लिम्पद्भिर्यशोलक्षणैः पारदैः कृतकमवास्तवं रजतं कृतोऽपि प्रलेपनिर्म्मितपाण्डुद्युतिशालीतोऽपि सन् अस्य प्रतापरूपैर्दहनैरग्निभिः पुनः स्वर्णं निर्म्मितः कृतः । प्रतापस्य पीतत्वात्सुवर्णरूपतां प्रापितः । पारदलेपनेन सुवर्णं श्वेतं भवति वह्नितापेन चोड्डीने पारदे पुनः काञ्चनमेव भवतीत्यर्थः । एतत्प्रतापात् परेषां यशांसि न प्रसरन्ति । यशस्वी प्रतापवांश्चान्यः कोऽपि नासीदित्यर्थः ॥ ९१ ॥

यद्भर्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं
दिग्दाहैरिव भस्मभिर्म्मघवतासृष्टैः कृतोद्धूल
ना । शम्भोर्म्मा वत सान्ध्यवेलनटनं भाजि
व्रतं द्रागिति क्षोणी नृत्यति मूर्त्तिरष्टवपुषोऽसृ
ग्वृष्टिसन्ध्याधिया ॥ ९२ ॥

यदिति । अयं भुवः शक्रो भूमीन्द्रः यस्या भूमेर्भर्तुःपत्युः अभिषेणनं सेनयाऽभिगमनं कुरुते सा क्षोणी भूमिः इति मनसि कृत्वा शोणितवर्षिणीत्पातिकी असृग्वृष्टिः रुधिरवृष्टिस्तद्रूपा या सायंसन्ध्या तस्या धिया भ्रमवशात् द्राक् शीघ्रं नृत्यति गात्रविक्षेपं करोति कम्पत इत्यर्थः । मत तेदे । भुवमुपमेते । किम्भूता सा । दाहादिग्धनजवलनप-

म्भवात् दिग्दाहैरिव दिग्दाहादिशाभौत्पातिकनिर्हेतुकलोहितदीप्तैः प्रभवैरिव सपत्नतेन्द्रैश्च सदृशैर्भोचितैः भस्मभिःकृत्वा कृत धृतमुद्धूलनं अङ्गलेपो यया सा । इति किं । शम्भोः दिनरात्रिसन्धिरूपायां वेलायां काले भवं सान्ध्यवेलं सायंसन्ध्याकालसमुचितं नटनं नृत्यरूपं व्रत नियमः माभाजि भग्नो माभूदिति स्वयं नृत्यतीत्यर्थः । यतः अष्टमूर्त्तेर्जलाद्यष्टमूर्त्तेः शम्भोरेका मूर्त्तिः पृथ्वी । शिवो हि सन्ध्यासमये नृत्यं करोति तन्मूर्त्तिस्त्वामपि नृत्यमारब्धमित्यर्थः । यमुद्दिश्य अय प्रयाणं करोति तस्मिन्देशे दिग्दाहभस्मवृष्टिभूकम्पररक्तवृष्टिप्रभृतयस्तत्पराजयसूचका उत्पाता भवन्ति । अयमेव विजयस्य इत्यर्थः । जलार्केन्द्वात्मखाग्निवायवः शिवमूर्त्तयः । यस्सैनयाभिगमनं शत्रुस्तदभिषेणनमित्यमरः । यद्रुक्तं । भर्तृशब्दस्य पत्यर्थत्वाद्याजकादित्वात् समासः । (पा०२ । २ । ९) सेनयाऽभिगमनमभिषेणनं । सत्यापपाशेति (पा०३ । १ । २५) णिचि ल्युट् । उपसर्गात् सुनोतीति (पा०८ । ३ । ६५) षत्व । दिग्दाहैरित्यत्र तस्येदमित्यण् (पा०४ । ३ । १२०) । सन्धिवेलायां भवं सान्धिवेलं । सन्धिवेलेत्यण् (पा०४ । ३ । १६) । चन्द्रः शिवस्य भस्माहरणेऽधिकारी अत एव दिशा दाहं कृत्वा भस्मार्पितवान् इति केचित् ॥९२॥

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्वयां
कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पा
यितः । निःशेषद्युतिमण्डलव्ययवशादीषल्लभै
रेष वा शेषः कशमयः किमन्धतमसस्तोमैस्त
तो निर्मितः ॥ ९३ ॥

प्रागिति । प्राक् सर्गादौ अगाधजगतीशिल्पेऽपि अपरपादिस्त्रैलोक्यनिर्माणविषयेऽपि यस्त्वया समस्तः सकलः कोशो भाण्डागारमस्वपः नाल्पायित अल्पवद्नाचरितः किन्तु तावानेवाक्षयः स्थितः । आमुखेन्दु मुखचन्द्रमभिव्याप्य एतस्य वपुः सृजतः स्रष्टुः ब्रह्मणः स मस्तो स त्विषां समस्तः कोशः शोषं समाप्ति अगात् प्राप ह्रापितः । यतश्चरणप्रभृतिमुखपर्यन्तावयवनिर्माणार्थमेव पूर्णो न तु केशनिर्मा

णार्थं । ततस्तस्मात् कान्तिरूपाद्धुता कश्मय केशप्रचुर केशरूपोऽस्य एव ज्ञेया भाग नि ज्ञेप द्युतिमण्डल समस्ततेजाराशिस्तस्य व्ययवशात्तागमवशात् भाभावस्तम इति न्यायात् इंपल्लभे सुप्रापे सुलभैरन्यतमसस्तोमैर्गाढान्धकारसङ्घं कृत्वा किंवा निर्मित इत्युत्प्रेक्षा । सुन्दरतरोऽप केशाश्चातिनीला घनाश्चेति भाव । इंपल्लभे । ईषद्दुःसुषु कृच्छ्रार्थे खल् । उपसर्गादथ खल्घञोरिति नियमान्नुमभाव (पा०७।१।६७)। अन्धतमस । अवसमन्धेभ्यस्तमस इत्यच् (पा० ५।४।७९) ॥१३॥

तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्राहतैरन्धकार निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः । भूगोलच्छायमायामयगणितविदूहीय कायो भियाभूदेतत्कीर्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमान. ॥ १४ ॥

तद्दिगिति । एष राजा तासां प्राच्यादीनां सर्वासां दिशां जैत्रा जयकारिण्या यात्रास्तासु उद्धुरा उत्साहवन्तोऽतिचलिनस्तुरङ्गास्तेषां खुराग्रैरुद्धतैरंशाणि कृत्वा अन्धकार सृजति । कथम्भूतमिव । निर्वाण शान्त अरिप्रतापानलस्तस्मादनन्तरजातमिव अन्धकार सूर्यप्रकाशच्छादकत्वात् तम सृजति । शान्ते ह्यग्नौ भाभावरूपोऽन्धकारो भवति । एतस्य दिग्जययात्राया प्रारब्धाया सर्वेषामपि वैरिणां प्रताप शान्तो भवतीति भाव । तुरङ्गखाहुल्यञ्च । तथा एतस्य कीर्तिप्रतानैः प्रसरैर्विधुभिर्बहुभिश्चन्द्रैः युधे युद्धार्थं आहूयमान स्पर्धां कुर्वाणः स्पर्धमाकारित सन् राहुः भियैव भयेनेव भूगोलस्य भूमण्डलस्य छायारूपेण मायारूपेण व्याजेन गणितविद्भिः ज्योतिर्विद्भिर्गणितशास्त्रप्रमाणेन ऊहनीयः कायः शरीर यस्यैवम्भूतो ऽभूत् । एतत्कीर्तिसमूहरूपान् दृष्ट्वा एकस्य मे नूतनकार्यत्वाद्बहुभिः चन्द्रैः पराभवितुं भूगोलच्छायरूप मायामयशरीर धृतमित्यर्थं । ज्योतिः शास्त्रे च भूगोलच्छायैव राहुर्निगद्यते । अन्योऽपि शत्रुभिः स्फुरद्भिः पराभवितुं कपटाकार धारयति । एतादृशा यशसा कोऽपि नास्तीति भाव । निर्वाणेति । निर्वाणोऽ-

यात इति तस्य षत्वं (पा० ८ । २ । ५७) । छायमायेति । विभाषा-सनेति षत्वं (पा० २ । ४ । २६) ॥ ९४ ॥

आस्ते दामोदरीयामियमुदरदरीं यावदालम्ब्य त्रिलोकी सम्मातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि । तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्मच्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ९५ ॥

आस्ते इति । या इयं त्रिलोकी लोकत्रयी दामोदरीयां उदरदरीं श्रीविष्णोर्जठरकन्दरामवलम्ब्याश्रित्यास्ते अत्रास्यां दामोदरोदरस्थितायां त्रिलोक्यां प्रथिमभरवशात् महत्त्वबाहुल्यादतिसम्मातुं सुखेन स्थातुं न शक्नुवन्ति असमर्थानि सन्ति तान्यतिप्रसिद्धानि द्विपदशनैः सनाभीनि सदृशानि अतिगौराणि एतस्य यशांसि तामेतां विष्णूदरदरीस्थितां तत्सहितां त्रिलोकीं पूरयित्वावशिष्टानि तामुदरदरीं तत्स्थां त्रिलोकीं च परिपूर्णावशिष्टानि वा पाण्डुपद्मच्छद्मापन्नानि नाभीसमुत्पन्नधवलकमलव्याजमापन्नानि तदाकाराणि सन्ति मधुध्वंसिनो विष्णोर्नाभीरूपेण पथा मार्गेण निरगुरिव निर्जग्मुरिव सङ्कटवासपातनभिया बहिर्निर्गतानीव श्रीविष्णोर्नाभौ धवलकमलमन्यथोत्प्रेक्षितं पाण्डुपद्मं न किन्त्विदं यशांसि । अथवा करिदन्तधवलतुल्यान्यतिभूयांसि चास्य यशांसीति भावः । दामोदरीया । वृद्धाच्छः (पा० ४ । २ । ११४) । प्रथिमा । पृथ्व्यादिभ्य इमनिच् । (पा० ५ । १ । १२२) । नाभीपथेन । ऋगादिना समासान्तः (पा० ५ । ४ । ७४) ॥ ९५ ॥

अस्यासिर्भुजगः स्वकोशसुषिराकृष्टः स्फुरत्कृत्तिमान् कम्पोन्मीलदरालतीव्रवलनस्तेषां भियेऽभूद्भुजां । सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः पर्वांस्यं विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्भिता ॥ ९६ ॥

असेति । असय: खिरेव भुजगास्तेषां भूभुजां राज्ञां भिये भवतीति शे
प । किंभूतः । स्वकोश एव चर्ममयं पिधानं तदेव सुषिरं वल्मीकवि
वरं तस्मादाकृष्टः बहिष्कृतः सर्पो धृतश्च तथा स्फुरन् प्रकाशमानः उ-
त्तमलोहजातिविशेषत्वात् कालिमा श्यामत्वं यस्य । सर्पोऽपि सर्पो धृ
तत्वात् स्फुरत्कालिमा । तथा कम्पेन तत्र हस्तान्दोलनेन कृत्या उ-
न्मोलत्यः प्रकटीभूता कराला वक्रा लीला येषु तादृशानि वलनानि ग-
तिविशेषा यस्य । सर्पोऽपि वक्रगतिर्भवति । तेषां केषां । यैः सङ्ग्रामे-
षु निजाङ्गुलीमध्याः स्वीयाङ्गुलीरूपाया महासिद्धौषध्या वीरुधः स्पर्श-
मात्रेण विपन्नाः यस्याः पत्रं अन्यस्याङ्गुल्यग्रपत्रं यस्याद्वयस्य आस्ये मु
खे विनिवेश्य जाङ्गुलिकता विषवैद्यता गारुडिकता नालम्बिता नाम प्र
सिद्धौ । सर्पोऽपि येन स्वमुखे सिद्धौषधीपत्रं न निक्षिप्यते तमेव य-
था मारयति तथा एतदीयः खड्गोऽपि ये शस्त्राणि न त्यजन्ति दैन्याच्च
मुखे अङ्गुलीपत्रं न धारयन्ति तानेव हन्ति नान्यान् विनीताञ्छरणाग-
तांश्च । विषवैद्यो जाङ्गुलिक इत्यमरः ॥ १६ ॥

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता
मस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं नि
ष्ठुरः । दोषं तस्य तथाविधस्य भजतश्चापस्य
गृह्णन् गुणं विख्यातः स्फुटमेक एष नृपतिः
सीमा गुणग्राहिणां ॥ १७ ॥

य इति । अरिभटश्रेणीषु शूरतरवैरिसङ्घेषु विषये युधि यः पृष्ठं द
र्शयति पराङ्मुखः पलायते अथ च य प्रत्याकृष्यते तस्य स्वभावात् पृ
ष्ठ दर्शयति । यः अस्मिन् स्वस्वामिन्येव नृपे वक्रतामनृजुत्वं स्वाश्रय
एव कृतघ्नत्व बिभर्ति । अथ चान्यस्यैतादृग्बलाभावात् अस्मिन्नेव व-
क्रतां बिभर्ति नान्येन न स्वीकर्तुं शक्यत इत्यर्थः । तथा यो निष्ठुरो
निर्दयो दाक्षिण्यरहितः सन् क्रूरध्वनिं अनेन सदाप्रियभाषणं किरति ।
अथ च परिचतादरेराजन्म क्रूर वैरिणां भयावह शब्दं किरति क्षिप-
ति । दोषं दूषणं अथ च वाहुं भजतः तथाविधस्य तस्य चापस्य तथा

विपक्षस्यान्यस्य वा कस्यचिद्गुणं श्रुतशौर्यादिकं गृह्णन् वर्णयन् । अयं च सौवीराधिपतिर्धनुर्धराणां सीमा पर्यन्तावधिः स्फुटं विख्यातः प्रसिद्ध एक एव राजा । एवंविधो धनुर्धरः सज्जनश्च कोऽपि नास्तीत्यर्थः । धनुःपृष्ठदर्शनेनैतस्य पलायनाभावः सूचितः ॥ ९७ ॥

अस्यारिप्रकरः शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ सीत्कारञ्च न सम्मुखौ रचयतः कम्पञ्च न प्राप्नुतः । तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्त्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतं ॥ ९८ ॥

अस्येति । अस्य नृपतेरुभौ सङ्ख्ये सङ्ग्रामे क्रमेण सम्मुखौ एतत्सम्मुखं वैरिसम्मुखञ्च पतन्तौ सन्तौ सीत्कारं दुःखाभिव्यञ्जकं दन्तमध्यनिर्गतं पक्षवातजनितञ्च ध्वनिविशेषं न रचयतः कुरुतः पञ्च मरणभीतिजनितं दुर्निर्गतत्वजनितञ्च कम्पं न प्राप्नुतः । उभौ कौ । अरिप्रकरः वैरिसङ्घः शरश्च एतौ द्वौ । तथा मुक्तयोः प्राप्तमोक्षधनुर्मुक्तयोरुभयोर्यत्पुनर्निवृत्तिः कम्प्रत्यागमनञ्च न जागर्त्ति भवति तदयं युक्तमुचितमेव । द्वयोरपि तुल्यधर्मत्वात् । तर्हि विलक्षणं किमित्याशङ्कायामाह । तत्र तयोर्द्वयोर्मध्ये एको वैरिसङ्घः मित्रं सुहृदमेव च सूर्यं भिनत्ति । अपरश्च शरः अमित्रं सूर्यव्यतिरिक्तमेव च वैरिणं भिनत्ति द्विधा करोतीत्यद्भुतम् आश्चर्यं । तुल्यकर्मणोरतुल्यकर्मारम्भकत्वस्य विरुद्धत्वादित्यर्थः । चावन्योन्यसमुच्चये । दुःखभयराहित्येन रणे सम्मुखं पतति शत्रुसङ्घः । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ इति वचनात् सूर्यमण्डलं भित्त्वा मुक्तिं प्राप्नुतः । अदृढमुष्टिना मुक्तबाणः कम्पसीत्कारौ रचयति । तदकरणाच्च दृढमुष्टितास्य सूचिता । दृढमुष्टित्वेन मुक्तो वैरिमध्ये न पुनरायाति वैरिणं हन्तीत्यर्थः । शूरतरोऽयं शत्रुमात्रं हतवानिति भावः । आमपक्षे सम्यक् मुखं पुङ्खमग्रं वा यस्येति ॥ ९८ ॥

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवैर्वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गुणैर्मूकयन्। धर्म्माराधनसन्नियुक्तजगता राज्ञामुनाधिष्ठितः सान्द्रोत्फालमिषाद्विगायति यदा स्प्रष्टुं तुरङ्गोऽपि गां ॥ ९९ ॥

धूलीभिरिति । धर्म्माराधने सम्यङ्नियुक्तं प्रेरितं जगद् येनैवंभूतेनामुना राज्ञा अधिष्ठित आरूढस्तुरङ्गोऽपि धूलीभिः खुररजोभिः दिवं स्वर्गलोकं अन्धयन् अन्धं कुर्व्वन् चक्षुःप्रविष्टाद्रजस एव निमीलितनयनं कुर्व्वन्नित्यर्थः । तथा खुराणां रवैः समुच्छलनशब्दैः कृत्वा आशा दिशःप्रान्तनिवासिनो जनान् बधिरयन् बधिरतया शब्दान्तरग्रहणाशक्तान् कुर्व्वन् । तथा संयति सङ्ग्रामे जवस्य वातवेगस्य जयैः वायोःसकाशादतिवेगतया वातं खञ्जयन् पङ्गुं कुर्व्वन् । तथा गुणैर्हेतुभिः स्तोतॄन् अश्वजपरूपलक्षणादिवस्तु मत्कारिणो जनान् मूकयन् गणाधिक्येन साकल्येन स्तोतुमसमर्थान्मूकानिव कुर्व्वन् । एवंभूतः सन्ननन्तरं सान्द्राणां निरन्तराणामुत्फालानां चतुर्भिश्चरणैरुत्पतनानां मिषात् पदैकेनापि चरणेन गां भुवमथच धेनुं स्प्रष्टुं तस्याः स्पर्शनं कर्त्तुं विगायति विशेषेण जुगुप्सते । धार्म्मिको राजा निषिद्धमाचरतः स्वाधीनान् पापिनो दण्डयति । अहं तु त्वदधिष्ठितः पदा गोस्पर्शलक्षणं पापं कुर्व्वन् दण्ड्यः स्यामिति बुद्ध्या पदा न स्पृशति चेत्यर्थः । धार्म्मिको जनमाश्रयामर्षमेवेत्यर्थः । अन्धयन्नित्यादौ तत्करोतीति णिजन्ताच्छतृ ॥९९॥

एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि । अश्वैरश्वैरवर्गैः कृतखुरखुरलीमक्षुविक्षुद्यमानक्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधारान्धकारात् ॥ १०० ॥

एतेनेति । समरसमालोकिनो ये लोकास्तेषामास्पदे स्थानभूतायामपि भुवि । अथवा समरसमालोकिलोकानां देवानामास्पदे गगने वियति । एतेन राज्ञा उत्कृत्तकण्ठाः छिन्नग्रीवाः कबन्धरूपाः प्रतिसुभटाः रिपुवीरास्त एव नटा नर्त्तकास्तैरारब्धानां नाट्याद्भुतानां नृत्तचर्याणां दृष्टा नाभूदेव कष्टमेतत् दुःखमेतत् । तत्र हेतुः । अश्वैरवेगैः शीघ्रजवैरश्वैः कृता खुरैः कृत्वा खुरली अभ्यासभूमिः पुरः पुरः न्यासो वा तया मंक्षु मनोज्ञं शीघ्रं वा विशेषेण क्षुद्यमानं चूर्णीभवत् रमापृष्ठं भूतलं तस्मादुत्तिष्ठन् उत्पतन् अनल्पमनर्थं करोति अन्धङ्करण स्वयंभूतः रणधुरारेणुः रणप्रारम्भ एव समुत्पन्नो रेणुस्तस्य धाराः प्रवाहास्तज्जनितादन्धकारात् । रणविलोकनार्थमागतैरपि मानवैर्देवैरपि अश्वखुरोत्थितरजःपूरितनेत्रैः कबन्धनृत्यं नालोकीत्यर्थः । मन्दस्वच्छन्दयोः स्वैरं इति मेदिनी । एतत्कृत्तोत्तमाङ्गेति पाठः साधीयान् । दृष्टा । दृष् । रणधुरा । ऋगादिनाऽप् । (पा० ५ । ४ । ७४) ॥ १०० ॥

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर
क्रोडक्रीडद्द्विजालीगरुदुदितमरुत्स्फालवाचाल
वीचिः । एतेनाखानि शाखानिवहनवहरित्पर्ण
पूर्णद्रुमालीव्यालीढोपान्तशान्तव्यथपथिकदृशां
दत्तरागस्तडागः ॥ १०१ ॥

उन्मीलदिति । एतेन राज्ञा एतादृशस्तडागः अखानि । किंभूतः । उन्मीलन्ती विकसन्ती लीला विलासो येषां तानि नीलोत्पलानि तेषां दलानि पत्राणि तेषां दलनं विकासनं तदुद्भवेनामोदेन परिमलेन मेदस्वी पुष्टः बहुलपरिमलः पूरः प्रवाहस्तस्य क्रोडे उत्सङ्गे क्रीडन्ती द्विजाली हंसादिपङ्क्तिस्तस्या गरुद्भ्यः पक्षेभ्य उदित उत्पन्नो मरुद्वायुः तस्य स्फालः सवेगगमन सङ्घट्टो वा तेन वाचालाः शब्दायमानाः वीचयो यस्य । तथा शाखानिवहैः नवहरित्पर्णैर्नूतनश्यामपर्णैश्च पूर्णद्रुमाल्यः वृक्षपङ्क्तयः ताभिर्व्यालीढः व्याप्तः उपान्तस्तीरप्रदेशस्तेन शान्ता व्यथा घर्मोद्भवपीडा येषां तेषां पथिकदृशां घर्मोत्थपीडा

येषां पथिकानां या दृशः तासां दत्तः रागः सन्तोषो येन । अस्य तडाग स्यातिरमणीयत्वं सुखजनकत्वं अस्य च धार्मिकत्वं सूचितं ॥ १०१ ॥

वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोवर्हिमा ।
बिभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्स
द्भूतं स्थाने स्नानविधायिधार्मिकशिरोनत्यापि
नित्यादृतः ॥ १०२ ॥

वृद्ध इति । असौ अनेन निर्मितस्तडागः वृद्धो महान् वार्द्धिः स-मुद्रः । समुद्रापेक्षयापि महानित्यर्थः । अथवा ऽसौ वारि धीयतेऽस्मिन् वार्द्धिर्वारिस्थानं तडाग एव वृद्धोऽतिप्रवयाः । किम्भूतः । तरङ्गैः कृत्वा वलिभं वलियुक्तं । तरङ्गा एव वार्द्धकसङ्कुचितस्थूलशरीरावयवविक्षेपस्थानीयाः वलय इत्यर्थः । तादृशतरङ्गरूपाभिर्वलिभिर्भातीति इति वा । हंसाली पलितेन हंसपङ्क्तिरूपेण जराजनितश्वैत्येन पाण्डुरं धवलं प्रवाहरूपं वपुः बिभ्रत् तथा यष्ट्या मध्यनिहितकीर्तिस्तम्भरूपया कलितो वात परिमाणोऽलङ्कृत इत्यर्थः । अथ च स्खलच्छरीरधारणार्थं दण्डेन युक्तो धृतशरीर इत्यर्थः । तथा तावतामतिबहूनां वयसां पक्षिणां वर्हिमा बाहुल्यं यत्र । अथ च तावतः शतसमीपवर्तिनो वयसो वार्द्धकस्य वर्हिमा यस्य । तथा विकचयाऽतिप्रकाशमानया चन्द्रिकया योग्यं समुचितं स्फुरत् प्रकाशमानं सद्भूतं नैर्मल्यं यस्य । ज्योत्स्नावन्निर्मल । अथ च स-मुद्रत्वादेतज्जलं ज्योत्स्नासम्प्रमुचितं कं जलं बिभ्रत् । अथ च विगतके-शया चन्द्रिकया खालित्येन चान्द्रीति कान्यकुब्जभाषायां तया उचितं स्फुरन्नैव कं शिरो बिभ्रत् । यद्वा केशरहितेन खालित्येनोपलक्षित । तथा योग्य वार्द्धकाञ्चितं स्फुरत् प्रकटं सद्भूतं सम्यग्गतं कम्पनं यस्य शि-रसस्तत् । तथा स्नानविधायिभिर्धार्मिकैः शिरोनत्यापि यत् नित्या-दृतः सत् स्थाने उचितं । धार्मिकैर्हि स्नानादौ तीर्थं नमस्क्रियते वा-र्द्धेरपि ।-समुद्रस्य पर्वण्येव स्पर्शयोग्यत्वादेतस्य सर्वदेश्याधिक्यं समु द्रात् । वलिभमिति मत्वर्थे तुन्दिवलीति भ । (पा० ५ । २ । १३९) ।

द्वितीयाव्याख्याने पचाद्यच् (पा० ३ । १ । १३४)। वर्हिमेति । बहुलस्य भावः । पृथ्वादित्वादिमनिचि (पा० ५ । १ । १२२ । प्रियस्थिरेति बं-हिरादेशः (पा० ६ । ४ । १५७) । धार्म्मिकः । धर्म्मं चरतीति ठक् (पा० ४ । ४ । ४१) ॥ १०२ ॥

तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु
बाले नालेनास्तु त्वदक्षिप्रतिफलनभिदा तत्र
नीलोत्पलानां । तत्पाथो देवतानां विशतु तव
तनुच्छायमेवाधिकारे तत्फुल्लाम्भोजराज्ये भवतु
च भवदीयाननस्याभिषेकः ॥ १०३ ॥

तस्मिन्निति । हे बाले तस्मिन् तडागे त्वं एतेन यूना सह विहर क्रीड । तथा तत्र तडागे पयःकेलिवेलासु जलक्रीडावसरेषु ग्रीष्मर्त्तौ वा तत्रैव नालस्य दृश्यत्वात् । प्रतिबिम्बाभिप्रायं बहुवचनं । नीलोत्प-लानां तवाक्षिप्रतिफलनात् नेत्रप्रतिबिम्बात् सकाशाद्भिदा भेदः नालेन कमलदण्डेनास्तु । अतिसादृश्यादिदं वा नीलोत्पलमिदं वेति सन्देहे सनालं यत् तन्नीलोत्पलमनालन्तु त्वन्नेत्रमिति नालमेव निर्णायकं भव-त्वित्यर्थः । तथा तस्य पाथो जलं तस्य देवतानां अधिकारे आधिपत्ये वा तव तनुच्छायं त्वदीयशरीरप्रतिबिम्बमेव विशतु । तज्जलदेवतास्थाने त्वच्छरीरप्रतिबिम्बमेव भवत्वित्यर्थः । तथा तस्य फुल्लानां विकसिता-नां अम्भोजानां राज्ये खण्डे अथ चाधिपत्ये भवदीयाननस्य त्वदीय-मुखकमलस्य च जलक्रीडावशात् अभिषेकोऽथ च पट्टाभिषेकः भवतु । नीलोत्पलजलदेवताफुल्लकमलापेक्षया भैमीनेत्रशरीराननमधिकमिति सू-चितं । तनुच्छायं विभाषासेनेति षण्ढत्वं (पा० २ । ४ २५) ॥ १०३ ॥

एतत्कीर्त्तिविवर्त्तधौतनिखिलत्रैलोक्यनिर्वासितै-
र्विश्रान्तिः कलिता कथासु जगतां श्यामैः सम-
स्तैरपि । जज्ञे कीर्त्तिमयाद्दहो भयभरैरस्मादकी

र्तिः पुनः सा यन्नास्य कथापथेऽपि मलिनच्छा
या बबन्ध स्थितिं ॥ १०४ ॥

एतदिति । जगतां स्थावरजङ्गमात्मकानां भुवनानां सम्बन्धिभि
समग्रैरपि श्यामैः कृष्णैः कज्जलादिपदार्थैः गुणैर्वा कथासु वार्त्तास्वेव
विश्रान्तिः कलिता आश्रयोऽङ्गीकृतः । किम्भूतैः श्यामैः । एतस्य की
र्त्तेर्यशसः विवर्त्तेन परिणामेन विशेषेण वर्त्तनं स्थितिर्वा तेन धौता-
न्धवलीकृतान्निखिलात् सकलात् कन्दरादिसहितात् त्रैलोक्यात् सकाशा
न्निर्वासितैर्निष्कासितैः । कीर्त्त्यैर्लोकत्रयस्य श्वेतीकरणात् तत्र श्यामगु-
णानां साम्प्रतमदर्शनात् पूर्वं श्यामानि वस्तून्यभूवन्निति वार्त्तामात्र-
शेषाणि श्यामानि जातानि सर्वथा न सन्तीत्यर्थः । तथा कीर्त्तिमया
त् कीर्त्तिप्रचुरादस्माद्राज्ञः सकाशात् अकीर्त्तेः पुनर्भयभरैर्भीतिबाहुल्यै
र्जज्ञे जात अहो आश्चर्यं । कीर्त्तेरकीर्त्तेश्च विरोधात् कीर्त्तिरूपादस्मा
दकीर्त्तेः भयं युक्त इत्यर्थः । एतत् कुतः । यद्यस्मात्मलिनच्छायाऽति-
कृष्णा साऽपकीर्त्तिः अस्य कथापथेऽपि स्थितिमाश्रयं न बबन्ध नाक-
रोत् । एतत्कथाप्रारम्भे अकीर्त्तिलेशस्याप्यभावात् कीर्त्तिरेव वर्ण्यत इ
त्यर्थः । यश्च यस्माद्बिभेति स तदीयकथाप्रारम्भ एव मलिनो भूत्वाऽ-
न्यत्रैव गच्छति । अविद्यमानमपि शशविषाणादि वचनगोचरो भवति
अकीर्त्तिस्तु वचनगोचरोऽपि नाभूदित्याश्चर्यं । अविद्यमानाया अप्य-
कीर्त्तेर्भयोत्पादनादतिचित्रं । जगतामिति पाठे वृद्धाना कथास्विति
व्याख्येयं । जज्ञे । भावे लकारः ॥ १०४ ॥

अथावदद्भीमसुतेङ्गितात् सखी जनैरकीर्त्तिर्यदि
वास्य नेष्यते । मयापि सा तत् खलु नेष्यते
परं सभाश्रवःपूरतमालवल्लितां ॥ १०५ ॥

अथेति । अथ सखी भीमसुतायाः इङ्गितात् अनुरागसूचकात् च
क्षुर्निमेषादिचेष्टितात् सरस्वतीमवदत् । किं । हे यावि जनैरस्य अकीर्त्तिं
र्यदि नेष्यते वा नाभिलष्यत एव तत् तर्हि मयापि साऽप्यकीर्त्तिः स

लु लिखितं नेष्यत इति यद्यपि तुल्यं तथापि परं कोऽपि परः कश्चि-द्विशेषोऽस्ति । सभायाः सभालोकस्य अत्र पूरतमालवल्लितां कर्णाभरणतमालयल्लित्वं नेष्यते प्रापयिष्यते । जनानामसम्मता अशुभिधायादिवद्वतीमप्यस्याकीर्तिमेव सर्वां सभा श्रावयिष्यामि इत्यर्थः । यद्वा तद्दूषणनिवारणं चकारेति भावः । अकीर्तेर्नीलत्वात्तमालवल्लित्वं । इष्यते । इषेः कर्मणि लट् । नेष्यते । णीञः प्रधानकर्मणि लृट् ॥१०५॥

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः । गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरान्मूकानां प्रकरेण कूर्म्मरमणीदुग्धोदधेरोधसि ॥ १०६ ॥

अकीर्तिमेव वर्णयति । अस्येति । हे वाणि मूकानां प्रकरेण समूहेन अस्य क्षोणिपतेरकीर्त्तय किल प्रसिद्ध निश्चित या कूर्म्मरमणी कच्छपिका तस्या दुग्धादुत्पन्नस्योदधेः रोधसि तीरे गीयन्ते । किंभूताः । परार्द्धात् गणनावधेः सकाशात् परया अधिकया सङ्ख्या लक्षीकृताः गणिताः परार्द्धादप्यधिकाः । तथा प्रज्ञाचक्षुभिर्जात्यन्धैः अवेक्ष्यमाणं दृश्यमानं तिमिरं तत्प्रख्यास्तत्तुल्या अतिश्यामा । किंभूतेन प्रकरेण । अष्टमं स्वरं निषादादिसप्तस्वरातिरिक्तं कलयताऽङ्गीकुर्वता । तथा वन्ध्योदरात् जातेन । एवमस्याकीर्त्तयः स्थिताः सभायां श्राविताः । परार्द्धाधिका सङ्ख्याऽन्धस्य दर्शनशक्ति तिमिरस्य च चाक्षुषरूपत्व स्वरस्याष्टमत्व वन्ध्योदराज्जन्म कच्छपिकाया दुग्ध एतानि यथा सर्वथा न सन्ति तथैतद्विशेषणयुक्ता अस्याकीर्त्तयोऽपि न सन्तीति पर्यवसानवृत्त्या वर्णनैव कृता । उपहासार्थत्वसङ्कृतोक्तिः । यद्वा सामस्त्येन कीर्त्तयः पूर्वोक्तविशेषणविशिष्टा अस्य समस्ताः कीर्त्तयो गीयन्ते किल पर्यवसानवृत्त्याऽस्य कीर्त्तयो न सन्त्येवेति निन्देवास्य कृतेति वा । कच्छपी च दर्शनेनैवापत्यानि पालयति न दुग्धेनेति प्रसिद्धिः । प्रज्ञाचक्षुषो

योगिनो ज्योतिर्विलोकननिष्ठास्तिमिरं न पश्यन्ति वा । तिमिरप्रख्याः तिमिरवत्प्रख्यायन्ते । मूलविभुजादित्वात् कः (पा०३।२।५ वा०२१) ॥१०६॥

तदक्षरैः सस्मितविस्मिताननां निपीय तामी
क्षणभङ्गिभिः सभाम् । इहास्य हास्यं किमभून्न
वेति तं विदर्भजा भूपमपि न्यभालयत् ॥१०७॥

तदक्षरैरिति । विदर्भजा इहास्यां सभायां एतदीयवचनविषये वाऽस्य वर्णितस्य नृपस्य हास्यं किमभूत् किंवा नाभूत् इति कारणात् स्वभावात्तमपि भूपं न्यभालयत् औदासीन्येन सम्मुखदृष्ट्या ददर्श न त्वनुरागादित्यर्थः । किंकृत्वा । अनुरागाभावेऽपि हास्यरसकृताभिरीक्षणभङ्गिभिः अवलोकनप्रकारविशेषैः तां सभां निपीय सादरमवलोक्य । किंभूतां सभां तस्याः सख्याः विष्णुपक्षमेनिषेधे पर्यवसितैः पूर्वोक्तैरक्षरैः कृत्वा सस्मितानि सविस्मितानि साश्चर्याणि आननानि यस्यास्तां । इह नृपेऽस्य हास्यं जातं न वेति वा । स्मितसहितां विगतस्मितस्यं विरुद्धं । विरोधाभासः ॥ १०७ ॥

नलान्यवीक्षां विदधे दमस्वसुः कनीनिकागः
खलु नीलिमालयः । चकार सेवां शुचिरक्तता
चितां मिलन्नपाङ्गः सविधे तु नैषधे ॥ १०८ ॥

नलेति । पतिव्रताया भैम्या नलान्यावलोकनमनुचितमित्याशङ्कां परिहरन्नुत्तरसर्गे वक्ष्यमाणस्य नलस्य प्रस्तावनां करोति । दमस्वसुः कनीनिका नेत्रतारा नलादन्यस्य नृपस्य वीक्षामवलोकनरूपामागः अपराधं विदधे चक्रे । किंभूता । खलु यस्मान्नीलिम्नः कालिम्नः आलय स्थानं । मलिनो हि निषिद्धमाचरति । अपाङ्गस्तु कटाक्षः पुनः सविधे द्वितीयपङ्क्तौ चिकुरेभ्योऽनन्तरमुपविष्टे नैषधे सत्यनले मिलन् सम्बद्धः सन् शुचिरक्ततोचितां धवलरक्तत्वयोग्यां सेवां चकार । धवलरक्तत्वगवयवसमुदायसंयुक्तोऽपाङ्गस्तु नल एव संलग्नोऽभूदित्यर्थः । अथ च शुचिः पापभीरुः अनुरक्तस्य च स्वभावेन उचितां स्वामिभक्तोचितां इति वा । स्वामिभक्तो हि स्वामिनमेव सेवते न त्वन्यमि

त्वयं । कटाक्षेणान्यावलोकने दोषः । ऋजुदृष्ट्या त्वन्यविलोकने दोषो नेति न पातिव्रत्यक्षतिः कापि । नलमेव कटाक्षैर्विलोकयति स्मेति भावः । इन्द्रादिषु चतुर्षु अलीकनलेषु सत्स्वपि सत्यनलत्वेऽज्ञातेऽपि तत्रैव सत्यनले एवानुरागबाहुल्यादृष्टवशात् कटाक्षनिरीक्षणं युक्तं ॥१०८॥

**दृशा नलस्य श्रुतिचुम्बिनेषुणा करेऽपि चक्रच्छलनम्रकार्मुकः । स्मरः पराङ्गैरनुकल्प्य धन्वितां जनीमनङ्गः स्वयमार्दयत्ततः ॥ १०९ ॥**

इदानीं श्लोकचतुष्टयेन परस्परानुरागं वर्णयति । दृशेति । ततो भैमीकटाक्षविलोकनानन्तरं स्वयमनङ्गोऽङ्गरहितः परस्य नलस्यैव दृगादिभिरङ्गैरवयवैर्धन्वितां धनुर्धरत्वं अनुकल्प्य श्रोत्रगामिना बाणकल्पेन चक्षुषा जनीं भैमीमार्दयदपीडयत् । किंभूतः स्मरः । करे नलस्यैव हस्ते रेखामयराज्यादिलक्षणरूपचक्रच्छलेन नम्रं चक्राकारं कार्मुकं यस्य सः । भैम्या कटाक्षैर्नले वीक्षिते सति नलेन कटाक्षैर्वीक्षिता सा रतौ कामातुरा जातेति भावः । मुख्य कल्पाभावे चानुकल्पोऽप्यङ्गीक्रियते । आर्दयत् । अर्द हिंसायां ण्यन्ताल्लङ् । आर्दिददिति पाठे लुङ् ॥ १०९ ॥

**उत्कण्टका विलसदुज्ज्वलपत्रराजिरामोदभागनपरागतराऽतिगौरी । रुद्रक्रुधस्तदरिकामधिया नले सा वासार्थितामधृत काञ्चनकेतकीव ११०॥**

उत्कण्टकेति । सा भैमी रुद्रक्रुधः रुद्रकृतशापपरित्यागसमुद्भवात्कोपाद्वेतोः तस्य रुद्रस्यारिः कामः तस्य बुद्ध्याऽयं काम एवेति बुद्ध्या नले विषये वासस्य स्वयम्वरेण स्थितेरर्थितां अभिलाषुकत्वं अधृत दधार । नले साभिलाषा जातेति भावः । स्वयमुत्प्रेक्षयत्यस्य युक्तमेव । केव । काञ्चनकेतकीव । किम्भूता सा केतकी च । उत्कण्टका उदितरोमाञ्चा उर्ध्वीभूतसूचीतुल्यशूकाग्रा च । तथा विलसन्ती शोभमाना नीलपीतादिभिर्वर्णैरुज्ज्वला प्रकाशमाना उज्ज्वलेन शृङ्गारेण वा प्रकाशमाना विलोकनादिशृङ्गारोपाया एवंभूता वा कस्तूर्यादिरचिता कपोलवक्षोजादौ पत्रराजिः पत्रवल्ली पत्रपङ्क्तिर्यस्याः । शोभमानोज्ज्वलवर्णप-

त्रपङ्क्तिश्च । तथा आमोद विलेपज सुरभिगन्धं हर्षी या स्वाभाविक परिमलञ्च भजतीति भाक् । तथा अपगतोऽनुरागो यस्या एवंभूता न भवति अतितरा अनपरागतरा । नलै अतितरामनुरागिणी । न विद्यते पराग पुष्परजो यस्यामेवंविधा न भवति नितरां अनपरागा अनपरागतरा अतितरा परागसहिता । तथाऽतितरां गौरवर्णा उभय्यपि । गौरी पार्वती अतिक्रान्ता या भैमी । सुवर्णकेतकी यथा रुद्रकोपस्य वास. वसति तस्यार्पितां अभिलापुकत्व दधार तस्य स्थान बभूवेत्यर्थ. । तथा भैम्यपि नलविषये नलवैरिकामशुच्या नलमनुः काम एवेति नल सम्बन्धित्वेन मा पीडयसीति धिया रुद्रकोपस्यात्मनि यो वासस्तदर्पितां दधार । रुद्रकोपस्य स्थान जाता नितरा सकोपाजातेत्यर्थं । कामसाम्य नलस्योक्तं । नलेन कटाक्षवीक्षणे कृते सातितरां कामपीडिताजातेति भाव इति वा । गौरीमतिक्रान्तेति तत्पुरुषे । गोस्त्रियोरुपसर्जनस्येति (पा० १ । २ । ४८) । ह्रस्वत्वमाप्तेः अतिगौरिरिति स्यात् । तथापि कृदिकारादक्तिन इति (कौ० प० ३३ । प० ३ । पा० ४ । १ । ४५ । वा०) । ह्रस्वान्तादपि पक्षे ङीपि अतिगौरीति सङ्गच्छते ॥ ११० ॥

तन्नालीकनले चलेतरमनाः साम्यान्मनागप्यभूदप्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैषधान् । आनन्दाम्बुनिधौ निमज्य नितरां दूरङ्गता तत्तलालङ्कारीभवनाज्जनाय ददती पाताळकन्याभ्रमं ॥ १११ ॥

तदिति । न अलीको नालीक स चासौ नलश्च नालीकनलः सत्य नल । स चासौ नालीकनलश्च तन्नालीकनलस्तस्मिन्नदृष्टपरघटितदुर्घटदर्शने सत्यनले चलेतरस् निश्चल मनोयस्याः सा । तत्रैवानुरक्तासती सा भैमी अग्रे स्थितानपि चतुरश्चतुःसङ्ख्यकानलीकान् साम्यान् सत्यनलसाम्येन नलान् दृशा नयनव्यापारेण पातु कटाक्षैर्विलोकयितुं मनागल्पमपि चतुरा कुशला नाभूत् । किंभूता । आनन्दाम्बुनिधौ आनन्दरूपे समुद्रे निमज्य क्रीडित्वा नरावलोकमानिश्चला

भूत्वेति यावत् । नितरां दूरङ्गता हर्षस्य परमकाष्ठां प्राप्ता तलङ्गता च । तथा तस्यानन्दसमुद्रस्य तलं तस्यालङ्कारीभवनाज्जनाय पातालकन्याभ्रमं अतिसौन्दर्यादानन्दवशाच्च निर्निमेषतया समुद्रनिमज्ज्य तलगमनेन च किमियं नागकन्येति भ्रमबुद्धिं ददती जनयन्ती । अलङ्कारीभवत्ते इति पाठे तस्य नलस्य भूतलस्य उपवेशनेनालङ्कारभूतायेन्द्रादिलोकाय नलप्रसाय जनाय वा पातालतलस्यालङ्कारीभवने वासुक्यादिनागलोकाय वा पुरःस्थितामलाकारानपीन्द्रादीनन्यराजवदतुच्छ्रैव विलोकयन्तिस्म । अदृष्टवशाच्च व्यवहितमपि सत्यनलं कटाक्षैर्विलोकयति स्मेति भावः । तल्लत्तेतिपाठे तेषामलीकनलस्यात्तदानीं स्त्रीयेन रूपेणालङ्कारभूताय जनाय सत्यनलायेत्यर्थः ॥ १११ ॥

**सर्वस्वं चेतसस्तां नृपतिरपि दृशौ प्रीतिदायं प्रदाय प्रापद्दृष्टिमिष्टातिथिममरदुरापामपाङ्गोत्तरङ्गां । आनन्दान्ध्येन बन्ध्यानकृत तदपराकूतपातान् स तस्याः पत्या पीयूषधारावलनविरचितेनाशुगेनाशु लीढः ॥ ११२ ॥**

सर्वस्वमिति । स नृपतिर्नलोऽपि चेतसः सर्वस्वं प्राणवत्प्रियां तां भैमीं दृशौ स्वनेत्राय प्रीतिदायं सन्तोषजनितं दानं प्रदाय प्रकर्षेण दत्त्वा कटाक्षेण अतिसादरं दृष्ट्वा अमरदुरापा इन्द्रादिभिर्दुर्लभां लोकोत्तरस्वरूपां अथवा तेषां कटाक्षेणावलोकनाद्दुरापां अपाङ्गे नेत्रप्रान्ते उत्तरङ्गां चलत्कल्लोलां अतिचञ्चलां कटाक्षरूपां तद्दृष्टिं भैमीदृष्टिमेव इष्टातिथिं प्रियमभ्यागतं प्रापत् लेभे । भैम्या पूर्वं कटाक्षैर्विलोकितोऽनन्तरं तेन सा विलोकिता अनन्तरं पुनरपि तया स विलोकित इत्यर्थः । अनन्तरं च तस्याः पत्या कामेन पीयूषधारारूपमतिशैत्योपकत्वादमृतरूपं यद्वलनं भैमीकृतं वलितग्रीवमवलोकनं तेन कृत्वा विरचितेनाशुगेन भैमीकटाक्षरूपेण बाणेनाशु शीघ्रं लीढो विद्धः सः नलः तदपराः तस्या भैमीदृष्टेरपरेऽन्ये तृतीयाद्यो ये आकूतपाताः अनेकभावाभिव्यञ्जका व्यापारविशेषास्तान् आनन्दान्ध्येन हर्षाश्रुपरि-

पूर्णनेत्रतया यद्दारथ्यं अदर्शनत्वेन यन्ध्यान् निष्फलान् अकृत । भैमी द्वितीयकटाक्षवीक्षणैर्नैवातितृप्तो कामविवश संस्तस्यास्तृतीयादिकटाक्षनिरीक्षणानि न ददर्शेति भावः । अन्योऽपि तुष्टः कस्मैचित् हर्षंस्वं ददाति अतिप्रियत्वातिथि प्राप्यानन्दबाष्पान्धो भवति ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गो
ज्ज्वलः ॥ ११३ ॥

श्रीहर्षमिति । पूर्वार्धार्थः पूर्ववत् । माता वागीश्वरी जननी च तस्याश्चरणावेवाम्भोजे तयोरलिरूपो भ्रमररूपः मौलिर्यस्य । यद्वा मातृचरणसम्बन्धिनो पूजार्थं चरणयोरुपढौकिता अम्भोजालि. कमलमाला तद्युक्तो मौलिर्यस्य । वागीश्वर्या जनन्या वा प्रसादरूपेण धृत निर्माल्यकस्येत्यर्थः । द्वादशानां पूरणः सर्गं व्यगलत् समाप्त । स्वभावत उज्ज्वल इत्यर्थ ॥ ११३ ॥ इति श्रीवेदरक्षरोपनामक श्रीमन्नरसिंहप विद्वत्तामजनारायणकृते नैषधीयप्रकाशे द्वादश सर्ग ॥ शुभमस्तु ॥

## उत्तरनैषधचरिते ।

### त्रयोदशः सर्गः ।

श्रीलक्ष्मीनृसिंहौ जयतः ।

कल्पद्रुमान् परिमला इव भृङ्गमालामात्माश्रया निखिलनन्दनशाखिवृन्दात् । तां राजकादपगमय्य विमानधुर्य्या निन्युर्नलाकृतिधरानथ पञ्च वीरान् ॥ १ ॥

इदानीं इन्द्रादिपञ्चनलीसज्ञं त्रयोदशं सर्गमारभते । कल्पद्रुमेति । अथ विमानधुर्य्याः शिबिकावाहिनः तां भैमीं राजकाद्राजसमूहात् अपगमय्य निवर्त्य नलाकृतिधरान् नलवेषधारिणः पञ्च वीरान्नलसहितानिन्द्रादीन्निन्युः प्रापयामासुः । शिबिकावाहिना तेषु पञ्चसु नलोऽस्ति वा न वेति अपरिज्ञानात् नलस्यापि नलरूपधारकत्वं घटते । यस्य यद्रूपं तद्धारित्वं तस्यापि युक्तमेवेति काव्यापेक्षयापि युज्यते । वीरपदेन शौर्य्यं नायकगुणः । के । कस्मात् । का । कानिव । परिमलाः मनोहरा गन्धाः समस्ता नन्दनशाखिनो देवोद्यानतरवः तेषां वृन्दात् आत्माश्रया परिमलाश्रिता भृङ्गमाला भ्रमरपङ्क्तिः परावर्त्य अतिशयान् कल्पद्रुमानिव । कल्पद्रुमा नन्दनस्थितवृक्षापेक्षया अधिकास्तथाऽन्यराजापेक्षया तेऽपीत्यर्थः । सर्वाभिलाषपूरकत्वसाम्यात् । मन्दारादिष्वपि चतुर्षु कल्पद्रुमशब्दप्रयोगः । भैम्या अप्यात्माश्रयविमाने स्थितत्वात् । नयतिर्द्विकर्मा ॥ १ ॥

साक्षात्कृताखिलजगज्जनताचरित्रा तत्राधिनाथमधिकृत्य दिवस्तथा सा । ऊचे यथा स च -

सुरभिर्जनिता । रलयोः सावर्ण्यात्सेनायामचलीभवतां पद्मं तायमानानां स्वभानामिति वा । मत्तगजबाहुल्यमनेन सूच्यते । एवमिन्द्रनलयोरभेदबुद्धिर्यथा तस्या भवति तथा देव्योक्तं । रणशब्दो लक्षणया रणभूमौ वर्त्तते । इतः श्लोकादारभ्यात्याजीति यावत् प्रथममिन्द्रादिवर्णनं पश्चान्नलवर्णनं । अत्याजीत्यादौ च नलवर्णनं प्राथम्येन दिक्पालवर्णनं पश्चादिति ज्ञेयम् । श्लोकादिष्व प्रथमत इति श्लोकेन नलस्य प्राधान्यनिर्देशाद्धरिश्चेत्यादि तृतीयया दिक्पालानामप्राधान्यनिर्देशात् । उत्तम स्पर्शवती शीते शीतस्पर्शा तपात्यये । भर्तृभक्ता च या नारी सोच्यते वरवर्णिनीति वृद्धाः । उत्तमा वरवर्णिनीत्यमरः । वरो वर्णो यस्या इति वा । अतिशायने तमबिष्ठनावितीनिः (पा०५।३।५५) ॥ ३ ॥

**शुभ्रांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचापख-**
**चितद्युमणिप्रभाभिः । अन्वास्यते समिति चायम-**
**रवाहिनीभिर्यात्रासु चैष बहुलाभरणार्चिताभिः ४**

शुभ्रेति । एष इन्द्रः समिति च यात्रासु विलासगतिषु च दण्डयात्रासु वा । अमरवाहिनीभिः सुरसेनाभिः अन्वास्यते अनुगम्यते । किंविधाभिः । शुभ्रांशुश्चन्द्रः हरसम्बन्धिनो हाराः एकादशरुद्रास्तेषां गणः समूहः हरसम्बन्धिनो वा ये गणाः नन्दिप्रभृतयस्तान् सर्वानपि हरन्ति आत्मना सह नयन्ति तत्सहिता इति यावत् । एवंविधाः पयोधरा मेघाः । हरस्यापत्यं हारः स्कन्दो गणपतिर्मेघश्चेति वा । तेषामङ्कचुम्बी स्वामित्वान्मध्यवर्तीन्द्रः शुभ्रांशुहारगणान् हरत्यात्मना सह नयत्येव शीलः पयोधराङ्कचुम्बी च एवंविधो वा य इन्द्रस्तस्य चापं तेन खचिता सम्बद्धा द्युमणिप्रभा सूर्यशोभा यासु ताभिः शुभ्रांश्वादिभिः शक्रधनुर्व्याप्तेन सूर्येण च प्रकर्षेण भान्ति ताभिर्वा । तथा बहुः प्रचुरो लाभो धनादिप्राप्तिर्येषु रणेषु अर्चिताभिः पूजिताभिः । दैत्यजयाद्बहुला आभा दीप्तिर्यासां ताश्च ता रणार्चिताश्चेति वा । मेघानामपि कामरूपत्वात् सैनिकत्वं युज्यते । चन्द्रादिभिर्विशिष्टेन्द्रचापेन च खे आकाशे चिता वृद्धिं प्रापिता सूर्यशोभा यास्विति वा । तैः कृत्वा वृद्धिं प्राप्ता वा चन्द्रादयस्तेजस्विनस्तत्तेजःसम्बन्धेन

सूर्य्यतेजः प्रचुरं यत्र जातमित्यर्थः ॥ नलपक्षे एष नलः सभायां दण्ड यात्रासु च चामरधारिणीभिः अन्वास्यते सेव्यते । किंभूताभिः । शुभ्रा. सिता अंशवो यस्य तेन हारगणेन मुक्ताहारसमूहेन कृत्वा हारी सुन्दरः पयोधराङ्कः स्तनमध्यस्तत्चुम्बिनी तत्सम्बद्धा इन्द्रचापसम्बद्धसूर्य्यप्रभेव प्रभा यासां ताभिः । चोऽप्यर्थः । यात्रास्वपीति योजना । हारमध्यगमणीनामनेकवर्णत्वादिन्द्रचापसम्बद्धसूर्य्यप्रभासाम्यं । तथा च एव बहुलानि प्रचुराणि आभरणानि तैरर्चिताभिरलङ्कृताभिः । प्राधान्याद्धाराणां पृथग्ग्रहणं । आभरणग्रहणं तद्व्यतिरिक्तालङ्काराणां अतो न पौनरुक्त्यम् । एतेन यथा सभायां निर्भयं आस्ते तथा सङ्ग्रामयात्रास्वपीति व्यज्यते । शुभ्रं उद्दीप्तशुक्लयोः । द्युमणिस्तरणिर्मित्रः । समिद्युद्धे सम्पराये इत्यमरः । हरशब्दात्तस्येदमित्यण् (पा० ४ । ३ । १२०) । हारी । ताच्छील्ये णिनिः । अपत्ये या छत इञ् (पा० ४ । १ । ९५) । यद्वा शुभ्रांशुहारगणेन हारिणः पयोधराः स्तनास्तेषामङ्कः पार्श्वप्रदेशः तच्चुम्बी इन्द्रचापो नलपदविशेषस्तेन सम्बद्धा दिव्यरत्नप्रभा यासां ताभिः । इन्द्रचापवदाकाशव्यापिनी दिव्यमणिप्रभा यासां ताभिरिति वा । चित्रमणिप्रभासम्वलिताः शक्रधनुःसदृशा भवन्तीति बहुलैराभरणैर्भूषिताभिरित्यर्थः । रुच दीप्तिसंवरणयोः ॥ ४ ॥

क्षोणीभृतामतुलकर्कशविग्रहाणामुद्दामदर्पहरिकुञ्जरकोटिभाजां । पक्षच्छिदामयमुदग्रबलो विधाय मग्नं विपज्जलनिधौ जगदुज्जहार ॥ ५ ॥

क्षोणीति । इति पद्यं क्वचित्पुस्तके दृष्टं । तस्यायमर्थः । अयं क्षोणीभृतां पर्वतानां पक्षच्छिदां विधाय कृत्वा विपज्जलनिधौ आपत्समुद्रे मग्नं पक्षसहिते पर्वते सत्त्वीकरणाज्जगदुज्जहार उद्धृतवान् । पर्वतपक्षच्छेदनाद्विपद्रहितं कृतवानिति भावः । किंभूतानां । अतुला अनुपमा कर्कशाश्च विग्रहा देहा येषां । तथा उद्दामदर्पाणामत्युत्कटानां हरिकुञ्जराणां सिंहहस्तिनां कोटिं भजतां । एकस्मिन् प्रदेशेऽनेकसिंहानामन्यस्मिन्नत्युत्कटानामनेककुञ्जराणामित्यर्थः । किंभूतोऽयं । उदग्रमुच्चैस्त्वादुदयं उद्गमनं । यद्वा उदग्रं पौरुषं यस्य

स ॥ नलपक्षे अतुलानत्युच्चान् सलक्षणांश्च कर्णान् श्वेताश्वान् घ्नन्ति मारयन्ति एवंविधा विग्रहाः शरीराणि वैरं वा येषां । तथा उद्दामदर्पा हरयोऽश्वा गजाश्च तेषां कोटिं भजतः । वैरिनृपाणां पक्षच्छिदां सहायच्छेदं कुक्षिच्छेदं वा कृत्वा उदग्रं बलं पौरुषं सैन्यं वा यस्य । अयं नलो वैरिकृतापत्समुद्रे मग्नं जगदुज्जहार । वैरिणो हत्वा आपद्रहितमकरोदित्यर्थः ॥ ५ ॥

भूमीभृतः समिति जिष्णुमपव्यपायं जानीहि न त्वमघवन्तममुं कथञ्चित् । गुप्तं घटप्रतिभटस्तनि बाहुनेत्रं नालोकसेऽतिशयमद्भुतमेतदीयम् ॥ ६ ॥

भूमीभृत इति । हे घटस्य प्रतिभटौ स्पर्द्धिनौ स्तनौ यस्यास्तत्सम्बुद्धिः । हे भैमि त्वं समिति सङ्ग्रामे भूमीभृतः पर्वतान् जिष्णुं जेतारं । तथा न विद्यते पर्वतेर्व्यजस्य अपायो नाशो यस्य । तममुं अमघवन्तमनिन्द्रं न तु नैव जानीहि अपि त्विन्द्रमेवाय । इन्द्रस्य सहस्रनेत्रत्वात् तथेत्यत आह । त्वं एतदीयं शयं पाणिमतिक्रान्तं प्रसृतादपि दीर्घं अत एवाद्भुतमाश्चर्यकारि कथञ्चिद्गुप्तं नलरूपधारणाच्छादितं बहुनेत्रस्य भावो बाहुनेत्रं नालोकसे न पश्यसि गुप्तत्वान्न तु अविद्यमानत्वादित्यर्थः । शयावतिक्रान्तं हस्ततलयोर्नेत्राणि न सन्तीत्यर्थ इति वा । बहुनेत्रसमूहं बाहुनेत्रसम्बन्धिनमेतदीयमतिशयमुत्कर्षं माश्चर्यमिति वा । नलपक्षे त्वममुं अघवन्तं सपापं न जानीहि पुण्यश्लोकत्वात् । रणे राज्ञो जेतारं । तथापगतो विशिष्टोऽपायो यस्मात्त । रणे अपगतो व्यपायः पलायनं यस्मात् अपलायमानमित्यर्थः । एतदीयं अतिशयमपरिमितहस्तपरिमाणमाश्चर्यरूपं प्राचरणशाद्बाहू हस्ते स्थितं नेत्रं चीनांशुकं गुप्तं यथा तथा द्रव्यान्तरविलोकनव्याजेन नालोकसे अपि त्वालोकयेत्यर्थः । बाहू च नेत्रे च बाहुनेत्रं । शयमतिक्रान्तं बाहू हस्तपरिमाणाधिकपरिमाणौ नेत्रे च प्रसृतादप्यधिकेत्यर्थः । गुप्तं यथा तथा नालोकसे अपित्वालोकयेति वा । अतिशय

बाहुनेत्रं बाहू अतिशयितौ वदान्यौ शूरौ ययोस्तावतिशयौ । नेत्रे च शयमति क्रान्ते अतिशयौ च । अतिशये चेति नपुंसकैकशेषेण वा व्याख्येयं । एतदीय गुप्तमनेन पालित । बहवश्च ते नेतारश्च बहूनां वा नेतारस्तेषां समूहः अतिशयितौ हस्तौ यस्य । लावण्या वदान्य उत्कृष्टमालोकय । शूरा वदान्या अप्यनेन पोषिता इत्यस्योत्कृष्टत्वं व्यज्यते । कुलिशभिद्गुरुरथोविरित्यमर । नेत्रं पथि गुणे च स्वे इति विश्वः । जिष्णुः । ग्लाजिस्थश्च ग्स्नुरिति ताच्छील्ये ग्स्नुः । (पा० ३ । २ । १३९) । तद्योगे भूमीभृत इति न लोकेति (पा० २ । ३ । ६९) । षष्ठी निषेधात् द्वितीया । बहुनेत्रशब्दात् भावसमूहसम्बन्धे ष्यञ् (पा० ४ । २ । ३७) । पक्षे प्राप्यमूत्वादिकयङ्गायः (पा० २ । ३ । २) ॥ ६ ॥

लेखा नितम्बिनि बलादिसमृद्धराज्यप्राज्योपभो
गपिशुना दधते सरागं । एतस्य पाणिचरणं
तदनेन पत्या सार्द्धं शचीव हरिणा मुदमुद्वहस्व ७

लेखा इति । हे नितम्बिनि अतिपृथुनिबिडनितम्बे भैमि बलादीनां बलसुन्दरमुचिप्रभृतीनां समृद्ध सम्पूर्णं राज्यं राजभावः तस्य प्राज्यो महुः उपभोगस्तस्य पिशुनास्तद्सूचकाः लेखा देवाः एतस्येन्द्रस्य पाणी च चरणौ च पाणिचरणं सरागं सानुरागं यथा तथा दधते धारयन्ति । एतदाज्ञापाणि नमस्कारार्थं च चरणावित्यर्थः । तत्तस्मादनेन हरिणेन्द्रेण पत्या सार्द्धं शचीव मुदमुद्वहस्व धारयस्व ॥ नलपक्षे सरागमरुणं एतस्य पाणिचरणं कर्तृ सैन्यस्वाम्यमात्यादिभिः षड्विधेन वा बलेन समृद्धस्य राज्यस्य प्राज्य उपभोगस्तस्य सूचिका सामुद्रिकोक्तलक्षणभूताः ध्वजादिलेखाः कर्मभूताः दधते धारयति । दध धारणे एकवचनात्तस्मिन् पदे रूपं । तस्मादनेन पत्या नलेन सह हर्षं धारयस्व । केन केव · हरिणेन्द्रेण शचीव । लेखा अदितिनन्दनाः । पिशुनौ खलसूचकावित्यमरः । नितम्बशब्दादतिशयार्थादिनिः (पा० ५ । २ । ११७) । पाणिचरणं प्राण्यङ्गत्वादेकवद्भावे नपुंसकं (पा०२।४।१२) ७।

आकर्ण्य तुल्यमखिलां सुदती लगन्तीमाख्यद्धठे

ऽपि च नलेऽपि च वाचमेताम् । रूपं समान मुभयत्र विगाहमाना श्रोत्रान्न निर्णयमवाप दसौ न नेत्रात् ॥ ८ ॥

आकर्ण्येति । असौ सुदती भैमी एतां पूर्वोक्तां अखिलां वाचमा खण्डलेऽपि च नलेऽपि च तुल्य लगन्तीं समानसम्बन्धामाकर्ण्य उभयत्र इन्द्रे नले च समानं रूपं ऐक्यरूपञ्च विगाहमाना जानती विशेषावलोकनादपि विशेषमनुपलभमाना यथाक्रमं श्रोत्राच्छ्रवणेन्द्रियात् नेत्राच्चक्षुरिन्द्रियाच्च निर्णयं नावापत् न प्राप । अयमिन्द्रः स्तुतः किंवा नलः । तयोः सरूपत्वादयमिन्द्रो नलो वेति नाज्ञासीदित्यर्थः । अपि चेति समुच्चयौ परस्परसमुच्चयवाचकौ । अवापत् । लृदित्वादङ् ॥ ८ ॥

शक्रः किमेष निषधाधिपतिः स वेति दोलाय मानमनसं परिभाव्य भैमीम् । निर्दिश्य तत्र पवनस्य सखायमस्यां भूयोऽसृजद्भगवती वचसां स्रजं सा ॥ ९ ॥

शक्र इति । सा भगवती सरस्वती भूयः पुनरपि वचसः स्रजं मालां असृजत् । किं कृत्वा । तत्र तेषु मध्ये अस्यां भैमीसमीपे पवनस्य सखायमग्निं निर्दिश्योद्दिश्य । पुनः किं कृत्वा भैमीं इति दोलायमानं दोलेव भ्रमत् मनो यस्यास्तां परिभाव्य सञ्चिन्त्य । इति किं । एष किं शक्रः सत्यं दृष्टः निषधाधिपतिर्नलो वेति दोलेवाचरति । कर्तुः क्यङ् सलोपश्चेति ( पा० ३ । १ । ११ ) । क्यङि शानचि दोलायमानमिति । अस्यां सामीपिक आधारः ॥ ९ ॥

एष प्रतापनिधिरुद्गतिमान् सदायं किं नाम नार्जितमनेन धनञ्जयेन । हेम प्रभूतमधिगच्छ शुचेरमुष्मान् नास्त्येव कस्य च न भास्वर रूपसम्पत् ॥ १० ॥

एष इति । हे भैमि एष प्रतापस्य निधिः प्रकृष्टोष्णस्पर्शस्थानं । तथाऽयं सदा वृद्धिमानूर्द्ध्वगमनयुक्त ऊर्द्ध्वज्वलनोऽयमित्यर्थः । धनञ्जयेन वह्निनाऽनेन किं नाम का संज्ञा नार्जिता न प्राप्तं । अग्निर्वैश्वानरो वह्निरित्यादिकं नाम निर्वचनयोगात् प्राप्तमित्यर्थः । सर्व्वेषामपि नाम्नां निर्वचनमस्त्येव । नाम सम्भावनायां अग्निनाऽनेन किं नाम वस्तु न प्राप्तं । तैजसानां परमाणूनां सर्व्वत्राविरलत्वेन विद्यमानत्वादिति वा । अनेन धनञ्जयशब्देन कृत्वा सार्थकं नाम किं नार्जितमिति वा । धनञ्जयत्वादेतस्य त्वं शुचेरग्नेः प्रसादतो प्रभूतं बहु हेम स्वर्णमधिगम्य प्राप्नुहि । धनमिच्छेद्धुताशनादित्युक्तेः । अग्नेरपत्यं प्रथमं सुवर्णमिति श्रुतेः । अस्मात् सुवर्णं प्रथममुत्पन्नं । अस्येवाग्नेरिव कस्य च न कस्यापि भास्वरा देदीप्यमाना रूपसम्पदस्ति तेजोमात्रविवक्षया । तेजोव्यतिरिक्तस्य कस्य च न शुक्लं भास्वरं रूपं दृष्टमित्यर्थः ॥ नलपक्षे एष नलः प्रतापस्य स्थानं । तथा सदोदयवान् । तथाऽनेन जयेन कृत्वा किं नाम धनं नार्जितं वैरिणो विजित्य धनमर्जितं । दायो दानं तेन सहितमिति वा । एतेन धनार्जनस्य स्वोपभोगः फलं न किन्तु दानमेव मुख्यं फलं वदान्यत्वं च सूचितं । सदा अयः शुभावहो विधिर्यस्मादिति वा । शुचेः स्वधर्मोपार्जितद्रव्यादस्मात्प्रचुरं सुवर्णं प्राप्नुहि । शुचेः शृङ्गाररूपादिति वा । अस्य नलस्येव भास्वरा कायकान्तिसमृद्धिः कस्याप्यन्यस्य नास्ति । भा दीप्तिः स्वरः कण्ठशब्दः रूपं सौन्दर्यं तेषां सम्पद् इयं कस्यापि नास्तीति वा । तेजस्वी मधुरस्वरः सुन्दरश्चेत्युक्तं । वीतिहोत्रो धनञ्जय । शुचिरप्युपस्त्रीयांस्तु इत्यमरः । धनञ्जयः । संज्ञायां भृतृवृजीत्यादिना खच् (पा० ३ । २ । ४६) । अरुर्द्विषदिति मुम् (पा० ६ । ३ । ६७) । भास्वरं । स्थेशभासेति वरच् (पा० ३ । २ । १७५) ॥ १० ॥

अस्त्यर्थहेतिपटुताकवचीभवत्तत्पार्थिवाधिकरणप्रभवस्य भूतिः । अप्यङ्गरागजननाय महेश्वरस्य सञ्जायते रुचिरकार्ष्ण तपस्विनोऽपि ११

अत्यर्थेति । हे रुचिरकर्णि शोभनश्रवणेन्द्रिये एषि अस्याग्नेरत्यर्थोऽतिशयितश्चेतिपटुता ज्वालापाटवं तस्य कवलीभवन्ति ग्रासीभवन्ति तानि तानि पार्थिवानि पृथिवीकार्याणि तृणकाष्ठकरीषादीनि तान्येवाधिकरणं भस्मन एवाधारः तत्र प्रभवः उत्पत्तिर्यस्या एवंविधा भूतिर्भस्म तपस्विनोऽपि पाशुपतादिव्रतनिष्ठस्य महेश्वरस्य शिवस्याङ्गराजननाय उद्धूलनेनाङ्गानां विशिष्टवर्णोत्पत्तये सङ्गायते सम्पद्यते । एतत्सम्बन्धि भस्मापि ईश्वरस्य तपस्विनोऽपि उपकृत्यै प्रभवति अन्यस्य भवतीति किं वक्तव्यमिति स्तुतिः । रुचिरकर्णेति श्लेषोक्तिचातुरीविषये सावधाना भवेति व्यज्यते । एतद्धरणं भस्मैव केवलं नान्यत्किञ्चिदिति विचार्यं वृणीष्वेति व्यज्यते ॥ नलपक्षे अङ्ग रुचिरकर्णि अस्य नलस्य भूतिः सम्पत् महेश्वरस्य महाधनिकस्यापि त्यक्तसर्वसङ्गस्य मुनेरपि च अभिलाषसमुद्भूतये सम्पद्यते । नमेदृक्सम्पद्भूयादिति धनिको मुमुक्षुश्चापि अस्य भूतये स्पृहयतीत्यर्थः । धनिकस्य तपस्विनोऽपि ईर्ष्याजननाय सम्पद्यत इति वा । किम्भूता सम्पत् । अतिशयितास्त्रपटुतया शोषोपसंहारादिमन्त्रप्रयोगसामर्थ्येन ग्रासीभवन्तस्ते च ते पृथ्वीश्वराश्च तेषामधिको यस्तस्मादुत्पन्ना । स प्रभव उत्पादको यस्या इति वा । स्वात्मनैवोपार्जितेत्यर्थः । रागोऽनुरक्ते मात्सर्ये । ईतिचर्वोलापुंर्योऽपि च । पार्थिवेति । तस्येश्वर इत्यधिकारे (पा० ५ । १ । ४२) । सर्वभूमीत्यण् (पा० ५ । १ । ४१) । रुचिरकर्णीति । नासिकोदरोष्ठेति (पा० ४ । १ । ५५) । ङीप् ॥ ११ ॥

एतन्मुखा विबुधसंसदसावशेषा माध्यस्थ्यमस्य
यमतोऽपि महेन्द्रतोऽपि । एनं महस्विनमुपैहि
सदारुणाङ्घ्रियेनामुना पितृमुखि ध्रियते करश्रीः १२

एतदिति । हे पितृमुखि अशेषा सर्वाऽसौ विबुधसंसत् देवसभा एष एव मुखं यस्याः सा । अग्निमुखा वै देवा इति श्रुतेः । अस्याग्नेर्यमतोऽपि महेन्द्रतोऽपि माध्यस्थ्यं आसन्नापेक्षया दिगपेक्षया च मध्ये विद्यमानत्वं अस्ति । त्वं महस्विनं तेजोयुक्तं महस्तु तेजस्तु

विषये इनं स्वामिनं चैनं उपैहि प्राप्नुहि । येन सदारुणा कापुरुषहिते नामुना करयोः किरणशोभा उच्चैरत्यर्थं रक्ता वाभ्रियते । पितृमुखीति सम्मुखा धन्यत्वं व्यज्यते । धन्या पितृमुखी कन्या धन्यो मातृमुखः सुत इति सामुद्रिकोक्तेः ॥ नलपक्षे असौ जगति प्रसिद्धा पुरो दृश्यमाना च निखिला विद्वत्सभा एतन्मुखा एतत्प्रधाना । यथा सर्वाङ्गेषु मुखं प्रधानं तथा विद्वत्सभायामसौ । के विबुधा इति पृष्टे प्रथममसौ गण्यत इत्यर्थः । पुण्यश्लोकत्वात् । एष मुखो यस्यास्ताद्दृशीति वा । अस्य यमतः समवर्त्तिनोऽपि इन्द्रादप्यधिकं माध्यस्थ्यं व्यज्यते । पक्षपातरहितत्वं शत्रुमित्रयोस्तुल्यदण्ड इत्यर्थः । सर्वे. सार्वविभक्तिकत्वाल्लोकपालानामित्यादिन्द्रयमयोरेतन्मध्यवर्त्तित्वं इति कश्चित् । तेजस्विनमेनं प्राप्नुहि । येनानेन सदा सर्वदा हस्तशोभा अतिशयेनारुणा रक्ता धार्य्यते । स्विन शोभनं पतिमेनं मह पूजय । तथा एनमनुपैहि एतत्समीपं गच्छेति वा । महस्विनमुत्सवयन्त वा । विश्वप्रकाशे सकारान्तस्य मह शब्दस्य पाठात् । मुख मुख्ये च वक्त्रे स्यादित्यजयपाल । पिता मत्र यस्या इति समासे मुखेनैव मुखस्य सादृश्यात् पितृमुखमिव मुखं यस्या इत्यत्र पर्यवस्यति ॥ १२ ॥

नैवाल्पमेधसि पटोर्रुचिमस्त्वमस्य मध्येसमिद्धि वसतो रिपवस्तृणानि । उत्थानवानिह पराभवितुं तरस्वी शक्यः पुनर्भवति केन विरोधिनायं ॥ १३ ॥

नैवेति । एषामि काष्ठे पटोर्ज्वलमानस्यास्याग्नेः रुचिमत्त्व दीप्तिमत्त्वं अल्प नैव किन्तु बह्वित्यर्थः । आज्वल्यमानस्यास्य इत्थने दीप्तिमत्त्वं अल्प नैव तदन्यस्मादधिक दीप्तिमानयं भवतीत्यर्थः इति वा । तथा मध्ये समित् समिधा काष्ठाना मध्ये निवसतो विद्यमानस्य तृणानि रिपवः शत्रवः । रिपुनाशो यथा येनेन क्रियते तथा समृद्धेनानेन तानि दर्शनमात्रेण दह्यन्त इत्यर्थः । प्रादेशमात्राणां पलाशशम्यादिकाष्ठाना मध्य इति वा । इह लोके समिन्मध्ये वा उत्थान-

वान् ऊर्द्धं उच्छ्वसन् तरस्वी वेगवानयं विरोधिना केन उदकेन पराजयितुं पुनः शक्यो भवति तेनैव शान्तिमेति नान्येनेत्यर्थः । जय्यो भवति अपि तु न । येनेनोत्थितरयाच्य वारिणापि शान्तिः कर्त्तुमशक्येत्यर्थं इति वा ॥ नलपक्षे पटोग्रंहणधारणादिसमर्थस्याप्यमेधसि मन्दप्रज्ञे रुचिमत्त्वं प्रीतियुक्तत्वं नैव अयोग्यत्वात्तस्येति भाव इत्यर्थः । तथा समिन्मध्ये सङ्ग्राममध्ये नियमतोऽस्य वैरिणस्तृणानि अकिञ्चित्करा इत्यर्थः । इह रणे भूलोके वा तरस्वी उत्थानवान् वेगवान् बलवान् वायं केन रिपुणा जेतुं शक्याऽपि तु न केनापि । कस्याप्यजय्योऽयमित्यर्थः । उत्थानमुद्यमः इदंमदृक्षोऽपि उदयी बलवांश्च नास्तीत्यर्थः । भवतीति सम्बोधनं वा । तरो बले च वेगे च । इध्मनेधः समित्स्यमरः ॥ अल्पमेधसि । नित्यमसिच्प्रजामेधयोरित्यत्र (पा० ५ । ४ । १२२) । नित्यग्रहणादन्यस्मादपि भवतीति वृत्तिकारोक्तेः प्रयोगानुसारेण असिच् । मध्ये समित् । पारे मध्ये षष्ठ्या वेति (पा० २ । १ । १८) । अव्ययीभावे निपातनादेत्वम् । भय इति (पा० ५ । ४।१११) । विकल्पित्वाट्टजभावः । पराभवितुं । शकधृषेति (पा० ५ । ४ । ६५) । अक्रियार्थत्वेऽपि शक्तियोगात्तुमुन् ॥ १३ ॥

साधारणीङ्गिरमथ घनैघाभ्यामेतां निपीय न विशेषमवाप्नवत्याः । ऊचे नलोऽयमिति तम्प्रति चित्तमेकं ब्रूते स्म चान्यदनलोऽयमितीदमीयं ॥ १४ ॥

साधारणीमिति । अथ घनैघाभ्यां अग्निनलाभ्यां साधारणीं समानैताङ्गिर निपीयाकर्ण्य इदमीयमनयोः सम्बन्धिनं विशेषं तारतम्यं न अवाप्नवत्या ज्ञातवत्या भैम्याः पुरोवर्त्तिनं तं प्रति एकं चित्तं मनः अयं नल इत्यूचे अन्यदपरं चित्तं अयमनल इति ब्रूते स्म । नलव्यतिरिक्तोऽयं च वह्निरित्यकथयत् । युगपदालोचनस्मृतिप्रसङ्गान्मनसः प्रति शरीरमेकत्वस्य साधितत्वादेकस्मिन्नपि मनसि क्रियाभेदाद्व्यवस्थान्तरप्राप्तिर्भेद इवोपचर्य्यते । एकमेव तं पुरोवर्त्तिनं अनल इति मत्यु-

घे । अकारप्रश्लेषेणानलोऽयमिति ब्रवीति स्म मनः । तथा अयमन्यान् वैरिणो द्यति खण्डयति अन्यद्य स चासौ नलश्चेति च ब्रूते स्म । अत्र व्याख्याने प्रथमसूचितक्रमभङ्गोऽपि न भवति । एकस्य द्वैरूप्या- द्विरोधाभासश्च । शोचिष्केश उषर्बुध इत्यमरः । उषसि बुध्यत इति उषर्बुधः । इगुपधेति कः (पा० ३ । १ । १३५) अहरादीनामिति रेफः (पा० ८ । २ । ७० वा० १) । तुल्यार्थैरिति तृतीया । (पा० २ । ३ । ७२) । अन्यदेति पक्षे च । समानं साधारणमस्य साधारणा अनेकं प्रत्य विशिष्टं सम्बन्धं । पृषोदरादिः । तत्स्त्रियां पादार्घोभ्यां चेत्यत्र (पा० ५ । ४ । २५) । आग्नीध्रसाधारणादञिति वार्तिकादञि ङीप् वा । प्रकरणाच्च साधारणभूमिरित्यादावपि अञपि घटते । इदमीय त्यदा- दिष्वात् द्वन्द्वाच्चः (पा० ४ । २ । ६) ॥ १४ ॥

एतादृशीमथ विलोक्य सरस्वती तां सन्देहचि
त्रभयचित्रितचित्तवृत्तिम् । देवस्य सूनुमरविन्द
विकासिरश्मेरुद्दिश्य दिक्पतिमुदीरयितुं प्र
चक्रे ॥ १५ ॥

एतादृशीमिति । अथ सरस्वती अरविन्दविकासिनः कमलविकास- करा रश्मयः किरणा यस्य देवस्य रवेः दिक्पतिं दक्षिणदिशः पतिं सूनुं अन्येषां पुत्राणां दिक्पतित्वाभावाद्यमं तदुद्दिश्य तदीरयितुं वक्तुं प्रचक्रे आरभे । किं कृत्वा । एतादृशीमुक्तश्लेषपदोक्तां तथा न- लनिश्चयाभावात् सन्देहः । तुल्यरूपदर्शनादुदितो निश्चयात्मकं त्रासो भयं । नलनिश्चयाभावात्मनप्राप्तिविघ्नात्त्रासः तैः संशयाश्चर्यत्रासैः चित्रिता नानाविधाकृता चित्तवृत्तिर्यस्याः सा । एवंविधां तां भैमीं विलोक्य । चित्रितेति पाठे चित्रमेव चित्रितं यस्याः । चित्रं हि चित्रं युक्तमि- त्यर्थः । एवेव दृश्यत इत्यर्थः । एतादृशी त्यदादिषु दृश इति कञि (पा० ३ । २ । ६०) । आसर्वनाम्न इत्यात्वे (पा० ६ । ३ । ९१) । टि- ड्ढेति ङीपि (पा० ४ । १ । १५) । एतादृशीति सिद्धं ॥ १५ ॥

दण्डं बिभर्त्त्ययमहो जगतस्ततः स्यात् कम्पा
कुलस्य सकलस्य न पङ्कपातः। स्वर्वैद्ययोरपि
मदव्ययदायिनीभिरेतस्य रुग्भिरमरः खलु कश्चि
दस्ति ॥ १६ ॥

दण्डमिति। अहो सम्बोधने अयं यमो दण्डं स्वायुधं बिभर्त्ति त-
स्माद्धेतोः पुराणादिदर्शनेन कम्पाकुलस्य पापभीरोः सकलस्य जगतो
भुवनस्य पङ्कपातो दुःखं न स्यात् भवेत्। पङ्के महारौरवादौ नरके वा
एतद्भयात् पापं कोऽपि न करोतीत्यर्थः। अहो आश्चर्यं। अन्यो य-
ष्टिं धारयति अन्यस्य च कम्पमानस्य कर्दमपातो न भवतीत्यसङ्गतिः।
तथा चिकित्सासामर्थ्ययोः स्वर्वैद्ययोर्दस्रयोरपि मदव्ययदायिनीभिः
गर्वक्षयं कुर्वाणाभिरेतस्य रुग्भिः प्राक्तनकर्मविपाकदर्शनेनानेन प्रेरिता-
भिः पीडाभिः न म्रियत इत्यमरः कश्चित् किमस्ति अपितु न कोऽप्य-
स्ति। कर्मजरोगाणां ताभ्यामप्यचिकित्स्यत्वादित्यर्थः। स्वर्वैद्ययोर-
पि नाम रुजापनयनसामर्थ्यासम्भवसूचनार्थं॥ नलपक्षे अयं नलो द-
ण्डं शासनं यतो बिभर्त्ति ततः शासनभयात्कम्पाकुलस्य सकलस्यापि
लोकस्य पङ्कपातो न भवेत् पूर्वं यदेतस्माद्भयात् अयं दण्डं चतुरङ्गसैन्यं
बिभर्त्ति ततः शत्रुभयात् कम्पाकुलस्य लोकस्य पङ्कपातः दुःखपातो न
भवेत् सैन्यैर्वैरिणां निहतत्वाल्लोकस्य दुःखनाश इति वा। सौन्द-
र्येण प्रसिद्धयोर्नासत्ययोरपि गर्वक्षयकारिणीभिरस्य रुग्भिः कायकान्ति-
भिरुपलक्षितोऽयं देवोऽपि कश्चिदस्ति किमु अपि तु नास्ति। देवेषु
मध्ये दस्रावेव सुन्दरतमौ तावप्यनेन जितौ यतः। ये त्वेतत्समीप-
स्थाः रमणीयास्ते एतद्रूपधारणादेव न तु स्वभावेनेत्यर्थः। पङ्कोऽस्त्री
शादकर्दमौ। अस्त्री पङ्कं पुमान् पाप्मा। रुक् प्रभारुग्रुचिस्त्विड्भा इ-
त्यमरः। स्त्रीरुग्रुजा द्युतिः शोभा इति मेदिनी। दायिनीभिरिति ता-
च्छील्ये णिनिः॥ १६॥

मित्रप्रियोपजननं प्रति हेतुरस्य सञ्ज्ञा श्रुता

ऽसुहृदयं न जनस्य कस्य । छायेदृगस्य च न कुत्रचिदभ्यगामि तप्तं यमेन नियमेन तपोऽमुनैव ॥ १७ ॥

मित्रेति । अस्य यमस्योपजनन उत्पत्तिम्प्रति सञ्ज्ञा नाम्नी मित्रप्रिया सूर्यपत्नी हेतुर्निमित्त श्रुता आकर्णिता । छायानाम्नी तु कुत्रचित् कुत्रापि पुराणादौ ईदृगस्योत्पत्ति प्रति हेतुर्नाभ्यगामि नाश्रायि । किन्तु शनैश्चरस्यैवेत्यर्थः । यमो यमी श्राद्धदेवः सञ्ज्ञापास्तनयास्त्रय इति पुराण । अथ यमः कस्य जनस्य असुहृत्प्राणहर्त्ता न भवति तु सर्व्वेस्यापि प्राणहर्त्ता । अमुना यमेनैव नियमेन नक्तोपवासादिव्रतेन कृत्वा तपस्तप्तं धर्म्मं कृत । अत एवास्य पुत्रस्य धर्म्मराजत्वं चेत्यर्थं ॥ नलपक्षे अस्य नलस्य सञ्ज्ञा नाम श्रुता सती मित्रप्रियस्य सुहृदिष्टस्योपजनन प्रति उत्पादन प्रति हेतु । अस्य सञ्ज्ञा सुहृदिष्टजनन प्रति हेतु. । श्रुता स्यातित्यर्थ इति वा पुण्यश्लोकत्वात् । अथ कस्य सुहृन्मित्र न भवति तु सम्यक्परिपालनादुपकारित्वाद्धा सर्व्वस्यापि सुहृदेव । ऐदृक् मत्यर्णे दृश्या अस्य छाया कायकान्तिः कुत्रापि नरसुरोरगेषु नाभ्यगामि न दृष्टा । सुन्दरतरोऽयमित्यर्थं । छायारीति. लोकपालनमित्यर्थ इति वा । अस्येव जगत्पालन कोऽपि न करोतीत्यर्थं । अमुना नलेनैव यमेन ब्रह्मचर्य्यादिनियमेन नक्तादिव्रतेन च तपस्तप्तं त्वदर्थमिति शेषः । छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । तपश्चान्द्रायणादौ स्याद्धर्म्मे इत्यादिविश्व. । अभ्यगामीति । इङो गाङादेशे कर्म्मणिचिण् । यमेनेति । पक्षे हेतौ तृतीया ॥ १७ ॥

किञ्च प्रभावनमिताखिलराजतेजा देवः पिताऽप्यरमणी रमणीयमूर्त्तिः । उत्क्रान्तिदा न क मनु प्रतिभाति शक्तिः कृष्णस्यमस्य च परेषु गदान् नियोक्तुः ॥ १८ ॥

किञ्चेति । केवल मनुष्यस्य समानोऽस्येव न । किन्त्वन्यच्च प्रभया दीप्त्या

ऽवनमितं तिरस्कृतं अखिल राज्ञामन्द्रस्य तेजो येन सः । तथा रमणी-यमूर्त्तिः अम्बरमणिः सूर्यः देवोऽस्य पिता । अस्य यमस्य उत्क्रान्तिदा नाभिका अथ च मरणदा शक्तिरायुधविशेषः कमनु लक्षीकृत्य न प्रति भाति समर्थो न भवति अपि तु सर्व्वमनु समर्थैव । परेष्वन्येषु जनेषु गदाम् रोगान्वियोक्तुः प्रेरयितुरस्य कर्मत्वं श्यामत्वञ्च परपीडाजनने-नावयश इत्यर्थः । अस्य कर्मत्व लौहत्वं लोहवत्कठिनान्तःकरणत्वमित्य र्थं इति वा ॥ नलपक्षे प्रभायेन पराक्रमेण नमितसकलभूपप्रतापः । अम्बर मणि. सूर्यः इः कामस्तद्वद्रमणीयमूर्त्ति. देवो राजा वीरसेनोऽस्य पिता । देवो विजिगीषुरिति वा । महाकुलीनत्वमस्य सूचित । राज्ञ इन्द्रस्य वा प्रभाया घनेन लक्षणया, समूहेन तेज-सङ्घेन कृत्वा मितमल्पीकृतमखिल-भूपतेजो येनेति वा । अम्बरमणीभिर्वस्त्ररत्नैःकृत्वा रमणीममूर्त्तिरिति वा । मणीशब्द ईयन्तोऽपि अम्बेति सम्बोधन । रमणीनां क्रीणा रमणयोग्या मूर्त्तिर्यस्येति वा । अस्य शक्तिरायुधविशेषः क वैरिणमनु उत्क्रान्तिदा म रणदा न भवति । अस्य शक्तिः सामर्थ्यं क यममनु उत्क्रान्तिदा मरणप्र दा न प्रतिभाति अपि तु सम्भाव्यत एव । यमादन्येषा भय तस्याप्यस्माद्भ यं शूरत्वातिशयो द्योत्यते इति वा । तथा शत्रुषु गदा अस्त्रविशेष प्रयोक्तु रस्य कर्मत्वं देवकीपुत्रत्वं । गदायुद्धप्रावीण्याच्छ्रीकृष्णसमानमित्यर्थं इति वा । अस्य राज्ञ. परा उत्कृष्टा इषुसम्बन्धिनो गदाः रोगाः दुःसहबा णजनिता पीडा इति यावत् । तान् अर्थाद्वैरिषु प्रयोक्तुरस्य कर्म-त्वमर्ज्जुनत्वं च । बाणयुद्धप्रावीण्यादर्ज्जुनसमानोऽयमित्यर्थं इति वा । राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः । को ब्रह्मात्मनि लोकेषु शमने सर्व्वनाम्नि च । शक्तिर्बलप्रभावादौ शक्ति प्रहरणान्तरे । इ-त्यादि विश्वः ॥ १८ ॥

**एकः प्रभावमयमेति परेतराजौ तज्जीवितेश धियमत्र निधेहि* मुग्धे । भूतेषु यस्य खलु भूरि यमस्य वक्रभावं समाश्रयति दण्डमहोदरस्य ॥ १९ ॥**

* निधत्स्वेत पाठान्तरं ।

एक इति । अयमेकः परेताः प्रेताः तेषां राजौ पङ्क्तौ विषये प्रभावं सामर्थ्यमेति । ततस्तादत्रास्मिन् जीवितेशधियं अन्तकबुद्धिं विधेहि कुरु हे मुग्धे उभयोर्भेदमजानाने सुन्दरागमजातत्वात् दस्रसहोदरस्याश्विभूर्तुर्यस्य यमस्य भूतेषु प्राणिषु भूरि प्रचुरं भूतं वश्यभावमधीनत्वं समाश्रयति प्राप्नोति । प्राणिषु मध्ये प्रचुरं भूतं यस्य यमस्य वशि वशवर्ति सत् प्रभावं विनाशमेवाश्रयतीति वा । मुमुक्षवः कतिपये तदपेक्षया भूतानां प्राचुर्यं खलु निश्चयं मर्त्यप्राणिनाश एतदधीन इति निश्चयेनायमन्तक इति किल जानासीत्यर्थः ॥ नलपक्षे पराश्च इतरे आत्मीयाश्च तेषामाजिः परान्यूंस्तेजस्विनोऽपि इतरे यन्ति क्षोदीयसः कुर्वन्ति ये तेषामाजिरिति वा । परैरकृष्टा या इतरेषां वैरिणामाजिरिति वा । तस्यां अयं नलः एक एव प्रभावमेति । तथा भूतेषु पृथिव्यप्तेजोवाय्वाकाशेषु मध्ये भूमित्यभिनयेन सकला भूः सौन्दर्येण दस्रसहोदरस्य अश्वितुल्यस्य यस्यास्य वश्यत्वमाश्रयति । तस्मान्मुग्धे सुन्दरि अस्मिन् प्राणेशबुद्धिं निधेहि । तथा सखा सखीयाः त्वं यस्य एतद्वरणे प्रयत्नं कुरु । एवंविधः शूरः प्रभुशक्तियुक्तः सुन्दरश्च कोऽपि नास्तीत्येनमेव वृणीष्वेति भावः । इतरशब्दात् पञ्चे तत्करोतीति णिच् पचाद्यचि णिलोपः ॥ १९ ॥

गुम्फो गिरां भ्रमननैषधयोः समानः शङ्कामनेकनलदर्शनजातशङ्के । चित्ते विदर्भवसुधाधिपतेः सुतायाः चित्तभ्रमे खलु तदेव पिपेष पिष्टम् ॥ २० ॥

**तत्रापि तत्रभवती भृशसंशयालोरालोक्य सा विधिनिषेधनिवृत्तिमस्याः । पाथःपतिम्प्रति धृताभिमुखाङ्गुलीकपाणिः क्रमोचितमुपाक्रमताभिधातुं ॥ २१ ॥**

तत्रेति । तत्रभवती पूज्या सा सरस्वती क्रमोचितं क्रमप्राप्तं परिपाटीयोग्यं यथा तथा वाभिधातुं वक्तुमुपाक्रमत । किं कृत्वा । तत्र वरणेऽपि भृशमत्यर्थं संशयालोः सन्दिहानाया अस्या भैम्या विधिनिषेधाभ्यां सकाशान्निवृत्तिं प्रवृत्तिनिवृत्त्योरभावं आलोक्य । किम्भूता । पाथसां पयसां पतिं प्रभुं वरुणं प्रति धृतं अवस्थापितः अभिमुखाङ्गुलीकं सम्मुखाङ्गुलीकः पाणिर्यया । तत्रभवच्छब्दः पूज्यार्थः । अङ्गुलीकेति । नद्यृतश्चेति कप् (पा० ५।४।१५३) । उपाक्रमत । प्रोपाभ्यामिति तङ् (पा० १।३।४२) । अभिधातुं । अभियोगे शकधृषेति तुमुन् (पा० ३।४।६५) ॥२१॥

**या सर्व्वतोमुखतया व्यवतिष्ठमाना यादोरणैरुर्जयति नैकविदारका या । एतस्य भूरितरवारिनिधिश्चमूः सा यस्याः प्रतीतिविषयः परतो न रोधः ॥ २२ ॥**

येति । एतस्य भूरितरवारिनिधयः समुद्रा यस्यां सा चमूर्जयति सर्वोत्कर्षेण वर्त्तते । सा का । यस्याः परतो रोधः परतीरं प्रतीतिविषयो दृग्गोचरो न । सेनायाः समुद्राणामपि मिलितत्वात् परं पारं न दृश्यत इत्यर्थः । सा का । या सर्वतोमुखस्य जलस्य भावेन व्यवतिष्ठमाना व्यवस्थिता जलमयीत्यर्थः । या यादोरणैर्जलजन्तुशब्दैस्तत्सङ्घैर्वा उपलक्षिता । तथा या नैकविदारका ऽनेककूपका । नैकान् विदारयति नैकविदारः कर्दमोदकस्थाय आगमनं यस्यां सा । सर्वेषां सर्वनाशकरमुदकं यस्यामस्तीत्यर्थः इति वा । या नैकविदारकं यस्याः सेवनीता या । यस्याः परतो वैरिणो यस्माद्वा रोधः आवरणं न ज्ञानगोचरं । निम्नाभिमुखस्य पयसः कस्यापि निवारयितुमशक्यत्वात् इ-

सितो[ऽ]यम्। अलङ्करणभावमलङ्करणत्वं गतैरत एव तैः सुखमातनोतीति वा। किम्भूतो नदीनः। घनध्वनिः निबिडशब्दः। तथा भूयान् प्रचुरतरः। दीर्घपरिमाणत्वात् सहस्रसङ्ख्यात्वाद्वा। तथा कुम्भीरा नक्रास्तद्वान्। मकरा मत्स्यविशेषास्तद्युक्तः। तथा सहृदानवारिः पुण्डरीकादयुक्तः। उच्छ्वस्य तद्यार्थः। उद्गतानि विकसितानि पद्मानि येषु तानि काननानि तेषां सखा तद्युक्त इत्यर्थः। उत्कृष्टा पद्मा लक्ष्मीर्येषामेवंविधैः काननैर्युक्त इति वा। उत्कृष्टा पद्मा लक्ष्मीः स्वकन्या यस्मिन् स चासौ वनमराडेति वा। श्रीविष्णुस्तत्र विद्यमानत्वाल्लक्ष्मीयुक्तत्वं। नासीरसीमप्रदेश तीरे लक्ष्यते। तत्र निबिडध्वनिरिति वा। तरङ्गस्य तीरे प्रतिघातात्॥ गजपक्षे भूयान् बहुतरः। कुम्भी गजः नासीरमुखे सेनामुखविभागे सुखमनायासेन रवान् शब्दान् विस्तारयति। किम्भूतः कुम्भी। घनवन्मेघवत् ध्वनिर्यस्य। तथा समः आनुपूर्व्यवृत्तः सलक्ष्मीको वा करः शुण्डादण्डो यस्य। तथा दानवारिणा मदजलेन सहितः। तथा उद्गतानि पद्मकानि कुम्भस्थले पद्मबिन्दुजालकानि यस्मिन्नेवंविधं यदाननं मुखं तद्युक्तः। तथा अलङ्कारत्वं प्राप्तैरलैर्दीनो न किन्तु सम्भृतः॥ सेनामुखं तु नासीरं। नक्रस्तु कुम्भीरः। पद्मकं बिन्दुजालकमित्यमरः॥ २३॥

**सस्यन्दनैः प्रवहणैः प्रतिकूलपातं का वाहिनी न तनुते पुनरस्य नाम। तस्या विलासवति कर्कशताश्रिता या ब्रूमः कथं बहुतया सिकता वयन्ताः॥ २४॥**

सेति। हे विलासवति भैमि नाम गिरवालने। अस्य वरणस्य का नाम वाहिनी नदी सस्यन्दनैः सवेगैः निर्झरोदकसहितैर्वा प्रवहणैः प्रवाहैः कृत्वा कूलं तीरं प्रति अनु पातं गमनं न तनुते अपि तु सर्वापि करोति। वय तस्यास्ताः सिकता वालुकाः बहुतया प्रचुरत्वेन कथं केन प्रकारेण ब्रूमः कथयामः। अतिबहुत्वेनेयत्तया वक्तुं न शक्यत इत्यर्थः। ताः काः। याः कर्कशतां काठिन्यं श्रिताः। कर्को जलजन्तुविशेषस्तच्छ

तैराश्रिता इति वा ॥ नलपक्षे अस्य नलस्य का नाम वाहिनी सेना स स्यन्दनैः सरथैः प्रकृष्टैर्वाहनैरश्वादिभिः कृत्वा प्रतिकूला वैरिणस्तान् प्रतिपातं गमनं न करोति अपि तु चतुर्विधापि सेना करोत्येव । प्रतिकूलानां वैरिणां पातं हननमिति वा । का सेनाऽस्य नाम ख्यातिं प्रतिकूलांश्छत्रून् पातयित्वा शत्रुमात्रं हत्वा न तनुते । नास्य ख्यातिं करोतीत्यर्थः इति वा । सवेगैः क्रीडारथैः कृत्वा वैरिणः प्रति गमनं करोतीति वा । अनेन सेनाया निर्भयत्वं । युद्धेऽपि क्रीडारथारोहणात् । ककाः श्वेताश्वास्तेषां शतैराश्रितायास्तस्याः बहुतया बाहुल्येन ता भूयस्त्वेन प्रसिद्धा वालुकाः वयं किं ब्रूमः । ताभ्योऽपि सेना प्रचुरतरेत्यर्थः । तस्याः सकाशात् ता वालुका बहुतया किं ब्रूमः । वालुकाः कथमपि संख्यातुं शक्यन्ते सा तु न कथञ्चिदित्यर्थः इति वा । असिः प्रहरणमेषां ते आसिकास्तेषां भावः आसिकता याः श्वेताश्वशताधिरूढाः ता आसिकता असिप्रहरणान् पुरुषान् इति यावत् । तान् बहुतया किं वयं ब्रूमः । अतिबहुत्वेन वक्तुं न शक्यन्त इत्यर्थः । बहून् तपन्ते गच्छन्ति वा रक्षन्ति वा ये ते बहुतपास्ते च ते आसिकाश्च तेषां भावानिति वा ॥ यद्वाऽन्यथा येषां ते बहुतपा बहुमद्धा एवंविधा आसिका यस्याः तस्या भावानिति वा । कर्काः शुक्लहयः । सांयात्रिकः पोतवणिक् इत्यमरः ॥ पोतः प्रवहणं स्मृतमिति हलायुधः । प्रवहणे । कत्यच इति वाच्य (पा० ८ । ४ । २९) । प्रतिकूलं पातं ॥ पक्षे द्रव्यवीप्सायां । विशि पतीत्यादिना णमुल् (पा० ३ । ४ । ५६) । तृतीयाप्रभृतीनीति पाक्षिकः समासः (पा० २ । २ । २१) । आसिका । असिः प्रहरणमेषां । प्रहरणमिति ठक् (पा० ४ । ४ । ५७) । असिभिर्जयतीत्यासिकाः । तेन दीव्यतीति ठक् (पा० ४ । ४ । २) ॥ २४ ॥

क्षोणं पदमणपिन गुणमस्य पश्य किञ्चास्य
सेवनपरैव सरस्वती सा । एनं भजस्व सुभगं
भुवनाधिनाथं के वा भजन्ति तमिमं कमला
भया न ॥ २५ ॥

शोणमिति । हे सुभगे सौभाग्यवति भैमि त्वम् एनं भुवनस्य जल-
स्याधिनाथं वरुणं भजस्व वृणीष्व । जलपतित्वमेवाह । त्वं गुणमप्रधा-
नसेवकं शोणं नाम नदमस्य पदप्रणयिनं चरणानुरागिणं पश्य । कि-
ञ्चेत्यधिकोक्तौ । शोणोऽस्य चरणप्रणयीति किं वक्तव्यं सा प्रसिद्धा
सरस्वती नदी अस्य सेवनपरैव चरणसंवाहनादिपरैव । पूर्वोक्तापरि-
तोषे वाशब्दः । के कमलस्य जलस्य आशया आधारा समुद्रादिप-
ल्वलान्ता पद्माकरा वा तमिमं न भजन्ति सेवन्ते अपि तु क्षीरो-
दादयः सर्वेऽप्यस्यानुचरास्तस्य शोणाद्यनुचरत्वे का कथा । तस्मात्
सलिलपतिरयमित्यर्थः । कमलाशया जलाभिलाषेण के वा लोका इमं
न भजन्ति सेवन्ते स्तुवन्ति इत्यर्थं इति वा । शोणादीनां तत्तदभिमा-
निन्यो देवता लक्ष्यन्ते । अतस्तेषां सेवकत्वं युज्यते ॥ नलपक्षे त्वं
जगत्पतिमेनं नलं पतित्वेन स्वीकुरु । स्वीकारयोग्यत्वमेव द्रढयति । त्वं
शोणं रक्तं गुणमस्य पदप्रणयिनं पश्य तमिमं कमलाया सम्पद-
श्च आशया अभिलाषेण वा के लोका न सेवन्ते अपि तु धनाभिलाषेण सर्वे-
ऽपि सेवन्त इत्यर्थः । वाऽप्यर्थे । कमलाशया लक्ष्मीनिधयो धनिका अपि
लोकास्तमिमं न भजन्त्यपि तु भजन्त्येवेति वा अत्र प्रथमद्वितीयतृतीय-
विशेषणैः क्रमेण सौन्दर्य्यकलाकौशलौदार्य्याणि द्योत्यन्ते । शोणो
हिरण्यबाहुः स्यात् । शोणं कोकनदच्छवि । जीवनं भुवनं वनं । विष्टपं
भुवनं जगत् । सलिलं कमलं जलम् । कमला श्रीर्हरिप्रिया इत्यमरः ॥
आशया । अधिकरणे शेतेरित्यच् (पा० ३ । २ । १५) ॥ २५ ॥

शङ्कालताततिमनेकनलावलम्बां वाणी न वर्द्ध-
यतु तावदनेन दिक्कियं । भीमोद्भवां प्रति नले च ज-
लेश्वरे च तुल्यं तथापि यदवर्द्धयदत्र चित्रं २६

शङ्केति । इयं पूर्वोक्ता वाणी भीमोद्भवां प्रति लक्षीकृत्य भैम्या इ-
ति यावत् । अनेकनलावलम्बा नानानैषधविषया शङ्कालतातति सन्दे-
हवल्लीपरम्परा न वर्द्धयतु तावत् न पूरयतु तावत् अपि तु पूरयत्येव ।
तथा ऋद्धिर्यस्याः सा तथाहि तथाहि करोतु तवर्द्धयतु । भैमीं प्रति स

न्देहपरम्परा न्यूनसमृद्धिं अतिवृद्धीकरोत्वित्यर्थ इति वा । तावच्छब्दो ऽनुगतावधारणे वा ॥ यतो ह्यभेदिका विशेषप्रतिपादनमकुर्वती । समानधर्मदर्शनाद्धि संशय उपचीयते विशिष्टधर्मदर्शनाद् व्यावर्तत इत्यर्थः । यद्यप्यत्र विषये चित्रं नास्ति तथापि नले जलेश्वरे च तुल्यमेककाल मत्संशयवल्लीपरम्परां ह्यवर्द्धयत् पूरयति स्म अत्र विषये चित्रमाश्चर्यं । न हि विषयस्यैव सन्दिह्यमानत्वमुपपद्यते । यतो लोके दूरस्थिते पुरुषे पुरुषत्वं स्थाणुत्वं वा ऽनुपलभ्योर्द्ध्वत्वमात्रं स्थाणुसाधर्म्यमुपलभ्य तटस्थः स्थाणुर्वा पुरुषो वेति सन्दिग्धे न तु पुरुष एवात्मानमूर्द्ध्वमवलोक्याहं वा स्थाणुर्वेति । तस्मान्नलजलेश्वरविषयो भैम्याः संशयो युक्तः । विषयभूतयोरेव तत्संशये महदाश्चर्यमिति भावः । विरोधपरिहारस्तु तुल्यकालं यथाक्रमं नले त्वां वृणे जलेश्वरे च कालतातिं कालिमातिशयं पूरयति स्म । तथा हि यदि देव्येनं नल एवायमित्यकथयिष्यत् तदा मय्यनुरक्ता भैमी मामकत्रमेणैनमेवावरिष्यत् । तत्तु देव्या न कृतं वरुणभ्रमेण वर्णितत्वादिति । नले सुख जनयितव्ये यदि वाणी मां नल एवायमित्यकथयिष्यत्तदा नलबुद्ध्या भैमी मामेवावरिष्यत् तत्तु तया न कृतं मच्छ्लेषेण वर्णितत्वादिति विषादाद्वरुणे कालिमाऽतिशयितो जनितः । कालतातिरप्यनेकनलावलम्बिनी चतुर्णामप्यवरणात् अथ च नरसन्देहाद्वरुण भजेन्नलसन्देहाभ्यां त्यजेदिति क्रमेण नलवरुणयोः संशयपरम्परा पूरयति स्म । अनेकनलावलम्बनां भैम्याः संशयवल्लीपरम्परां न वर्द्धयतु न छिनत्तु वर्द्धकपूर्तिच्छिदोर्यतो विशेषणप्रतिपादयन्ती । या हि छेदात्मका छुरिका साऽनेकतृणविशेषणनालम्बनां लतातति न छिनत्तीति नाश्चर्यं । तथापि भैमीं प्रति नले च जलेश्वरे च संशयवल्लीपरम्परामेककालमेव यदच्छिनत्ताश्चित्रम् । वा हि न छिनत्तीति वा छिनत्तीति चित्रमिति भावः । नरसन्देहादेनं भैमी भजेदिति वरुणभ्रान्तिः । नलसन्देहाभ्यां भजेदिति वरुणभ्रान्तिः । वरुणवाचित्वश्लेषप्रादात् । स एवक्रोक्त्यादिप्रामवतुरा भैमी वरुणं न वरिष्यतीति निश्चयेन नलभ्रमसमाजः । नलेऽनुरक्ता भैमी मत्प्रतिपादकश्लेषप्रादात् मां न वरिष्यतीति निश्चयेन वरुणभ्रममनाज इति वा

विशेषमप्रतिपादयन्ती वाणी सरस्वतीति वा देव्या नामग्राहमह य-र्थितः । अतो मा वरिष्यति न वेति वरुणस्य सन्देहो यत । इदानीं मयाशिष्टोऽप्रमेयमप्यं वस्तु यमनुरक्तेति भावयिष्यति न वेति नलसन्देहो गत इति भाव इति वा । इत्यादिव्यीख्यायिशेषो विषायांङ्गीकरणीय २६॥

बालां विलोक्य विबुधैरपि मायिभिस्तैरछद्मि तामियमलीकनलीकृतस्वैः । आह स्म तां भगवती निषधाधिराजं निर्दिश्य राजपरिषत्परिवेषभाजम् ॥ २७ ॥

बालामिति । इय भगवती सरस्वती निषधाधिराजमुद्दिश्य तां बालां भैमीमाह स्म उवाच । किं कृत्वा । तां भैमीं अलीकनलीकृतस्वैरसत्य नैषधीकृतात्मभि मायिभिश्छलपरैरपि विबुधैर्देवैरछद्मितामप्रतारितां विलोक्य । किम्भूत नलं । राज्ञां परिषत्सभा तस्याः परि समीपे वेष मङ्कार भजति । परिवेषमिति पाठे परिवेष उपान्त । बालामपि विबुधैरपि अपिद्वयमत्र सम्बध्यते । बाला हि प्रतार्य एव बालापि न प्रतारिता तद्विवेकस्याप्यवरणात् । ये च विबुधा ज्ञातार ते मायिनः कथं मायिभिरपि बाला न प्रतारितेत्याश्चर्य्यं । राजपरिषद् परिवेषरूपणात् नलस्य चन्द्रत्व ध्वनितं । परिषत् । सदिरप्रतेरिति षत्वम् (पा० ८ । ३ । ६६ ।) ॥ २७ ॥

भुत्याजितलब्धविजयप्रसरस्त्वया किं विज्ञायते रुचिपदं न महीमहेन्द्रः । प्रत्यर्थिदानवशताहितचेष्टयासौ जीमूतवाहनधियं न करोति कस्य ॥२८

भुत्याजीति । त्वया भद्रा महेन्द्रो नलः किं न विज्ञायतेऽपितु विशेषेन्द्रादिभ्यो भेदेन सत्यत्वेन जानीहीत्यर्थ । किम्भूत । अतिशये नासौ महाभे अतिशयिते वा आजौ राज्य प्राप्तो विजयस्यारिपराभवनस्य प्रसरो वाहुल्य येन । तथा रुचेरनुरागस्य कान्तेर्वा पद स्थान । तथासौ अर्थिनमर्थिन प्रतीति प्रत्यर्थि वा दानवशता दानपरता दाने

र्थिने प्रत्येव वा वशतया जितेन्द्रियतया वा आहिता कृता या चेष्टा व्यापारानुकूलव्यापारस्तेन परदारदर्शनादिनिवृत्तिव्यापारेण च जीमूतवाहनस्यार्थिहेतोः प्राणानपि तृणवद्ददता राजविशेषस्य धिय बुद्धि दानातिशयेनार्थिपरतन्त्रतया च जितेन्द्रियतया च क्रिमय जीमूतवाहनधिय कस्य न करोति दानशूरत्वादिप्रथमस्य सूचित । प्रत्यर्थिनो वैरिणो घ्नन्ति प्रत्यर्थिदा असवः प्राणा येषां ते अतिशूरास्ते वशा आधीना यस्य तस्य भावस्तत्ता तया कृत्वा कृता या चेष्टा तया शत्रुवशीकरणव्यापारेणेन्द्रबुद्धिं कस्य न करोति अपि तु सर्वस्यापि करोति । इन्द्रो यथा शत्रून् करोति तथायमपीति वा ॥ इन्द्रपक्षे अथ महेन्द्रस्त्वया किल विज्ञायते अपि त्विन्द्रत्वेन निश्चय । किम्भूतः । अतिशयितःआजि सङ्ग्रामो यस्य । तथा लब्धो विजयेनार्ज्जुनेन दत्त्वा प्रसरो वय विस्तारो येन ततः कर्मधारय । प्रसव इति पाठे नलपक्षे आपत्तागः। इन्द्रपक्षे लब्धो विजयोऽर्ज्जुनः । विजयत इति विजयो जयो जयन्तो वा प्रसव पुत्रो येन । रुचिपदं तेज स्थानं । तथा महो उत्सवयान्। तथायं मत्यार्थिदानवानां शतेषु आहिता प्रतिकूला चेष्टा ऽहितस्य यशोर्था चेष्टा शत्रुप्रकृतसम्ग्राशकरो व्यापारस्तेनेन्द्रबुद्धि कस्य न करोति। अथ चाय महेन्द्रस्त्वया किमित्यत्याजि केन हेतुना त्यक्त । अथ स विज्ञायते किस्त इयाधरति विज्ञायते एवभूतो न भवति अपि तु विज्ञायेत्यर्थ । तथा रुचिपदं कान्तिस्थान न । तथा महो नेति । नञावृत्त्या काङ्क्षा व्याख्येयं । एवगुणविशिष्टस्य परित्यागे किञ्चिदपि कारणं न पश्याम इति भावः । महेन्द्रस्त्वया विज्ञाय किमित्यत्याजि उचितमेव कृतमित्यर्थ । विमर्शे सम्भावनायां वा । त्यागे कारणमाह। गन्धं विना पक्षिणा गरुडेनामृतहरणसमये वापस्य प्रसरो विस्तारो यस्य गरुडेन पराजित इत्यर्थ. । तथा अरुचिपदं अननुरागस्थान । तथा न महो उत्सवरहितः सदा दैत्यभयात् । अरुचिस्थानं महेन्द्रस्त्वया किन्न विज्ञायते अपि तु ज्ञात एव । यतोऽत्याजि त्यक्त इति वा। अस्मिन् पक्षे न महोत्यत्र नञ आवृत्तिः । अतिशयितरणे लब्धा विजया जयश्रीः यस्मिन् वा । विजयन्तु जये पार्थे इत्यमरः । विज्ञायते । कर्मणि लकारे कर्तुः यत् (पा० ३।१।६७। ११) ॥ ९८ ॥

येनामुना बहुविगाढसुरेश्वराध्वराज्याभिषेकविकसन्महसा बभूवे । आवर्जनं तमनु तेन नु साधु नामग्राहं मया नलमुदीरितमेवमत्र ॥२९॥

येनेति । येनामुना नलेन बहूतिशयेन विगाढः सेवितो सुरेश्वरस्याध्वा मार्गः त्रिलोकीप्रतिपालनलक्षणः येन । तथा राज्ये योऽभिषेको मङ्गलस्नानं तेन कृत्वा विकसन्महो यस्यैवंविधेन बभूवे जातं । पूर्वेण कर्म्मधारयः । बहुवार सेवितो देवेन्द्रस्य मार्गो लोकपालनप्रकारो यस्येति वा । पश्चात् कर्म्मधारयः । इन्द्रेण लोकपरिपालनमस्याधिष्ठितमित्यर्थः । नु भैमि अत्र पञ्चसु मध्ये स्वयम्वरे नामग्राहं नाम गृहीत्वा एवममुना पूर्व्वोक्तेन प्रकारेण मया उदीरितमुक्तं तं नलमनु लक्षीकृत्य तेन आवर्जनं पतित्वेनाङ्गीकरणं साधु शुभं । सत्यं नलनामेन सर्वं वा वृणीष्वेति भाव । वह्निपक्षे येनामेन वह्निना ऽनेकवारं अनुभूतेषु सुरेश्वराध्वरेषु देवेन्द्रयज्ञेषु आज्याभिषेको घृताप्लवस्तेन कृत्वा विकस्वरतेजसा जातं । बहुवारं विगाढ आवर्त्तित इन्द्र आयाहीत्यादिना आहूत सुरेश्वरो यत्र तादृशेषु यागेषु आज्याभिषेकस्तेन कृत्वा विकस्वरतेजसा जातमिति वा । ननु भैम्यत्र पञ्चसु मध्ये नाम गृहीत्वा एव पूर्व्वोक्तप्रकारेण मयोक्तं तमनलमग्निम्प्रति ते तव वर्जनं साधु अपि तु न साधु आ इति खेदे आवर्जनं पतित्वेनाङ्गीकारं साध्विति वा नु भैमि तमनु ते वर्जनं न साध्विति वा । पूर्व्वार्द्धेन सर्व्वदा पराम्नभोजनेनैव परिपुष्टोऽयमिति त्यागः सूचितः । तथा ननु भैमि मया नाम गृहीत्वा कथितं नलान्यमथ च वह्निमनु ते वर्जनं साधु भद्रं । आ हर्षे नु भैमि तमनु ते आवर्जनं सामर्थ्येन वर्जनं न साधु अपि तु साध्वेवेति वा । आ आवर्जनं सामस्त्येनाङ्गीकारस्तव न साधु किन्तु वर्जनमेव साध्विति वा । नामग्राहं । द्वितीयायामित्यनुवृत्तौ नाम्न्यादिशिग्रहोरिति णमुल् (पा० ३ । ४ । ५८) ॥ २९ ॥

यन्नाशिडमा रणविधिव्यसनठच तत्त्वं बुध्वाशया त्रितममुष्य च दक्षिणत्वं । सैषा नले सहजरा

गभरादमुष्मिन् नात्मानमर्पयितुमर्हसि धर्म्म-
राजे ॥ ३० ॥

यदिति । यो ऽवधारणे यस्य चरिष्णुना क्रूरत्वं रणविधौ मल्लसन्नि-
धाने व्यसनमेव वैरिणां विगतासुकरणमेवेत्यर्थः मृत्यानपि वैरिणो
मारयत्येवेति भाव । रणविधौ व्यसनमिव व्यसनं यद्विष्णुना क्रौर्य्यं
यत्र रणकर्म्मणि व्यसनमिति वा । सैवा त्वं अमुष्य आशयमभिप्राय-
माश्रितं मनसि स्थितं दक्षिणत्व सरलत्वञ्च तत्तथ्यं बुद्धा ज्ञात्वा पा-
णिमाश्रितं दानशूरत्वं वा ज्ञात्वा धर्म्मसहिते राजनि धर्म्मेण राज-
माने वा अमुष्मिन्नले सङ्गरागभरात् अकृत्रिमानुरागबाहुल्यादात्मा-
नमर्पयितुं योजयितुं नार्हसि अपि तु योग्या भवस्येवेति वा । सर्व्वथा
ऽय वरणीय एव त्वयेति भावः । एतेन शूरत्वदातृत्वधार्म्मिकत्वा-
न्युक्तानि । यमपक्षे हे चण्डि कोपने यत्रामुष्य यमस्य मारणविधि
व्यसनं प्राणिप्राणहरणशीलत्व आशया दिशा च दक्षिणत्वमाश्रितं
तत्र निरुपाधिरूपं ज्ञात्वा सैवा त्व अमले नलान्यस्मिन् नलसदृशे
चास्मिन् धर्म्मराजे यमेऽकृत्रिमप्रेमरसबाहुल्यात् त्व योजयितुं अर्हसि ।
सर्व्वप्राण॰ मृतदधीनाः दक्षिणदिक्पतित्वाच्च तस्मादादरणीय इति
भावः । चण्डि नल'न्यनामधेयश्रवणमात्रात् कोपने सर्व्वदा सर्व्वप्राणि
प्राणहरणेय व्यसन दोष अमुष्य दिशा दक्षिणत्व छलेन सरलत्वमु-
दारत्वं चाश्रितं न स्वनेनेत्यर्थः । तत्सर्व्वं तात्त्विकं बुद्धा सैवा त्व
नलादन्यस्मिन्नात्मान योजयितु योग्या न भवसि अमुष्य मारणविधि-
व्यसनं तत्तत्व सत्यं । दक्षिणत्व तु दिगाश्रितं दक्षिणदिक्पतित्वा-
द्दक्षिण इति देशनिमित्तत्वात्स्व साधारण्या । तदेतद्बुद्धा सैवा त्वमात्मा-
नमर्पयितुं नार्हसीति वा योजना । सर्व्वविधो न वरणीय इति भाव ।
अन्यच्च कारण । असङ्गरागभरात् सहजानुरागबाहुल्याभावाच्चेत्यर्थः ।
यत्रानुरागो नास्ति स न वरणीय एवेति भावः ॥ ३० ॥

किन्ते तथा मतिरमुष्य यथाशयः स्यात् त्वत्पा
णिपीडनविनिर्म्मितयेनपाशः । कान्मानवान

वति नो भुवने चरिष्णून् नासावमुत्र न रता भवतीति युक्तम् ॥ ३१ ॥

किमिति । अमुष्य नलस्याशयो अभिप्रायस्तव पाणिपीडनस्य पाणिग्रहणस्य विनिर्मितये निष्पत्तये अनपाश. अपगता आशा यस्मादपाशः एवंविधो न भवतीत्यनपाशः सत्परो यथा स्यात् तथा किन्तु मतिः बुद्धिः । किंशब्दः सम्भावनायां । यथाऽय त्वद्वरणाभिलाषसहितान्तःकरणो भवेत् तथा त्वं मायेन करिष्यसीति गम्यत इत्यर्थः । असौ नलो भुवनं जगत् चरिष्णून् चरणशीलान् कान् मानवान् मनुष्यान्नो अवति रक्षति अपि तु सर्वानप्ययमेव रक्षति । मानवान् अभिमानी नलः कान् न रक्षतीति वा । तस्मात् अमुत्र नले भवती रता नेति न युक्तं किन्त्वस्मिन् रता भवेत्यर्थं ॥ असौ ना पुरुषश्रेष्ठ अतोऽमुत्र भवती रताऽनुरक्ते ति किन्न युक्तं अपि तु युक्तमेवेति वा । भवतीति सम्बुद्धिर्वा ॥ वरुणपक्षे अमुष्य वरुणस्य आयः पाणिपीडनस्य पाणिग्रहणनिष्पत्तयेऽनपाशो न विद्यते पाशो यस्मिन्नेवंविध पाशरहितो यथा भवेत् तथा ते बुद्धिः किं । किंप्रश्ने । पाशं त्यक्त्वा त्वत्पाणिग्रहणं करिष्यतीत्यर्थं. । त्वत्पाणिग्रहणनिष्पत्तये अस्य शयकरः स्यात् पाशो न । त्वत्पाणिग्रहणं शयेन करिष्यति पाशं त्यक्ष्यतीति भयं मा यासीरित्यर्थ इति वा । असौ भुवनमुदकं तत्र सञ्चरणशीलान् मनुष्यान् कान्नो ऽवति अपि तु जलप्रविष्टान् मज्जनादिप्रमादाद्वरुण एव रक्षति उदकसञ्चरणशीलान्मनुष्यान्नोऽवति अपि तु रक्षतीति वा । नो ऽस्माक भुवनं पृथ्वीलोकः तत्र सञ्चरणशीलान् मनुष्यान्, कादुदकाद्धेतुभूताद्रक्षति सर्वेषां उदकं जीवनमिति वा । अमुत्र भवती न रता नानुरक्ते ति न युक्तम् । अमुत्र नरता मनुष्यत्वं न भवतीति युक्तं देवोऽयमित्यर्थं इति । वा अमुत्र नरता नलत्वं न भवतीति युक्तमिति वा । असौ ना च पुरुषो न भवति अतोऽमुत्र भवती रतेति युक्तमपि तु नेति वा । अमुत्र भवती न रता नानुरक्ते ति न युक्तं अपि तु युक्तमेवेति वा ॥३१॥

द्युलोकादिह प्रथमतो हरिणा द्वितीयद्युमध्यजेन ग्रमनेन समं तृतीयात् । तुर्यान्नलस्य वरु

णेन समानभावं सा जानती पुनरथादि तया विमुग्धा ॥ ३२ ॥

श्लोकादिति । इह चतुर्षु अत्याजीत्यादिश्लोकेषु मध्ये अत्याजीति प्रथमत श्लोकात् हरिणेन्द्रेण सम सह येनामुनेति द्वितीयात् श्लोकात् धूमध्वजेनाग्निना सह यद्यपिहमेति तृतीयात् श्लोकात् शमनेन यमेन सह किन्ते इति तुरीयात श्लोकात वरुणेन सह तस्य नलस्य समानभाव तुल्यरूपत्व जानती अत एव विमुग्धा विशेषेण भ्रान्ता सा भैमी तया देव्या वक्ष्यमाणं पुनरथादि ॥ ३२ ॥

त्वं यार्थिनी किल नलेन शुभाय तस्याः क्व स्यान्निजार्पणममुत्र चतुष्टये ते । इन्द्रानलार्यमतनूजपयःपतीनां प्राप्यैकरूपमिह संसदि दीप्यमाने ॥ ३३ ॥

त्वमिति । या त्वं किल नले विषये अर्थिनी साभिलाषा तस्यास्तव अमुत्र नले निजार्पण स्वसमर्पण शुभाय कल्याणाय तुष्टये च सन्तोषाय च क्व न स्यात् कुतो न भवेदपि तु स्यादेव । किंविधे अमुत्र । इन्द्रश्च अनलश्च अर्यमतनूजो यमश्च पयःपतिर्वरुणश्च एतेषां ऐकरूप्य दिक्पालाश्रयात् सरूपत्व प्राप्य इहास्यां संसदि सभायां दीप्यमाने । तस्मादेव वरणीय इत्यर्थः । या त्वं नलेन साभिलाषा तस्यास्तवामुत्र नले निजार्पणं शुभाय क्व कुत स्यादपि तु न शुभोऽपि । किंभूते अमुत्र । इन्द्राग्नियमवरुणानां चतुष्टये ऐकरूप्यं समानरूप्यं प्राप्य सभायां दीप्यमाने । सदृशत्वाद्विज्ञातुमशक्यत्वाद्वरणं शुभाय न भवेदेव । नापि दास्यतीत्यर्थः इति वा । या त्वं नले विषये नार्थिनी एवं चतुर्णामन्यतमं न वृणोषि यतस्त्वमस्मिन् समानरूप्यं प्राप्य सभायां प्रकाशमाने इन्द्रादीनां चतुष्टये मध्ये क्व कस्मिन्निन्द्रेऽग्नौ यमे वरुणे वा निजार्पणं शुभाय स्यात् कथय । यथा वस्तुतः प्रोच्यमानाऽर्थं नलं न वृणुषे तथा तेषु इन्द्रादिषु चतुर्षु मध्ये क वृणुषे इति

कथय इत्यर्थं इति वा । अनेनात्रेन्द्रादयो विद्यन्ते न वेति सन्देहो निरस्तः । परन्तु के ते कश्च नल इति विशेषो नोक्तः । अत्रेन्द्रादीनां चतुर्णां त्यागो ऽपि प्रतीयते । या त्वं नलेऽर्थिनी तस्यास्ते नलस्वरूपतां प्राप्य इह सभायां दीप्यमाने इन्द्रादिषु चतुष्टये निजार्पणं शुभाय क स्यादपि तु न कुतोऽपि । या ह्यन्यत्रानुरक्ता तस्या अन्यत्र निजार्पणे शुभं कथं भवेत् । अन्यच्च नलरूपधारणादेते प्रकाशन्ते न त्वेतेषां सहजसौन्दर्यमस्ति । अतोऽप्येते न वरणीया इति भावः ॥३३॥

देवः पतिर्विदुषि नैष धराजगत्या निर्णीयते न किमु न व्रियते भवत्या । नायं नलः खलु तवाऽतिमहानलाभो यद्येनमुज्झसि वरः कतरः परस्ते ॥ ३४ ॥

देव इति । हे विदुषि सेवोक्तिचातुरीपरिज्ञानचतुरे नैसि एष पुरोवर्ती देवः स्वर्गे क्रीडाकारी अमरश्च धराजगत्याः भूलोकस्य पतिः पालयिता न किन्तु अर्थात् स्वर्गलोकस्य पतिरिन्द्रः त्वया किमु किमिति न निर्णीयते इन्द्रत्वेन किमिति न निर्णीयतेऽपि तु निर्णेय इत्यर्थः । किमिति वा न व्रियतेऽपि तु वरणीयश्चायं । मया न निश्चित इति कुतोऽवसितं भवत्येति शङ्कायां सत्यां आह । यतो न व्रियत इति हेतूपन्यासः सरस्वत्या कृतः । अयमिन्द्र इति चेत् तव निश्चयः स्यात्तर्हि मनुष्यापेक्षयाऽधिकत्वादयं वृत एव स्यात् । तत्तु न कृतं अत इन्द्रत्वेन त्वया ऽयं न निश्चित इत्यर्थ इति वा । धराणां पर्वतानामजन्माऽत्रः क्षेपकः तत्र पक्षिरूपापन्नौ वज्रत्वेन कृत्वाऽयं ना पुरुषः सामर्थ्यवान् वज्रायुधो देव इन्द्रः पतिर्भर्त्ता भर्तृत्वेन किन्न निर्णीयते निश्चितश्चेत् किं वा न व्रियत इति वा । धराजगत्या वज्रस्य पतिरेव देवः त्वया न निर्णीयते इति न अपि तु निश्चित एव ज्ञात एव किमु न व्रियत इति वा । उशब्दः सम्बोधने । धरान् पर्वतान् अजति क्षिपतीति धराज इन्द्रः स एव गतिः शरणं यस्याः प्राच्याः दिशः पतिर्देव इन्द्रो न निर्णीयत इति न परं किं न व्रियते इति वा ।

इन्द्रवेन्नले इव कथं दृश्यत इत्यत आह । अयं खलु निश्चयेन नलो न भवति तव नलवदाभातीति नलाभः । अत्र हेतुमाह । यतोऽतिशयितं महस्तेजो यस्य मनुष्यापेक्षया बहुतेजा इत्यर्थः । अत एव वरणीयः । तथा चाय नलस्तृणविशेषस्तत्तुल्योऽसारभूतो न भवति किन्त्वतिवलोऽतो वरणीय इत्यर्थः । अस्य वरणे निश्चितं अतिशयिता ये महा नन्दनवनक्रीडादय उत्सवाः आनन्दाः प्राणमञ्च तेषां लाभः प्राप्तिस्तव भविष्यतीति शेषः । इन्द्रवरणे नन्दनवनक्रीडा सुधापानेनामरत्वञ्च त्वया प्राप्यत इत्यर्थः । अतिमहत्तश्चिरकालप्राणनस्य लाभो भविष्यतीति वा । एवगुणविशिष्टमेनं अस्य विस्मोर्वा इनं स्वेष्टत्वातुल्येन स्वामिनमिन्द्रञ्चेत् त्यजसि तर्हि परोऽन्यः को वरः अपि तु न कोऽपि । महत्पनविस्वासादेनमेव वृणीष्वेति भावः । यापच यद्येन त्यक्ष्यसि तर्हि तव कतरो वरो ऽभीष्टो भवेन्न कोऽपि किन्तु परः शत्रुरेव भवेदित्यर्थः । अथ च यद्येनं त्यजसि तर्हि परोऽन्यः एतदन्तरः केन वायुना तरति प्लवते प्रसरति केन जलेन तीर्यते शान्तिं प्राप्यते वा यः स कतरोऽग्निर्वरो भवितेत्यर्थः । अत्रेन्द्रत्यागोऽपि सूचितः । तथाहि एष भूलोकस्य रक्षको देवो राजा नलो नेति निर्णीय निश्चित्य तेन नलस्याभावलक्षणेनैव कारणेन न म्रियते । किमिति प्रश्नः । युक्तमेवैतत् कृतमिति भावः । धराज इन्द्र एव गतिर्जीवनोपायो यस्याः प्राप्या. पतिर्देवो न निश्चीयत इति न अपि तु निश्चित एव । न म्रियते किमिति वा इति संशयलेशस्यापि निरासार्थं देवी पुनस्तमाह । अयं त्वत्सम्मुखी त्वच्चित्तानुरञ्जकोऽतिमहाज्ञितरा तेजस्वी नलो न भवत्येव परन्तु निश्चितं तथ्यमेवेत्यर्थः । किन्तु नलवदाभासत इवेव नलाकारधारणादेवास्य भा न तु सहजेत्यर्थः । यद्वा यतोऽप नलात्स्वरूपविशेषवत्त्विः सारो भाति तस्मान्निरतां तेजस्वी नलो न भवतीत्यर्थः । यदि चेनं त्यजसि तर्हि ते श्रेष्ठः के सुखे तरतीति कमर. सुखसमुद्ररूपो नलो वरो भवितेत्यर्थः । यद्वा, नैषध राजो नल एव गतिर्जीवनोपायो यस्या एवंविधया देव इन्द्रो न निश्चीयते किं अपि तु निश्चित एव । यतः पतिमं म्रियते नलानुरागिणी त्वमिन्द्रो

ऽर्यमिति ज्ञात्वैव पतित्वेन नाङ्गीकरोषीत्यर्थः । यस्मादैश्वर्यैरतिक्रान्तं महो यस्य तस्मादसारभूतं । यदि चैनं त्यजसि तर्हि तवालाभो नापि तु लाभ एवेति वा वह्निपक्षे धरतीति धरो वाहनं म चासावजश्च मेष धर इव पर्वततुल्यो वा यो मेषस्तेन कृत्वा या गतिस्तस्य वा या गतिः धरायां भूमावजेन कृत्वा या गतिस्तयोपलक्षित चाकादिकरणद्वारा त्रैलोक्यरक्षणात् पति देवो द्युतिमानमरश्च वह्निर्निरचीयत इति नापि तु निरचीयत एव । परमेवंगुणविशिष्टो ज्ञात्वापि न व्रियसेऽपि त्वग्नित्वेन निश्चितो वरणीय एवेत्यर्थः । धरो वाहनमजो यस्य स धराजो वह्निः स एव गतिः शरणं यस्या आग्नेय्या दिशः पतिर्देवोऽग्निः किं न निरचीयत निश्चितश्चेत् किमु न व्रियत इति वा । अग्निश्चेन्नलत्वेन किमिति नालीत्यत आह । अथ निश्चित नलो न किन्तु तताऽप्यतितेजस्वी तव नलवद्भातीति वा । अथ त्वत्सम्बन्धी नलो न भवति किन्त्वनल एवेत्यर्थ इति वा । एवंगुणविशिष्टमेनं यदि त्यजसि तर्ह्यग्ने परोऽन्यश्चेदृश ते कोऽभर्ता भविताऽपि त्वेतत्सदृशोऽतितेजस्वी कोऽपि नास्तीत्यर्थः । अथ च तव कोऽभीष्ट अपि तु न कोऽपि किन्तु परः शत्रुरेवेत्यर्थः । अथापि त्याग सूचित । तथा हि एष मा नलयो न किन्तु धराजगत्या आग्नेय्या दिशः पतिर्देवो वह्निरिति भवत्या निरचीयत किं यतो न व्रियते त्वया सत्यमेव निश्चितमित्याह । अथ त्वच्छ्रितानुरक्ता ऽतितेजस्वी नलो न किन्तु तदाकारधारणान्नलाभ । सहजस्य कान्तिर्न भवतीत्यर्थः । नले तृणविषये आभा यस्य तेजस्विन्या तृण प्रत्येव न तु देवान् प्रतीत्यर्थ इति वा । मेषवराजो गतिर्यस्यास्तया भवत्या एव दीप्यमानो देवो ऽग्नि किमु न निरचीयत अपि तु निरचीयत एव यतो न व्रियते । अथ तव पतिर्नलो न भवति किन्तु देवैराक्रान्ततेजास्तृणविशेषनलतुल्य इति वा । यमपक्षे एष धरान् पर्वतान् शृङ्गाभ्यां धुरियोऽजति क्षिपति धराजो महिष तस्य गत्या तेन वा या गतिस्तयोपलक्षिता धर्मरूपत्वात् पति पातापिता देव क्रीडापरोऽमरश्च यमो न निरचीयत इति अपि तु निश्चित एव । परं किमु न व्रियते यम एव देव धराजेन महिषेण कृत्वाऽपोढ्यमस्य गतिर्यस्या

एवंभूता वा दक्षिणदिशः पतिर्न अपि तु भवत्येवेति किमु न निर्णीयते किं वा न म्रियते अपि तु यमत्वेन निर्णीयो वरणीयश्चेत्यर्थ इति वा । अतितेजस्त्वेन निश्चितमनलः गहनो नापि तु धर्मरूपत्वाद्गहन एव । नलगहन इत्यस्य पचाद्यचि रूप । यदि चैनमुज्झसि तर्हि तव लाभो न किन्तु हानिरेव । यतस्त्वमेतदन्य श्रेष्ठश्च कतरो वर अपि तु नास्त्येवेत्यर्थं । अय नलो न किन्तु सर्वातिमहता महाजनः प्राणानां लाभो यस्मात् सोऽतिमहानलाभ सर्वेषां प्राणा एतदधीना स्ततस्त्वया तस्मिन् वृते तव चिरकाल प्राणन भविष्यतीत्यर्थ । यद्वा धर्मरूपत्वादतिशयितो महः पूजा यस्य स चासावनलाजश्च तेजस्वित्वाद्वह्नितुल्य इत्यर्थ । यदि चैन त्यजसि तर्हि तव वर श्रेष्ठ पर प्रभु कतरोऽपि तु एतस्मिन् परित्यक्तेऽयमेव महाप्रभुरित्यर्थ इति वा । अय च के जले तरति कानि जलानि तरन्त्यस्मिन्निति वा कतरो वरुणो वरो भविता । अत्रापि त्याग सूचित । तथा हि । एष धराजगत्या दक्षिणदिक्पतिर्देवो यमो न अपि तु यम एवेति निश्चित्य तेन कारणेन म्रियते किं धर्मराजबुद्ध्या देवो न निर्णीयत इति न किन्तु निर्णीयत एव । अतएव पतिर्न म्रियते किमिति वा । अय दीप्तैराक्रान्ततेजा मन पितृदेवो यमो नापि तु यम एव पर तव नलवदाभाति नलाकारधारणादित्यर्थ इति वा । यदि चैन त्यजसि तर्हि श्रेष्ठ सुखप्रमुदो नलो वरो भविता । वरुणपक्षे एष धराजगत्या भूलोकस्य पतिर्न किन्त्वधोऽर्थात् पातालस्य । अत एव देव कान्तिमान् अमरश्च वरुण किं न निर्णीयते किं वा न म्रियते । अय नलो न किन्तु अतिमहती नलवत् कान्तिर्यस्य सोऽतिमहास्तव मनाभो भाती ति शेष । यदि चैनमुज्झसि तर्हि तदन्य श्रेष्ठ तव को वरो भर्ता अपि त्वेतत्सदृशोऽन्यो नास्तीत्यर्थ । धरायां जायन्ते धराजानि स्थावरजङ्गमानि भूतानि तेषां गतिर्जीवनोपायो जल तस्य पतिर्न अपि स्वयं पतिर्वरुणो देव किं न निर्णीयते किंवा न म्रियते अपि तु निर्णीयो वरणीयश्चेत्यर्थ । अतिमहस्यातिपूज्यस्यानलस्याग्नेरभावः कारणाभावो यस्मात्तत्ता । वरुणो हि जलरूपत्वादग्निविरोधीत्यर्थ

इति वा । यदि चैनं त्यजसि तदा तव वरः श्रेष्ठः कः परः शत्रुरपि स्वयमेव शत्रुरित्यर्थः इति । धरतीति धरो धर्त्ता जगतः पोषकः स चासावजश्च तस्य धराजस्य श्रीविष्णोः गतिः प्रथममयनमाधारो जलं तस्य पतिर्नापि तु तत्पतिर्वरुणः किं न निर्णीयते । उदकं आपो नारा इत्यादिना श्रीविष्णोराश्रय । अथ च यदि त्वं एनं अं आ-विष्णुः इनः स्वामी यस्य तं श्रीविष्णुभक्तं वरुणं त्यजसि तर्हि तव लाभो न किन्तु हानिरेव । तस्मात्तव कतरो वरुण एव वरः श्रेष्ठो वर इति वा । अत्रापि त्यागं सूचितं । तथा हि । एष धराजगत्या पूर्वोक्तप्रकारेण उदकस्य प्रतीच्या दिशा वा पतिर्वरुणो देवो नापि तु स एवेति निर्णीयते किमु अपि तु निश्चित एव । यतो न म्रियते नायं नल इत्यादि तुल्यं । यद्येनं त्यजसि तर्हि तथापि मरुतामनामा प्राणानां लाभो जीवितासीत्यर्थः । यस्मात् ते सुखसमुद्ररूपः श्रेष्ठो नलो वरो भविता । नलप्राप्तावेव तव प्राणा नान्यथेति भावः । इत्यादिव्याख्या सुधिया योजनीयाः । ग्रन्थविस्तरभयान्न लिखिता । नलपक्षे अथ नैषधराजस्य निषधदेशसम्बन्धिनो राज्ञः निषधदेशोद्भवां तां तस्तां यो राजा तस्य वा गत्या प्राप्तेन ज्ञात्वा पतिः स्वामी देवः क्रीडादिगुणो राजा वा नो मनुष्यो नलः किं न निर्णीयते किं वा न म्रियते ऽपितु निषधाधिपो मर्त्य एवायं पञ्चमो नल एवायं इति निश्चितव्यो वरणीयश्चेत्यर्थः । खलु यस्मात्तथातिमहान् आलाभ विष्णुलाभ । नाविष्णुः पृथिवीपतिरिति नलस्य विष्णुत्वादित्यर्थः । यदि चेत्कृत्वरा काङ्क्षया एनं त्यजसि तर्हि को वरोऽस्मात् परोऽधिकोऽपि तु नास्तीति नलमेव वृणीष्वेति भाव । नलस्यात्मवरत्वे ऽप्यत्रैव स्वात्मस्वीयार्थः । एष धराजगत्या भूलोकस्य पति स्वामी वा मनुष्यो नलो देवो राजा नापि तु नल एवेति किं न निर्णीयते किंवा न म्रियते अपि तु निर्णेयो वरणीयश्च । यस्मान्नलवरणे तवातिमहतो जीवनस्य लाभो नलप्राप्त्यैव तव जीवनं भविष्यतीत्यर्थः । यदि चायं शुभावहं देवरूपमेनं न त्यजसि तर्हि तव कः श्रेष्ठो वरोऽपि त्वन्यो नास्तीत्यर्थ इति वा । नैषधराज एव गतिर्यस्यास्तया भवत्या मनुष्योऽयं नलो राजा पति

किं न निश्चीयते किंवा न ध्रियते अपि तु उभयमपि कर्तव्यं । यद्येनमुज्झसि तर्हि तव निश्चितमतिमहान् अलाभो महद्भाग्यं । यस्मादेतादृशोऽन्यं कतरो वरोऽपि तु नास्त्येवेत्यर्थं इति वा । एष देवो न इन्द्रादिरमरो न किन्तु भूलोकस्य पति मनुष्योऽतितेजस्वी नल इति किं न निश्चीयते किंवा न ध्रियते । यदि च देवरूपमेनं त्यजसि तर्हि तव लाभो न किन्तु हानिरेव । धरायां जायन्ते धराजाः मनुष्यास्तेषां गत्या प्रकारेण सनिमेषनेत्रत्वादिलिङ्गेनैष देवो नेति किमु न निर्णीयते तथा पतिरिति किमिति न ध्रियते निश्चित ना मनुष्यो नलोऽयं । यदि चैनं त्यजसि तर्हि तव परोऽन्यो वरः श्रेष्ठः कतरो लाभः अपि त्वेतद्वरणात् परः कोऽपि श्रेष्ठ लाभो नास्तीत्यर्थः । एष धरायां भूलोके अतिसौन्दर्यादयं काम इति बुद्ध्या प्राणेशो मनुष्यो नलो न तु देव कश्चिदिति किं न निर्णीयते किं वा न ध्रियते निकटस्थानामेषां चतुर्णामेतदाकारधारणात् कृत्रिम-सौन्दर्यं तेषामस्य तु सहजमिति दर्शनमात्रेण तारतम्यं ज्ञात्वा एष नलो निश्चेयः वरणीयश्चेत्यर्थः । इत्यादिव्याख्या यथाबुद्धि ज्ञातव्या । नल स्फोटगले राज्ञि पितृदेवे कपीश्वरे इत्यादि विश्वः ॥ ३४ ॥

इन्द्राग्निदक्षिणदिगीश्वरपाशिभिस्तां वाचं नले तरलिताऽथ समां प्रमाय । सा सिन्धुवेणिरिव वाडववीतिहोत्रं लावण्यभूः कमपि भीमसुताऽऽप तापं ॥ ३५ ॥

इन्द्रेति । अथ लावण्यभूः परमसौन्दर्योत्पत्तिस्थानं सा भीमसुता नले विषये तां पूर्वोक्तां देव पतिरित्यादिवाचं चेन्द्राग्निदक्षिणदिगीश्वरपाशिभिः समां सह तुल्यां श्लेषेण तेषामपि वर्णयित्रीं प्रमाय निश्चित्य तरलिता सन्देहवशात् नलनिश्चयाजायात् दोलायमानमनाः सती कमपि अनिर्वाच्यमसहं महं तापं आप । का कमिव सिन्धुवेणिर्गङ्गा सागरसङ्गमा वाडववीतिहोत्रमिव । वडवानलमिव यथा प्राप्नोति नलनिश्चयाभावाद्वाडवानलमिव दुःसहं सन्तापं प्राप्तेति भावः । नले तरलिता चोरकपटेति वा ॥ ३५ ॥

प्राप्तुं प्रयच्छति न पक्षचतुष्टये तां तल्लाभशंसिनि न पञ्चमकोटिमात्रे । श्रद्धां दधे निषधराड्विमतौ मतानामद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥ ३६ ॥

प्राप्तुमिति । सा भैमी निषधराजो नलस्य सम्बन्धिन्यां विविधायां मतौ बुद्धौ सत्यां नलविषये सन्देहे सतीति यावत् । पञ्चमी चासौ कोटिश्च पञ्चमकोटावेव पञ्चमकोटिमात्रे पञ्चमभागरूपे पञ्चमस्थानस्थे इति यावत् । एवम्भूते पञ्चानां मध्ये सत्यतरेऽतितरां सत्येऽपि नले विषये श्रद्धामास्तिक्यं न दधे सत्यनलेऽपि नलोऽयमेवेति तस्या बुद्धिर्नोदभूदित्यर्थः । क्व सति तल्लाभशंसिनि भैमीप्राप्त्यभिलाषिणि पक्षचतुष्टये पक्षाणां समीपवर्तिनां सहायानां संदृशानामिन्द्रादीनां चतुष्टये तां श्रद्धां सत्यनलविषयं निश्चयं प्राप्तुं न प्रयच्छति सति भैमीप्राप्त्यभिलाषेणातिसुन्दररूपधारणात् कृत्रिमरत्नादिष्विव मायानलेषु बहुरूपातिशयदर्शनान्नलनिश्चयं प्रतिबध्नति सतीति क्व कस्मिंश्चिद् मतानां साङ्ख्यादिषड्दर्शनानां मध्ये एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेत्यादिश्रुतिभिः सत्यतरे परमार्थतो यथार्थेऽपि अद्वैतरूपे तत्त्वे स्वरूपे ब्रह्मैक्यबोधे वा विषये लोकोऽविद्यावान् युक्तायुक्तविचारशून्यो जनो यथा श्रद्धां न धत्ते । क्व सति पक्षचतुष्टये अनेकात्मवादिना साङ्ख्यादिदर्शनचतुष्के तामद्वैतश्रद्धां प्राप्तुं न ददति सति नानात्मत्वसाधकयुक्तिसहस्रैरेकात्मनिषेधके सतीति यावत् । तस्य तत्पदवाच्यस्य लाभस्तच्छंसिनीत्यद्वैततत्त्वस्य विशेषणं । साङ्ख्या हि प्रतिशरीरं पुरुषबहुत्वमङ्गीकुर्वन्ति । नैयायिकाश्च नानात्मानो व्यवस्थात इति वचनात् आत्मनो नानात्वमङ्गीकुर्वन्ति । आर्हताश्च देहप्रमाणात्मस्वाकारमङ्गीकुर्वन्ति । बौद्धाश्च स्वसिद्धान्तसिद्धानेकयुक्तिभिरनेकात्मनामेव चित्तसन्ततिबाहुल्यमङ्गीकुर्वन्ति । सत् असत् । सदसत् सदसद्विलक्षणमिति पक्षचतुष्टयं । सद्वादिनः साङ्ख्याः । असद्वादिनो बौद्धाः । सदसद्वादिनो नैयायिकाः । प्रपञ्चानिर्वचनीयत्ववादिनो वेदान्तिनः । न सत् बाधानुपपत्तेः । न

हि सद्रूपत गगनादिकं वा वाध्यते । न चासत् प्रतिभासानुपपत्तेः । नहि अत्यन्तासत् शशशृङ्गं कदाचिदप्यवभासते । न च सदसदात्मकं उभयरूपं परस्परविरोधात् । न ह्यसत्सद्वा असद्भवितुमर्हति । उभयरूपमपि न भवतीत्यपि वक्तुमयुक्तं इत्यादि ज्ञातव्यं । सांख्या हि प्रति शरीरं भिन्नान् शुद्धस्वभावान् सर्वव्यापकान् बहूनात्मन इच्छन्ति । नैयायिका अपि प्रतिशरीरं भिन्नान् सर्वव्यापकान् ज्ञानादिनवविशेषगुणवत आत्मन इच्छन्ति । आर्हतास्तु प्रति शरीरं भिन्नान् देहपरिमाणान् सङ्कोचविकासशालिनान् बहूनात्मनोऽङ्गीकुर्वन्ति । बौद्धा हि प्रति देह भिन्नान् क्षणिकज्ञानसन्ततिरूपान् बहूनेवात्मन इच्छन्ति । भैमीप्राप्त्यभिलाषिणि सत्यतरे नले नलसम्बन्धिन्या विमतौ सत्यामपि सा श्रद्धा न दधे अपि तु दधावेव । अनेकनलदर्शने सत्ये पञ्चमकोटिस्थे सत्ये नलं अविज्ञातेऽपि सन्धौ बलात् प्रह्लादते मन इति न्यायेन अयमेव प्रायशः सत्यनलो भविष्यतीति तस्या मनसि बुद्धिरुदभूदित्यर्थं । मतानां विमतावपि सत्यतरे अद्वैततत्त्वे लोकस इति लोक परीक्षको जनो यथा श्रद्धा धत्ते तथेति सम्बन्ध । प्राप्तुमिति पाठे निषधराट् नल इन्द्रादिचतुष्टये भैमीमतारणार्थं स्वीयस्वरूपधारणात्तां स्वस्ले प्राप्तुं न यच्छति सति तल्लाभशालिनि भैमीप्राप्त्यभिलाषिणि पञ्चमकोटिस्थे अर्थादात्मनि श्रद्धा निश्चय न दधे भैमीं प्राप्तु । एतस्मिंश्चतुष्टये प्रति यत्नके सतीव मया कथकार प्राप्यते अपि तु नेति तस्य बुद्धिरुदभूदित्यर्थं । मतानां विमतौ सत्यां सदसदादिपक्षचतुष्टये सा सम्यक् प्रतीति निषेधति सति अभेदसिद्धिशालिनि पञ्चमकोटिमात्रे चतुष्कोटिविनिर्मुक्ते सत्यतरे ऽप्यद्वैततत्त्वे यथा लोक श्रद्धा न धत्त इति व्याख्येय। लोक कौतुकदर्शी सभास्थो जन इयमेन वरिष्यतीति निश्चय अय पञ्चमः सत्यनल इति वा निश्चय न दधे । पञ्चमकोटिमात्रे पुत्रस्कन्धधारयेत्यादिना (पा० ६ । ३ । ४२) पुंवद्भाव ॥ ३६ ॥

कारिष्यते परिभवः कलिना नलस्य तां द्वापरस्तु धुतनूमहुनोत् पुरस्तात् । भैमी नलोपयमनं पि

शुनो सहेते न द्वापरः किल कलिश्च युगे जगत्यां ॥ ३७ ॥

कारिष्यत इति । उक्तियुक्तिविशेषेण पुनरपि मन्देहजनित सन्ताप बर्धयति । कलिना चतुर्थयुगेन नलस्य परिभव पराभव कारिष्यते करिष्यते । द्वापरस्तु अय वा नलोऽय वाऽनल इति सन्देह । पुनरत्र च श्लेषबलेन तृतीय युग पुनरस्या सुतनु सुन्दरी पुरस्तात् काले पूर्वमेवादुनोत् अपिपीडत् । कलिर्वरणानन्तर नलपराभव करिष्यति । द्वापरस्तु भैम्यै वर्नं नल वरीतुमेव मादादित्यर्थः । तयोर्विरोधित्वे कारणमाह । किल यस्मात् कारणात् द्वापर कलिश्च द्वावपि युगे जगत्यां भूलोके भैमीनलयोरुपयमन विवाहं न सहेते । जात तयोर्विवाह कलिर्यथा न सोढा तथा भाविन द्वापरोऽपि न सेहे । यत पिशुनौ खलौ । निश्चिते नले विवाहो भवत्येव । सन्देहस्तु प्रतिबन्धक । तस्मात्कलिवत् द्वापरस्यापि विरोधित्वात्तेन सा पीडितेति युक्तमेवेत्यर्थः । द्वापरे कलौ च भैमीनलयोरभावात् तयोर्विवाह न सहेते तौ इत्यर्थः । नलनिश्चयाभावात् सा अतितरां सन्तापमापेति भाव । शब्दश्लेषबलेनेयमुक्ति । द्वापर उभये युगमिति विश्व । कारिष्यते । स्यसिच् सीयुट् तासिष्विरवादिना (पा०६।४।६२) इट् । चिण्वद्भावादचाचिणतीति (पा०७।२।११५) वृद्धि । परिभव । परौ भुवोऽवज्ञान इति (पा०३।३।५५) घञो विकल्पितत्वात् ऋदोरप् (पा०३।३।५७) ॥ ३७ ॥

उत्कण्ठयन् पृथगिमां युगपन्नलेषु प्रत्येकमेषु परिमोहयमाणबाणः । जानीमहे निजशिलीमुखशीलिसङ्ख्या साफल्यमाप स तदा यदि पञ्चबाणः ॥ ३८ ॥

उत्कण्ठयन्निति । परिमोहयमाणा मोहजनका बाणा यस्य वभूतोऽत एव इमां भैमीं प्रत्येकमेषु इन्द्रादिनलपदेषु युगपदेकस्मिन्नेव काले पृथक् पार्थक्येनोत्कण्ठयन् सोत्कण्ठां कुर्वन् अय वा नलोऽय वा नल इति बुद्धेः एकैकस्मिन् विषये तुल्यकाल पृथक्प्रकारेणोत्कण्ठयन् पृथक्

प्रयत्नसाध्यामन्यादृशीमन्यादृशीमुत्कण्ठां यस्या जनयन् इति यावत् । एवम्भूतः स पञ्चबाणः निजाः स्वीयाः शिलीमुखाः बाणास्तान् शील यत्यभ्यस्यति । स्वीयबाणा शितेति यावत् । एवम्भूता पञ्चसङ्ख्या तस्याः साफल्य सप्रयोजनत्वं यद्यपि तर्हि तदा तस्मिन्नेवावसरे न त्वन्यदेति वयं जानीमहे उत्प्रेक्षामहे । एकस्मिन्नले अनुरागस्य पर्यायेणैकेनैव बा योन जनने शेषाणां चतुर्णां वैयर्थ्यमेव स्यात् किमयं नल इति नलत्वे नोपलक्षितेषु पञ्चस्वपि प्रत्येकं पञ्चभिरेव बाणैः पृथक्प्रयत्नेन युगप- दनुरागजनने पञ्चानामपि बाणानां साफल्यं तदैव जातमित्यर्थः । पृ- थगित्यस्योत्कण्ठाविशेषणत्वात् प्रत्येकमित्यस्येन्द्रादिविशेषणत्वात् सम्ब न्धभेदात्कार्थपौनरुक्त्यं । नलेषु युगपदिमां पृथगुत्कण्ठयन् तथा प्रत्ये- कमेषु नलेष्वेव युगपत्परिमोहयमाणा यपोङ्गैस्यां विषयेऽनुरागजनका बाणा यस्य स मदनः यदि निजबाणसङ्ख्यासाफल्यमाप तर्हि तदैव ना न्यदा । पञ्चस्वपि तस्या युगपत् पृथगनुरागजननात् । तस्यामपि पञ्चा- नामपि तेषां प्रत्येकं युगपदनुरागजननाच्च । स्वीयबाणसङ्ख्यायाः सा- फल्यमापेत्यर्थं इति वा । नलेषु तां पृथक् सोत्कण्ठां कुर्वंस्तथा एषु नलेष्विव प्रत्येकमुत्कण्ठां जनयन्नथोङ्गीमां प्रति । यतः परिमोहयमाणबा णा इत्युभयत्रापि उत्कण्ठाजनने हेतुगर्भविशेषणं । सा भैमी पञ्चस्वपि नलबुद्ध्यैव सानुरागाऽभूदिति भावः । तेऽपि तस्यामित्यपि च भावः । पञ्चस्वनुरागात् पातिव्रत्यभङ्गप्रसङ्ग इति न । पञ्चस्वपि परपुरुषताप रिहारेण नलबुद्ध्यैवानुरागात् परिहारः । उत्कण्ठयन् । इयमुत्कण्ठते तामधीनामुत्कण्ठयति । हेतुमतीति णिच् शता । पक्षान्तरे तूत्कण्ठां कुर्वं- यिति तत्करोतीति णिच् ॥ ३८ ॥

देवान्निजं निषधराजरुचस्त्यजन्ती रूपादरज्यत
नले न विदर्भसुभ्रूः । जन्मान्तराधिगतकर्मवि
पाकजन्मैवान्मीलति छ च न कस्य च नानु
रागः ॥ ३९ ॥

देवानिति । इय विदर्भसुभ्रूर्भैमी नले रूपात् सौन्दर्यान्नानुरज्यत

नानुरक्ता नलेऽनुरक्ता परं रूपाद्धेतोरिति नेत्यर्थः । यतो निषधराजरूपा नलतुल्यकान्तीन् देवानिन्द्रादीन् त्यजन्ती । यदि नले रूपाद्धेतोररज्यत् तर्हि नलतुल्यरूपानिन्द्रादीन् नात्यक्ष्यत् । ते तावत् त्यक्ता । तस्मान्नलानुरागे रूपं हेतुर्न भवतीत्यर्थः । तर्हि कथमनुरक्तेत्याशङ्क्याह । जन्मान्तरे अधिगतं पूर्वकृतं कर्म्म तस्य यो विपाकः फलजननाभिमुखता तज्जन्मा तदुत्पन्न यथ कस्य च न कस्यापि प्राणिनोऽनुरागः क्व च न कस्मिंश्चित् प्राणिनि उन्मीलति उत्पद्यते पूर्वकृतकर्मवशादेव कोऽपि कस्मिंश्चित् प्रीतिं बिभर्त्ति । तथा च पूर्वजन्मकृतसुकृतविशेषाद्देवानपहायान्यकारणाविशेषा नलेऽनुरागस्तस्याः समभूदित्यर्थः । नलनिश्चयाभावेऽपि रूपसाम्ये सत्यपि च नल एवानुरक्ततया नलाद्विशिष्टरूपोऽप्यन्यस्तदीयानुरागविषयो नाभूत् किन्तु नल एवेत्यर्थान्तरन्यासतात्पर्यम् । अनुरागजनने उभयोरपि पूर्वकर्मविपाका हेतुरेव । भरज्यत । व्यत्ययेन कर्तृत्वात् कर्त्रभिप्रायक्रियाफलविवक्षया तङ् ॥ ३९ ॥

क्व प्राप्यते स पतगः परिपृच्छ्यते यः प्रत्येमि तस्य हि पुरेव नलं गिरेति । सस्मार सस्मरमतिः प्रति नैषधीयं तत्रामरालयमरालमरालकेशी ॥ ४० ॥

क्वेति । सस्मरा कामतरला धीर्मतिर्यस्याः सा अरालकेशी कुटिलकेशी भैमी तत्र सभायां सन्देहावसरे या इति मनसि विचार्य्य नैषधीयं नलसम्बन्धिनं नलाद्दूत्यकारिणं अमरालयमरालं स्वर्गनिवासिनं देवाश्रयं वा हंसं प्रति उद्दिश्य सस्मार । इति किं । स पतगः हंसः क्व कस्मिन् स्थाने प्राप्यते । स कः । यो हंसो मया परितः सामस्त्येन एषु मध्ये क य नल मह्यं कथयति विश्वास्यतया पृच्छ्यते । स एव किमिति प्रष्टव्य इति चेत् आह । हि यस्मात्तस्य हंसस्य गिरा पुरेव सद्घटनाकाले इव नलं प्रत्येमि निश्चिनोमि । अद्दृष्टमज्ञातमपि च नलं दूत्यावसरे यथा हंसवचनेनाहं ज्ञातवती तथ पुनरपि नलनिश्चयं गाने

परमाप्तस्य तस्य वचनादलं निश्चिनोमीति मदनपरवशत्वेनाऽधीरत्वा त्तन्निश्चयार्थमाप्ततमं त्वं हंस सस्मारेत्यर्थः । प्राप्यत इत्यादि । वर्तमा नसामीप्ये वर्तमानवद्वा (पा० ३ । ३ । १३१) इति लट् । निषधसम्ब न्धि नैषधीयं नलचरणानुध्यानाख्यं कार्यमुद्दिश्य हंस सस्मारेति वा योज- ना । किल नैषधीयमिति पाठे मया किल निश्चितं प्रत्येमीति योजना। प्रियदूतभूतमिति पाठो वा ॥ ४० ॥

एकैकमैक्षत मुहुर्महतादरेण भेदं विवेद न च
पञ्चसु कञ्चिदेषा । शङ्काशतं वितरता हरता
पुनस्तदुन्मादिनेव मनसेयमिदं तदाह ॥ ५१ ॥

एकैकमिति । एषा भैमी महता आदरेण प्रयत्नेन मुहुः एकैकं इ- न्द्रादीन्नैषधं आलोकत । विशेषजिज्ञासया पुनः साभिप्रायं ददर्शेत्यर्थः अथ च महता दरेण भयेन, पतिवृतेयं पञ्चापि सादरं कथं पश्यती- ति अविदितमादराथलोकनकारणेभ्यो जनेभ्यो ऽपवादभयेनेत्यर्थः । प ञ्चसु मध्ये कञ्चिदल्पीयांसमपि भेदं विशेषं न च नैव-विवेद । अनन्तरञ्च वक्ष्यमाणप्रकारेण शङ्काशतं सन्देहपरम्परां वितरता तन्वता वितीर्य च पुनस्तच्छङ्काशतं हरता वक्ष्यमाणप्रकारान्तरयुक्तिभिर्नाशय- ता मनसा इयं भैमी इदं वक्ष्यमाणं जगाद । चेतस्येवाविचारयदित्य- र्थः । तदप्रेक्ष्यते । उन्मादिनेव उन्मादवानपि भूयसा आदरेण जयेन वा प्रत्येकमीक्षते तारतम्यञ्च न जानातीति । शङ्काशतञ्च करोति पुन- स्त्यजति ददाति च पुनराहन्ति चेत्येवमव्यवस्थितचित्तो भवति । तथे- यमप्यव्यवस्थितचित्ताभूदिति भावः । दरे स्मेति पाठे भूतेऽर्थे । लट् स्मेति ( पा० ३ । २ । ११८) लट् ॥ ४१ ॥

अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र भ्रान्तौ
दृगन्तचिपिटीकरणादिरादिः । स्वच्छोपसर्पण
मपि प्रतिमाभिमाने भेदभ्रमे पुनरमीषु न मे
निमित्तम् ॥ ५२ ॥

तमेव विचारमाह । असीति ॥ जनस्य द्विचन्द्रमतिः द्वौ चन्द्राविति बुद्धिः प्रसिद्धाऽस्ति । परं तत्र भ्रान्तौ प्रमाणप्रमितिविषयैकत्वे एकस्मिन्नेव चन्द्रे विषये यो अनेकत्वप्रत्ययस्तस्मिन्विषये दृगन्तयोर्नेत्रप्रान्तयोर्यच्चिपिटीकरणं अचिपिटयोश्चिपिटयोः करणं अङ्गुल्यग्रेण निपीडनं तदादिर्यस्य काचकामलादिदोषस्य सदृगन्तचिपिटीकरणादिदोष आदिः प्रथमो हेतुरस्ति । चन्द्रद्वयभ्रान्तौ चिपिटादिः हेतुर्युक्त । तथा प्रतिभाया आदर्शादौ दृश्यमानस्य मुखादिप्रतिबिम्बस्याभिमानेऽपि प्रतिबिम्बस्फुरणरूपे भ्रान्तिज्ञानेऽपि स्वच्छस्यादर्शादेरेव समीपे यत् समर्पणं प्रापणं दर्पणसन्निधानं तन्निमित्तम् अस्तीति शेषः । दर्पणादिस्वच्छवस्तुसन्निधानादलीकमपि प्रतिबिम्बं भासत इत्यर्थः । ते मम पुनरमीषु दृश्यमानेषु भेदभ्रमे एकस्मिन्नले विषये यः पञ्चत्वसङ्ख्यादिविशिष्टो बोधस्तस्मिन विषये निमित्तं कारणं नास्ति । द्विचन्द्रभ्रान्तौ कारणमस्तीति भ्रान्तिर्युक्ता । एकोऽपि नलः पञ्चधा भासत इति तु मदीया भ्रान्तिः कारणाभावान्न युक्ता । तस्मादन्य एवैते के च न भविष्यन्तीति स्वयमेव संशयञ्चकार परिजहार चेति भावः । अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोरिति निघण्टुः ॥ ४२ ॥

**किं वा तनोति मयि नैषध एव कायव्यूहं वि**
**धाय परिहासमसौ विलासी । विज्ञानवैभवभृतः**
**किमु तस्य विद्या सा विद्यते न तुरगाशयवेदि**
**तेव ॥ ४३ ॥**

पक्षान्तरमाह । किं वेति ॥ वा पक्षान्तरे । असौ प्रत्यक्षदृश्यः नैषध एव कायव्यूहं शरीरसमूहं विधाय निर्धार्यमाणमपि परिहासं प्रतारणां क्रीडां तनोति किं । यतो विलासी एकोऽप्यसौ नलः एवमपि क्रीडावशात् कायव्यूहं तनोति न त्वन्ये के च न सन्तीत्यर्थः । किमो तनोतीति पाठे काकुः । कायव्यूहरचनेऽस्य शक्तिः कथमित्यत आह । विशिष्टस्य ज्ञानस्य विशिष्टं ज्ञानं यैरेवंविधा ये कला यस्याः तेषां वा वैभवं बाहुल्यं तद्भृतस्तस्य नलस्य तुरगाशयवेदितेव अश्वहृदयज्ञातृ-

तेष सा कायव्यूहविधानरूपा विद्यापि किमुत विद्यते अपि तु सापि विद्यत एवेति सम्भावना । विधानवैभवभुव इति पाठे । भुव. स्थानभूतस्येत्यर्थः । परिहासः । उपसर्गस्य घञ्यमनुष्येति (पा० ६ । ३ । १२२) सूत्रे बहुलग्रहणाद् दीर्घो भाव ॥ ३३ ॥

एको नलः किमयमन्यतमः किमैलः कामोऽपरः किमु किमु द्वयमाश्विनेयौ । किं रूपधेयभरसी मतया समेषु तेष्वेव नेह नलमोहमहं वहे वा ॥ ४४ ॥

एक इति । वा पक्षान्तरे । इह एषु पञ्चसु मध्ये अयमेको नल कि । अन्यतमः द्वितीय ऐल पुरूरवा कि । अपरस्तृतीय काम किमु । शिष्टद्वय आश्विनेयौ अश्विनीकुमारौ किमु । एव सुरूपेषु तेषु पञ्चसु एव अह नलमोहं किं न वहे अपि तु तेष्वेव नलबुद्धि धारयामि । न तु कायव्यूहरचनादेक एव नल पञ्चधा जात इत्यर्थः । यतो रूपधेयभरस्य सौन्दर्यबाहुल्यस्य सीमतया पराकाष्ठात्वेन समेषु सदृशेषु साम्याद्विमोहो युक्त । अन्यतम । स्वार्थे तमप् । सीमशब्दो मान्त स्त्रीलिङ्ग ॥ ४४ ॥

पूर्वं मया विरहनिःसहयापि दृष्टः सोऽयं प्रियस्तत इतो निषधाधिराजः । भूयः किम गतवती मम सा दशेयं पश्यामि यद्विलसितैर्नलानलीकान् ॥ ४५ ॥

पूर्वमिति । विरहनि सहया वियोगविह्वलया मया सोऽयं निषधाधिराज. प्रियः प्राणेश इतस्तत पञ्चसु दिक्षु पूर्वमपि स्वयंवरसमयात् प्रागपि दृष्टः । च इदानीं दृश्यते स मोहवशात् सर्वत्र पूर्वमपि दृष्ट इत्यर्थः । अहतेकिमित्यत आह । ममेय भूय.पुनरपि सैव विरहोद्भूतोद्भ्रान्तात्मरूपा दशा आगतवती कि । यद्विलसितेन यस्याः सामर्थ्येनालीकान् असत्यान्नलान् पश्यामि । अपि पूर्वं इत्यनेन भूय इत्यनेन वा योजनीय ४५

मुग्धा दधामि कथमित्यमथापशङ्कां सङ्कन्दना

दिक्पटः स्फुटमीदृशोऽयं। देव्याऽनयैव रचिता हि तथा तथैषां गाथा यथा दिगधिपानपि ताः स्पृशन्ति ॥ ४६ ॥

मुग्धेति। अथ पक्षान्तरे। अथवा मुग्धा मोहवशा सती अत्र इत्थ अस्ति द्विचन्द्रेत्याद्यनेकरूपा अपशङ्का तु शङ्का कथ दधासि अपि त्वेतदयुक्तमित्यर्थ। यत स्फुट निश्चित अयमीदृश नलयातुल्यस्थान रूप सङ्क्रन्दनादीनामिन्द्रादीना चतुर्णां कपटस्तेषा मायैवेत्यर्थ। हि यस्मादनया देव्यैव सरस्वत्यैवेषा पुरोवस्थितानां सम्बन्धिन्यो गाथा भ्रम इत्यादिवर्णनश्लोकास्तया तथा तेन तेन प्रकारेण रचिता यथा येन प्रकारेण ता गाथा दिगधिपानिन्द्रादीनपि स्पृशन्ति श्लिष्ट-शब्दशक्त्याऽभिधावृत्त्या वदन्ति न केवलमितपरेमर्थं। तस्मादिन्द्रादि भिरेव मत्प्रतारणार्थं मायया नलरूप धृतमित्येव युक्तियुक्ता न तु व शपरूपेत्यर्थ। तथाशब्दस्य द्विरुपादानाद् यथाशब्दो ऽपि द्विर्ज्ञातव्य। कपटोऽस्त्री व्याजदम्भोपधय इत्यमर ॥ ४६ ॥

एतन्मदीयमतिवञ्चकपञ्चकस्थे नाथे कथं नु मनुजस्य चकास्तु चिह्नं। लक्ष्माणि तानि किममी न वहन्ति हन्त बर्हिर्मुखा धुतरजस्तनुतामुखानि ॥ ४७ ॥

एतदिति। एतस्मिन्मदीयाया मतेर्बुद्धेर्वञ्चके व्यामके पञ्चके इन्द्रादिसमूहे तन्मध्यावस्थिते नाथे मम प्राणेशे मनुजस्य मनुष्यस्य चिह्नं स्वेदनिमेषरजःस्पर्शम्लानकुसुमत्वादिलिङ्गं कथ नु कथमिव चकास्तु प्रकाशताम्। अपि त्विन्द्रादिमायया नलस्यस्यापि चिन्हस्य कृ दिलत्व-मत्र प्रकाशत इति युक्तमित्यर्थ। नलस्य स्वयमवञ्चकत्वेऽपि छत्रिणो गच्छन्तीति न्यायात् चतुर्णामेव वञ्चकत्वेऽपि तत्सिद्धिः। परिहास-वशाद्वा नलस्यस्यापि वञ्चकत्वं युक्तम्। एतद्राजसु दृश्यमान स्वेदा दिचिह्नमिति भिन्न पद वा। इत खेदे अमी बर्हिर्मुखा देवा ? धुत

रपक्तं रजो रेणुस्पर्शो यया एवम्भूता तनुर्येषां तेषां भावो धुतरजस्तनुता रेणुसंस्पर्शरहिततनुता मुखे मालिन्यादि येषां तानि स्वेदराहित्यास्नानपुष्पत्वनिर्निमेषत्वादीनि देवत्वव्यञ्जकानि तानि प्रसिद्धानि चिह्नानि किमिति न वहन्ति धारयन्ति। मयि कृपया तावद्गोदुयुक्तानि परन्तु नोद्यन्ते कष्टमित्यर्थः। बहिर्मुखपद कृपाराहित्यसूचकं। नलचिह्नानामस्फुटत्वेऽपि यदि देवचिह्नानि स्फुटान्यभविष्यस्तर्हि पारिशेष्यान्नलनिश्चयोऽप्यभविष्यत्तान्यपि त्वस्फुटानीत्युभयथापि मया नलो निश्चेतुं न शक्यत इति भावः ॥ ४७ ॥

याचे नलं किममरानथवा तदर्थं नित्यार्चनादपि ममाफलिनैरलन्तैः। कन्दर्पशोषणशिलीमुखपातपीतकारुण्यनीरनिधिगह्वरघोरचित्तैः ॥ ४८ ॥

याच इति। अहं, नलं यूय मह्यं प्रयच्छतेति, अमरान् नलं याचे किं। अथवा पूर्वापरितोषे। तदर्थं नलप्राप्त्यर्थं तेषां नित्यार्चनादपि ममाऽफलिनैः प्रार्थितमदप्रद्भिस्तैर्देवैरलं पूर्यतां एतावन्ति दिनानि। नित्यपूजनादपि ये नलं न प्रायच्छंस्तेऽधुना प्रार्थनमात्रेण कथं दास्यन्तीति वृथैव तत्प्रार्थनमित्यर्थः। किंविधैस्तैः। कन्दर्पस्य शोषणाख्यशिलीमुखो बाणस्तेन पातात् पतनात् पीतः शोषितः कारुण्यनीरनिधिः कृपासमुद्रो येषां तानि अत एव गह्वराणि गभीराणि विस्तृतानि घोराणि कठिनानि चित्तानि येषामेवम्भूतैः। यस्मात् कृतेऽपि नित्यपूजने कामायत्ततया निष्कृपत्वादफलितैरित्यर्थः। याचिर्द्विकर्मा। न दत्तफलैरिति वा पाठः। फलशब्दादस्त्यर्थे फलबर्हाभ्यामिनच् ( पा० ५। २। १२२। वा० ५। ) ततो मत्वर्थभावः ॥ ४८ ॥

इत्था दिशां नलभुवं प्रतिपद्य लेखा वर्णाश्रियं गुणवतामपि वः कथं वा। मूर्खान्धकूपपतनादिव पुस्तकानामस्तं गतं वत परोपकृतिव्रतित्वं ॥ ४९ ॥

देवानुपालभते । ईशा इति । हे दिशामीशा दिक्पाला स्तेरा देया , नलो भूः स्थानं यस्यास्ता नलभुवं नलप्रभवां वा यशःश्रियं रूपशोभां प्रतिपद्य प्राप्य गुणवता सौन्दर्य्यादिगुणयुक्तानामपि वो युष्माकं परेषामुपकृतिरुपकार एव व्रतं तद्विद्यते येषां ते व्रतिनस्तेषां भावस्तत्त्वं कथं वा कुतो वा हेतोरस्तं गतं नष्टं स्वयमुपकारकत्वाभावेऽपि स्वाभिलषितायामपि मयि भवद्भिर्दूत्यकारिणो नलस्याप्याकारे धृते सौन्दर्य्यादिगुणागमनात् परोपकारित्वमप्यागतं तन्मद्विषये कथं विनष्टमित्यर्थः । नलाकारधारणादेतावतो मत्प्रतारणा किमिति क्रियत इति भावः । केषामिव । मूर्खा अश्रुतशास्त्राः पुरुषा एवाज्ञानवशादन्धास्त एव कूपा अतिगम्भीरा मूर्खरूपाः कूपास्तेषु पतनात् तदधीनत्वात्तृणविशेषलेखनीभूतनलप्रभवां रेखां वर्णश्रियं लिप्यक्षरशोभां प्राप्य शुद्धत्वादिगुणयुक्तानां दोरकयुक्तानां वा पुस्तकानां यथा वाचकपाठकाद्युपकारकत्वरूपमस्तङ्गच्छति मूर्खस्य मूर्खत्वादेवोपकाराभावादन्येषां चासमर्पणादित्यर्थः । कूपपतितानामपि पुस्तकानामनुपकारकत्वमेव प्रतिपद्य स्थितानामिति समानकर्तृकत्वं ॥ ४९ ॥

> यस्येश्वरेण यदलेखि ललाटपट्टे तत् स्यादयोग्यमपि योग्यमपास्य तस्य । का वासनाऽस्तु विभयामिह यां हृदाऽहं नार्कातपैर्जलजमेति हिमैस्तु दाहम् ॥ ५० ॥

यस्येति । ईश्वरेण यस्य प्राणिन ललाटपट्टे यदयोग्यमनुचितमपि अलेखि लिखितं तदयोग्यमपि तस्य योग्यं समुचितमर्थं अपास्य प्रतिक्षिप्य स्याद्भवेत् । योग्यमर्थं परित्यज्य तत्परिहारेण स्वयमेव भवेदिति यावत् । अतो योग्यतया कार्य्यकरणाभावे सति इह नलानेकत्वसन्देहेन निश्चयार्थं या वासनां युक्तिमहं हृदा बिभृया धारयेयं सा का वासना युक्तिरस्तु भवतु अपि त्वेवंविधा युक्तिर्नास्ति । चित्तेनान्यथाकर्तुं विचारितेऽपि ललाटपट्टलिखितादन्यथा न भवतीत्यर्थः । योग्यमपास्यायोग्यमेव भवतीत्यत्र दृष्टान्तमाह । यतो जलजमम्भोजं अर्कातपैरुष्णैरपि

सूर्यकिरणैर्दाह नैति हिमैस्तु पुनर्दाहं गच्छति । उष्णस्पर्शो दाहक शीतस्पर्शस्तु दाहशमक इति लोके दृष्ट । तदिदं विपरीतं जातमिति विरुद्धकार्योत्पत्ते र्विषम नलस्य मम वा ललाटे यदीश्वरेणायोग्यमेव लिखित तर्हि परस्परयोग्य परस्पर विहाय तस्य मम चायोग्यमेव भविष्यतीति क प्रकार चित्ते धारयिष्याम्यपि तु न कमपीति देवाना न कोऽप्यपराध इति भावः ॥ ५० ॥

इत्थं यथेह मदभाग्यमनेन मन्ये कल्पद्रुमोऽपि स मया खलु याच्यमानः । सङ्कोचसंज्वरदलाङ्गुलिपल्लवाग्रपाणिर्भवन् भवति मां प्रति बद्धमुष्टिः ॥ ५१ ॥

तर्हि कल्पद्रुमो याच्यतामित्यत आह । इत्थमिति । इह मत्कृत्ये ऽपि समये वा इत्थमनेन नलानेकस्वभवनप्रकारेण यथा यादृक् ममाभाग्य नलानिश्चयात् यथा दैवाभावो दृश्यते अनेन हेतुना प्रकारेण वा सोऽतिधदान्य कल्पद्रुमोऽपि खलु निश्चितं मया नल याच्यमान १न मा प्रति बद्धमुष्टिरतिकार्पण्यमङ्कुचत्करो भवतीत्यह मन्ये । किंभूत. । सङ्कोच.एव संज्वर. सन्तापो येषां एवंविधानि दलानि किसलयान्येव अङ्गुलयो येषामेवम्भूताः पल्लवा एवाग्रपाणय हस्ताग्राणि यस्यैवम्भूत । अनेन एवम्भूतो भवन् । अन्यस्यापि बद्धमुष्टेरङ्गुलयः सङ्कुचिता भवन्ति । कल्पितदानशीलोऽपि मदभाग्यवशान्मा प्रत्यदातैव भवेदिति भावः । अदातृत्वनिश्चयात् भवन्तीति वर्तमानप्रत्ययः ॥५१॥

दैव्याः करे वरणमाल्यमथार्पये वा यो वीरसेनिरिह तत्र निवेशयेति । सैषा मया मखभुजां द्विषती कृता स्यात् स्वस्मै तृणाय तु विहन्मि न वन्धुरतम् ॥ ५२ ॥

दैव्या इति । अथवा इह स्वयम्वरे वतेषु पञ्चसु मध्ये यो यो वीरसेनिः सत्यनलः तस्य तावत्सामापि अतस्मपिता माला निवेशय गि

त्क्षिपेत्युक्त्वा देव्या सरस्वत्या करे वरणमाल्य वरणमधूकमाला अर्पये ददामीति सम्भावना । स्वपक्षेवैतद्दूषयति । एवं क्रियमाणे सैषा देवी या मखभुजां देवानामिन्द्रादीनां द्विषती वैरिणी रुष्टा स्यात् । तन्मान्यामप्रकटनादित्यर्थः । भवतु नाम सा तद्वैरिणी स्वकार्यसिद्धिस्तु साध्येत्यत आह । तु पुनः तृणाय तृणतुल्यायातिनिःसाराय स्वस्मै स्वरूपाय अकिञ्चित्करात्मकार्यसिद्धये वस्तुतः सुहृन्मध्येऽतिश्रेष्ठा देवीं न विहन्मि । मम यत्न क्रिया भवतु परन्तु देवद्वेषरूपं मित्रविघातं न करोमीत्यर्थः । अन्योऽपि तृणार्थं सुहृदं रत्नं न विनाशयति । द्विषती । द्विषोऽमित्रे ( पा० ३ । २ । १३१ ) इति शतरि, उगितश्चेति ङीप् ( पा० ४ । १ । ६ ) । मखभुजां । द्विषः शतुर्वेति ( पा० २ । ३ । ६९ ) षष्ठी ॥५२॥

यः स्यादमीषु परमार्थनलः स मालामङ्गीकरोतु वरणाय ममेति चैतां । तां प्रापयामि यदि तत्र विसृज्य लज्जां कुर्वे कथं जगति शृण्वति ही विडम्बः ॥ ५३ ॥

य इति । अमीषु पञ्चसु भवत्सु मध्ये यः परमार्थनलः सत्यनलः स्यात् स मम वरणाय मालामङ्गीकरोतु इत्येवंप्रकारेण इत्युक्त्वा चेति या माला तत्र तेषु मध्ये सत्यनलं प्रापयामि तत्पुनर्लज्जां विसृज्य कथं कुर्वे अपि त्वेव कर्तुमयुक्तं । यतः जगति सर्वस्मिन् सभाजने शृण्वति सति ही कष्टं विडम्बः । लज्जात्यागादतिपरिहासो भविष्यतीति भावः । सर्वेषां समक्षमेववचने लज्जात्यागात् सर्वेऽप्युपहसिष्यन्तीत्यर्थः । हीति खेदे । हि यस्मादर्थे ह खेदे इति वा । इति चेति समुदायप्रकारे । यदि चेति वा ॥ ५३ ॥

इतरनलतुलाभागेषु शापः सुधाभिः स्नपयति मम चेतो नैषधः कस्य हेतोः । प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये विलसति चरमोऽनुप्रासभासां विलासः ॥ ५४ ॥

इतरेति । इतरैश्चतुर्भिर्नलैस्तुल्यां साम्यं भजत इति भावः एषु शेषः पञ्चसु मध्ये अन्त्यः पञ्चमो नैषधः मम चेतः कस्य हेतोः केन कारणेन सुधाभिरमृतैः स्नपयति आप्लुतमिव करोति । रूपसाम्ये सत्यप्येष एव मम मनसे यतो रोचते तस्मादयमेव सत्यनलो भविष्यतीत्याशयः । सत्यनलस्त्वद्य,पक्ष निरुपाधिकपरमप्रेमसत्त्वाद्दृष्टान्तेनान्यथा कथयति । प्रथमेति । वाऽथ वा युक्तमेतत् प्रथमचरमयोरादिमान्त्ययोः शब्दयोर्वर्णैरक्षरैः मध्ये मैत्र्यां सत्यामपि चरमे, पाश्चात्ये शब्दे अनुप्रासभासां छेकानुप्रासवृत्त्यनुप्रासलाटानुप्रासाख्यशब्दालङ्कारकान्तीनां विलास उल्लासचमत्कारो विशेषेण शोभते । वर्णसाम्ये सत्यपि प्रथमस्यानायासगतत्वाद् द्वितीयस्य तु सदृशस्य पश्चाद्भूरिप्रयत्नसाध्यत्वाच्चरमे यद्यप्यनुप्रासत्वं स्फुरति तथापि द्वितीयसाहित्ये प्रथमेऽपि यथानुप्रासत्वमस्ति तथा सुन्दरान्तरविच्छेदेन पश्चादवलोक्यमानतयैव पञ्चमश्चेतसे रोचते तेन स्वत्र सत्यत्वं प्रयोजकं स्यात् सर्वेऽपि तुल्या एवेति भावः । अत्रायमेव श्लोको दृष्टान्तः । अत्र तयोरेव प्रथमचरमशब्दयोर्वर्णसाम्ये सत्यपि चरमे चरमशब्द एवानुप्रासातिशयो न प्रथमशब्दे । प्रथम इत्युक्ते नानुप्रासः । प्रथमचरमयोरित्युक्ते तु चरम एवानुप्रासातिशयो दृश्यते । न तथा प्रथम इत्यर्थं इति वा । यद्वा आद्यपादचतुर्थपादयोर्वर्णसाम्ये सत्यपि चरमे चतुर्थपादेऽनुप्रासभासां विलासो विलसति । तत्रयोरनुप्रासत्वे सत्यपि चतुर्थेऽनुप्रासभासां विलास इत्युक्तेस्तत्रैवानुप्रासत्वं न [illegible] प्रथमे । स्नपयतीति । मित्त्वपक्षे ह्रस्वः । कस्य हेतोः । षष्ठी हेतुप्रयोगे इति ( पा० २ । ३ । २६ ) षष्ठी ॥ ५४ ॥

इति मनसि विकल्पानुद्यतः सन्त्यजन्ती क्वचिदपि दमयन्ती निर्णयं नाससाद । मुखमथ परितापास्कन्दितानन्दमस्यामिह रविरचितावस्कन्दमिन्दुं निनिन्द ॥ ५५ ॥

इमीति । इति उक्तप्रकारेण मनसि उद्यतः सम्पद्यमानान् विकल्पान् अनेकशङ्कावलम्बनयोधान् दोषोद्भावनेन त्याजन्ती क्वचिदपि प-

के निर्णय निश्चय नाससाद । पञ्चसु मध्ये कस्मिन्नपि पुंसि नलनिश्चय न प्रापेति वा । अथ पश्चान्नलनिश्चयाभावात् परितापेनास्कन्दितो ऽभिभूत आनन्दो यस्य । परितापेन कृत्वा ऽस्कन्दितोऽप्राप्त आनन्दो येनैवम्भूत वाऽस्या मुखं कर्तृ मिहिरेण सूर्येण रचित अपरकान्द. पराभवो यस्यैवविध इन्दु मिनिन्द निष्प्रभदिनचन्द्रसदृशमभूदित्यर्थं । आस्कन्दनमास्कन्दः पराभवः परितापेन च आस्कन्द स सञ्जातो यस्यैवविधो आनन्दो यस्येति । तदस्येति ( पा० ५ । २ । ३६ ) तारकादित्वादितचा सिद्धिः ॥ ५५ ॥

श्रीहर्ष कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ॥ स्वादूत्पादभृति त्रयोदशतयाऽऽदेश्यस्तदीये महाकाव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ५६ ॥

श्रीहर्षमिति । अर्ध पूर्ववत् ॥ स्वादूत्पादभृति सहृदयहृदयाह्लाददायित्वात् स्वादुरसोत्पत्तिधारके ऽत्यन्तमधुरसवार्थसहिते त्रयोदशसंख्यया आदेश्योऽभिधया सर्गो स्वभावेनोज्ज्वल अरमत् समाप्त इत्यर्थ अरमत् । व्याङ्परिभ्यो रमः ( पा० १ । ३ । ८३ ) इति परस्मैपदम् ॥ ५६ ॥ इति श्रीमदर्ककरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे त्रयोदश सर्गः ॥ १३ ॥

इति त्रयोदशः सर्गः ।

# उत्तरनैषधचरिते ।

—o—

चतुर्दशः सर्गः ।

अथाधिगन्तुं निषधेश्वरं सा प्रसादनामाद्रियतामराणाम् । यतः सुराणां सुरभिर्नृणान्तु सा वै धसाऽसृज्यत कामधेनुः ॥ १ ॥

अथेति । अथ विकल्पदूषणानन्तर सा भैमी निषधेश्वर नलमधिगन्तु निश्चेतु प्राप्तुं षोडशोपचारैरमराणां प्रसादना परितोषणमाद्रियतादरेण चकार । यतः वेधसा सुराणां कामधेनुरभिलाषप्रसू सुरभिर्गौरसृज्यत सृष्टा । नृणां तु पुन कामप्रसू. सा देवप्रसादना सृष्टा । तस्मान्नलनिश्चयार्थं प्राप्त्यर्थंञ्च देवपरितोषण चकारेति युक्तमित्यर्थः ॥१॥

अथाधिगन्तुं निषधेशमेषा प्रसादनं दानवशात्रवाणाम् । अचेष्टतासौ महतीष्टसिद्धिराराधनादेव हि देवतानाम् ॥ २ ॥

अथेति । सेवक॰ । अचेष्टत अकुरुत । शत्रव एव शात्रवाः प्रज्ञादित्वात् स्वार्थेऽण् ॥ २ ॥

प्रदक्षिणप्रक्रमणाञ्चवाञ्चविलेपधूपाचरणाच्चुसेकैः । इष्टञ्च मिष्टञ्च फलं सुवाना देया हि कल्पद्रुमकाननं नः ॥ ३ ॥

पूर्वोक्तार्थसमर्थनार्थमर्थान्तरन्यासमाह । प्रदक्षिणेति । हि यस्माद् देवा नोऽस्माकं मनुष्याणां कल्पद्रुमकाननं यदयः कल्पवृक्षा एवेति क

वेहक्ति । किंभूता देवा । प्रदक्षिणारूप प्रक्रमणञ्च वलयाकारं परिभ्रमण तदेवालवाल वृक्षमूले जलधारणार्थं वलयाकार सेतुः स च विलेपश्चन्दनादिलेपश्च धूपोदगाद्यादि तेषामाचरणानि करणानि त-न्येवाम्बुसेका प्रदक्षिणाद्याचरणञ्च उदकस्नपनानि च तैर्वा कृत्वा इष्ट मभिलषितञ्च मिष्टश्च स्वभावसुन्दर सुस्वादु च फल मनोरथरूपमाम्रादिकञ्च सुवाना सम्पादयन्त । यथा अपि आलवालवृक्षायुर्वेदोक्ततरु दापनाशकगिविहिङ्गादिलेपदाहदधूपाम्बुसेकैरिष्ट मिष्टञ्च फल सूवत । आवरणमिति पाठे अङ्गमरणङ्गदवतापूजा कण्टकादिवतिर्यति व्याख्येय ॥ ३ ॥

श्रद्धामयीभूय सुपर्वणस्तान् ननाम नामग्रहणाग्रक सा । सुरेषु हि श्रद्धवतां नमस्या सर्वार्थसिद्धाङ्गमिथ.समस्या ॥ ४ ॥

पूजाप्रारम्भार्थं प्रथम नमस्कारमाह । श्रद्धेति ॥ सा श्रद्धामयीभूय आस्तिक्यप्रचुरा भूत्वा तान्सलरिणधारिण सुपर्वणा देवान नामग्रहणाग्रक इन्द्राय नम इत्यादिनामग्रहणपूर्वक मन स ववन्दे । हि यस्मात सुरेषु श्रद्धावता नमस्या नमस्कार एव सर्वार्थ सहर्थान्यङ्गानि तेषां मिथ समस्या परस्परपूरणहेतु । श्रद्धापूर्वं देवनमस्कार एव कारणसामग्रीसम्पादक । तस्माद्देव नमस्कृतवतीत्यर्थ । समस्या यथा पदानां परिपूरण करोति तथा नमस्या वाञ्छ पूरण करोतीति भाव । श्रद्धामयी । प्रकृतवचने मयट । अग्रक । शेषाद्विभाषेति क (पा० ५।४।१५४।) नमस्करण नमस्या । नमो वरिव इति क्यच् (पा० ३।१।१९।) ॥ ४ ॥

यतान् निजे सा हृदि भावनाया बलेन साक्षादकृताखिलस्थान् । अभूदभीष्टप्रतिभूस्तदस्या वर हि दृष्टा ददते परन्त ॥ ५ ॥

देवपूजाङ्ग ध्यान प्रथममाह । यदिति ॥ साऽखिलस्थान सुस्वर्गतांस्तानिन्द्रादीन् भावनया ध्यानस्य बलेन सामर्थ्येन् निज हृदि यस्मा-

साद्रुत प्रत्यक्षीचकार । सर्वगतानपि ध्यानबलेनैकत्रानीय दर्शय-
यं । स साक्षात्कार यत्र तस्या भैम्या अभीष्टस्य नलप्राप्तिलक्षणस्य प्र-
तिभू दानविषयकर्त्ता नूनं । हि यस्मात् दृष्टास्ते देवाः वर श्रेष्ठं वरम-
भीष्टं परिणेतारञ्च ददते प्रयच्छन्ति । न हि देवदर्शनं निष्फलं भव-
तीत्यर्थः ॥ ५ ॥

हृत्पद्मसद्मन्यधिवास्य बुद्ध्या दध्यौ वधैतानियतानां । मैसुपर्वणां हि स्फुटभावना या सा पूर्वरूपं फलभावनायाः ॥ ६ ॥

पूजानन्तरं पुनरपि ध्यानमाह । हृदिति । अथ पूजानन्तरं नियतेन
कतानाऽनन्यवृत्तिस्तत्परा सती हृदेव पद्मं तद्रूपे सद्मनि गृहे एता-
निन्द्रादीन् बुद्ध्याऽधिवास्याधिष्ठाप्य दध्यौ सर्वगतानामपि देवानां
हृदये बुद्ध्या समारोपितं रूपं ध्यानेन साक्षादकरोदिति यावत् । हि य-
स्मात् सुपर्वणां देवानां या स्फुटा भावना ध्यानबलेन प्रत्यक्षता सा
फलभावनायाः कार्यसिद्धेः पूर्वरूपं प्रथमं स्वरूपं । कारणस्य कार्या-
पेक्षया नियतप्राग्भावित्वाद्देवानां प्रत्यक्षतायाः कार्यमात्रं प्रति कारण
त्वात् कारणसामग्रीरूपा देवप्रत्यक्षता ध्यानेनाकृतेत्यर्थः । पूजायाः पू
र्वमनन्तरञ्च ध्यानस्य दृष्टत्वात् अत्रानित्यसमासस्य च शेषस्य न पौनरु-
क्त्यं । तथान्यध्याहृत्य इत्यत्र (पा० १ । ४ । ४८) अपयन्तस्य वशेऽर्थेऽह
णात् स्यवसादनं मुनिमानसे इति च यथन्तस्य वशे प्रकृत्यन्तरत्वात्
हृत्पद्मनीत्याधारस्य न कर्मत्वं ॥ ६ ॥

समाजनं तत्र ससर्ज तेषां समाजने पश्यति विस्मिते सा । आमुष्मते यत्सुमनोभिरेवं फलस्य सिद्धौ सुमनोभिरेव ॥ ७ ॥

इदानीं देवपूजामाह । समाजनमिति । सा तत्र स्वयम्वरस्थाने अ
कस्मादेव देवपूजारम्भात् अत्यादरेण च पूजनाद्विस्मिते आदरं समा-
जने सभालोके पश्यति सति तस्मादृत्य या तेषां देवानां समाजनं प्री

स्याऽऽराधनं ससर्ज चक्रे । यद्यस्मात् फलस्याभीष्टस्य सिद्धौ दाने सुमनोभिः शोभनचित्तैरेवम्भूतैरेव सद्भिः सुमनोभिर्देवैः स्वयमत्यादरपूजनेन कृत्वा आमुद्यते हृष्टैर्भूयते तस्मादेवमपूजयदित्यर्थः । एवमेवैवसत्येवेत्येवकारयोजना वा । पुष्पैरपि फलसिद्ध्यर्थमामुद्यते विकस्वरीभूयते । सभाजने । यस्य च भावेनेति (पा० २ । ३ । ३७ ।) षष्ठी चानादर इति (पा० २ । ३ । ३८) वा सप्तमी ॥ ७ ॥

वैशद्यहृद्यैर्म्रदिमाभिरामैरामोदिभिस्तानथ जातिजातैः । आनर्च गीत्यन्वितषट्पदैः सा स्तवप्रसूनस्तवकैर्नवीनैः ॥ ८ ॥

वैशद्येति । अथ सा नवीनैर्नवैः सर्वैः स्तुतिश्लोकरूपैः प्रसूनस्तवकैः पुष्पगुच्छैः स्तुतिश्लोकैः पुष्पगुच्छैश्च वा तानिन्द्रादीन् आनर्च । किंविधैः । वैशद्येन स्पष्टतया प्रसादगुणेन हृद्यैः सहृदयहृदयप्रियैः । अथ च शुभ्रत्वेन मनोज्ञैः । तथा म्रदिम्ना निष्ठुरटवर्गादिवर्णरहितश्रुतिमधुरवर्णरचनाजनितेन माधुर्येण । अथ च सौकुमार्येणाभिरामैरत एवामोदिभिर्हर्षजनकैः । अथ च सौगन्ध्यसहितैः । तथा जातैः यद्वा जात्यक्षरजनितचरणाद्यनुष्टुबादिजातैर्निष्पन्नैः । अथ च मालतीसम्भवैः । तथा आर्याविशेषरूपया गीत्या अन्विता युक्ता षट् पदाः षट्चरणाः श्लोका यत्र । अथ च गुञ्जन्मधुकरैः । वैशद्यं शब्दार्थालङ्काराणामभावदोषराहित्यं तेन मनोज्ञैर्वा । जातिः छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः । गीतिश्छन्दसि गाने चेति विश्वः । हृद्येति । हृदयस्य प्रिय (पा० ४ । ४ । ९५ ।) इति यत् हृदयस्य हृल्लेखेति (पा० ६ । ३ । ५०) हृदादेश· अभिरम्यते यैस्तैरभिरामैः । अकर्तरि च कारके (पा० ३ । ३ । १९ ।) इति चकारादसंज्ञायामपि करणे घञ् । आर्यादिलक्षणं छन्दोग्रन्थे ज्ञातव्यं । नवा कैरिति पाठे कैर्वा स्तवप्रसूनस्तवकैर्नानर्च अपि तु नानाप्रकारैः स्तवप्रसूनस्तवकैश्चापूपुजदित्यर्थः ॥

भक्त्या तयैव प्रससाद तस्यास्तुष्टः स्वयं देव.

चतुष्टयं तत् । स्वेनानलस्य स्फुटतां यियासोः
फूत्कृत्यपेक्षा कियती खलु स्यात् ॥ ९ ॥

भक्त्येति । तस्याः पातिव्रत्यादिगुणैरादावेव भक्तिनिरपेक्षं स्वयमात्मनैव तुष्टं तदिन्द्रादिदेवचतुष्टयं, तस्यास्तयैवाल्पीयस्यापि भक्त्या पुनः प्रससाद प्रसन्नमभूत् । अल्पीयस्यापि भक्त्या प्रसन्नतायां दृष्टान्तमाह । खलु यस्मात् स्वेनात्मनैव स्फुटतां प्राकट्यं यियासोर्यातुमिच्छतः लब्धबहुसन्धुक्षणतया आसन्नप्रज्वलनस्यानलस्य वह्नेः कियती सन्धुक्षणार्थं फूत्कृतेर्मुखपवनस्यापेक्षा स्यात् भवेत् अपि त्वल्पैव । तादृशोऽग्निर्ह्रस्वैरेव फूत्कारैः सन्धुक्षितो दीप्यमानतरामित्यर्थः । तस्मात् स्वतः प्रसन्नस्याल्पयापि भक्त्या पुनः प्रसन्नत्वं युक्तमित्यर्थः । तस्याश्चरित्राद्य ते पवित्रात् प्रागेव हृष्टा झटिति प्रसेदुरित्यपि पाठः स्पष्टार्थः ॥ ९ ॥

प्रसादमासाद्य सुरैः कृतं सा सस्मार सारस्वतसूक्तिसृष्टेः । देवा हि नान्यद्वितरन्ति किन्तु प्रसद्य ते साधुधियं ददन्ते ॥ १० ॥

प्रसादफलमाह । प्रसादमिति । सा भैमी सुरैः कृतं प्रसादमासाद्य सरस्वत्या इमाः सारस्वत्यस्ताश्च ताः सूक्तयश्च शोभनोक्तयः श्लेषवाक्यानि तासां सृष्टेर्निर्माणस्य रचना इत्यर्थः सस्मार । श्लेषार्थे सन्देहं परिपद्य गाथाक्रमेणेन्द्रादींश्चतुरोऽपि ज्ञात्वा पञ्चमो नल इत्यज्ञानादित्यर्थः । देवीवचनसारस्वरूपं का नाम प्रसाद इत्यत आह ॥ हि यस्मात् देवा अन्यत्किञ्चिन्न वितरन्ति ददति किन्तु ते देवाः प्रसन्ना भूत्वा साध्वीं कार्यसाधिकां धियं बुद्धिमेव ददन्ते । तदुक्तं महाभारते ॥

"न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यन्तु रक्षितुमिच्छन्ति बुद्ध्या योजयन्ति तमिति ।"

तस्मादयमेव प्रसादो युक्त इत्यर्थः । सृष्टेः । अधीगर्थेति (पा० २ । ३ । ५२ ।) कर्मणि षष्ठी । ददन्ते । दद दाने इत्यस्यरूपं ॥ १० ॥

शेषं नलं प्रत्यमरेण गाथा या या समाया ख

लु येन येन । तां तां तदन्येन सहालगन्तीं
ततो विशेषं प्रतिसन्दधे सा ॥ ११ ॥

स्मरणमेव विशदयति । शेषमिति ॥ शेषं पञ्चमं सत्यनलं प्रति ल-
क्षीकृत्य ब्रूमः । किमित्यादिराकर्णयेति यावत् । एष इत्यादि साधार-
णीमिति यावत् । इयङ्गमित्यादिर्गुम्फमिति यावत् । या सद्यंत इत्या-
दि शङ्केति यावत् । या या गाथा प्रमादात् पूर्व्वं येन येनेन्द्रादिदे-
वेन सह समार्थां तुल्यार्थां सरस्वत्योक्तेति शेषः । सा भैमी ता ता
ब्रूम इत्यादिगाथा तत प्रमादानन्तरं तदन्येन तस्मात्तस्मादिन्द्रादि-
रूपान्नल्याद्यन्येन शेषगत्या प्रतिभासमानेन नलरूपेणार्थेन सह
खलु निश्चितमलगन्तीमसम्बद्धार्थां विशेषं प्रति स्वस्वाकारधारणात्
भिन्नमिन्द्रादिदेव प्रतिसन्दधे योजयामास । इयमेतस्य गाथेयमेतस्य
गाथेति सम्बन्ध चकारेत्यर्थः । ब्रूम इत्यादौ वाला विलोक्येति यावत् ।
नलस्य सदर्गामसृततत्त्वादिन्द्रादीनान्तु चतसृषु चतसृष्वेव स्वस्वगाथासु
अनुकूलत्वात् तामिन्द्रादिगाथा तदन्येन वदन्यादिना सहालगन्तीं
विशेषमजानात् । येन्द्रेण नलेन वाच्यमानार्थां तामिन्द्रविषयामेव स-
स्मार ॥ एवमितरदेवत्रितयेऽपि प्रत्येकगाथामेकविषयामेव सस्मार ।
एवं चतसृष्वपि गाथासु नलस्यानुवर्तरिन्द्रादीनाञ्च व्यावृत्तेरर्थापो-
द्वापाभ्यामेते देवा अयमेव नल इत्यज्ञासीदित्याशय इति वा । प्रति-
श्लोक गाथास्वेऽपि चतुर्भिश्चतुर्भिः श्लोकैरेकैकस्य प्रतिपादनादेकगाथा-
त्वमनारोपात्प्रत्येकपद्यं समानाद्वैकवचन । यद्वा पञ्चम नलं प्रति या या,
सत्याजि, येनामुना यद्वहिमा किलं तथेत्यादिका, गाथा येन येने-
न्द्रादिना सह सम्बद्धार्था तदन्येन वहन्यादिना सहालगन्ती ता ता
गाथमेव विशेष भेदं जानाति स्म । एकैकाया गाथाया एकैकदेवप-
र्य्यवसानाच्चतसृणामपि गाथानां नले पर्य्यवसानात्परिशेषप्रमाणादयं
पञ्चम एव नल इति निश्चयमज्ञासीदित्यर्थः । अस्मिन् पक्षेऽमुमेव
येनुक्तिविशेषेण प्रकटयितुमाह । एकैकेति । उत्तरश्लोकस्यावतारिका
कर्त्तव्या ॥ ११ ॥

एकैकवृत्तेः प्रतिलोकपालं पतिव्रतात्वं जगृहु

दिशां या: । वेद स्म गाथा मिलितास्तदासौ वाञ्छा इवैकस्य नलस्य वश्याः ॥ १२ ॥

एकैकेति । या गाथा एकैकशः एकस्मिन्नेकस्मिन्निन्द्रे ऽग्नौ यमे वरुणे च वर्तमानत्वात् प्रतिलोकपालमेकैकमिन्द्रादिदिक्पालं प्रति दि-शामैन्द्र्यादीनां पतिव्रतात्वं जगृहुरङ्गीचक्रुः । प्राच्यादीनामिन्द्रादिप्रति नियतदेवशक्तितया यत् पातिव्रत्यं तत्पातिव्रत्यं तेनैवाकारेण या धन्या धीत्यादि गाथा अङ्गीचक्रुरित्यर्थः । ता गाथा मिलिताश्चतस्रोऽपि तदा प्रमादादनन्तरं प्रसादैकस्य केवलस्य नलस्य वश्यां नलैकप्रवणा नलैकाभिधायिनीरेव वेद स्माऽज्ञासीत् । का इव आशा इव । मिलिता दिशो यथा नलस्य वश्या ऐन्द्र्यादीनां दिशामिन्द्राद्येकैकप्रवणत्वेऽपि सर्वासां दिशां चक्रवर्तिनलैकवश्यत्वं यथा तथा गाथानामपीत्यर्थः । आशा अर्थिता मनोरथा वदान्यतया नलस्य यथा वश्या इति वा । दाशा इति वा पाठः । भ्रान्तिदशायामुभयार्थत्वं प्रसादानन्तरं तु नलैकार्थत्वं वेद स्मेति भावः । दिशां पातिव्रत्यं गाथाभिर्गृहीतमित्यर्थः १२

या पाशिनैवाग्निपाणिनैव गाथा यमेनैव सहाग्निनैव । तामेव मेने मिलितां नलस्य सैषा विशेषाय तदा नलस्य ॥ १३ ॥

येति । किं च याद्यायां गाथा पाशिनैव वरुणेनैव समा तुल्यार्था न त्वन्येनेन्द्रादिना । या चाऽस्याजीत्यादिरशनिपाणिनेन्द्रेणैव समा न त्वन्येन देवेन । या च यद्वृगिदमेत्यादिर्यमेनैव समा न त्वन्येन । या च येनामुनेत्यादिरग्निनैव तुल्या न त्वन्येन । नलस्य सम्बन्धिनी मिलिता समुदिता चतुष्टयरूपा ता गाथामेव तदा देवप्रसादादनन्तरं सैषा भैमी नलस्य विशेषाय इन्द्रादिभ्यो भेदज्ञानाय मेने । इन्द्रादीनामेकैकस्यामेव गाथाया वर्तमानत्वात् । नलस्य तु सर्वत्रानुगतत्वादस्याजी त्यादिगाथाचतुष्टयप्रतिपाद्यो यः स एव नल इति तामेव गाथां मिलितां नलस्य भेदज्ञापिकामज्ञासीदिति भावः । या नलस्य गाथेति वा सम्बन्धः । या पाशिनैवेन्द्रेणैव यमेनैवाग्निनैव समा गाथा नलस्य

सम्बन्धिनीं मिलिता तामेव अनलस्य नलव्यतिरिक्तस्येन्द्रादेर्भेदाय मेने। मिलितया तया कृत्वा नले निश्चिते सति नान्तरीयकत्वादितरे देवा अपि तथैव निश्चिता इति भाव इति वा। मिलिता तामेव गाथा नलस्य विशेषाय तथा नलेतरस्येन्द्रादेर्भेदाय मेने इति वा व्याख्येयम्। सा पाणिनेत्यादेरेवकारात परस्परसमुच्चयार्थोनप्यर्थानङ्गीकृत्य वा नल-सम्बन्धिनी गाथा पाणिनापीन्द्रं वापि यमेनाप्यग्निनापि तुल्यार्थाऽभूत् देव पतिरित्यादिमिलिता पञ्चार्थी गाथा देवप्रसादादनन्तरं नलस्यैव विशेषाय मेने। प्रसक्तैर्देवैः स्वीयस्वीयाकारेषु धृतेषु पूर्वं पञ्चार्थत्वं न प्रतिभातमधोदानीमेकस्य नलस्यैव प्रतिपादिकाभवत्सेदिति भावः। देव पतिरितीयमेव गाथा विषय इति शेषः। अवधारणार्थैष्वप्येवकारेषु इयमेव गाथा विषय इति व्याख्येयम्। अथ श्लोक निश्चित्य अथ एकैक-त्वेरिति द्वाभ्यां श्लोकाभ्यां समानार्थं। अनलस्येति। प्रत्येकपर्यायेण सा मित्यादेकवचनं ॥ १३ ॥

**निश्चित्य चैनं तमसौ नरेशं प्रमोदमेदस्वितरा न्तराऽभूत्। देव्या गिरां भावितभङ्गिराख्य च्चित्तेन चिन्तार्णवयादसेदम् ॥ १४ ॥**

निश्चित्येति। असौ भैमी शेषमवशिष्टं तं पञ्चमं पूर्वोक्तप्रकारेण नरेशं नलं निश्चित्य प्रमोदेन प्रकृष्टहर्षेण मेदस्वितरमत्यन्तपरिपुष्ट मान्तरं मानसं यस्याः एवंविधाऽभूत्। नले निश्चिते सति नितरां हृष्टाऽभूदित्यर्थः। रतया सावर्ण्यात् मरशासावीशय न इति वा। अनन्तरञ्च देव्याः सरस्वत्या गिरां वचनानां भाविता पर्यालोचिता भङ्गिः प्रकारो यया विद्यमानया गिरा देव्याः सरस्वत्या वा विज्ञात-वचनरचनाविशेषा सती नलनिश्चयात् पूर्वं चिन्तार्णवयादसा चिन्तास-मुद्रजलजन्तुरूपेण नलनिश्चये सत्यपि तत्प्राप्त्युपायचिन्तासमुद्रजलच-रेण वा चित्तेन मनसा इदं वक्ष्यमाणप्रकारं आख्यत् ऊचे। मनस्येवै वमचिन्तयदिति भावः। चित्रार्णवेति पाठे विचित्रदेवीवचनानुस्मरण जनिताश्चर्यसमुद्रजलचरेणेति साहश्यैवेयम् ॥ १४ ॥

**सा भङ्गिरस्याः खलु वाचि कापि यद्भारती मूर्त्तिमतीयमेव । श्लिष्टं निगद्याद्भुतवासवादीन् विशिष्य मे नैषधमप्यवादीत् ॥ १५ ॥**

किमाश्चर्यमित्याह । सेति । खलु निश्चितं सा प्रसिद्धा मूर्त्तिमती भारती सरस्वती देवी, इयमेवेयं मूर्त्तिमती सा भारत्येवेति भारतीत्व विधेयं । यद्यस्मादस्या वाचि काऽपि लोकोत्तरा भङ्गिः रचनाऽस्ति तस्मादित्यर्थः । यस्मादियमेव मूर्त्तिमती भारती तस्मादस्या वचने निश्चितं सा कापि भङ्गिरस्तीति वा । तामेव भङ्गीमाह । यत् श्लिष्टमुभयसम्बद्धं वचो निगद्य स्पष्टमुक्त्वा वासवादीनाद्भुतगौरवेणावर्ण्य यत् । विशिष्य विशेषं कृत्वा तेभ्यो विशिष्य वा यदस्या जीत्यादिश्लोकचतुष्टये न मे मम मह्यं वा नैषधमप्यवादीत् । सर्वलोकपालाशयस्य नलस्यैव वर्णनं कृतमिति युक्तमिति भावः ॥ १५ ॥

**जग्रन्थ सेयं मदनुग्रहेण वचःस्रजः स्पष्टयितुं चतस्रः । द्वे तं नलं लक्षयितुं क्षमेते ममैव मोहेऽयमहो महीयान् ॥ १६ ॥**

जग्रन्थेति । सेयं वाणी मयि मम वाऽनुग्रहेण कृपया स्पष्टयितुं नलं स्पष्टं ज्ञापयितुं याश्चतस्रोऽस्याजीत्यादीश्च स्रजा वचनमाला जग्रन्थ ससर्ज । तासु मध्ये द्वे ते वच स्रजौ नामग्राहं मया नलमुदीरितं अमुष्मिन्नले सहसा रागभरादित्येवरूपे महीमहेन्द्रे नलमुदीरितं नलं त्वयवरूप वा नलं लक्षयितुं ज्ञापयितुं क्षमेते समर्थे भवतः । अहो आश्चर्यं । ममैवायमेतावन्तं कालं महीयान्मोहः अबोधः । नले स्पष्टं कथितेऽपि एतावन्तं कालं मम निश्चयो नाभूदित्याश्चर्यमित्यर्थः । पूर्वोक्ता याश्चतस्रो वचःस्रजः स्पष्टयितुं तदर्थं स्पष्टीकर्तुं ये द्वे ते वचःस्रजौ, स्व पातिनी, देवः पतिरित्येवरूपं सेयं देवी जग्रन्थ, ते द्वे वचःस्रजौ नलं लक्षयितुं क्षमे समर्थे । स्व पातिनीत्यनेन प्रथमव्याख्याने स्फुटं नलस्यैव प्रतिपादनात् व्याख्यानान्तरेऽपि च देवान् परितोष्य [illegible] वा मम त्वय स्वीकरणीय इति यावदर्थं नलस्यैव प्रतिपादना

इव पतिरित्यनेनापि लोकपालानामत्वादेकस्यापि नलस्येव पञ्चरूपत्व-सम्भवादिन्द्रादेशमम्भवान्नलादन्यस्तव कतरो वरोऽपि त्वन्या वस्तो-त्वपि नलस्यैव प्रतिपादनादित्यर्थं इति वा । अत्र पूर्वं स्तच्छब्दो वि-शेष्य एव स्वपरामर्शार्थं । उत्तरस्तु तत्परामर्शकोऽपि विधेयस्पर्शी। यत्तदोर नित्यसम्बन्धात यच्छब्द सम्बध्यते । अन्धि ग्रन्थि दन्भि स्वञ्जीनामिति वक्तव्यमिति (पा० १ । २ । ६ । वा० १) ग्रन्थमपि लिट कित्वविधानाज्जग्रन्थे इति रूप । संयोग स्परस्य लिटो वा कित्व-मिति केचिद्विति ग्रन्थिपि लिट कित्वविधानाद्वा नलोपाभाव समर्थ-नीय । युक्त्यन्तरेण वा समाधातव्य ॥ १६ ॥

श्लिष्यन्ति वाचो यदमूरमुष्याः कवित्वशक्तेः
खलु ते विलासाः । भूपाललीलाः किल लोक
पालाः समाविशन्ति व्यतिभेदिनोऽपि ॥ १७ ॥

श्लिष्यन्तीति । अमुष्या देव्या अम पूर्वोक्ता याच यदनेकार्थतया श्लिष्यन्ति श्लेष भजन्ते खलु निश्चित कवित्वशक्ते काव्यनिर्माणसह जप्रतिभाया विलासा विजृम्भणानि । कवित्वश क्ति विना श्लेषरचोर चना निर्मातुमशक्य इत्यर्थं । किल यस्माद्व्यतिभेदिनोऽपि परस्परापे-क्षया नलापेक्षया वा विशेषेण सहस्रनेत्रत्वादिना व्यतिरेक भिन्ना अ-प्यमी लोकपाला भूपालस्य नलस्य लीला विलास समाविशन्ति अनु भवन्ति नलाकार बिभ्रति । अथ च नलवाचकेषु श्लोकेषु मूर्तिरूप प्र-विष्टा इव दृश्यन्त इत्यर्थ । अत श्लेषवशान्मम भ्रमोऽभूदिति भाव श्लेषवशान्नललीला सन्तो लोकपाला माया समाविशन्तीति वा । अन्यान्य भिन्ना अपि लोकपाला नललीला सन्तोऽद्येन नृपत्व प्राप्ता मन्त किलैकीभवन्ति । अतो नलस्यैव लोकपालात्मतया तत्र युक्ता ते देवीवचासि श्लेष वदन्तीति कवित्वशक्तिविलासा एव ॥ १७ ॥

त्यागं महेन्द्रादिचतुष्टयस्य किमभ्यनन्दत् क्रम
सूचितस्य । किं प्रेरयामास नले च तन्मां का
सूक्तिरस्या मम कः प्रमोहः ॥ १८ ॥

त्यागमिति । इय देवी अत्याजि येनेत्यादिश्लोकचतुष्टयेन स्व यार्थितो, देव पतिरित्यादिना गाथाद्वयेनापि क्रमेण सूचितस्य प्रत्या यितस्येन्द्रादिनलचतुष्टयस्य पूर्वं व्याख्यानप्रकारेण परित्यागं किं कथम भ्यनन्दत् युक्तमेतदिति स्तौति स्मेत्यर्थः । नलो मां पूर्वव्याख्यानप्र- कारेण प्रेरयामास च । किं कथ प्रेरयामास एकेनैव वाक्येन द्वयमिति कथचकाराश्चर्यमेतदित्यर्थः । किं शब्दायमाश्चर्ये । नलो च नल एवेति। चकारोऽवधारणार्थो वा । तत्सत्कारणादस्या देव्याः का सूक्तिः श्रोत्रवचननिर्म्माणचातुरी अपि तु लोकोत्तरा । मम प्रकृष्टो मोहश्च कः अपि तु सोऽपि लोकोत्तर । अस्या इयमुक्ति क्व मम मोहश्च क्वेत्यर्थः । एव देव्या इन्द्रादिचतुष्टयस्य स्पष्टं परित्यागेऽप्यनुज्ञाते नल स्य च वरणेऽप्यनुज्ञाते ममैवं मोहो न युक्त इत्यर्थः । पूर्वं मोहोऽभू दिदानी तु निवृत्त इत्याशयः । इन्द्रादित्याग किमर्थमभ्यनन्दत् नलो च मां किमर्थं प्रेरयामास उभयमपि तावच्चकार । तदेतन्मदनुग्रहार्थं मेवेति भाव इति वा । त्यागं । चजोः कुघिण्यतोः ७ । ३ । ५२ । इति कुत्वं ॥ १८ ॥

**परस्य दारान् खलु मन्यमानैरस्पृश्यमानाममरै धरित्रीम् । भक्त्येव भर्त्तुश्चरणौ दधानां नलस्य तत्कालमपश्यदेषा ॥ १९ ॥**

एवं विचारानन्तरं किमभूदित्याह । परस्येति ॥ एषा भैमी तत्काल देवप्रसादसमये एवम्भूता धरित्रीं पृथ्वीं अपश्यात् । किम्भूता । परस्य नलस्य दारान् मन्यमानैरिव परनारीस्पर्शभीरुभिरमरैरिन्द्रादिभिरस्पृश्यमानां । खलु इवार्थे । तथा भूपतित्वाद्भर्त्तुर्नलस्य भक्त्येव सेवाबुद्ध्येव च रणौ दधानां धारयन्तीं । अन्यापि भक्त्या भर्त्तुश्चरणौ धारयति । देव त्वात् सदृशो भूम्यस्पर्शो मनुष्यत्वात् सदृशो भूमिस्पर्शो ऽन्ययोरप्रेक्षि त. । देवमनुष्यचिह्नं दर्शितं । दारानिवेति वा पाठ ॥ १९ ॥

**सुरेषु नापश्यदवैक्षताक्ष्णोर्निमेषमुर्वीभृति स सखी सा । इह त्वमागत्य नले मिलेति सञ्ज्ञा तदानादिव आपमाणम् ॥ २० ॥**

सुरेष्विति । सा भैमी सम्मुखी सती बुद्धिपूर्वं विलोकयन्ती सुरेषु चक्षोर्निमेषं नेत्रपक्ष्मसङ्कोचं नापश्यत् नावैक्षत । वर्त्मीभूतिं नले तु अवैक्षत । देवानामनिमेषत्वात्तन्मानुषत्वाच्च सनिमेषत्वादित्यर्थः । तत्रोत्प्रेक्षते । किम्भूतं निमेषं । सञ्ज्ञानदानात् प्रकारसमूचकाक्षिपक्ष्मचेष्टाकरणात् इति भाषमाणमिव । इति किं । हे भैमि स्वमागत्य इह मया चिह्निते नले मिल सयुक्ता भवेति ॥ २० ॥

**नाबुद्ध बाला विबुधेषु तेषु क्षोदं क्षितेरङ्कितनैषधे तु । पत्ये सृजन्त्याः परिरम्भमुर्व्याः सम्भूतसम्भेदमसंशयं सा ॥ २१ ॥**

नेति । सा तेषु विबुधेषु देवेषु क्षितेः क्षोदं भूरेणुं लग्नं नाबुद्ध न ददर्श । नैषधे तु ऐक्षत ददर्श । देवानां रजःसम्बन्धाभावात् । नराणां तत्सम्बन्धादित्यर्थः । तत्र असंशयमुत्प्रेक्षते । पत्ये नलाय परिरम्भमालिङ्गनं सृजन्त्या ददत्या उर्व्याः सकाशात्सम्भूतसम्भेदमिव सञ्जातसम्बन्धमिव आलिङ्गनवशाद्भूरेणुर्नले लग्न इवेत्यर्थः । पत्ये । क्रियया यमभिप्रैति स सम्प्रदानमिति (पा० १ । ४ । ३२ । वा० १) सम्प्रदानत्वं ॥ २१ ॥

**स्वेदः स्वदेहस्य वियोगतापं निर्वापयिष्यन्निव संसिसृक्षोः । हीराङ्कुरश्चारुणि हेमनीव नले तयालोकि न दैवतेषु ॥ २२ ॥**

स्वेद इति । तया नले स्वेद आलोकि न दैवतेषु देवेषु । किं कुर्वन्निव । संसिसृक्षोर्भैम्यालिङ्गनं कर्तुमिच्छोः स्वदेहस्य नलशरीरस्य वियोगतापं भैमीवियोगजनितं ज्वरं निर्वापयिष्यन्निव शमयिष्यन्निव । देवेषु स्वेदस्याभावान्नरेषु च तत्सद्भावादित्यर्थः । उदकं हि तापं शमयति । नलालिङ्गनोत्सुकस्य भैमीदेहस्य वा सात्त्विकस्वेदयुक्तो नलो मया प्राप्त एवेति भैम्या विरहज्वरशान्तिः । उत्प्रेक्षते । चारुणि अत्युत्तमे हेमनि सुवर्णे खचितो हीराङ्कुर इव । अतिगौरदेहरोमकूपस्थस्वे-

दजलकणझलत्कारो हैमस्थवज्राङ्कुरस्तैनोत्प्रेक्षितः । देवता एव दैवतानि "प्रज्ञादिभ्यश्च" स्वार्थे ( पा० ५ । ४ । ३८ ) अण् । क्वचित् स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति ( पा० ५ । ३ । ६८ ) परिभाषया पण्ढत्वं ॥ २२ ॥

सुरेषु मालाममलामपश्यन्नले तु बाला मलिनीभवन्तीम् । इमां किमासाद्य नलोऽद्य मूर्ध्ना ग्रहीष्यते मामिति चिन्तयेव ॥ २३ ॥

सुरेष्विति । बाला भैमी सुरेषु मालां अमलां निर्मलामम्लानां चापश्यत् नले तु मलिनीभवन्तीं धूसरीभवन्तीं कालक्षेपयोग्यतया च म्लानां मलिनाञ्च जायमानां अपश्यत् । सुराणामम्लानकुसुमत्वादिलिङ्गमर्थः । उत्प्रेक्षते । इति चिन्तयेव मलिनीभवन्तीं । इति किं । नलो ऽद्य स्वयम्वरदिने मूर्ध्नी मस्तकाशाद्प्यतिमूढ्ध्नी इमां भैमीं आसाद्य प्राप्य मां मालां ग्रहीष्यते किं आदरेणाङ्गीकरिष्यति किं अपि तु नेति ॥२३॥

श्रियं भजन्तां कियदस्य देवाश्छाया नलस्यास्ति तथापि नैषाम् । इतीरयन्तीव तया निरैक्षि सा नैषधे न त्रिदशेषु तेषु ॥ २४ ॥

श्रियमिति । देवा अस्य नलस्य श्रियं शोभां कियद्भजन्तां आश्रयन्तु अपि तु न किञ्चिदपि यस्मात् एषां देवानां नलस्य सम्बन्धिनी तथा तादृशी अतिप्रसिद्धा छायापि कान्तिलेशोऽपि नास्ति येषां यदीयकान्तिलेशोऽपि नास्ति तदीयां शोभां कथमाश्रयन्तामपि तु न कथञ्चिदित्यर्थः॥ अथ च एषां नलसम्बन्धिनी आदर्शादिस्थिता छाया प्रतिबिम्बमपि नास्ति । प्रतिबिम्बतुल्यास्ते न भवन्तीति यावत् । येषां यदीयप्रतिबिम्बेनापि न साम्यं ते तदीयबिम्बश्रियं कथं भजन्तामित्यर्थः ॥ अथ चास्य श्रियं किञ्चिद्भजन्तां नटवन्नलरूपधारणात् किञ्चिच्छोभन्तां । तथापि स्वाभाविकी नलस्य कान्तिरेषां नास्ति ॥ अथ चास्य सम्पदं बहु भजन्तां तथापि नलस्य कान्तिरेषां नास्ति । सम्पदा तुल्यत्वेऽपि कान्त्या तुल्यत्वं नास्तीत्य

र्थः ॥ अथ चास्य श्रियं कियद्बहु भजन्तीं तथापि भूमौ तमःप्रकृतिः छाया देहव्यवहितरविप्रभोपलक्षित श्यामाकारो नलस्यास्ति एषां तेजोरूपत्वेन नास्ति । तेजोराहित्येन च नराणां विद्युत इत्यर्थः । तथा भैम्या इति पूर्वोक्तप्रकारेणेरयन्तीव कथयन्तीव यत्राह यत्ते स एव नल इति प्रकाशयन्तीव सा छाया नैषधे निरैक्षि दृष्टा तेषु त्रिदशेषु न । छायापि स्वाभावभावाभ्यां देवत्वनरत्वव्यञ्जिका आसीत्यर्थः । कियदिति क्रियाविशेषणं ॥ २४ ॥

चिह्नैरमीभिर्नलसंविदस्याः संवादमाप प्रथमोपजाता । सा लक्षणव्यक्तिभिरेव देवप्रसादमासादितमप्यबोधि ॥ २५ ॥

चिह्नैरिति । अस्या भैम्याः प्रथमोपजाता दूतयकालोत्पन्ना इतरनलतुलाभागिति पूर्व्वसर्गोक्ततर्कोत्पन्ना वा देवीश्लोकानुसन्धानोत्पन्ना वा अयमत्र एव नल इति संवित् बुद्धिरमीभिः पूर्व्वोक्तैर्भूस्पर्शादिभिश्चिह्नैः सवादं स एवाय नल इति अनुव्यवसायरूप आप । पूर्वं मम नलोऽयमिति प्रत्ययो युक्त एव जात इति । एतैश्चिह्नैर्निश्चितवतीत्यर्थः । अनन्तरञ्च सा भैमी देवत्वनरत्वज्ञापकानां लक्षणानां निमेषत्वभूस्पर्शादिचिह्नानां व्यक्तिभिः प्रकटनैरेवासादितं प्राप्तं देवप्रसादमप्यबोधि । एतावत्पर्य्यन्तं भूस्पर्शादिचिह्नानि न दृष्टानि इदानीन्तु दृश्यन्ते तस्मान्मम पूजया देवाः प्रसन्ना इत्यप्यज्ञासीदित्यर्थः ॥ २५ ॥

नले निधातुं वरणस्रजन्तां स्मरः स्म रामां त्वरयत्यथैनां । त्रपा तां निषिषेध तेन द्वयानुरोधं तुलितं दधौ सा ॥ २६ ॥

नले इति । अथ स्मरः तां वरणस्रजं वरणमधूकमालां नले निधातु निक्षेप्तुमेनां रामां भैमीं त्वरयति स्म शीघ्रं प्रेरयामास । अपत्रपा अत्यन्तं लज्जा च तां भैमीं निषिषेध निवारयामास । सर्व्वस्मिन् जने पश्यति सति कथमहमेन वृणे इति लज्जावशात्तस्या बुद्धिरुद्भूदित्य-

र्थः । तेन कारणेन सा भैमी द्वयानुरोध स्मरलज्जयोराज्ञा प्रवृत्तिनिवृत्तिसन्देह तुलित समानमेव दधौ । भावसन्धिवशादुत्कण्ठात्रपाभ्या मालानिक्षेपानिक्षेपदोलायिताभूदित्यर्थः । अन्योऽपि तुल्याभ्यां द्वाभ्यां विरुद्धकार्यं द्वयाय प्रेषितो द्वयोरनुरोधादौदासीन्यमेवावलम्बते । तामिति पुनरुपादान वाक्यान्तरत्वात् समर्थनीय । लिपिपेध । स्वादिष्वभ्यासेनेति ( पा० ८ । ३ । ६ ) षत्व ॥ २६ ॥

स्रजा समालिङ्गयितुं प्रियं सा रसादघत्तैव बहु प्रयत्नम् । स्तम्भत्रपाभ्यामभवत्तदीये स्पन्दस्तु मन्दोऽपि न पाणिपद्मे ॥ २७ ॥

स्रजेति । सा भैमी रसात् प्रीत्या स्रजा मधूकमालया प्रियं नलं समालिङ्गयितु बहुप्रयत्न भूयानमुद्योग अधत्तैव चकारैव । तु पुनस्तदीये पाणिपद्मे स्तम्भत्रपाभ्यां हेतुभ्यां मन्दोऽप्यल्पोऽपि स्पन्दश्चलन नाभवत् ॥ २७ ॥

तस्या हृदि व्रीडमनोभवाभ्यां दोलाविलासं समवाप्यमाने । स्थितं धृतैणाङ्ककुलातपत्रे शृङ्गारमालिङ्गदधीश्वरश्रीः ॥ २८ ॥

तस्या इति । अधीश्वरी समर्था भूपश्री अधीश्वरस्य कस्यचिद्राज्ञो वा श्रीर्लक्ष्मीस्तस्या भैम्या हृदि स्थित वर्त्तमान शृङ्गार शृङ्गाररस आलिङ्गत् । किम्भूते हृदि । व्रीडमनोभवाभ्या दोलाविलास आन्दोलजनिता क्रीडा समवाप्यमाने प्राप्यमाणे । कोटिद्वयसम्बन्धात् प्रवृत्तिनिवृत्तिसन्देह प्राप्ते इत्यर्थः । तथा एणाङ्कश्चन्द्रस्तस्य कुल कुलोत्पन्नो नल इत्यर्थः । स एवातपत्र धृत एणाङ्ककुलातपत्र येन तस्मिन् । शृङ्गाररस एव सम्राट् भैमीहृदयमेव सिंहासन नल एव छत्र लज्जाकामौ दोलाया उभयपार्श्वे आन्दोलनार्थं स्थितौ चामरधारिणौ वा । तस्या भावशबलित शृङ्गार राजवदुज्जृम्भत इति भाव । दोला दोलेव ... लिपिपेध । अधीश्वरस्य समस्य श्रीरिति वा । अत्र

पक्षे ह्रीकामाभ्यां दोलायमानां भैमीं दृष्ट्वा स्वामी नलः पूर्वं विप्रल-
म्भशृङ्गारं प्राप्तः ततः सापि तं तादृशं दृष्ट्वा तदीयशोभाङ्गीकरात्
स्वयमपि तादृशी बभूवेति भाव । आन्दोलिकाछत्रचामरैरयं प्रभुरिति
ज्ञायत इत्यर्थ । स्मितमिति पाठे एतीति विषयसप्तमी ॥ २८ ॥

**करः स्रजा सज्जतरस्तदीयः प्रियोन्मुखः सन् विरराम भूयः । प्रियाननस्यार्धपथं ययौ च प्रत्याययौ चातिचलः कटाक्षः ॥ २९ ॥**

कर इति । स्रजा सज्जतरः नितरां सज्जः कण्ठे निक्षेप्तुं उद्युक्तः कृत
मालस्तदीयः करः प्रियोन्मुखः नलसम्मुखं गन्तुं मां उद्योगः सन् भूयः
पुनर्लज्जावशाद् विरराम निवृत्तः । तदीयोऽतिचलः कटाक्षश्च प्रिया-
ननस्यार्धपथं ययौ च प्रत्याययौ च । दिदृक्षारसादर्धमार्गं गतोऽपि
लज्जावशान्मध्ये मार्गे नलकटाक्षसम्बन्धाच्च पुनः प्रत्यावृत्त इति भावः ।
अन्योन्यमिलितौ गतागतं करोति ॥ २९ ॥

**तस्याः प्रियं चित्तमुपेतुमेव प्रभूबभूवाक्षि न तु प्रयातुम् । सत्यः कृतः स्पष्टमनृतवादी तयाक्षिलज्जेति जनप्रवादः ॥ ३० ॥**

तस्या इति । तस्याश्चित्तं प्रियं उपेतुमेव प्राप्तुमेव अक्षि तु पुन
नलं प्रयातुं प्राप्तुं न प्रभूबभूव समर्थं नाभूत् । स्पष्टमुत्प्रेक्षे । अक्षि
नेत्रे लज्जेति जनप्रवादो लोकाभाणक तया तदानीं नलवरणसमये
सत्यः कृतोऽभूत । अन्यथा लज्जायाश्चित्तधर्मत्वे चित्तस्य नलप्राप्तिर-
युक्ता नेत्रस्य च नलप्राप्तिर्युक्तेत्यर्थं । प्रीत्या चित्तं नल एव वर्तते
परं लज्जावशात कटाक्षेण विलोकयितुं नाशकदिति भावः । प्रभूबभूव
स्यौ चेति ( पा० ७ । ४ । २६ । ) दीर्घं ॥ ३० ॥

**कथं कथञ्चिन्निपपौ स्वरस्य कृत्वास्यपद्मं दर वीक्षितश्रि । वाग्देवताया वदनेन्दुबिम्बत्रपावती साऽकृत सामिदृष्टं ॥ ३१ ॥**

कथमिति । सा भैमी त्रपावती निषधेश्वरस्य स्वपत्युः मुखकमलं कथं कथञ्चिन्महता कष्टेन लज्जाविगमक्रमेण दरवीक्षितमपि ईषद्विलोकितशोभं कृत्वा वाग्देवतायाः वदनेन्दुबिम्बं लज्जया सामिदृष्टमर्द्धदृष्टमकृत । किञ्चिद्दृष्ट्वा पुनर्व्यावृत्तत्वाददृष्टसकलशोभं चकारेत्यर्थः । त्रपावतीत्युभयत्र हेतुः । एतां मालां नलकण्ठे स्थापयेत्याशयेन देवीमुखमर्द्धवीक्षितं चकारेति भावः ॥ ३१ ॥

**न जानतीवेदमवोचदेनाम् आकूतमस्यास्तद्**
**वेत्य देवी । भावस्त्रपोर्मिप्रतिसीरया ते विती**
**र्यते लङ्घयितुं न मेऽपि ॥ ३२ ॥**

न जानतीति । देवी अस्या भैम्यास्तत्पूर्वश्लोकसूचितम् आकूतमाशयम् अवेत्य ज्ञात्वापि न जानतीव एनां भैमीं प्रतीदमवोचत् । इदमिति । हे भैमि त्रपोर्मिप्रतिसीरया लज्जाकल्लोलरूपजवनिकया ते तव भाव आशयः मेऽपि ममापि लङ्घयितुं सरस्वत्या अथ च विद्यास्वरूपभूताया अपि मम न वितीर्यते । तव लज्जावशादतिगूढं यत् सूचयसि तन्ममापि न ज्ञायते । ततः किञ्चिल्लज्जां त्यक्त्वा स्पष्टं कथयेति परिहासमुद्रया तामेव स्वाशयं बोधयितुमवोचदित्यर्थः । अन्यदपि जवनिकाच्छादितं न ज्ञायते । प्रदीयते लङ्घयितुं न मेऽपीति पाठे मे मह्यं । प्रतिसीरा जवनिकेत्यमरः ॥ ३२ ॥

**देव्याः श्रुतौ नेति नलार्द्धनाम्नि गृहीत एव त्र**
**पया निपीता । अथाङ्गुलीरङ्गुलिभिः स्पृशन्ती**
**दूरं शिरः सा नमयाञ्चकार ॥ ३३ ॥**

देव्या इति । देव्याः श्रुतौ कर्णे नेति नलस्यार्द्धे नाम्नि गृहीत एव भैम्या उच्चारित एव त्रपया निपीता व्याप्ता सा भैमी लेति द्वितीयमक्षरं उच्चारयितुमशक्ता सती अथानन्तरं स्वस्या अङ्गुलीः, द्वयोर्वा प्रगुणीः, स्वीयाङ्गुलीभिरेव स्पृशन्ती मृजन्ती निबिडं पीडयन्ती शिरो दूरमत्यर्थं नमयाञ्चकार । अभिप्रायप्रतिबन्धे दुःखितस्याङ्गुलिमेलनं स्वभावोक्तिः ॥ ३३ ॥

करे विधृत्येश्वरया गिरां सा पान्था पथीन्द्रस्य कृता विहस्य । वामेति नामैव बभाज सार्थं पुरन्ध्रिसाधारणसंविभागम् ॥ ३४ ॥

कर इति । गिरामीश्वरया वाग्देव्या विहस्य अज्ञाननाटनाद्धास्य कृत्वा सा करे विधृत्य इन्द्रस्य पथि पान्था-पथिका कृता । इन्द्र प्रति वरणार्थं नीता सा भैमी पुरन्ध्रीणामन्यस्त्रीणां साधारणं समानं संविभागं अंशो यस्य पुरन्ध्रिषु वा एवम्भूतं सर्वस्त्रीवाचकं वामेति नाम यक्रार्थत्वात् सार्थं नामैव बभाज भजे । इन्द्र प्रति देव्या नीयमाना सा वक्राभूदिति भावः । सार्थमेव नाम इति वा । पान्थेति पूर्ववत । पथीति पाठे, पथे गताथिति पाताश्वंस्ल-दित्याक्षी, पथि गन्त्री कृतेत्यर्थ । पुरन्ध्रीति पूर्ववत् ॥ ३४ ॥

विहस्य हस्तेन विकृष्य देवी नेतुं प्रयाताऽभि महेन्द्रमेताम् । भ्रमादियं दत्तमिवाहिदेहे तत स्त्रमत्कृत्य करं चकर्ष ॥ ३५ ॥

तमेवार्थमुक्तिविशेषेण पुनराह । विहस्येति । वाग्यानन्तर देवी विहस्य किञ्चिद्धसित्वा सता भैमीं स्वहस्तेन विकृष्य महेन्द्रमभिलक्षीकृत्य नेतु प्रयाता प्रस्थिता इन्द्र प्रापयितु निर्गता । तत इन्द्राद्गिमनोद्यागानन्तर इयं भैमी चमत्कृत्य किमिदमिन्द्रवरणे मा प्रवर्तयतीति बुद्धा भीत्या कर स्वहस्त चकर्ष आचकर्ष । किम्भूतमिव कर । भ्रमाद्रज्जुभ्रान्त्या अहिदेहे सर्पशरीरे दत्तमिव स्थापितमित्युत्प्रेक्षा । इयं देहे भ्रमाद्दत्त हस्त यथा कश्चित् कर्षति तथेत्युपमा वा । तस्मा देवीकरादिति वा ॥ ३५ ॥

भैमीं निरीक्ष्याभिमुखीं मघोनः स्वाराज्यलक्ष्मी रधृताभ्यसूयाम् । दृष्ट्वा ततस्तत्परिहारिणीं तां व्रीडां त्रिडौजःश्रवणाभ्यपादि ॥ ३६ ॥

भैमीमिति । स्वाराज्यलक्ष्मीः विहौजःप्रयशा इन्द्रेऽत्यन्तमनुरक्ता स्वर्गाधिपत्यश्रीः भैमीं मघोन इन्द्रस्याभिमुखीं निरीक्ष्य सपत्नीसूया भैम्या मभ्यसूयामसहनत्व अधृत दधार । ततः अनन्तरं तां भैमीं तत्परिहा रिणीं इन्द्रत्यागिनीं दृष्ट्वा इन्द्रेऽनुरक्ता सती व्रीडां लज्जामभ्यपादि प्राप । इयमिन्द्रं नाभिलषति वृथैव मयैष्यों कृतेति सलज्जेत्यर्थः । इयं भैमी स्वोरत्नभूता, सती निर्गुणत्वयैनं परिहरति तस्मादह प्रिया जातेति लज्जितेत्यर्थः । अभ्यपादि । कर्त्तरि चिण् ॥ ३६ ॥

त्वत्तः श्रुतं नेति नले मयातः परं वदस्वेत्युदिताथ देव्या । ह्रीमन्मथद्वैरथरङ्गभूमिर्भैमी दृशा भापितनैषधाभूत् ॥ ३७ ॥

त्वत इति । अथ देव्या इति उदिता परिहासवशादुक्ता भैमी दृशा दृष्ट्यैव भापितनैषधाऽभूत् । इति किं । हे भैमि मया त्वत्तः नलविषयं नेति श्रुत निषेधार्थो नकारः श्रुतः । अतः कारणात्परं नलादन्य मभीष्टं वदस्व कथय । अथ च नलविषये नले इति पदे नेति नल- नाम्नोऽहं श्रुत अतो नकारात् परमनन्तरमक्षरं कथयेति । किम्भूता । ह्रीमन्मथयोर्लज्जाकामयोर्द्वैरथस्य द्वाभ्यां प्रवृत्तस्य युद्धस्य रङ्गभूमि- र्नृत्यस्थान मदवलज्जीकामयशा कृता । अस्मिन्काले नाला मया संपर्यति दृष्ट्यैव मतं निर्दिष्टवती न त्वन्य । न च नाकारमुच्चारयति स्मे त्यर्थः । उदिताऽप वदादिति वा । वदस्व । भापयोऽतिभापयो भा- ययन तामाह वा तद् । द्वैरथ । द्विरथमस्यास्ति इति सम्यत्येऽण् ॥३७॥

इतरतु भैमीं दिविषत्सु पाणौ पाणिं प्रणीय स्मरसां रसात् सा । आलिङ्ग्य नीत्वाक्रत पो न्यदुर्गां भूपालदिक्पालकुलाध्वमध्यम् ॥ ३८ ॥

इतरतुमिति । सा देवी भैमीं आलिङ्ग्याङ्कपालिकया धृत्वा भूपा- लस्य आगम्य दिक्पालकुलस्य च इन्द्रादिचतुष्टयस्य परस्परोऽध्वा मार्गस्तन्मध्यं नीत्वा प्रापय्य पान्यदुर्गां पथिकमिन्द्रादिपूजितगि-

लास्यकल्पितमार्गदेवता अकृत चकार इन्द्रादिपञ्चकमार्गमध्ये नीत्वा मुमोचेत्यर्थः । लज्जाभरनिश्चलत्वादतिसौन्दर्याच्च देवतात्वं । केषु सत्सु । रसादुभयाज्ञापरिज्ञानादुद्भ्याय दैव्याज्ञयापरिज्ञानात प्रीतेर्वा अप्सरसा उर्वशीप्रभृतीनां पाणौ पाणिं प्रणीय निक्षिप्य तालिकादानपूर्वं दिविषत्सु इन्द्रादिषु हसत्सु सत्सु । वासवादौ मञ्जुके दुर्गामारोप्य राजवीथिषु भ्राम्यते तथैनामपि चलदुर्गां चकारेत्यर्थ इति वा । दिविषत्सु । सत्सूद्विषद्रुहेत्यादिना (पा० ३ । २ । ६१) क्विप् । हृद्युभ्यां चेति (पा० ६ । ३ । ९ । वा० १) सप्तम्या अलुक् । हलदन्तादिति (पा० ६ । ३ । ९ ।) सुषामादित्वात् (पा० ८ । ३ । ९८) इति वा षत्वं । चाल्यमाना दुर्गा । चाल्या चासौ दुर्गा चेति वा ॥ ३८ ॥

अदेशितामप्यवलोक्य मन्दं मन्दं नलस्यैव दिशां चलन्तीम् । भूयः सुरानर्द्धपथादथासौ तानेव तां नेतुमना नुनोद ॥ ३९ ॥

अदेशितामिति । अथ असौ देवी भूयः पुनरपि अर्द्धपथात् सकाशान्मध्ये विहाय तानेव सुरानिन्द्रादीन्नेतुमनाः प्रापयितुकामा सती तां भैमीं नुनोद हस्तबलेन प्रेरयति स्मेत्यर्थः । किं कृत्वा । इन्द्रादिसमीपं गच्छेत्यादेशितामादिष्टामपि तथा मन्दं मन्दं नलस्यैव दिशां नलसमीपमेव चलन्तीं गच्छन्तीं विलोक्य । आदेशः सञ्जातोऽस्याः । अदेशितामिति पाठे नलं प्रति गच्छेत्यप्रेरितामपीत्यर्थः ॥ ३९ ॥

मुखाब्जमावर्त्तनलोलनालं कृत्वालिहुंहुं रवलक्ष्मलक्ष्यम् । भीमोद्भवां तां नुनुदेऽङ्कपाली देव्या नवोढेव हृदां विवोढुः ॥ ४० ॥

मुखेति । भीमोद्भवा देव्यास्तामङ्कपाली नुनोदामुचत् । केव । विवोढुः परिणेतुः हृदां प्रथमसुरतारम्भनिर्जरा अङ्कपाली नवोढा नववधूरिव । अङ्कपालीनोदनमात्रेण साम्यं विवक्षितं न तु लिङ्गं । किं कृत्वा । परिहासवशात्कलहमनुरागमननिषेधिकानां आलीनां सखीनां निवारणव्यञ्जको हुंहुं इति रवः शब्दस्तद्रूपैलक्ष्मैश्चिह्नैर्लक्ष्य ज्ञेय । सेपा

या लक्ष्यं विषयभूतं, यद्वायोस्तवरग्रानिषेधिकास्वालिषु कोपवशाद्गी-
ष्मा यय हुंहुङ्कारास्तद्रूपैश्चिह्नैर्लक्ष्य, अथवाऽलीना भ्रमराणामिव ये हुं
हुंरवचिह्नैर्लक्ष्य निपतद्गुञ्जद्भ्रमर आवर्त्तने परावर्त्तने लोलं चञ्चलं क
एठदण्ड एव नाल यस्य एव मुखाब्ज कृत्वा । नवोढापि आलिङ्गनादि
कुर्विंत्युपदिशन्तीनां सखीनां तासु वा हुंहुंरवचिह्नलक्ष्य मुखाब्जमाव-
र्त्तयति । अब्जमपि लोलनाल भ्रमरहुंहुंरवलक्ष्यञ्च भवति । रवलक्षेति
पाठे मतसङ्ख्या इत्यर्थः ॥ ४० ॥

**देवी कथञ्चित् खलु तामदेवद्रीचीमवन्तीं स्मि**
**तसिक्तसृक्का । आह स्म मां प्रत्यपि ते मृग**
**का शङ्का शशाङ्कादधिकास्यबिम्बे ॥ ४१ ॥**

देवीति । देवी तां नैमीमित्याह स्म । किम्भूता । कथञ्चिन्महताङ्क
पालीमोचनादिप्रकारेण कष्टेन, खलु निश्चित अदेवद्रीचीभवन्तीं न देवा
नञ्चति देवान् प्रत्यगच्छन्त्येवंविधा भवन्ती ता । किम्भूता । स्मितेन
ईषद्धासेन सिक्तसृक्का सिक्तौष्ठप्रान्ता स्वाभिप्रायापरिज्ञानात किञ्चिद्धसत
हासा । इति किं । हे शशाङ्कात् अधिक सुन्दरमाह्लादकं आस्यबिम्बं
यस्या तत्सम्बुद्धौ मे, नैमीमर्णोप्राया मामपि प्रति, इय प्रनाथ्यं इन्द्रादि
वरणाय मां मयनीति । तेन च का पुन शङ्का अपि त्वंय शङ्का न
कार्या मा भैषीरिति । देवानञ्चति देवद्रीची । विष्वग्देवयोरिति (पा०
६ । ३ । ९२) टेरद्र्यादेशे; उगित्वात् (पा० ४ । १ । ६) ङीपि, अच
(पा० ६ । ४ । १३८) इत्यकारलोपे, चाविति (पा० ६ । ३ । १३८ ।)
पूर्वस्याणो दीर्घः । पश्चाञ्ञ्समास । अदेवद्रीचीभवन्तीमिति पाठ-
श्च । अदेवद्रीची देवद्रीची भवन्ती तता नञ्समास, च्विप्रत्यय ।
शशाङ्कात् । यस्मादधिकमिति (पा० २ । ४ । ९) ज्ञापकत्वात् पञ्चमी ४१

**एषामकृत्वा चरणप्रणाममेषामनुज्ञामनवाप्य**
**सम्यक् । सुपर्ववैरे तव वीरसेनि वरीतुमीहा**
**कथमौचितीयम् ॥ ४२ ॥**

चेन्न प्रतारयसि तर्हि पुनः इन्द्रादिसम्मुखं मां किमिति नयसी-त्याशङ्कायामाह ॥ एषामिति ॥ एषामिन्द्रादीनां चरणयोः प्रणामं कृत्वा तथा एषां सम्यग्यथा भवति तथाऽनुज्ञां नलवरणानुमतिं अप्राप्य मि अचिरप्रकटनमात्रानुमितप्रसादेन लब्धप्रायामपि मालाञ्चिरकम्पादि सूचितामनुज्ञामलब्ध्वा मे सुपर्वभिः स्वावज्ञानादिद्वारादिभिः सह विरोधे सति येऽप्य तव वैरसेनिं नलं वरीतुं ईहा चेष्टाऽभिलाषो वा सा कथ मिवौचिती अपि न न कथञ्चित् । स्वावज्ञानाद्विरुद्धाः सन्तः शापन्दा स्यन्तीति तान् प्रति नोपर्सर्पन तु वरणार्थमिति भावः ह्यनौचितीति वा । कृतनौचितीत्यपि पाठ ॥ ४२ ॥

इतीरिते विश्वसितां पुनस्तामादाय पाणौ दि
विषत्सु देवी । कृत्वा प्रनम्रां वदति स्म सा
तान्* भक्तेयमर्हत्यधुनानुकम्पाम् ॥ ४३ ॥

इतीति । सा देवी इति पूर्वोक्तमीरिते सति विश्वसितां तां भैमीं पाणौ पुनरादाय धृत्वा दिविषत्सु देवेषु विषये नमस्कारदर्शनप्रकर्षेण नम्रां कृत्वा तान् देवानिति वदति स्म । इति किं । भक्तेयं इयं भैमी अधुना नलवरणानुमतिरूपामनुकम्पामर्हतीति इति ॥ ४३ ॥

युष्मान् वृणीते न बहून् सतीयं श्रेपायमाना
च भवत्सु नैकम् । तद्वः समेतं नृपमंशमेतं व
रीतुमन्विष्यति लोकपालाः ॥ ४४ ॥

यस्तद्वरणार्थमागतानस्माकं नलवरणानुमतिर्दीयतामिति कथम्-ध्यत इत्याशङ्कां परिहरति ॥ युष्मानिति ॥ हे लोकपालाः. इयं भैमी यस्मादसौ पतिव्रता एकभर्तृकैव तस्माद्बहून् युष्मान् न वृणीते पति-त्वेन नाङ्गीकरोति । भवत्सु मध्ये त्रपायमाना च एकं न वृणीते । त-त्तस्मात् सर्वैकवरणपक्षयोर्दोषदर्शनाद्धेतोरेकत्र नलस्वरूपे समेतान् मि-लितानंशानभूतान्वा युष्मानेवैनं नृप, अष्टाना लोकपालानां वपुर्धा-रयते नृप इति वचनात् युष्मद्रूपमेवैनं नलं नृप वरीतुं अन्विष्यति

* आह स नम्रां प्रविधाय सा तान् इति ख० पुस्तक पाठ. ।

विचारयति । नले वृते पूर्वोक्तोभयदोषाभावात् नलमेव वरीतुं वाञ्छ तीत्यर्थः । वो युष्माकं ममैतानशानेनं नृपमिति वा ॥ ४४ ॥

**भैम्याः स्रजः सज्जनया पथि प्राक् स्वयम्वरं**
**सज्जनयांबभूव । सम्भोगमालिङ्गनयास्य वेधाः**
**शेषन्तु कं हन्तुमियद्यतध्वम् ॥ १५ ॥**

परदारत्वादपीयं मयाङ्गीनाभिलषणीयेत्याह ॥ भैम्या इति । हे लो कपालाः, वेधाः मातृसेवनानन्तरं स्वमन्दिरागमनवेलायां पथि स्रजो मालायाः सज्जनया सङ्गेन षष्ठे सर्गे प्रसूप्रसादाधिगतेत्यादिकथितप्रकारेण स्त्रान्तिदृष्टनलेषु मध्येऽस्य दूत्यगतस्य नत्यनलस्य कण्ठे निक्षेपणया कृत्वा भैम्याः स्वयम्वरं प्राक् पूर्वमेव सज्जनयाम्बभूवाकृत । तथा तत्रैव सर्गे सख्यं नियस्तावित्याद्युक्तप्रकारेणास्य नलस्यालिङ्गनयालिङ्गनेन भैम्याः सम्भोगं बाह्यरतमपि व्यधत्त । अस्य सम्भोगमिति वा । अस्य स्वयम्वरस्य सम्भोगं फलं आलिङ्गनेन चकारेति वा । तस्मात् कं पुनः शेषं अवशिष्टमंशं हन्तुं विनाशयितुं इयत् नलाकारधारणादिप्रकारेण यतध्वं प्रयत्नं कुरुत, अपि तु न कोऽप्यवशिष्टोंऽश । तस्मात् वृथा प्रयासो न कार्यः किन्त्वाशीव दातव्येत्यर्थः । बाह्यरतस्यैवाभ्यर्हितत्वात् तत्राप्यालिङ्गनस्याभ्यर्हिततरत्वात्तस्य च सवृत्तत्वात् कं पुनः शेषं सम्भोगं हन्तुं इयद्यतध्वं इति वा । किमिति पाठे शेषा तु लोकस्थितिरिति कामशास्त्रोक्तन्यायेन शेषं लोकस्थितिरूपं सम्भोगं प्रहर्तुं इयत् किं यतध्व इति व्याख्येयं । सज्जनालिङ्गनेत्यत्रावयन्त्यायुष् ॥ ४५ ॥

**वर्णाश्रमाचारपथात् प्रजाभिः स्वाभिः सहैवा**
**स्खलते नलाय । प्रसेदुषो वेदशवृत्तभङ्ग्या**
**दित्सैव कीर्त्तिर्भुवमानयद्वः ॥ १६ ॥**

इदानीं सुरान्तरेषु देवान् प्रार्थयति ॥ वर्णेति ॥ या युष्मापरितोषे । पूर्वममभाविलपितोक्तं गया । किन्तु नलाय कीर्त्तिं दित्सैव वो युष्मान् भुवमानयत् भैमीस्वयम्वरदर्शनव्याजेन मह्याय कीर्त्तिं दातुमे-

वात्रागमनं युष्माकं न तु भैमीवरणार्थमित्यर्थः । किंभूताय । यतः स्वामिः प्रजाभिः सह वर्णानां ब्राह्मणादीनां आश्रमाणां ब्रह्मचर्य्यादीनां स्मृत्युक्तादाचारपथात् सकाशाद्स्खलते अच्युताय । किम्भूतान् यः (ईदृशवृत्तिभङ्ग्या प्रसेदुषः स्वाचाराचरणादेव निष्कपटदूत्यकरणाद्वा प्रसन्नान् । भैम्या इन्द्रादीन् विहाय सौन्दर्य्यादिना गुणेन नल एव वृत इति कीर्त्तिः ॥ ४६ ॥

इति श्रुते ऽस्या वचसैव हास्यात् कृत्वा सुधा
स्याधरमास्यबिम्बम् । भ्रूविभ्रमाकूतकृताभ्य
नुज्ञेष्वेतेषु तां साथ नलाय निन्ये ॥ ४७ ॥

इतीति । इति पूर्वोक्ते देवीवचने श्रुते सति अस्या देव्या वचसैव जाताद्धास्यात् स्मिताद्धेतोः आस्यबिम्बं मुखचन्द्रं सुधास्याधरं चञ्चुगोष्ठं कृत्वा एतेषु देवेषु भ्रूविभ्रमरूपेणाकूतेनाशयज्ञापकेनेङ्गितेन कृत्वा कृताभ्यनुज्ञा नलवरणानुमतिर्यैस्तेषु सत्सु । अथानन्तरं सा देवी तां नलाय नलं प्रापयितुं नलार्थं वा निन्ये प्रनलसमीपं प्रापयामासेत्यर्थः ४७

मन्दाक्षनिस्पन्दतनोर्मनोभूः प्रेरमप्यानयति स्म
तस्याः । मधूकमालामधुरं करं सा कण्ठोपक
ण्ठं वसुधासुधांशोः ॥ ४८ ॥

मन्दाक्षेति । सा देवी मधूकमालया मधुरं सुन्दरं तस्याः करं वसुधासुधांशोर्भूचन्द्रस्य नलस्य कण्ठोपकण्ठं कण्ठसमीपं आनयति स्म प्रापयति स्म । किम्भूतायाः । मन्दाक्षेण लज्जया निस्पन्दा निश्चला तनुर्यस्याः सस्तम्भाया इत्यर्थः । किम्भूतं करं । मनोभुवा मन्मथविषयकामेन दुःप्रेरमपि कामेनापि प्रेरयितुमशक्यं । निष्पन्देति पाठे पूर्ववदन्वयः । दुःप्रेरमपि प्रेरयति स्मेति विरोधाभासः ॥ ४८ ॥

अथाभिलिख्येव समर्प्यमाणां राजिं निजस्वी
करणाक्षराणां । दूर्वाङ्कुराढ्यां नलकण्ठनाले
वधूर्मधूकस्रजमुत्ससर्ज ॥ ४९ ॥

अथेति । अथ करस्य नलकण्ठसमीपनयनानन्तरं वधूर्भैमी दूर्वाङ्कुराढ्यां मधूकस्रजं नलकण्ठनाले तत्समयज्ञा निक्षिप्तवती । उत्प्रेक्षते । अभिलिख्य समर्प्यमाणां दीयमाना निजेनात्मना नलस्य स्वीकरणं तत्सम्यगन्यनामवर्णानां मया त्वं निश्चितं वृतोऽसीति एवंरूपाणां वर्णानां राजिमिव । निश्चयज्ञापनार्थं हि पत्रं दीयते तदिवेत्यर्थः । माला मज्जनानन्तरं चाङ्गीकरणे निश्चयो जातः । दूर्वाङ्कुराणां श्यामत्वादक्षराणां मधूकानि लिखिताक्षरपङ्क्तिस्थानीयानि । कण्ठस्य नालत्वान्मुखस्य कमलत्वं ॥ ४९ ॥

**तां दूर्वया श्यामलयातिवेलं शृङ्गाररसाभसन्निभया सशोभाम् । मालां प्रसूनायुधपाशभासं कण्ठेन भूभृद्बिभरांबभूव ॥ ५० ॥**

तामिति । भूभृन्नलस्तां मालां कण्ठेन बिभरांबभूव । किंभूतां । श्यामलया अत एव शृङ्गाररसस्य भासा कान्त्या सन्निभया तुल्यया दूर्वयाऽतिवेलमतिशयं सशोभमदीप्ताम् । तथा प्रसूनायुधस्य कामस्य पाशभासं पाशतुल्याम् । मालामिषेण पाशान्तरमेव कामपाशत्वान्मालाया कामपाशत्वं । श्यामो भवति शृङ्गार इति भरतवचनाच्छृङ्गारस्य श्यामत्वं । भूभृत्पार्थिवोऽपि । बिभरांबभूव । भीह्रीति (पा० ३ । १ । ३९) आमि, कृञ्चेति (पा० ३ । १ । ४०) भुवोऽनुप्रयोगः ॥ ५० ॥

**दूर्वाग्रजाग्रत्पुलकावलिं तां नलाङ्गसङ्गाद् भृशमुल्लसन्तीम् । मानेन मन्ये नमितानना सा सासूयमालोकत पुष्पमालाम् ॥ ५१ ॥**

सपत्नी मानेन समुन्मुखी सती सेर्ष्यमालोकते । स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये इत्यमरः ॥ ५१ ॥

**कापि प्रमोदास्फुटनिर्जिहानवर्णैव या मङ्गलगीतिरासाम् । सैवाननेभ्यः पुरसुन्दरीणामुच्चैरुलूलुध्वनिरुच्चचार ॥ ५२ ॥**

कापीति । प्रमोदाद्धर्षवशात्कण्ठस्य सगद्गदत्वादस्फुटा अप्रकटा निर्जिहाना निर्गच्छन्तो वर्णा अक्षराणि यस्या एवंविधैव या पुरसुन्दरीणां विलोकयितुमागतानामाननेभ्यः कापि लोकोत्तरा मङ्गलरूपा धवलादिगीतिरासीत् सैवोच्चैरुलूलध्वनिरुच्चचार उदलसत् । विवाहाद्युत्सवे स्त्रीणां धवलादिमङ्गलगीतिविशेषा गौडदेशे उलूलुरित्युच्यते । सोऽप्यव्यक्तवर्णं उच्चार्यते । स्वदेशरीतिं कविरुक्तवान् ॥५२॥

**सा निर्मले तस्य मधूकमाला हृदि स्थिता च प्रतिबिम्बिता च । कियत्यमग्ना कियती च मग्ना पुष्पेषुबाणालिरिव व्यलोकि ॥ ५३ ॥**

सेति । तस्य नलस्य निर्मले हृदि स्थिता चान्तः प्रतिबिम्बिता च सा मधूकमाला कियती किञ्चिदमग्ना अत्रुटिता कियती च मग्ना त्रुटिता, पुष्पेषुः कामस्तस्य बाणालिः शरपङ्क्तिरिव व्यलोकि वीक्षिता । सांकेतिकीति ङीप् । मधूकप्रतिबिम्बानां किञ्चिदन्तः प्रविष्टरूपबाणां तत्साम्यमुपरिस्थितानां चामग्नबाणाग्रसाम्यं । नलःस्वयमेवालोऽपि कामपरवशो जात इत्यर्थः ॥ ५३ ॥

**रोमाणि सर्वाण्यपि बालभावाद् वरश्रियं वीक्षितुमुत्सुकानि । तस्यास्तदा कण्टकिताङ्गयष्टेरुद्ग्रीविकादानमिवान्वभूवन् ॥ ५४ ॥**

रोमाणीति । तदा तस्मिन् समये कण्टकिता सञ्जातरोमाञ्चाऽङ्गयष्टिः शरीरं यस्यास्तस्या भैम्या वयोरभेदात् बालभावात् केशत्वादथ

च शिशुत्वाद्धरस्य नलस्य श्रिय शोभा यौवितु तत्सुकार्णाव सर्वांग्यपि रोमाञ्च उद्ग्रीर्ग्रीवा यस्यां क्रियाया सा उद्ग्रीविका क्रिया तस्या था दानमङ्गीकरण अन्वभूवन्निव । सात्विका रोमाञ्चस्तम्भश्च तस्या जात इत्यर्थ । बालाय वरश्रिय यौवितु उत्कण्ठिताः सत्वत्वादुद्ग्रीवा भवन्ति । कण्टकस्तारकादिः नद्ग्रीविका बहुव्रीहौ कप् ॥ ५४ ॥

**रोमाङ्कुरैर्दन्तुरिताखिलाङ्गीरम्याधरा सा सुतरां विरेजे । शरव्यदण्डैः श्रितमण्डनश्रीः स्मारी शरोपासनवेदिकेव ॥ ५५ ॥**

रोमेति । रोमाङ्कुरैदन्तुरित उन्नत नतीकृतोऽखिलाङ्ग यस्याः सा रोमाञ्चयुक्ता, तथा रम्याधरा बिम्बोष्ठी सा भैमी स्मारी कामसम्बन्धिनी शरोपासनवेदिकेव बाणाभ्यासशालेव सुतरा विरेजे । किम्भूता वेदिका । शरव्यदण्डैः वेध्यभूतैर्दण्डै श्रिता मण्डनश्री अलङ्कारशोभा यया सा । रोमङ्कुरा शरव्यदण्डस्थानीया । भैम्यपि श्रितमण्डनश्री । रोमाञ्चितां ता दृष्ट्वा सर्वेऽपि कामपरवशा जाता इति भाव । शराभ्यास उपासनमित्यमर । दन्तुरङ्कुतं दन्तुरित ॥ ५५ ॥

**चेष्टा व्यनेशन्निखिलास्तदास्याः स्मरेषुवातैरिव ता विधूताः । अभ्यर्थ्य नीताः कलिना मुहूर्त्तं लाभाय तस्या बहु चेष्टितुं वा ॥ ५६ ॥**

चेष्टा इति । तदा तस्मिन कालेऽस्या निखिलास्ताश्चेष्टा व्यनेशन् विनष्टा । नश्धातुः । स्मरेषुवाते कामबाणपङ्क्तिवायुभि विधूता इव स्थानभ्रंशात् भीता इव । वाशब्द उत्प्रेक्षान्तरसमुच्चये, इवार्थे वा । तस्या लाभाय भैम्याः प्राप्तये बहुभि प्रकारैश्चेष्टितुं अभ्यर्थ्य भैमीमेव याचित्वा मुहूर्त्तं घटिकाद्वय क्षणमात्र वा कलिना युगेन नीता इव । भैम्याः कामुकेन कलिना स्वस्याप्यविलासितया प्रेमीमलभमानेन बहु विलासमुत्पत्तये भैमीविलासा एव याचितकमण्डनार्थं नीता इवेति भावः । याचितमपि क्षणमात्रमेव नीयते । सात्त्विकस्तम्भे न कटाक्षादि

व्यापाररहिता सा जातेति भावः । अनेशन्निव्यत्र पुषादित्वात् च्लेरङि (पा० ३ । १ । ५५ ।) नशिमन्योरलिट्येत्वं वक्तव्य (पा० ६ । ४ । १२० । वा० ७) इत्येत्वं । भाष्यकारस्य कैयटस्य पदमञ्जरीकारस्यापि मते छन्दस्येवैत्वं नशिमन्योर्न भाषायां । अनशन्नित्यत्र आभुरसि ति श्रुत्युदाहरणाच्चारव्येत्वं छन्दस्येवेत्यवसीयते । वृत्तिकृता तु नशिमन्योर्भाषाविषयत्वमङ्गीकृत्य अभिधा छन्दोविषयत्वमङ्गीकृत्यैत्वं सम्मतं । नशिमन्योरलिट्येत्वं छन्दस्यमिपचादीत्यादि (पा० ६ । ४ । १२०) (१) कारिका च ॥ ५६ ॥

तन्न्यस्तमाल्यस्पृशि यन्नलस्य स्वेदं करे पञ्च
शरश्चकार । भविष्यदुद्वाहमहोत्सवस्य हस्तोदकं
तज्जनयाम्बभूव ॥ ५७ ॥

इदानीं नलस्य सात्त्विकत्वं वर्णयति ॥ तदिति ॥ पञ्चशरः कामः तया भैम्या निक्षिप्तं माल्यं मालां अनुरागवशात् पुनः पुनः स्पृशतीति स्पृक् तस्मिन्नलस्य करे सात्त्विकं स्वेदं घर्मजलं चकार । तद्भविष्यत उद्वाहरूपस्य महोत्सवस्य सम्बन्धि नियतपरस्वत्वोत्पादने हेतुभूतं हस्तोदकं कन्यादानजलमेव जनयाम्बभूव । नलस्यापि सात्त्विकस्वेदः प्रवृत्त इति भावः । स्वेदजलं न भवति किन्तु हस्तोदकमिति ॥ ५७ ॥

तूलेन तस्यास्तुलना मृदोस्तत् कम्प्रास्तु सा
मन्मथबाणवातैः । चित्रीयितं तत्तु नलो यदु
च्चैरभूत् स भूभृत्पृथुवेपथुस्तैः ॥ ५८ ॥

तूलेनेति । मृदोरतिसुकुमार्यास्तस्या भैम्यास्तूलेन कार्पासेन मृदुत्वे या यस्मात्तुलना साम्यमस्तीति शेषः । तत्तस्मात्सा मन्मथबाणवाते कामशरपतनवायुभिः कम्प्रा सकम्पा अस्तु भवतु । कार्पासो हि लघुत्वाद्वातेन सकम्पो भवति । सा च तत्तुल्या । अतस्तस्याः कामबाणवाते सकम्पत्वं युक्तमेवेत्यर्थः । तत्तु पुनश्चित्रीयितं आश्चर्यं कृतं यदुच्चैर्भूभृन्महाराजो धीरोऽपि स नलस्तैः कामबाणवातैः कृत्वा पृथु-

नूयान् वेपथुः कम्पो यस्यैवंविधोऽभूत्, ततः फामवायोश्चित्र कृतमा- श्चर्यंकृतमित्यर्थः । तूलस्य तूलतुल्यस्य या वातैः कम्पो युक्तः । अ- त्युच्चस्य पर्वतस्य तु वातैः कम्पोऽतितरामाश्चर्यकारीत्यर्थः । उभावपि तुल्यानुरागौ सात्विककम्पयुक्तौ जाताविति भावः । चित्रीयित । न- मोवरिवश्चित्रङः क्यजिति (पा० ३ । १ । १९ ) क्यजन्तात् क्तः । क्यचि चेति (पा० ७ । ४ । ३३ ) इत्वमकारस्य ॥ ५८ ॥

**दृशोरपि न्यस्तमिवास्त राज्ञां रागाद्दृगम्बुप्र तिबिम्बि माल्यम् । नृपस्य तत्पीतवतोरिवा दृशोः प्रालम्ब्यमालम्बत युक्तमन्तः ॥ ५९ ॥**

दृशोरिति ॥ दृशोरपि अम्बुनि क्रोधजनितेऽश्रुणि प्रतिबिम्बोऽस्या स्तीति एवंशील माल्यं सा मधूकमाला रागात्नलविषयात् क्रोधात् अ थच तज्जनितान्नेत्रलौहित्याद्धेतोः सभासदां राज्ञां दृशोरपि न्यस्तमि- व, येन केनचिद्बलात्क्षिप्तमिवास्त अतिष्ठत । नेत्रलौहित्यदर्शनादेव ज्ञातमनुदिति यावत् । तथा कश्चित् क्रुद्धः सन् कस्यचिन्नेत्रे बलादङ्गु- ल्यादिशल्य निक्षिपति तदीयनेत्रस्य च लौहित्य भवति अश्रु च नि- र्गच्छति । तथा क्रोधाद्दर्शनमात्रेण तन्माल्यमेव तेषां द्वयोरपि नेत्रयो- र्निक्षिप्तं शल्यमिवाभवत् । अत एव तयोर्लौहित्यमश्रु च जातमित्य- र्थः । अर्थाद्युक्तमेतत् । न केवलमन्तःकरणे शल्य निक्षिप्तं किन्तु दृ- शोरपीत्यपिशब्दार्थः । यथ च रागात् नलप्रीत्या भैम्या माल्य यथा नलकण्ठे न्यस्तं तथा रागात् क्रोधात् नलस्पर्द्धिनां सम्मुखं पश्यता राज्ञां नेत्रयोरपि शल्यमिव क्षिप्तमभूत् । यतो दृगम्बुप्रतिबिम्बि । न- लागमदृशामाः सर्वेऽपि राजानो मालादर्शनमात्रेण क्रोधेर्ष्यावशाः सङ्कुचितनेत्राः पराङ्मुखाः सन्तस्तां न पश्यन्ति स्मेति भावः । नृपस्य नलस्य दृशोरन्तः मध्यः कर्तृभूतः प्रालम्ब्यं प्र राज्य लम्बत्वं हर्षवि स्फारितत्वं आलम्बत अङ्गीचकार एतद्युक्त । हर्षवशाद्धि नेत्रयोर्वि- स्फारत्वं भवति । प्रालम्ब्यमिति पाठे प्रालम्बन प्रालम्ब, स एवार्थः । तदर्थमन्ते । किम्भूतयोरन्तोः तत्पीतवतोरिव माल्य सादरं विलोक- मानयोरिव । हर्षजनित विस्फारत्व विलोकनजन्यत्वेन सम्भावित ।

यद्वा नलनेत्रमध्यस्तन्माल्यमेव प्रालम्बमृजुलम्बिनं हारविशेषं अङ्गीचकार । सादरविलोकनान्नेत्रयोरन्तः प्रतिलम्बितायाः मालायाः ऋजुलम्बित्वं नेत्रयोर्विस्फारत्वमन्तरेण न घटत इति तदेवाक्षिपति । नलस्तु तां मालां विलोकयन् हर्षवशाद्विस्फारितनेत्रो जात इति भावः । तन्माल्यं रागाद्दृशोर्न्यस्तमिवास्त । नेत्रमध्ये निक्षिप्तं यच्छल्यादि तद्दिवाभूत् । युक्तमेतत् । क्रोधादि दृष्टमात्रं वस्तु शल्यमिव भवति नेत्रयोश्च लौहित्यमश्रु च भवतीति युक्तमित्यर्थः । तन्माल्यं पीतवर्णाद्रि नलनेत्र वस्तु शल्यमिव भवति । नलनेत्रयोरन्तः रागात् प्रीतेर्हृष्टत्वं प्राप एतदपि युक्तं । प्रीतेर्हि हर्षो भवति इत्यपि युक्तमेवेत्यर्थः इति वा । प्रालम्ब्यं गुणवचनादित्वात् (पा० ५ । १ । १२४) ष्यञ् । प्रालम्ब्यमिति पाठे प्रालम्बो हारभेदे स्यादिति विश्वः । रागेति पाठे, आमन्दाश्रुणि प्रतिबिम्बितं माल्यं राज्ञा नलेनानुरागाद्दृशोरपि न्यस्तमिवास्त । न केवलं हृदि किन्तु नेत्रयोरपि धृतमित्यर्थः । अतएव तन्माल्यं पिबतोर्नलनेत्रयोर्मध्यः प्रालम्बत्वमालम्बतेति युक्तं । दीर्घाया मालाया अन्तर्द्धारणार्थं नेत्रमध्योऽपि दीर्घो जात इयति भावः ॥ ५९ ॥

**स्तम्भस्तथालम्भितमां नलेन भैमीकरस्पर्शमुदः**
**प्रसादः । कन्दर्पलक्ष्मीकरणार्पितस्य स्तम्भस्य**
**दम्भं स चिरं यथाप्यायत् ॥ ६० ॥**

स्तम्भ इति ॥ मालानिक्षेपसमयजातभैमीकरस्पर्शस्तेन जाता मुत हर्षस्तस्य प्रसादरूपः स्तम्भः सात्त्विकभावः नलेन तथा ऽलम्भितमां अतितरां प्राप्त । यथा स नलः कन्दर्पस्य लक्ष्मीकरणाय लक्ष्यार्थं अर्पितस्य आरोपितस्य स्तम्भस्य दम्भ व्याज कामवेध्यस्तम्भसादृश्यं चिरमापत् । कामवेध्यस्तम्भवन्नैश्चल्यात् करस्पर्शजातसात्त्विकस्तम्भवशान्नितरां निश्चलो जात इति भावः । नितरा कामपीडा सूचिता ॥ ६० ॥

**उत्सृज्य साम्राज्यमिवाथ भिक्षां तारुण्यमुल्लङ्घ्य जराभिवारात् । तं चारमाकारमुपेत्य यान्तं निजां तनूमाददिरे दिगिन्द्राः ॥ ६१ ॥**

इदानीमिन्द्रादिभिः स्वं रूपं धृतमित्याह । तस्त्वेति ॥ अथ नल वरणानन्तरं ते इन्द्रादयो दिगिन्द्राः दिक्पाला यान्तः गच्छन्तः पाठ सुन्दरं तं अलीकनलाकारं उपेत्योन्मुच्य निजां सहस्रनेत्रत्वादिलक्षणां स्वीयां तनूं आराज्जलसमीप एवाददिरेऽङ्गीचक्रुः । कः कामिव । कश्चिद्राजा साम्राज्यमस्तस्य सौख्यपुण्यतया चक्रवर्तिपदं त्यक्त्वा भिक्षामिव । तथा कालवशाद्वृद्धस्तारुण्यमुल्लङ्घ्यातिक्रम्य कश्चिज्जरामिव । अनयाद्वयेनेन्द्राद्याकाराणां नलाकारादतिहीनत्वं सूचितं । साम्राज्यादिपरित्यागेन भिक्षाद्यङ्गीकारे यावद्दुःखं भवति तावन्नलाकारपरित्यागेन स्वाकाराङ्गीकारे तेषां जातमिति भावः । तत्र निजत्वमेव हेतुः । अन्योऽपि विद्वानसमीचीनमपि निजमङ्गीकरोति न तु समीचीनं परकीयं । यातुमिति पाठे स्वर्गमिति शेषः । आददिरे । आङो दोऽनास्यविहरणे (पा० १ । ३ । २०) तङ् ॥ ६१ ॥

**मायानलत्वं त्यजतो निलीनैः पूर्वैरहंपूर्विकया मघोनः । भीमोद्भवासात्त्विकभावशोभादिदृक्षयेवाविरभावि नेत्रैः ॥ ६२ ॥**

यथाक्रमं तेषामाकारस्वीकारमाह । मायेति । मायानलत्वं अलीकनलत्वं त्यजतो मघोनः निलीनैः पूर्वं निजशक्त्या गोपितैः पूर्वैर्नेत्रैः नलाङ्गसङ्गजनिता भीमोद्भवायाः सात्त्विकभावशोभा रोमाञ्चादिलक्ष्मीस्तस्या दिदृक्षयेव दर्शनेच्छयेवाहं पूर्वमहं पूर्वमिति यथा भवति तथा यद्वाहं पूर्वमहं पूर्वमिति यस्यां क्रियायां मयूरव्यंसकादित्वात्साहंपूर्विकास्य दर्शनाभ्यां आविरभावि येन प्रकटीभूतं । इन्द्रेण सहस्रनेत्रत्वं प्रकटितमिति भावः । अन्योऽपि दर्शनोत्सुकोऽहं पूर्विकया प्रकटो भवति । अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्मृतेत्यमरः । अहंपूर्विकया । स्वार्थिकः मत्वर्थीयष्ठन् च ॥ ६२ ॥

**गोत्रानुकूलत्वभयं विधाहं तत्प्रातिकूल्यादिव गोत्रभर्तुः । पुरश्चकार प्रवरं वरं यमायन् सरायं ददृशे तया सः ॥ ६३ ॥**

गोत्रेति ॥ तथा स इन्द्रसखः प्रवरः दद्दृशे दृष्टः । स कः । गोत्रशत्रुरिन्द्रः यं वरं श्रेष्ठं प्रवरमेनामान सत्यार्थं पुरस्कारं पूजितवान् अथ चाग्रेसरमकरोत् । किं कुर्वन् । गोत्रयोर्वसिष्ठकश्यपाद्योर्वंशादिपुरुषयोरनुकूलत्वेनाससमानत्वेन विवाह्यत्वेन वा भवे जायमान अथच गोत्रयोर्जन्मकालीनमासोरानुकूल्येन तृतीयैकादशचतुर्दशमादित्योति शास्त्रोक्तमङ्गलिकूटमभयेन जायमाने विवाहे विपर्यं विवाहार्थमिति यावत् । आयन् स्वर्गात् स्वयम्वरार्थं आयन् भुवमागच्छन् । सुनायन्तं कालमदृष्टोऽभूत् इदानीन्तु प्रकटो जात इत्यर्थः । सत्यार्थमित्यनायन प्राप्नुवन् न प्रवरस्तथा दृष्ट इति वा । प्रवरशब्देन श्लेषेन प्रवरपुरस्कार उच्यते । तस्य गोत्रानुकूलविशिष्टस्य विवाहस्य प्रतिकूल्याद्विरुद्धत्वादिव । यतोऽत्र गोत्रशत्रुरिति छलं । मलभेसीगोत्रयोरनुकूलत्वेन जायमाने विवाहे स्वयमिन्द्रकृतप्रातिकूल्यं कृतवान् । तस्य विशिष्टस्यापि प्रातिकूल्यं गोत्रयोरपि प्रातिकूल्यं जातं दैवत्वाद्गोत्रराहित्याद्वा स्वगोत्रयोर्गोत्रयोरप्यनुकूलत्वाभावात् प्रातिकूल्य । तस्य गोत्रयोः प्रातिकूल्येऽपि श्रेष्ठप्रवराङ्गीकारेणापि यथा कथञ्चिद्विवाहो घटिष्यत इति बुद्ध्या प्रवरमपि पुरस्कारैत्यर्थं । यद्वा गोत्रानुकूलत्वाभावे विवाहे तस्य प्रातिकूल्याद्धेतोः प्रवरं पुरस्कारं समानप्रवरत्वेनापि विवाहनिषध इत्यर्थः । नाडीराशिग्रहयोनिगणतारावर्गयोगभूतशुद्धिमङ्गलिकूटादिव गोत्रशत्रुरित्यादित्याति शास्त्राद्भूत । प्रवरं इन्द्रमित्र ॥ ६३ ॥

**स्वकामसम्मोहमहान्धकारनिर्वापमिच्छन्निव दीपिकाभिः । उद्गत्वरीभिश्छुरितं वितेने निजं वपुर्वायुसखः शिखाभिः ॥ ६४ ॥**

स्वकामेति ॥ वायुसखोऽग्निः निजं वपुः उद्गत्वरीभिरुदित्वरीभिः शिखाभिर्ज्वालाभिः छुरितं व्याप्तं वितेनं चकार । मैथ्र्यमिलाप परित्यज्य पुनरपि ज्वालाव्याप्तं शरीरमङ्गीचकारेत्यर्थः । किं कुर्वन्निव । दीपिकाभिर्वस्त्राग्निप्रज्वलितशिखाभि स्वस्य कामेन सम्मोहोऽविवेकरूपस्तल्लक्षणो महान्धकारस्तस्य निर्वापं शान्तिमिच्छन्निव । उदपूर्वकगमे, गत्वरश्चेति ( पा० ३ । २ । १६४ ) क्वरबन्तात् । टिड्ढाणञिति ( पा०

४ । १ । १५ ) ङीप् ॥ ६४ ॥

पत्यौ वृते भीमजया न वन्हावन्हा स्वमन्हा
य निजुह्नुवे यः । जनादपत्रप्य स हा सहाय
स्तस्य प्रकाशोऽभवदप्रकाशः ॥ ६५ ॥

पत्याविति ॥ यः प्रकाशः पूर्वं वह्नेरलोकनलत्वाङ्गीकारसमये स्वमात्मानं अह्नाय शीघ्रं निजुह्नुवे गोपितवान् स तस्य वह्नेः सहायः सखा प्रकाशो दीप्तिः अह्नाऽन्हा दिवसेन हेतुनाऽप्रकाशः अप्रकटोऽभवत् । प्रकटीभूतोऽपि सूर्यप्रभाच्छादितया ऽप्रकटो जात इत्यर्थः । हा कष्टं । पत्यौ स्वस्वामिनि वह्नौ भीमजया न वृते सति जनाल्लोकादपत्रप्य लज्जित्वेव प्रकटो नाभूत् इति सूत्प्रेक्षा । अन्योऽपि स्वस्वामिनोऽपकर्षे लज्जया निलीयते । ज्वालास्वङ्गीकृतास्वपि रात्रिवत् प्रकाशाभावाद्वह्निस्तिमित एवाभूदिति भावः ॥ ६५ ॥

सदण्डमालक्तकनेत्रचण्डं तमःकिरं कायमधत्त
कालः । तत्कालमन्तःकरणं नृपाणामध्यासितुं
कोप इवोपनम्रः ॥ ६६ ॥

सदण्डमिति ॥ कालो यमः सदण्डं लौहयष्ट्या सह वर्तमानं अलक्तकेनारक्तं अलक्तकं तद्वदारक्ते नेत्रे ताभ्यां चण्डमतिभयङ्करं, तथा तमःकिरं अन्धकारमुद्गिरन्तं कायमधत्त । यद्वा स्वीयश्यामत्वातिशयेन तमसो विक्षेपकं एवंविधं कायं देहमधत्त प्रकटितवानित्यर्थः । उत्प्रेक्षते । तत्कालं तस्मिन्नलवरणानन्तरसमये नृपाणामन्तःकरणमध्यासितुमधिष्ठातुं उपनम्र आगन्तुकामः कालः श्यामः कोप इव मूर्तः । कोप एव राज्ञां प्रकटो जात इति भावः । कुपितोऽप्येवंविधो भवति । आलक्तके । तेन रक्तं रागादित्यण् ( पा० ४ । २ । १ ) तमः किरं । इगुपधेति ( पा० ३ । १ । १३५ ) कः । अन्तःकरणं । अधिशीङिति ( पा० १ । ४ । ४६ ) कर्मत्वं ॥ ६६ ॥

दृग्गोचरेऽभूदथ चित्रगुप्तः कायस्थ उच्चैर्गुण

एतदीयः । ऊर्ध्वं तु पत्रस्य मषीद एको मषे-

र्ददस्योपरि पत्रमन्यः ॥ ६७ ॥

ऊर्ध्वमिति ॥ अथ एतदीयः यमसम्बन्धी उच्चैर्नितरामुन्नतो वा गुणः सेवकः । उच्चैर्गुणा यस्येत्यविधो वा । कायस्थो राजसेवकः । गणकजातिविशेषश्चित्रगुप्तनामा लेखकः दृग्गोचरः प्रकटोऽभूत् ॥ अथ च काये देहे तिष्ठति कायस्थः एतदीयो नितरां प्रसिद्धचित्रगुप्ताश्रयभूतेन मला-करेण गुह्मच्छादित एवम्भूतो गुणः श्यामवर्णः प्रकटोऽभूत् । एष प-च्छ्लेषमात्मान्यक सूचितयोर्द्वयोरर्थयोरुपमाह । तत्रैकः गणकः तालादि-पत्रस्योर्ध्वस्योपरि मषीं द्रव्यान्तरेण द्रवीभूतं कज्जल ददात्येवभूतः प्राणिनां शुभाशुभकर्मगणनार्थं मष्या विलिखन्नित्यर्थः । अन्यः काम-गुणस्तु मर्दस्योपरि पत्र जघनस्य ददृश्यते मकाख्य दत्त काल इति पत्रा-लम्बन कुर्वन् प्रकटोऽभूदित्यन्वयः अतिश्याम इत्यर्थः । वा ऽपरस्य समुच्चये त्वर्थे वा ॥ ६७ ॥

तस्यां मनोबन्धविमोचनस्य कृतस्य तत्कालमि-

व प्रचेताः । पाशं दधानः करबद्धवासं विभु-

र्वनावाप्यमवाप्य देहम् ॥ ६८ ॥

तस्यामिति ॥ तस्मिन् काले नलवरणानन्तर विभुः स्वामी प्रचेता वरुणः आप्यं पार्थिवतैजसाद्यवयवोऽपेक्ष्य प्रचुरतरजलावयवनिर्मि-तमुपभोगयोग्यमम्मय देहमवाप्य बभौ । किंभूतः । तस्यां भैमीवि-षये कृतस्य मनोबन्धविमोचनस्य अत्र करणबन्धमोचनस्य पूर्वं भै-मीविषये पाशेन बध्वा निश्चलीकृत्य यत्तिष्ठ मनस्तस्या नले वृते मति प्रकटचेतस्त्वात् पुनस्तत्तद्बन्धमोचनाचिन तत् तदीयमोचनयोग्य ताम-स्वमिव करे बद्धवासं कृतवसति पाश स्वायुध दधानः । अन्य-स्यापि तत्कालमेव कृतबन्धादिबन्धनविमोचनस्य हस्ते पाशो बन्धन-रज्जुर्भवति । आप्यं पूर्ववत् ॥ ६८ ॥

सहद्वितीयः स्त्रियमभ्युपेयादेवं स बुद्धया नयो-

पदेशम् । अन्यां सजार्यः कथमृच्छतीति जला-

काश्चर्योऽभूत् । पूर्वं तु मानुषीयमीदृशा कथं वदतीति साश्चर्याऽभूत् सम्प्रति सरस्वतीं दृष्ट्वाऽस्या एव वक्त्री किमाश्चर्यं अपि तु न किञ्चिदिति स्वल्पश्चर्यां जातेत्यर्थः ॥ ७० ॥

विलोकके नायकमेलकेऽस्मिन् रूपान्यता कौतुकदर्शिभिस्तैः । बाधा बतेन्द्रादिभिरिन्द्रजालविद्याविदां वृत्तिवधाद्व्यधायि ॥ ७१ ॥

विलोकक इति ॥ अस्मिन्नानादेशेभ्य समागते नायकमेलके राजसङ्घे विलोकके विलोकयति सति रूपान्यतया नलाकारं परित्यज्य स्वस्वनेत्राद्याकारधारणेन कौतुकं दर्शयितुं शीलमेषामेवभूतैस्तैर्देवीसहितैरिन्द्रादिभिः निजरूले अन्यदर्शनादिरूपामिन्द्रजालविद्यां विदन्ति जानन्ति तेषां वृत्तिवधात् जीवनोपायस्य स्वयमङ्गीकरणेन नाशात् बाधा व्यधायि पीडा विहिता, बताश्चर्यं कष्टं वा । स्वयम्वरमध्ये इन्द्रजालं प्रकटयतामैन्द्रजालिकानां विलोककेऽस्मिन् राजसङ्घे तैर्वृत्तिघातेषां बाधा व्यधायि पीडा विहिता । ऐन्द्रजालिकान् परित्यज्येन्द्रादीनामेव विलोकनादित्यर्थः इति तत्त्वार्थो वा । रूपान्तरं धारयमाणानिन्द्रादीन् दृष्ट्वा सर्वेऽपि मायया जाता इति भावः । तैः । ताश्च ते च । पुमान् स्त्रिया ( पा० १ । २ । ६७ ) इत्येकशेषः ॥ ७१ ॥

विलोक्य तावाप्तदुरापकामौ परस्परप्रेमरसाभिरामौ । अथ प्रभुः प्रीतमना बभाषे जाम्बूनदाद्रीधरसार्वभौमः ॥ ७२ ॥

विलोक्येति ॥ अथ जाम्बूनदस्य सुवर्णस्याद्रिधरो मेरुस्तस्य सार्वभौमश्चक्रवर्ती अत एव प्रभुः समर्थ इन्द्रः प्रीतमनाः सन्तौ भैमीनलौ एतादृशौ विलोक्य बभाषे । किम्भूतौ । आप्त अन्योन्यप्राप्तिरूपः दुरापः अन्यान्येन प्राप्तुमशक्यः कामोऽभिलाषो याभ्यां अत एव परस्परप्रेमरसेनाभिरामौ स्तम्भस्वेदसात्त्विकभावयुक्तौ । प्रभुर्जाम्बूनदेत्यादिना वरदानसामर्थ्यं सूचितं । प्रीतमना इत्यनेन च स्वेच्छयैव वरं दातुमारब्धवान्न तु याचितः सन्निति प्रतारणाभावं सूचयति । सार्व-

भौमः । तस्येश्वरः (पा० ५ । १ । ४२) इत्यण् । अनुशतिकादीनाञ्च (पा० ७ । ३ । २०) इत्युभयपदवृद्धिः ॥ ७२ ॥

वैदर्भि दत्तस्तव तावदेष वरो दुरापः पृथिवीश एव । दूत्यन्तु यत्त्वं कृतवानमायं नल प्रसाद स्त्वयि तन्ममायम् ॥ ७३ ॥

किमाह इन्द्र इत्यत आह ॥ वैदर्भीति ॥ हे वैदर्भि मया तावत् प्रथमं एष पृथिवीश एव नल एव तव त्वत्सम्बन्धी वरः, अथ च देवप्रसादः अर्थात् तुभ्यं दत्तः । किम्भूतः । भूयोभिरपि तपोभिर्दुरापः । दत्तस्तावद्दत्त एवेति वा । इति भैमीमुक्त्वा नलमाह । हे नल त्वं तु भैमीविषयेऽस्मत्सम्बन्धि दूत्यं यद्यस्मादमायं व्याजरहितं मनःशुद्ध्या कृतवान् तत्तस्मात् त्वयि विषये ममापि वक्ष्यमाणः प्रसादो वरदाननिश्चयः ॥ ७३ ॥

प्रत्यक्षलक्ष्यामवलम्ब्य मूर्त्तिं हुतानि यज्ञेषु तवोपभोक्ष्ये । संशेरतेऽस्माभिरवेक्ष्य भुक्तं मखं हि मन्त्राधिकदेवभावे ॥ ७४ ॥

प्रत्यक्षेति ॥ हे नल अहं प्रत्यक्षेण लक्ष्यां नेत्रदृश्यां मूर्त्तिं समवलम्ब्य धृत्वा यज्ञेषु तव हुतानि हवींषि पुरोडाशादीनि उपभोक्ष्ये । एतद्रूपेण वरेण मम को लाभ इत्यत आह । हि यस्मात् तद्विद्वांसो यजमानादयश्च मखं यज्ञमस्माभिः साक्षाद्भुक्तमवेक्ष्य मन्त्रादधिकोऽतिरिक्तो यो देवस्तस्य सद्भावे विषये संशेरते । मीमांसका मन्त्रातिरिक्ता कर्मसमवायिनी देवता नास्त्येवेति वेदान्तिभिः सह विप्रतिपद्यन्ते । तस्मात् तद्विप्रतिपत्तिनिरासद्वारा तुभ्यं कीर्त्तिं दातुं त्वदीययज्ञेषु हुतं प्रत्यक्षेणैव शरीरेण भोक्ष्य इति भावः । अग्नौ प्रक्षिप्तस्य हविषो भस्मसाद्भावमात्रदर्शनात्प्रत्यक्षप्रकारेणेन्द्रादीनां चाऽदर्शनात् किमयं यज्ञः सफलोऽफलो वेति सन्देहे प्रत्यक्षशरीरेण मद्भोजने स्वयं सन्देहो गमिष्यति । कस्मिन् सति । मन्त्रादधिके देवेषु भावे विद्यमाने सति । मन्त्रमयी देवतेत्येतन्मते प्राचां देवतानामधिकस्य भावो विद्य-

मस्य युक्तत्वादित्यर्थः । सशयनिवृत्तिरेव महांस्तव लाभो भविष्यतीति भावः । उपभोक्ष्ये । भुजोऽनवने (पा० १।३।६६) इति तङ् । अस्माभिरिति बहुवचनं देवतान्तराभिप्राय ॥ ७४ ॥

भवानपि त्वद्दयितापि शेषे सायुज्यमासादयतं
शिवाभ्याम् । प्रेत्यास्मि कीदृक् भवितेति चिन्ता
सन्तापमन्तस्तनुते हि जन्तोः ॥ ७५ ॥

भवानिति ॥ हे नल भवानपि त्वद्दयिता भैम्यपि, युवां शेषे भूलोकभोगनिमित्तस्य कर्मणः शेषे समाप्तौ सति शिवाभ्यां ईश्वरपार्वतीभ्यां सायुज्यं सहैक्यम् आसादयतं प्राप्नुतम् । भवान् शिवेन भैमी च पार्वत्या सहैक्यं गच्छतमित्यर्थः । स्वकर्म प्राप्तमिदं स्वयमेव भविष्यति किं वरदानेनेत्यत आह । हि यस्मात् प्रेत्य मरणं प्राप्य अहं कीदृक् प्रेतो देवो मनुष्यो वा स्वर्गस्थो नारकी वा भविष्यामीत्यादिचिन्ता जन्तोः प्राणिनः अन्तःकरणे सन्तापं महान्तमाधिं जनयति । वरदानेन चिन्तानिवृत्तौ सन्तापनाशः फलमित्यर्थः । शिवाभ्याम् । पुमान् स्त्रिया (पा० १।२।६७) इत्येकशेषः । अस्मीत्यहमर्थेऽव्ययं वा ॥ ७५ ॥

तवोपवाराणसि नाम चिह्नं वासाय पारेसि
पुरं पुरास्ते । निर्यातुमिच्छोरपि तत्र भैमी
सम्भोगसङ्कोचभियाधिकाशि ॥ ७६ ॥

तवेति ॥ हे नल निर्यातुमिच्छोरपि मुमुक्षोरपि तव वासाय वसत्यर्थं उपवाराणसि काशीसमीपे पारेसि असिनद्याः परतीरे नामचिह्नं स्वनामाङ्कितं तत्प्रसिद्धं पुरं नलपुरमिति यावत् पुरास्ते भविष्यति । इदानीमन्यत्र निवासेऽपि अतः परं तत्पुरं राजधानी भविष्यति । मुमुक्षोरपि ते पुरं काशीमधिकृत्य न कृतमित्यर्थः । किमिति । न कृतमित्यत आह । भैम्या सह सम्भोगः सुरतादिसुखं तस्य सङ्कोचोऽल्पत्वं तस्माद्भिया भयेनाधिकाशि पञ्चक्रोशपरिमितायां काश्यां मुक्तिपुर्यां ब्रह्मचर्यादिनियमे भोगसङ्कोचभिया तत्पुरं न कृतं किन्तु तत्समीप इति भावः ॥ ७६ ॥

धूमावलिश्मश्रु ततः सुपर्वा मुखं मखास्वाद विदां तमूचे । कामं मदीक्षामयकामधेनोः प यायतामभ्युदयस्त्वदीयः ॥ ७७ ॥

धूमेति ॥ ततः धूमावलिरेव श्मश्रु यस्यैवंविधं मखास्वादविदां यज्ञ रसाभिज्ञानां देवानां मुखं सुपर्वा देवोऽग्निः इति तं नलमूचे । इति किं । हे नल त्वदीयोऽभ्युदयस्त्वत्समृद्धिः कामं नितरां मदीक्षामयी विलोकनरूपा कामधेनुस्तस्याः पयायतां दुग्धमिवाचरतु तद्वदपरिमितो भवत्विति । मद्विलोकनमात्रेण तव समृद्धिरनन्ताऽस्त्विति तस्मै वरं दत्तवानित्यर्थः । अन्यत्रापि मुखस्य भूपणं श्मश्रु च युक्तं । कामधेनोः पयो युक्तं । धूमावलिरूपेण श्मश्रुणा तता व्याप्तं इति वा । पयायतां । आचारे कर्तुः क्यङ् सलोपश्चेति ( पा० ३ । १ । ११ ) क्यङ् सलोपौ ॥ ७७ ॥

या दाहपाकौपयिकी तनुर्मे भूयात् त्वदिच्छावशवर्तिनी सा । तया पराभूततनोरनङ्गात् त्वयाः प्रभुः सन्नधिकस्त्वमेधि ॥ ७८ ॥

वराम्तरमाह ॥ येति ॥ हे नल स्फोटादिजनको दाहः, तण्डुलादेः पाकः तयोरौपयिकी कारणभूता मे या तनुर्मूर्तिः सा तवेच्छाया वशे वर्तत इति वशवर्तिनी इत्येवंशीला भूयात् निरग्निकेऽपि देशे यत्र त्वमभिलषसि तत्र दाहपाकयोग्या मम मूर्तिः प्रकटा भवत्वित्यर्थः । एवं च वशवर्तिन्यास्तया मदीयमूर्त्या प्रभुः स्वामी सन् त्वं शिवनेत्रज्वालारूपया तया मदीयमूर्त्या पराभूततनोरनङ्गादनङ्गादधिकः एधि भव । पूर्वमेव सुन्दरत्वेन कामादधिकः, इदानीं तु मत्तन्वास्त्वद्वशवर्तिन्यास्त्वदङ्गीभूतया तया कामे पराभूते प्रकारान्तरेणाप्यधिकता भवति भावः ॥ ७८ ॥

अस्तु त्वया साधितमन्नमीनरसादि पीयूषप भांतिशायि । यद्भूय विद्मस्तत्र सूपकारक्रि

यासु कौतूहलशालि शीलम् ॥ ७९ ॥

वरान्तरमाह । अग्नित्विति । हे नल त्वया साधितं राद्धमन्नं तण्डुलादि मीना मत्स्या रसा प्रपानकादयः दुग्धादयो वा आदयो यस्य यस्य एवम्भूतमन्यदपि पाकयोग्यं भक्ष्यं पीयूषमतिशायि पीयूषरसममृतास्वादमप्यतिशाते एव शील तस्मादपि नितरां स्वादु अस्तु भवतु । हे नृप राजन यद्यस्मात् यत् तव शील सूपकाराणां क्रियासु कर्मविषये कौतूहलशालि कौतूहलेन शालते शोभत एव शील वित्त सामीप्य तस्मात् तुभ्यमीदृशो वरो दत्त इत्यर्थः । शीलमित्यत्र वित्तमित्यपि पाठः । वित्तं । छन्दसि द्रुयोर्थेति ( पा० १।२।५९ ) बहुत्वं ॥ ७९ ॥

वैवस्वतोऽपि स्वत एव देवस्तुष्टस्तमाचष्ट नराधिराजम् । वरप्रदानाय तवावदानैश्चिर मदीया रसनोन्मधुरेयम् ॥ ८० ॥

वैवस्वतोऽपीति । वैवस्वतः सूर्य्यपुत्रो यमोऽपि देवः स्वत एव स्वयमेव तुष्टः सन् तं नराधिराजं नलं इत्याचष्ट अभाषत । इति किं । हे नल तवावदानैर्दुष्टादिकर्म्मभिर्यां शौर्यपराक्रमाद्यैर्वा निमित्तैरिव मदीया रसना जिह्वा वरप्रदानाय तुभ्यं वरं दातुं चिरमुन्मधुरा उत्सुका, वरं दास्यामीति सोत्कण्ठा विद्यत इत्यहमपि वरं दास्यामीत्यर्थः ॥ ८० ॥

सर्वाणि शस्त्राणि सहाङ्गचक्रैराविर्भवन्तु त्वयि शत्रुजैत्रे । अवाप्यमस्माद्धिकं न किञ्चिज्जागर्ति वीरव्रतदीक्षितानाम् ॥ ८१ ॥

सर्वाणीति । हे नल सर्वाणि मन्त्रप्रयोज्यब्रह्मास्त्रादिमहितान्यभ्यासाध्यानि कुन्तखड्गादीनि शस्त्राणि अङ्गानां मोक्षोपसंहारादीनां मन्त्रा देवतादीनां वा चक्रे समूहे सह त्वयि आविर्भवन्तु प्रकटीभवन्तु । मन्त्रशस्त्रादीनि त्वमेव जानीहीति भावः । कथं शत्रुजैत्रे शत्रूणां जेतरि । किमित्येव वरदानमित्याशङ्क्याह । संग्रामादपलायनलक्षणे वीराणां व्रते दीक्षितानां गृहीतनियमानां शूराणामस्मात् अ-

स्वस्थानादधिकमुत्कृष्टं किञ्चिदपि प्राप्यं न जागर्त्ति स्फुरति तस्मिन् किन्त्वेतदेव तेषां परमं प्राप्यं तस्मादयं वरो युक्त एवेत्यर्थः । 'दीधितानां, कृत्यानां कर्त्तरि वेति ( पा० २ । ३ । ७१ ) षष्ठी ॥ ८१ ॥

कृच्छ्रङ्गतस्यापि दशाविपाकं धर्म्मान्न चेतः स्खलतु त्वदीयं । प्रमुञ्चतः पुण्यमनन्यभक्तेः स्वहस्तवास्तव्य इव त्रिवर्गः ॥ ८२ ॥

कृच्छ्रमिति । हे नल कृच्छ्रमतिकष्टदशाविपाकमवस्थापरिवर्त्तं गतस्यापि प्राप्तस्य आपदि पतितस्यापि तव चेतः धर्म्मान्न स्खलतु न चलतु । किम्भूतं चेतः । त्वदीयं त्वदायत्तं । आपदि सर्व्वैरप्यधर्म्मं एव क्रियते तव तु विपन्नापद्यपि धर्म्मपरमेव भूयादिति वरो मया दीयत इत्यर्थः । एतस्य वरस्य दाने हेतुमाह । यस्मात् पुण्यमनुञ्चतोऽनन्यभक्तेः पापानासक्तस्य केवलधर्म्मैकसेविनः पुरुषस्य धर्म्मार्थकामलक्षणस्त्रिवर्गः स्वहस्तवास्तव्य इव स्वहस्ते वसति स्वाधीन इव भवति । अनन्यभक्ते धर्म्मे त्वदायत्तावर्थकामावपि प्राप्यंते । कृच्छ्रमित्यादिना भविष्यत्कलिप्रभावः सूचितः । स्खलतात्तवेदमित्यपि पाठः । अन्यस्य भक्तिर्भजनं तदभावोऽनन्यभक्तिर्धर्म्मातिरिक्तभजनाभावाद्धेतोरितिवा । वसतीति वास्तव्य, वसेस्तव्यत्कर्त्तरि णिच्चेति (पा० ३ । १ । ९६ । वा २) तव्यत् । वर्गः सङ्घः ॥ ८२ ॥

स्मितेन ताञ्चिततां वाचमवोचदेनं प्रसन्नचेता नृपति प्रचेताः । प्रदाय भैमीमधुना वरौ ते ददामि तद्यौतककौतुकेन ॥ ८३ ॥

स्मितेति । प्रसन्नचेताः सन्तुष्टः प्रचेता वरुणः एनं नृपतिं प्रति स्मितान्वितां हास्यविशदां वाचमवोचत् । हे नल अहं तु भैमीं प्रदायाधुना तस्या भैम्याः यौतक युतकयोर्वधूवरयोः सम्बन्धि पारिबर्हं वस्त्राभरणादि तस्य कौतुकेन ते तव द्वौ वरौ ददामि ।

कन्यां प्रदाय पश्चाद्यद्वरायान्य प्रदीयते ।
वेदिकायां स्थितायैव तद्यौतकमिति स्मृतमिति ।

युत युग्म युतमेव युतकं युतकसम्बन्धि देयं यौतकं । इति जतिकान्यकुब्जभाषायां ॥ ८३ ॥

यत्राभिलाषस्तव तत्र देशे नन्वस्तु धन्वन्यपि तूर्णमम्भः । आपो वहन्तीह हि लोकयात्रां यथा न भूतानि तथा पराणि ॥ ८४ ॥

यत्रेति । ननु हे नल यत्र धन्वनि निर्जले मरावपि देशे तव जलाभिलाषः तत्र देशे त्वदिच्छामात्रेण तूर्णं शीघ्रं अम्भः जलमस्तु भवतु । जलस्यैव वरदाने हेतुमाह । हि यस्मात् इह लोके पञ्चसु भूतेषु मध्ये आपो जलानि भूतानि यथा लोकयात्रां लोकजीवनहेतुत्वं वहन्ति प्राप्नुवन्ति तथा पराणि भूतेजोवाय्वाकाशलक्षणानि भूतानि लोकजीवनहेतवो न भवन्ति । पानीयं प्राणिनां प्राणा विश्वमेतत्तु तन्मयमिति । उदकस्येच्छानुसारित्वं परमं पुरुषार्थं इत्यर्थः । अम्भस्तु जीवनापाय इति विश्वः ॥ ८४ ॥

प्रसारितापः शुचिभानुनास्तु मरुः समुद्रत्वमपि प्रपद्य । भवन्मनस्कारलवोद्गमेन क्रमेलकानां निलयः पुरेव ॥ ८५ ॥

प्रसारीति । हे नल मरुर्निर्जलो देशो भवतो मनस्कारोऽभिलाषस्तस्य लवो लेशस्तस्योद्गमेनोदयेन बहूदकत्वात् समुद्रस्य प्रपद्य प्राप्यापि पुरेव निर्जलत्वदशायां यथासीत् तथैवास्तु भवतु । किंविध । पूर्वं शुचिभानुना ग्रीष्मसम्बन्धिना सूर्येण प्रसारी विस्तृतस्तापः सन्तापो यस्य । इदानीमपि समुद्रत्वात् शुभ्रकिरणेन चन्द्रेण विस्तारिता आपो यस्य शुचेर्वाडवाग्नेः करणेन ज्वालया विस्तारितः सन्तापो यस्येति वा । चन्द्रोदये समुद्रवृद्धिः समुद्रे वाडवाग्निर्युक्तः । तथा पूर्वं क्रमेलकानामुष्ट्राणां निलयः स्थानभूतः । बाहुल्येन तेषां तद्भवत्वात् । इदानीं भवन्मनस्कारलवोद्गमे सति नक्राणां यादोविशेषाणां ये सङ्घास्तेषां निलयः क्रमेलया मरुर्भवन्मनस्कारलवोद्गमे सति समुद्रस्य प्रपद्यापि पुरेव शुचिभानुना प्रसारितापो मारत्वापि तु अयत्वं याति

वा । प्रसारिता आपो यस्येति । अकपूरण्धूः पथामानक्ष इति (पा० ५ । ४ । ७४) अप्रत्ययः । मनस एकाग्र्यकरणं मनस्कार. चित्तस्यैकाग्र्यं चित्तमभिच्छाविशेष. । चित्ताभोगो मनस्कार इत्यमरः । अतः कृकमीत्यादिना (पा ८ । ३ । ४६) सत्व ॥ ८५ ॥

**अम्लानिरामोदभरश्च दिव्यः पुष्पेषु भूयाद्भवदङ्गसङ्गात् । दृष्टं प्रसूनोपमया मयान्यन्न धर्म्मशर्म्मोभयकर्म्मठं यत् ॥ ८६ ॥**

वरान्तरमाह । अम्लानिरिति । हे नल भवदङ्गसङ्गाद्धेतोः पुष्पेषु अम्लानिरसङ्कुचद्दलावयवत्वं आमोदभरश्च दिव्य स्वर्गीय परिमलातिशयश्च भूयात् । यदस्मात् प्रसूनोपमया पुष्पसादृश्येन पुष्पसदृशमित्यर्थः । धर्म्मस्य पुण्यस्य शर्म्मणः सुखस्य चोभयस्य पुण्यसुखलक्षणस्य द्वयस्य कर्म्मठ करणे समर्थं अन्यत् पुत्रादिकं वस्तु मया न दृष्टं किन्तु पुष्पमेव देवादिपूजनेन धर्मं शिरसि धारणेन परिमलेन वा सुखश्च करोति । कर्म्मठं । कर्म्मणि घटते कर्म्मणि घटो ठच् (पा०५।२।३५) ॥८६॥

**वाग्देवतापि स्मितपूर्व्वमुर्वी सुपर्वराजं रभसाद्बभाषे । त्वत्प्रेयसीसम्मदमाचरन्त्या मत्तो न किञ्चिद्ग्रहणोचितं ते ॥ ८७ ॥**

वागिति । वाग्देवता सरस्वत्यपि स्मितपूर्व्वं प्रसन्नत्वात् किञ्चित् स्मित कृत्वेत्यर्थः । उर्व्वीसुपर्व्वराजं भूमीन्द्र रभसाद्वर्षात् इति बभाष। हे नल तव प्रेयसी भैमी । तस्यास्त्वत्प्राप्तिजनित सम्मद हर्ष आचरन्त्याः मत् मत्त सकाशात्किमपि ते तव ग्रहणोचित ग्रहीतुं योग्यं किमपि न मत्सकाशादपि किञ्चिद्ग्रहीतुमुचितमेव त्वत्प्रियाभिन्नभूतया मया यद्दीयते तदप्यङ्गीकुर्व्विति । रभसो हर्षवेगयोरिति विश्व । सम्मद । प्रमोदामोदसम्मदा इत्यमर ॥ ८७ ॥

**सर्व्वा विनेयाऽवनयोपसीदन्नाल्पेऽपि धीरैरवधीरणीयः । मान्येन मन्ये विधिना. वितीर्णः**

स प्रीतिदायो बहु मन्तुमर्हः ॥ ८८ ॥

गर्वपरिहारपूर्वं स्ववरस्य ग्रहणयोग्यत्वमेव समर्थयति । अर्घं इति । त्वया मत्समीपमागन्तव्यं इति या प्रार्थना तया विनैव उपसीदत्समीपमागच्छन् स्वयमेव प्राभवन् अल्पोऽप्यर्घः अर्घ्यं ते अर्थः फलं स धीरैर्मनीषिभिर्नावधीरणीयः नावज्ञेयः किन्त्वङ्गीकरणीय एव । यस्मात् नान्येन मानमर्हता पूज्येन विधिना ब्रह्मणा दैवेन चाविलीर्णो दत्तः । याच्ञामन्तरेण लब्धत्वात्स प्रीतिदायः । प्रीत्या दान प्रीतिदायः अल्पोऽपि बहु मन्तुं गौरवेणाङ्गीकर्तुं अर्हः उचित इत्यहं मन्ये । तस्मात्त्वयापि मया योऽल्पोऽप्यर्घो दीयते स ग्रहीतव्य एवेति भावः । धीरैरल्पोऽप्यर्घो नावज्ञायते किन्तु पुनर्महानित्यपेरर्थः । अहङ्कोऽपि वरस्यात्वमेव गर्वपरिहारः । प्रीत्या दायः प्रीतिदायः । कर्तृकरणे कृतेति (पा० २ । १ । ३२) समासः । दीयते दायः, कर्मणि घञ् ८८

आवामा वामार्धं सकलमुभयाकारघटनाद्द्विधा भूतं रूपं भगवदभिधेयं भवति यत् । तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं निराकारं शश्वज्जप नरपते सिध्यतु सते ॥ ८९ ॥

तमेव वरमाह । आवामिति । शश्वज्जपो यस्य तत्सम्बोधनं तादृशो, भो नरपते नल मे मन्त्र गोप्यं मदीयरहस्यभूतं सेन्दुमं इन्दोर्मा चन्द्रकान्तिस्तया सहितं दक्षभागे चन्द्रकान्त्या युत चन्द्रकलोपेतं पार्श्वतीभागे च भूषणीभूताद्र्धचन्द्रयुत तत्तरीत्या निर्मित आकारः स्वरूपं यस्य । यद्वा हं हामात्रेण साकार, विचारे क्रियमाणे त्वविद्यमानाकारं, तथा स्मरहरमय कामतत्स्वरूप क्रमेण भुक्तिमुक्तिदायि शम्भू त तद्रूपं अन्तःकरणे सते साधवेऽर्थात् तुभ्यं । यद्वा हे नरपते सते साधवे ते तुभ्य अलमत्यर्थं सिध्यतु समाधिदशायां साक्षाद्भवत्वित्यर्थः । से तद्रूपमिति वा । मे मम प्रसादादिति ज्ञायते वा । स्त्रीणां कामप्रधानत्वात् स्मरपदेन स्त्रीभागो लक्ष्यते । तथा च पूर्वोक्तगुणविशिष्टं स्मरहरमयं शक्तिशिवरूपं तन्मेरूप तवान्तः सिध्यत्विति वा । पूर्वोक्तं हरमयं मे रूपममलं अन्त.

मा पवर्गपञ्चमव्यञ्जनेन वा प्रणवपादेनेत्यर्थ । तथा उत्तरभागे अथा श्लोक रेण तथाऽमाऽनुस्वारेण व्यञ्जनमकारेण वा प्रणवेनोपलक्षित प्रणवद्वयसम्पुटितमित्यर्थ । हरमय हरेति नामरूप मे मन्त्र सदा जप्यमान रहस्य स्मर चिन्तय जप । शिष्ट पूर्ववत । हरस्य पक्षे तु तन्मे रूप मन्त्र ध्यातमननमि स्मर शश्वज्जप । स च ते सिध्यतु । कीदृश मन्त्र हरमय हर रेफरूप तथा निराकर अत्र अत्र तयोराकार स्वरूप स्वरूपे च आकारो निगतायाकारो यस्मात् निराकार हकार रेफयोरुच्चारणार्थं यदकारद्वय तद्रहित ह्र इति व्यञ्जनमात्रहकाररेफ मयमित्यर्थं । तथा सेन्दु इंश इन्दु श ताभ्या सह वत्तमान ईकारेण इंचन्द्रेण युक्त । तथा कला अनुस्वारस्तत्सहित ह्रीँ काररूपमित्यर्थ । सकल चन्द्रेणापेत । सेन्दमोकारबिन्दुयुतमिति वा । अमल गोक्ता दिदोषरहित । सत कि । यत रूपमहं पूर्वयद्दक्षिणवामभ गयारवाग वामा च उपलक्षित प्रणवद्वयसम्पुटित । तथा यत् पूर्वमुभयारकार याघटनात्सम्बन्ध द्विधाभूत पृथग्भूतमसयुक्त सत् भाव न् हराऽभिधेयो वाच्यो यस्य तादृग्भवति । प्रत्यकमकारयोगाद्धरेति शिवनाम यद्भवती त्यथ । यद्वा पूर्वं हर इति द्विधाभूत । अनन्तर अकारद्वयव्यतिरेकेण व्यञ्जनरूपतया सयोगात्मकमनेकात्त मित्यर्थ । तथा भगवती भुवनश्वरी अभिधया यस्य तादृशमिति वा ॥

> शिवा न्ता वह्निमयुक्ता व्यङ्घ्रिमयमतारा ।
> तुरीयस्वरयाताग्रेव ताराभ्यामन्वित ॥
> एष चिन्तामणिर्नाम मन्त्र सत्वाथसाधक ।
> जगन्मातु सरस्वत्या रहस्य परम मतमित्यागमात ॥

प्रणवद्वयसम्पुटितभुवनेश्वरीरूप चिन्तामण्याख्य मे सरस्वत्या स्वरूपभूत मन्त्र स्मर जप, स च मन्त्रस्ते सिध्यतु । शैवादिचिन्तामणि मन्त्रसम्भवात् मन्मन्त्रेति विशेषण । हय रय मय ईंश तादृश हकारेफमकारेकारसमाहाररूप । यद्यपोकार पश्चान्निर्दिष्टस्तथापि मकारात् पूर्वमेव ज्ञेय । तस्य पश्चान्निर्देशो मन्त्रगोपनाथ । तथा सन्दु सचन्द्र निराकार निगताकारचतुष्टयस्वरूप तादृश मे मन्त्र स्मर ।

यतरत् पूर्ववदिति वा । अत्र पक्षे आकाररहितो मन्त्रः । कथं लब्धौ ताभ्यां सहितमन्त्रोऽपि । निराकार मैन्द्रमिति सम्बध्यते । उभयाकारघटनादित्यादि पूर्ववत् । तथा च क्लीमिति कामराजबीजं सिध्यति । अस्मिन् श्लोके टीकान्तरकृतो बहूनां शैववैष्णवादिमन्त्राणामुद्धारो विज्ञेयः । अत्र ग्रन्थविस्तरभिया कष्टकल्पनयानयानचोक्तः ॥८९॥

सर्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः स स्वर्गीयमृगीदृशामपि वशीकाराय मारायते । यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा येनायं हृदये कृतः सुकृतिना मन्मन्त्रचिन्तामणिः ॥ ९० ॥

मन्त्रफलमाह । सर्वेति । अयं पूर्वश्लोकोपदिष्टः मन्मन्त्रश्चासौ चिन्तामणिश्च चिन्तामणिसञ्ज्ञको मन्मन्त्र इत्यर्थः सर्वकामदत्वान्मन्त्र एव चिन्तामणिः चिन्तामणितुल्यो मन्मन्त्र इत्यर्थः । स पुरश्चरणादिना क्षीणपापेन सुकृतिना येन साधकेन जपादिना हृदये चित्ते कृतः स साधकः सर्वाङ्गाणि व्याप्नुवन्ति सर्वाङ्गीणानि ते शृङ्गारादिरसैः यानि स्वादुत्वादमृतानि तैः स्तिमितया आर्द्रया काव्यादिरूपया वाचा हेतुभूतया वाचस्पतिर्वागीशो भवति । तथा स साधकः स्वर्गीयमृगीदृशां दिव्यानां मृगाक्षीणां रम्भादीनामपि वशीकाराय मारायते कन्दर्पायते । तं दृष्ट्वा उर्वशीप्रभृतयो देवाङ्गनाः कामपरवशा भवन्तीत्यर्थः । किञ्च यः पुरुषः कृतपुरश्चरणोऽपि यस्मै फलाय स्पृहयति तमभिलषति सोऽनेन मदुपदिष्टेन मन्त्रेण हेतुना तत्प्राप्नोत्येव किं भूयसा कथनेन मन्त्रविशेषेण वा । नात्र सन्देहः । तस्मात्त्वयाऽयमेव मन्त्रो हृदये धार्य इति भावः । सर्वाङ्गीणेत्यत्र तत्सर्वादेरित्यादिना (पा० ५ । २ । ७) खः । वाचस्पतिः । षष्ठ्याः पतिपुत्रेत्यादिना (पा० ८ । ३ । ५३) सत्वं । स्वर्गीयेति । नामधेयत्वाद्वृद्धाच्छः (पा० ४ । २ । ११४) मारायते । कर्तुः क्यङ् सलोपश्चेति (पा० ३ । १ । ११) क्यङि । यस्मै । स्पृहेरीप्सित (पा० १ । ४ । ३६) इति सम्प्रदानत्वं । भूयसे । बहोर्लो

पो भू च बहोः (पा० ६ । ४ । १५८) इति भूआदेशः ॥ ९० ॥

पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारुहंसेन मां
चेन्निर्यान्तीं मन्त्रमूर्तिं जपति मयि मतिं न्यस्य
मय्येव भक्तः । सम्प्राप्ते वत्सरान्ते शिरसि क
रमसौ यस्य कस्यापि धत्ते सोऽपि श्लोकानका
ण्डे रचयति रुचिरान्कौतुकं दृश्यमस्याः ॥ ९१ ॥

पुष्पैरिति । यः साधकः चारुणा सुन्दरेण हंसेन निर्यान्तीं गच्छन्तीं मूर्च्छमानां हंसवाहनामित्यर्थः । मन्त्रमूर्तिं यन्त्रमध्यस्थितमन्त्रवर्णरूपेण परिणमदाकारां मन्त्रस्यान्तरशरीरां वा मां देवीं सुजनैरति-मनोहरैः सुकुमारैः सुगन्धिभिश्च पुष्पैः गन्धधूपादिभिः षोडशोपचारैरपि अभ्यर्च्य तथा मयि मतिं न्यस्य विषयान्तरादाकृष्य ध्यानयत्नेन स्थिरीकृत्य देवतान्तरपरिहारेण मय्येव विषये भक्तः सदासक्ततया मामेव सेवमानः सन् चेद्यदि जपति तर्हि असौ जापकः वत्सरान्ते संवत्सरावसाने प्राप्ते जाते सति यस्य कस्यापि स्त्रीबालमूकादेरपि शिरसि करं धत्ते स्थापयति सोऽपि स्त्रीबालादिरप्यकाण्डेऽसमये ऽकस्माद्वा रुचिरान् रसभावगुणालङ्कारयुतान् दोषरहितान् श्लोकान्रचयति । यस्तु सिद्धमन्त्रः सन् विविधान् श्लोकान्रचयति, किं वाच्यमित्यर्थः । एतदस्याः कौतुकं दृश्यम्, अनुभवेनायमस्याश्चमत्कारो द्रष्टव्य इत्यर्थः । एवं सम्पूज्य हंसवाहनादिध्यानपूर्वमेकाग्रेण मनसा चेज्जपति तर्हि वत्सरमात्रेण सिद्धमन्त्रः सन्नेवंविधं सामर्थ्यं लभत इति भावः ॥ ९१ ॥

गुणानामास्थानीं नृपतिलक नारीति विदितां
रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः ।
भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं परीर
म्भक्रीडाचरणशरणामन्वहमहम् ॥ ९२ ॥

गुणानामिति । हे नृपतिलक राजश्रेष्ठ नल अहं वैदर्भीं भैमीमथ च

वैदर्भीमुख्या रीति अल्पपदसमासमसमास वा रचनाविशेष क्रमेण त घे वृत्ते त्वत्सम्बन्धिनि चरित्रे विषय कवितु काव्यकरणे युक्तस्य श्री-हर्षादेव अधिकण्ठ अन्वह सदा परीरम्भस्यालिङ्गनस्य चुम्बनादिवि-लासस्य यदाचरण करण तदेव शरण जीवनोपाया यस्या एवम्भूता प रीरम्भक्रीडया वा हेतुभूतया त्वच्चरणशरणमालिङ्गनप्रार्थनार्थं त्वच्चरण-यो पतन्ती अथ च परीरम्भस्य रूप लङ्कारस्य क्रीडाया वक्रोक्त्यादि-विलासस्य वा सामस्त्येन यच्चरण ज्ञान तदेव शरण यस्यामेवविधा-मधिक यथा तथातितरा रचयितु कर्त्तुं भविन्त्री भविष्यामि । किम्भू-ता । गुणाना सौन्दर्य्यपातिव्रत्यादीना अथ च श्लेषप्रसादादीना श्रा-स्यामी समावरूपा अवस्थितिभूता । तथा नारीति ख्याति विदिता । नारी चेत्ताहि भैम्येव जातेति प्रसिद्धा । अथच रीतिषु पाञ्चाल्यादिषु विदिता तथा नेत्यरीतिविदिता तथाविधापि नेति नारीति विदिता तादृशी पाञ्चाल्यादिरीतिषु मध्येऽतिप्रसिद्धामिति यावत । तथा तवा न्तर्ह्रदये रसन स्वीयसौभाग्येन नलविषयानुरागेण स्वस्मिन नलानुरा-गेण वा स्फीतामतिपुष्टा, अथ वान्त श्लाकमध्ये रसै शृङ्गारादिभि प रिपुष्टा एवम्भूता भैमी त्वत्कण्ठालिङ्गनपरा । त्वच्चरणशरणा त्वदेकश-रणा प्रत्यहमह करिष्यामीति भाव । एतदपि वरदान । नारीति स-म्मुखान्त पृथक्कृत्य राजश्रेष्ठ न पुरुषेति सम्बोध्य पातिव्रत्यादि री-त्या विदिता पाञ्चाल्यादिरीतिषु च विदितामिति वा ।

श्लेष प्रसाद समता माधुर्य्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोज कान्तिसमाधय ।

इति वैदर्भमार्गस्य प्राणा दशगुणा स्मृता इति काव्यालङ्कारिका । श्राम्यार्थी क्रीयमास्यामित्यमर । आसिश्रन्त्यस्यामधिकरणे लु ट । टिड्ढाणञ्—ङीप् । नारीत्यत्र परे ढ्लोप (पा० ६ । ३ । १११) इति दीर्घः । कवितु । कवृ वर्णने, कसृङ् स्तुतावित्यस्य वा । अधिकण्ठ-मसम्यर्थे अव्ययीभाव ॥ ८८ ॥

भवद्भवस्तोतुमदुपहितस्याठस्य कवित्तुमुग्धान्
पुण्यैः श्लोकैरथयि घनमुदेव जनमुदे । ततः

पुण्यश्लोकः क्षितिभुवनलोकस्य भविता भवा
नाख्यातः सन् कलिकलुषहारी हरिरिव ॥ १३ ॥

वरान्तरमाह । भवदिति । मदुपहितकण्ठस्य मयाधिष्ठितकण्ठस्य भवता भृतस्य धारितस्य स्नातु कचित् कवर्मुखात् सकाशात् त्वमि विम ये पुण्यैश्चाहभिरमलैश्च श्लोके यशोभिर्यशोभिश्च यत्र मिलितं यथा तथा ज माता तुदे इवोय तदेव तदेतत्त्वं । ततोऽनन्तरं तस्माद्वा हेतोर्भवान् क्षितिभुवनलोकस्य त्रिविष्टपजनस्य कलियुगसम्बन्धिकलुषहारी पातक हरणशील सन् हरि श्रीविष्णुरिव पुण्यश्लोक इति आख्यातो भविता भविष्यति । यद्वा पुण्यश्लोक सन् क्षितिभुवनलोकस्य कलिकलुषहारी हरिरिव भविता । पुण्यौ चारू निर्मलौ श्लोकौ यशःयशसी यस्येति वि ग्रहः । पुण्यश्लोको नलो राजेति पुण्यश्लोकत्व । कर्कोटकस्येत्यनेन क लिनाश्रित्युक्त । तदेव । अचोयदिति (पा० ३।१।९७) यत् ।१३॥

देवी च ते च जगदुर्जगदुत्तमाङ्गरत्नाय ते क
थय कं वितराम कामम् । किञ्चिद्त्वया न हि
पतिव्रतया दुरापं अस्मास्तु यस्तव वृत व्रत
लोपमिच्छुः ॥ १४ ॥

देवीति । देवी च ते च इन्द्रादय भैमी जगदुरित्यर्थ । इति किं । हे भैमि त्व जगतः लोकस्याङ्गमाङ्ग शिरस्तस्य रत्नाय भूषणमणिभूता ये अतिसौन्दर्ययुक्तायै ते तुभ्य क काम वितराम ददाम अपि तु न कमपि । अस्मद्दानयोग्य नास्तीत्यर्थ । हि यस्मात् यद्यपि पतिव्रतया त्वया किञ्चिदपि वस्तु दुरापं नास्ति किन्तु पातिव्रत्यात् सर्वमपि त्व या सुप्रापमेव तथापि यस्तव व्रतलोप पातिव्रत्यभङ्ग इच्छु अभिलष ति त्वया सह रन्तुमिच्छेत् स भस्मैवास्तु । वृत कष्ट, अनुचितकर्मा स इत्यर्थ । काम । अकर्तरि च कारके सज्ञाया (पा० ३।३। १९) इति कर्मणि घञ् । त्वया । खलर्थप्रयोगे षष्ठीनिषेधात् तृतीया । व्रतलोप । न लोकाव्ययनिष्ठेत्यादिना (पा०२।३।६९) षष्ठीनिषेधात् द्वितीया ॥ १४ ॥

**न दोषं विद्वेषादपि निरवकाशं गुणमये वरेण प्राप्तास्त्रे न समरसमारम्भसदृशम् । जगुः पुण्यश्लोकं प्रति नृपतयः किन्तु विदधुः स्वनिश्वासैर्भैमीहृदयमुदयन्निर्भरदयम् ॥ ९७ ॥**

नेति । प्रतिकूला नृपतयः पुण्यश्लोके विद्वेषाद्भैमीप्राप्तिजनितविशिष्टमत्सरादपि हेतोरसुन्दरशीलतादिकं दोषं न जगुर्जगदुः । यतो नले निरवकाशं असन्तं । यतः गुणमये सौन्दर्यशौर्यशील्यादिगुणबहुले पुण्यश्लोके वा, वैरिणापि सन्नेव दोषः प्रकाश्यते नत्वसन् । सुहृदा तु सन्नपि दोषो गोप्यते । तथा च विद्वेषे सत्यपि गुणमयत्वात् दोषलेशस्यायासेनाप्यभावाद्दोषं नोचुरित्यर्थः । तथा बलाद्भैमीहरणार्थं समरसमारम्भस्तस्य सदृशं तद्योग्यमधिक्षेपपरुषभाषणादिकमपि च नोचुः । यत यमवरेण प्राप्तास्त्रे लब्धदिव्यास्त्रे वा, यत स्वत शूरे वरेण च मिलता दुर्द्धर्षे । तस्मादसामर्थ्यात् किञ्चिन्नोचुरित्यर्थः । किन्तु गत्यन्तररहिता सन्तो निजासामर्थ्यकृतात्मदयदनस्तापके स्वनिश्वासैः करणैर्निजमुखानामिति कृत्वा भैमीहृदयं उदयन्ती निर्भरा बहुला दया यस्य एवम्भूतं अतिसकृपं विदधुः चक्रुः । अतिदीनास्तान् दृष्ट्वा भैमी नितरां सकृपाऽभूदिति भावः । भैम्या हृदयभूतं प्राणरूपं नलं स्वनिश्वासैः सकृपं चक्रुरिति वा ॥ ९७ ॥

**भ्रूभङ्गिर्लम्भितासौ करुणरसनदीमूर्त्तिमद्देवतात्वं तातेनाभ्यर्थ्य योग्याः सपदि निजसखीर्दापयामास तेभ्यः । वैदर्भ्यास्तेऽप्यलाभात् कृतगमनमनःप्राणवाञ्छां विजघ्नुः सख्याः संशिक्ष्य विद्यां सततधृतवयस्यानुकाराभिरामाः ॥ ९८ ॥**

भ्रूभङ्गिरिति । भ्रूभङ्गिं राजभिः करुणरसस्य शोकस्थायिभावस्य रसस्याथ च जलस्य नदी तस्या मूर्त्तिमत्या देवताया भावं लम्भिता

प्रापिता जलदेवतास्थाने स्थापिता, सन्निधासैः करुणरसार्द्रीकृतचित्ता यतो असौ भैमी सपदि समाधायाप्रहरेत नितरां दुःखितास्तस्मादतिसुन्दरीमस्मत्सखीमेभ्यो देहीत्यञ्जलियोजनेनार्थितास्तमेवाभ्यर्थ्य सम्प्रार्थ्य निजसखीः सहचरीस्तातेन पित्रा तेभ्यो राजभ्यो दापयामास । तेभ्यः सखीदाने भीमं प्रावर्त्तयदित्यर्थः । ते राजानोऽपि वैदर्भ्या अलाभात् कृत गमने देहत्यागे विषये मनो यैः तेषां प्राणानां वाञ्छा नतीः सखीभिर्विजघ्नुः । भैमीसखीलाभात् प्रारब्धगमनात्प्राक् पुनर्न्यवर्त्तयन्नित्यर्थः । किम्भूताभिः सखीभिः । यतः भैम्याः सकाशात् इन्द्रादिदेवेभ्यः वरप्रासादाद्दिव्यकशरीरनिर्माणादिरूपां विद्यां संशिल्प सम्यगभ्यस्य सततं प्रयत्नं कृतो वयस्याया भैम्या अनुकारो याभिः तुल्यशरीरकलाकौशलादिरित्यर्थः । ततश्च सर्वेऽपि भैमीप्राप्तिबुद्ध्या स्वप्राणान् रक्षितवन्त इति भावः । लभिर्द्विकर्म्मा । तस्याः । आख्यातोपयोगे (पा० १।४।२९) इत्यपादानत्वं ॥ ९८ ॥

**अहह सह मघोना श्रीप्रतिष्ठासमाने निलय
मभि नलेऽथ स्वप्रतिष्ठासमाने । अपतदमरभ
र्त्तुर्मूर्त्तिबद्धेव कीर्त्तिर्गलदलिमधुबाष्पा पुष्पवृ
ष्टिर्नभस्तः ॥ ९९ ॥**

अहहेति । अथ राजभ्य सखीदानानन्तरं मघोना इन्द्रेण सह श्रीः सम्पत् प्रतिष्ठा माहात्म्यं ताभ्यां समाने, स्वं निजं निलयं स्थानं अभिलक्षीकृत्य प्रतिष्ठासमाने जिगमिषति नले नभस्तो गगनादमराणां सुरारिजातादिदेववृक्षाणां पुष्पवृष्टिरपतत् । अहहेति हर्षे । भैम्या नले वृते दृष्टैर्देवैर्नलस्योपरि पुष्पवृष्टिः कृतेत्यर्थः । उत्प्रेक्षते । बद्धा धृता मूर्त्तिर्यया सा मूर्त्तिबद्धा अद्धा मूर्त्या बद्धा युता साकारा, गलन्तः पतन्तोऽलयो भ्रमरा यस्यां विध मध्वेव बाष्पो यस्याः । अधःपतनजनितदुःखसूचकमधुबिन्दवो यस्याः । एवम्भूताऽमरभर्त्तुः इन्द्रस्य कीर्त्तिरिव वा । पुष्पाणां शुभ्रत्वात् कीर्त्तित्वं । भैम्या चापहृतत्वादिन्द्रस्य कीर्त्तिर्गलितेति युक्तं । स्वर्गादधःपाते दुःखाश्रु च युक्तं ।

चौषाम्यास्तु सकज्जल भवति । मकरन्दो धाष्पस्थाने । सद्नुगती भ्रमर कज्जलस्थाने । समानशब्दस्य समासान्तर्गतस्यासाक्षात् तुल्य-योगाभावात्सघोनेति तृतीयार्थमनुप्रासार्थं च साक्षात् सहशब्द सम घोक्ति । प्रतिष्ठासमान इति । समवप्रेति (पा० १ । ३ । २२) तङो विधानात्, पूर्ववत् सन (पा० १ । ३ । ६२) इति तङ् ॥ ९९ ॥

स्वस्यामरैर्नृपतिमंशममुं त्यजद्भिरश्छिदा कद
नमेव तदाध्यगामि । उत्का स्म पश्यति निवृ
त्य निवृत्य यान्ती वाग्देवतापि निजविभ्रम
धाम भैमीम् ॥ १०० ॥

स्वस्येति । सदा स्वर्गगमनसमये अमुं नृपतिं नलं त्यजद्भिरमरैः स्वस्य छिदा कर्त्तनेन यत्कदनं दुःखं तदेवाध्यगामि प्रापि । यतः स्वस्येन्द्रादेरंश । लोकपालांशत्वाद्राज्ञ । स्वहस्तादिकर्त्तने यादृग् दुःख भवति तादृशमेव तेषां नलपरित्यागे जातमिति भावः । यान्ती स्वर्गं प्रतिगच्छन्ती वाग्देवतापि भैमीं निवृत्य निवृत्य पुनः पुनः व्याघूर्ण्य वलितग्रीवं यथा तथा पश्यति स्म । किम्भूतां निजविभ्रमाणां स्वीयवर्णनवाग्गर्यादिविलासानां धाम स्थानभूताम् । किम्भूता । उत्का, प्रियस्य सहवासमात्रजूतगुणगणप्रेमभरतया सोत्कण्ठा परित्यक्तुमशक्तेत्यर्थः । अथवा निजसारस्वत विलासगृह यान्ती गच्छन्ती । छिदा भि-द्भिदादिभ्योऽङ् (पा० ३ । ३ । १०४) ॥ १०० ॥

सानन्द तनुजाविवाहलमहे भीमः स भूमीपति
वैदर्भीनिषधाधिपौ नृपशतानिष्टोक्तिनिर्मृष्ट
ये । स्थानि स्थानि धराधिपाश्च शिविराण्युद्दि
श्य यान्तः क्रमादेको द्वौ बहवश्चकार सृजतः
स्मातेनिरे मङ्गल ॥ १०१ ॥

सानन्दमिति । स भीम एको भूमीपतीराजा तनुजाया भैम्या विवाहन पाणिग्रहण तल्लक्षणे महे महोत्सवे विषये माङ्गलिकतूर्यवादना-

दिक्षु मङ्गलं सानन्दं सहर्षं यथा तथा चकार । वैदर्भीनिषधेश्वरौ च द्वौ क्षणमात्रं तत्र स्थितावथ प्रसूपका ये नृपसङ्घाः नृपाणां या ये सनास्सेवकास्तेषां अनिष्टोक्तयः कर्णकठोराणि यानि नृपादीनाराप-शवचनानि तासां नितरां मृष्टये परिमार्जनाय अशुभवचनाकर्णनाय नृत्तगीतवाद्यबहुलं प्रेक्षणीयकादिदर्शनश्रवणादिरूपं मङ्गलं सृजति स्म चक्राते । अमङ्गलं नाकर्णनीयमिति नृत्यगीताद्याकर्णनव्याजेनामङ्ग-लपरिहारं चक्रतुः । सहैव सर्वे धराधिपाश्च राजानोऽपि स्वानि स्वानि शिबिराणि सेनानिवेशानुद्दिश्य लक्षीकृत्य यान्तो गच्छन्तः सन्तः प्राप्तभैमीसदृशवनिताः पटहनिस्वनादिरूपं मङ्गलमातेनिरे चक्रुः । वा द्यानि वादयामासुरित्यर्थः । एतच्च सर्वं क्रमश पूर्वं भीमचकारान-न्तरं भैमीनलौ चक्राते ततो राजानश्चक्रुरिति क्रमः । किंत्वैका द्वौ बहव इति क्रमः । तथा चकार सृजति स्म चक्रिरे इति च क्रमः । सानन्द-मिति सर्वत्र सम्बन्धः । श्रेष्ठजामातृलाभाद्भीमस्य हर्षः । परस्परला-भाद्भैमीनलयोः । सुन्दरभैमीसखीलाभाद्राज्ञामिति च यथासङ्ख्यम् । विवाहने । ण्यन्तान्नपुंसके भावे, ल्युट् चेति (पा० ३ । ३ । ११५) ल्युट् ॥ १०१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातस्तस्य चतुर्दशः शरदिजज्योत्स्नाच्छसूक्तेर्म
हाकाव्ये चारुणि नैषधीयचरिते सर्गो निसर्गो
ज्ज्वलः ॥ १०२ ॥

श्रीहर्षमिति । अर्द्धं पूर्ववत् ॥ शरदिजा शरत्कालीना ज्योत्स्ना च न्द्रिका तद्वदमला निर्मला निर्दोषा प्रसन्ना आह्लादजनिका च शोभना सूक्तिर्यस्य तस्य श्रीहर्षस्य कवेः एतौ महाकाव्ये चतुर्दशानां पूरणः सर्गः समाप्तः ॥ चतुर्दशानां पूरण इत्यर्थे । तस्य पूरणे डडिति (पा० ५ । २ । ४८) डट् । शरदिजेति । सप्तम्यां जनेर्ड इति (पा० ३ । २ । ९७) इत्यत्रपि, प्रावृट्शरत्कालदिवां ज इति (पा०६।३।१५) सप्तम्या अलुक् १०२॥

इति श्रीमिदरकारायमानकश्रीनारायणपण्डितात्मजनारायणकृते नैष-धीयप्रकाशे चतुर्दशः सर्गः ॥

## उत्तरनैषधचरिते।

### पञ्चदशः सर्गः।

ॐ गणेशाय नमः।

श्रीर्जयति।

अथोपकार्य्यां निषधावनीपतिर्निजामयासीद्वरणस्रजाञ्चितः। वसूनि वर्षन् सुबहूनि बन्दिनां विशिष्य भैमीगुणकीर्त्तनाकृतां ॥ १ ॥

श्रीलक्ष्मीनृसिंहो जयति। अथ भैम्याः स्वयम्वरे वरणस्रजा मधूकमालया अञ्चितः पूजितः स निषधावनीपतिर्नलोऽथ च देवान् प्रसाद्य भैम्या नले वृते ताभ्यां वरान् दत्त्वा देवेषु प्रारब्धस्वर्गगमनेषु स तु अनन्तरं भीमेन सन्निधानार्थं रचितां निजां स्वीयां नलेनैव या कारितां पटमयद्रव्यादिरूपामुपकार्य्यामयासीत् ययौ। किं कुर्वन्। अन्येषां बन्दिनां साधारण्येन सुबहूनि वसूनि वर्षन् भैमीगुणानां कीर्त्तनं मासामस्त्येन कुर्वन्तीति कृतः तेषां तु बन्दिनां विशिष्य विशेषं कृत्वा वर्षन् अन्यापेक्षया तेभ्योऽधिकं प्रयच्छन्। बन्दिनां। सम्बन्धसामान्ये षष्ठी ॥ १ ॥

तथा पथि त्यागमयं वितीर्णवान् यथाऽतिमात्राधिगमेन मागधैः। तृणीकृतं रत्ननिकायमुच्चकैश्चिकाय लोकश्चिरमुञ्छमुत्सुकः ॥ २ ॥

धनदानस्य सुबहुत्वमेव वर्णयति। तथेति। अथ नलः पथि त्यागकीर्त्तये साधारण्येन दीयमानं धनं तथा तेन प्रकारेण वितीर्णवान्

दत्तवान् यथा येन प्रकारेण मागधैर्बन्दिजातिविशेषैः अतिभाराधिग-
मेन अतिशयितगुरुत्वप्राप्त्या बहुतरलब्धधनस्य वोढुमशक्यत्वात् परिपू-
र्णत्वाच्च निरपेक्षत्वात् तृणीकृतं तृणवत्त्यक्तं रत्ननिकायं रत्नसमूहं तत्र
कैर्नितरामुत्सुकोऽहमहमिकया ग्रहीतुं प्रवृत्तो लोक उत्कं भूपतितमव-
क्षणगणं चिरं बहुकालं चिकाय उच्चित्याददे रत्ननिकायं उत्कमिति क-
पक । उत्कैर्बहुमूल्यं रत्ननिकायमिति वा । अनेनास्य दानशूरत्वमुक्त-
म् । उञ्छो धान्यानां कणश आदानं । रत्नादाने त्वौपचारिकः प्रयो-
गः । न कर्मणि घञ् । वितेनिवानिति पाठे त्यागमिति भावे घञ् ।
दानं चकारेत्यर्थः । निकाय्येति पाठे निवासः । अधिकरणे ण्यत् ।
आय धात्वादेः कत्वञ्च, पाय्यसान्नाय्यनिकाय्येत्यादिना (पा० ३ । १ ।
१२९) निपात्यते । चिनोतेर्ण्यन्तस्यायादेशो चिकायेति, आचार्योः, चजोरि-
ति (पा० ७ । ३ । ५२) कुत्वम् ॥ २ ॥

त्रपास्य न स्यात् सदसि ह्रियान्वयात् कुतो-
तिरूपः सुखभाजनं जनः । अमूदृशी तत्कवि-
वन्दिघर्षणैरवाकृता राजकरण्डजालोकवाक् ॥३॥

त्रपेति । असावपि दृश्यते इत्यनुदृश्य तरसदृश्यन्यापि, भिन्दन्ता-
नि राजकानि नृपसङ्घातानि रञ्जयन्त्येवंशीलास्तदनुजीविनो लोका-
स्तेषां मृषा वाक् दोषारोपणरूपा, तस्य तयोश्च भैमीनलयोः कवयः
ग्रन्थकर्तारो बन्दिनश्च प्राकृतादिभाषावचनचतुरास्तेषां घर्षणैः कर्द-
भिरवाकृता तिरस्कृता । तेषां प्रचुरतरतारस्वरेण नतिरोहितत्वात्
सा वाक्ताभ्यां नाकर्णितेत्यर्थः । वागर्थाकृता अशब्दरूपा कृता ध्व-
निमात्रं श्रुतं, न त्वर्थव्यञ्जकः शब्दः श्रुत इति वा । असौ का । स-
दसि नानादेशमिलितजनसमाजे तरसमपि ह्रियान्वयात् सम्बन्धाद्दस्य
जनस्य लज्जा न स्यात् अपि तु लज्जया भवितुं युक्तं न च तया जा-
तमिति निर्लज्जोऽयमित्येका वाक् । तथाऽतिरूपः सुन्दरो जनः श्री-
रामचन्द्रजानकीवत् कुतः सुखभाजनं सुखस्थानं अपि तु दुःखवान् ज-
नो दुःखमेवैति दृष्टत्वात् । सुरूपयोरनयोरपि दुःखं भवितेत्यन्या
वागवाक् कृतेति विरोधाभासः । सदसि ह्रियान्वयाद्धेतोर्लज्जावत्त्व न

रपादन्यस्य तु स्यादेवेति । अथ निर्लज्जोऽतिसुरूपश्च । भवादृशो जनो मैत्रीप्राप्तिजनितसुखभाजन कुतोऽपि न । रूपवान् हि रम्या प्रिया न लभते । अतो रूपवन्तो भवन्तोऽपि प्रिया रम्या नालभतेति स्व स्व प्रभु प्रति सेवकवचनमिति वा । अतिसुरूपा मैत्रीलग्नया जन । अत सुखभाजनमपि तु न एवभूतानां यशामप्राप्तेरिति वा । अमूदृशी । अद शब्दे उपपदे दृश त्यदादिषु दृश (पा०३।२।६०) इति कञ्, दृग्दृशवतुषु आ सर्वनाम्न (पा०६।३।८९) इत्यात्वं अदसोऽसेर्दादुदिति (पा० ८ । २ । ८०) मत्वं च टिड्ढाणञिति (पा० ४ । १ । १५) ङीप् । अवाकृतेति पदद्वय ॥ ३ ॥

**अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणा । न जातु सत्ये सति दूषणे भवेदलीकमाधातुमवद्यमुद्यमः ॥ ४ ॥**

राजकीयैर्जनैर्निन्द्यमानायां कलायामपि तथानिर्दोषत्वमाह । अदोषतामिति । द्विषां मृषाऽविद्यमानस्य दोषकणस्य दोषलवस्याधिरोपणा, आरोपा सतां अदोषतामेव निर्दोषत्वमेव विवृण्वते प्राकट्येन कथयन्ति । कथ । यत सत्ये दूषणे सति विद्यमाने ऽलीक असत्यमविद्यमान आधातु आरोपयितु खलानां जातु कदाचित् उद्यम प्रयत्नारम्भो न भवेत । सति दोष विद्यमानत्वादेव नारोप । अथ तावदारोप्यते असद्यासति दोषे तदारोपण निर्दोषतामेव वक्तीत्यभयथापि पर दोषाद्घाटनमनुचितमित्यर्थ । सर्वथा तौ निर्दोषाविति भाव । सत्ये दूषणे सति खलानामलीक दोषमाधातु उद्यम कदापि न भवेत्, अपि तु सत्यदोषाभावेऽलीकमपि दोष वदन्ति ततश्च निर्दोषत्वमेवागतमिति वा । अथ च सत्ये परब्रह्मस्वरूपे श्रीरघुनाथे विषये सति असाधौ दूषणाख्ये राक्षसे अवद्य अलीक दुष्प्रिय कर्तुं उद्यमः कि कदाचिन्न भवेत् अपि तु श्रीरामचन्द्रे विषयेऽपि दूषणाख्येन राक्षसेनाप्रियं कर्तुं उद्यम कृत एव । तथापि यथा स निर्दोषस्तथा तैर्निन्द्याया कलायामपि निर्दोषावेव तावपीत्यर्थं । यद्वा वक्ती सीतायाः

पातिव्रत्यपरीक्षणाद्परीक्ष्यपरिग्रहादिदोषे आमत्यपि परब्रह्मस्वरूपे अपुनाधे कदाचित्तमेवालोक दापमाधास्व प्रयत्नः–किं न स्यादपि तु लोक प्रयतत एव तथापि तस्यत स निर्दोष एव तथा तायपीति भाव । वैरिभि सत्यमप्युक्तमलीक भवति । मृषोद्यन्तु किमुतेति सूचित । द्विषा । कर्त्तरि षष्ठी ॥ ४ ॥

विदर्भराजोऽपि समं तनूजया प्रविश्य हृष्यन्न वरोधमात्मनः । शशंस देवीमनुजातसंशयां प्रतीच्छ जामातरमुत्सुके नलं ॥ ५ ॥

विदर्भेति । विदर्भराजोऽपि उत्तमजामातृप्राप्त्या हृष्यन् सन् तनूजया सम सह आत्मनोऽवरोधमन्तःपुरं प्रविश्य भैमी नलं वरिष्यत्यन्य वेति अनुजात पुन पुनर्जात संशयो यस्या ता देवीं भैमीमातर शशस इदमवादीत् । इति किं । हे उत्सुके जामातरि नले उत्कण्ठिते त्व नल जामातर भैमीपति प्रतीच्छ जानीहि ॥ ५ ॥

तनुत्विषा यस्य तृणं स मन्मथः कुलश्रिया यः पवितास्मदन्वयं । जगत्त्रयीनायकमेलके वरं सुता परं वेद विवेक्तुमीदृशं ॥ ६ ॥

नामग्रहमात्रेण सूचितस्य नलस्य गुणगणं वर्णयति । तन्विति । यस्य तनुत्विषा कायकान्त्या हेतुना स सौन्दर्येण प्रसिद्धो मन्मथ तृणमिवाकिञ्चित्करः । तथा यः कुलश्रिया वंशपरिशुद्ध्या कृत्वा कौलीन्यात् प्रसिद्धतरामस्माकमन्वय पविता पावन कर्त्ता । अस्मत्तोऽपि महान् कुलीन इत्यर्थ । जगत्त्रय्या नायकमेलके वरसमूहे ईदृशमीदृग्गुण नायकरत्न वर परिणेतार विवेक्तुं निर्णेतु परं केवलं तव सुता वेद जानाति नान्योऽस्मदादि । न विद्यते पर श्रेष्ठो यस्मादिति यश्विशेषण वा । पविता । तृट् ॥ ६ ॥

सृजन्तु पाणिग्रहमङ्गलोचिता मृगीदृशः स्त्रीसमयप्रपञ्च क्रियाः । श्रुतिस्मृतीनान्तु वयं विदांस्महे विधीनिति स्माह च निर्ययौ च सः ॥७॥

सृजन्निति । स भीम इति प्राह स्म च ब्रूते स्म निर्ययौ चान्तःपुरान्निरगाच्च । चकारो विवाहत्वरां द्योतयति । इति किं । हे मृगीदृशो हरिणेक्षणाः सुवासिन्यो भवत्य. पाणिग्रहो विवाहस्तद्रूपे मङ्गले उचिताः तथा स्त्रीणां समय आचारस्तं स्पृशन्ति योषिदाचारप्राप्ता दुर्गादिकुलदेवतापूजा तैलधारम्भादिक्रिया सृजन्तु कुर्वन्तु । वयन्तु पुनः कुलीनाः सत्कुलीना विधीन् शूर्पेण गुडलीलत्यादीन् मधुपर्कादिकान् स्मार्त्तान् वैदिकांश्च विदध्महे कुर्म्महे इति । एवमादिश्य तदानीमेव निर्गत इत्यर्थः । पाणिग्रहमङ्गलोचिताः योषिदाचारप्राप्ताः युष्मा. । सुवासिनीविशेषणं वा । समयस्पृशः । स्पृशोऽनुदके (पा० ३ । २ । ५८) इति क्विन् । वयं । अस्मदो द्वयोश्चेति (पा० १ । २ । ५९) बहुवचनं ७

निरीक्ष्य भूपेन निरीक्षिताननः शशास मौहूर्त्तिकसंसदंशकम् । गुणैररीणैरुदयास्तनिस्तुषं तदा स दातुं तनयां प्रचक्रमे ॥ ८ ॥

निरीक्ष्येति । भूपेन भीमेन निरीक्ष्यान्तःपुरान्निर्गत्य वैवाहिकं लग्नं शशास । निरीक्षिताननः मौहूर्त्तिकानां ज्योतिर्विदानां संसत्सभा अंशकं वैवाहिकं मुहूर्तं शशास । स च भीमस्तदा तस्मिन् अंशके नलाय भैमीं दातुं प्रचक्रमे मुहूर्त्तविलम्बानुरोधेन प्राथमिकान् औतस्मार्त्तान् विधीन् अचारदित्यर्थः । किम्भूतमंशकं । अरीणैः सम्पूर्णैर्जामित्रगुणैरुपलक्षितं । तथा शुक्रगुर्वाद्युदयास्तमयप्रयुक्तदोषैर्निस्तुषं रहितं । एतच्च गुणदोषादिकं ज्योतिः शास्त्रादवगन्तव्यं । निरीक्ष्य । अगतौ । मौहूर्त्तिका मुहूर्त्तज्ञा इत्यमरः । मुहूर्त्त मदेर्ययं कतुकयादी (पा० ४ । २ । ६०) इत्यादिना सक्थादित्वाट्ठक् । अंशमेवांश, स्वार्थे कप् । अरीणो । स्वादित्वात् आदितश्चेति (पा० ८ । २ । ४५) निष्ठानत्वं । निस्तुषं । निर्गतं तुषात् । तुषो दोषलेशः ॥ ८ ॥

क्षुधावदद्दूतमुखः स नैषधं कुलञ्च बाला च ममानुकम्प्यताम् । स पल्लवत्वद्य मनोरथाङ्कुरं चिरेण नस्त्वच्चरणोदकैरिति ॥ ९ ॥

अथेति । अथ राजनाशके सन्निहिते दूता यथ मुख यस्य स भीम नैषधमित्यवदत् । इति किं । भवता मम कुलं बाला च कृपयाऽनुकम्पना अङ्गीक्रियतां । बालायामनुगृहीतायां सर्वो ऽपि मम वंशोऽनुगृहीत स्यादित्यर्थः । तथा चिरेण चिरन्तनेन नोऽस्माकं मनोरथानां स प्रसिद्धस्त्वत्सम्बन्धविषयो मनोरथरूपाङ्कुर अद्यास्मिन् दिने त्वच्चरणोदके त्वदीयचरणजालमादकै पल्लवयतु पल्लववदाचरतु पल्लवितो भवत्वित्यर्थः । पल्लवसहितो भवत्वित्येक पद कन्जन सन्देशहरं प्रेष्य तं वचिनयमाकारयति स्मेति भाव । अन्यत्रापि चिरं सञ्चितोऽङ्कुरो जलैः पल्लवितो भवति । पल्लयतु । आचारे क्विप् ॥ ९ ॥

तथोदितं भीमवचःप्रतिध्वनिं निपीय दूतस्य स वक्त्रगह्वरात् । व्रजामि वन्दे चरणौ गुरोरिति ब्रुवन् प्रदाय प्रजिघाय तं बहु ॥ १० ॥

तथेति । स नलः दूतस्य वक्त्रादेव गह्वरात् तथा पूर्वोक्तप्रकारेण य या भीमेनोक्त तथैवोदित भीमवचस प्रतिध्वनिं निपीय सादरमाकर्ण्य इति ब्रुवन तस्मै दूताय बहु प्रचुर वस्त्रालङ्कारादि प्रदाय त दूतं प्रजिघाय प्राहिणोत् । इति किं । हे दूत अद्य व्रजामि गत्वा च मदीयगुरो श्वशुरस्य चरणौ वन्दे नमस्करोमीति । प्रतिशब्दस्वरूपत्व न राजादेशानुवादस्य न्यूनाधिकताशङ्का परिहृता । व्रजामि । वन्दे । वर्तमानसामीप्ये इति (पा० ३ । ३ । १३१) भविष्यति लट् ॥ १० ॥

निपीतदूतालपितस्ततो नलं विदर्भभर्त्ताऽऽगमयाम्बभूव सः । निशावसाने श्रुतताम्रचूडवाग् यथा रथाङ्गस्तपनं धृतादरः ॥ ११ ॥

निपीतेति । ततो दूतप्रत्यागमनानन्तरं निपीतं सादरं श्रुतं दूतालपन एतद्वचन येन स विदर्भभर्त्ता भीमो धृतादरः सादर सन् नलमागमयाम्बभूव प्रतीक्षितवान । पुनरपि दूतैरानाययति स्मेति वा । यथा निशावसाने ब्राह्मे मुहूर्ते श्रुता प्राभातिकी ताम्रचूडस्य कुक्कुटस्य वाक् येन स रथाङ्गश्चक्रवाको धृतादरः सन् तपनं सूर्यं प्रतीक्षते कदा

वा वदेष्यतीति । कुकयाकुलाश्रचूड इत्यमरः ॥ ११ ॥

क्वचित्तदा लेपनदानपण्डिता कमप्यहङ्कारमगा त्पुरस्कृता । क्वलम्भि तुङ्गासनसन्निवेशनादपूप निर्म्माणविदग्धयादरः ॥ १२ ॥

क्वचिदिति । तदा नलागमनसमये क्वचित् स्थाने लेपनदाने सुधाले पचित्रादिकर्म्मणि पण्डिता कुशला काचिद्रमणी पुरस्कृता निर्म्माणार्थमेव सम्भाविता सती स्वप्रार्थनावशात् कमप्यहङ्कारमभिमानमगात् प्राप अनिर्वचनीयं गौरवं धृत्वा सुधालेपादि चकारेत्यर्थः । चतुष्कनिर्म्माणार्थे हरिद्राचूर्णमिश्रित तण्डुलपिष्ट तस्य दाने आलेपकरणे कुशला । काचिद्विजने रमणीये वा प्रदेशे तस्यां भैम्यां अङ्गोद्वर्त्तने कुशलेति वा । तयोर्भैमीनलयोर्वा । तथा क्वचित् प्रदेशेऽपूपनिर्म्माणे नवहकल्पनाया विदग्धया चतुरया कयाचित्तुङ्गासने उच्चतुङ्गाख्यासने सन्निवेशनादुपवेशनाद्धेतोरादरो गौरवमलम्भि प्राप्त । उच्चासनसन्निवेशादादरो वक्तितापभयाभावः प्राप्त इति वा । आतवैकवचन । काश्चिच्चित्रादिकर्म्म काश्चित्तु अपूपादिनिर्म्माणं चक्रुरिति भावः ॥ १२ ॥

मुखानि मुक्तामणितोरणैस्तदा मरीचिभिः पान्थविलासमाश्रितैः । पुरस्य तस्याखिलवेश्मनामपि प्रमोदहासच्छुरितानि रेजिरे ॥ १३ ॥

मुखानीति । तस्य पुरस्य तथा तत्सम्बन्धिनामखिलवेश्मनामपि मुखानि द्वारोपान्तरूपाण्याननानि मुक्तायुक्तानां मणीनां रत्नानां मुक्तानाञ्च मणीनाञ्च वा तोरणैस्तेभ्य उद्गतैर्निर्गतैः अत एव पान्थविलासं उत्थाय दूर प्रसर्पणशालानां पान्थानां विलासमाश्रितैर्मरीचिभिः किरणैः कृत्वा वरागमनसमये प्रमोदहासेन हर्षजहास्येन छुरितानि मिश्रितानि च रेजिरे सर्व्वाण्यपि पुरद्वाराणि गृहद्वाराणि वा मुक्तामणितोरणैरलङ्कृतानि । सर्व्वं पुरञ्च सानन्दमभूदिति भाव । हास्य मुखे भवति । तस्य पुरस्य सम्बन्धिनां वेश्मनामिति व्याख्याने न केवलं पुरलोकानां मुखानि प्रमोदहासच्छुरितानि किन्तु गृहाणामपीत्यपेरर्थः ।

* मुक्तामयेति पाठोऽकिञ्चित्करः ॥

तोरणात्तदेति पाठे तोरणात् पान्थविलासमाश्रितैः उत्थाय द्वारप्रसर्पद्भिः खोलैरिति व्याख्येयं ॥ १३ ॥

पथामनीयन्त तथाधिवासनान्मधुव्रतानामपि दत्तविभ्रमाः । वितानतामातपनिर्भयास्तदा पटच्छिदाकालिकपुष्पजाः स्रजः ॥ १४ ॥

पथामिति । पटच्छिदाभिर्वस्त्रच्छेदैर्निर्मितानि अकालिकान्यसंभवानि यस्मिन् काले यानि न भवन्ति तादृशानि पुष्पाणि तेभ्यो जातास्तन्निर्मिताः स्रजो मालाः तदा वरागमनसमये पथां पुरमार्गाणां वितानतां उल्लोचतां अनीयन्त प्रापिताः । किम्भूताः । यथा मालत्यादिपुष्पाणां वासस्तथाधिवासनात् सुगन्धिद्रव्यैः परिमलारोपणान्मधुव्रतानामपि दत्तो विशिष्टो भ्रमो याभिः । सर्वदा मधुन्येव ये निवसन्ति तेषामपि अकृत्रिमाण्येवैतानि पुष्पाणीति तेषामपि दत्तभ्रान्तयः किमुतान्येषामिति मधुव्रतपदेन सूचितम् । तथा वस्त्रमयत्वादातपनिर्भया उष्णत्वमात्ररहिताः । अस्त्री वितानमुल्लोच इत्यमरः । छिदाकालिकेति च पूर्ववत् ॥ १४ ॥

विभूषणैः कञ्चुकिता बभुः प्रजा विचित्रचित्रैः स्नपितत्विषो गृहाः । बभूव तस्मिन्मणिकुट्टिमैः पुरे वपुः स्वमुर्व्याः परिवर्त्तितोपमं १५

विभूषणैरिति । तस्मिन् पुरे प्रजाः पौरा जानपदाश्च विभूषणैरलङ्कारैः कञ्चुकिताः नानारत्नकान्तिच्छादितसर्वावयवाः सत्यः बभुः शुशुभिरे । तथा वर्णमात्रकल्पितेषु निर्जीवेष्वपि रूपकेषु जीवद्भ्रमोत्पादनादिचमत्कारकरणाद्विचित्रैः आश्चर्यकारिभिः कुड्यलिखितनानावर्णरूपकैः स्नपितत्विषः उज्ज्वलीकृतदीप्तयो गृहा बभुः । एवं जङ्गमस्थावररूपान्यतया तथा मणिकुट्टिमैव मणिबद्धभूमिभिश्च कृत्वा उर्व्याः स्वं सहजं मृन्मयवपुः केनापि ब्रह्मादिना परिवर्त्तिता उपमा यस्य तद्रूपान्तरं प्रापितमिव बभूव । पातालस्य रम्यत्वात् पातालमुपरि जातमिवेत्यर्थं इत्युत्प्रेक्षा । परिवर्त्तिता विनिमयिता उपमा उपमानं

स्वर्गादि येन उपमानत्वेन प्रसिद्धस्य स्वर्गस्य उपमेयत्वं कृतं, स्वयञ्च तस्योपमानं जातमित्यर्थः इति वा। स्वरुच्या इति पाठे स्वर्गात् सकाशात् परिप्राप्तं तोपममिव बभूवेत्यर्थं। मणिकुट्टिमैः उपलक्षिते पुरे वा। सर्वमपि तदा सालङ्कारं जातमिति भावः। कञ्चुकस्तारकादि॥ १५॥

तदा निसस्वानतमां घनं घनं ननाद तस्मिन्नि
तरान्ततं ततं। अवापुरुच्चैः सुषिराणि राजि
ताममानमानद्धमियत्तयाऽध्वनीत्॥ १६॥

तदेति। तदा नलागमनसमये तस्मिन् घनं कांस्यतालादिकं घनं निविडं यथा निसस्वानतमां निरतिशयं शब्दं चकार तथा ततं वीणादिवाद्यं ततं विस्तृतं यथा तथा नितरां ननाद शब्दं चकार। तथा सुषिराणि सच्छिद्राणि वंशादिवाद्यानि उच्चैः नितरां राजितां शब्दत्वं अवापुः। तथा आनद्धं मुरजादिवाद्यमियत्तया इदं परिमाणत्वेनामानम् अपरिच्छेद्यं यथा तथा ऽध्वनीत्। घनं दृढावयवं बहुसङ्ख्यञ्चेति घनविशेषणं वा। तथा ततं तारस्वरूपं विस्तृतं बहुचक्ररूपाकञ्चेति ततविशेषणं वा। तथा इयत्तयाऽमानं बहुसङ्ख्यमित्यानद्धविशेषणं वा। चतुर्विधमपि वाद्यं तत्र वादितमित्यर्थं। ततं वीणादिकं वाद्यमानद्धं मुरजादिकं। वंशादिकं तु सुषिरं कांस्यतालादिकं घनमित्यमरः॥ राजिता। अवश्यं रजतीति, आवश्यकाधमर्ण्ययोर्णिनिः (पा० ३। ३। १७०) इति णिनौ राजीति तस्या भावस्तत्ता तां। अध्वनीत् अतो हलादेरिति (पा० ७। २। ७) वृद्धिविकल्पः॥ १६॥

विपञ्चिराच्छादि न वेणुभिर्न ते प्रणीतगीतै
र्न च तेऽपि झर्झरैः। न ते हुडुक्केन न सोऽपि
ढक्कया न मर्दलैः सोऽपि न तेऽपि ढक्कया॥ १७॥

विपञ्चिरिति। वेणुभिर्वंशध्वनिभिर्विपञ्चिर्वीणाध्वनिर्नाच्छादि। तेच वेणुध्वनय प्रणीतं प्रारब्धं गीतं यैः द्रुतमध्यादिमूर्च्छनादिपूर्वम् वेगैर्गायकैर्गायकगीतैर्नाच्छादिषतेति सर्वत्र विपरिणामेन व्याख्येयम्। झर्झरैर्झर्झराख्यैः कांस्यमयैर्वाद्यविशेषैर्ध्वनिभिः कृत्वा तेऽपि गा

यक्कध्वनयोऽपि न च नैवाच्छादिषत । हुडुक्केन लघीयसा कांस्यमयेन वाद्यविशेषेण ते झर्झरध्वनयो नाच्छादिता । ढक्कया वादित्रविशेषेण सोऽपि हुडुक्कध्वनिर्नाच्छादि । मर्द्दलैर्मृदङ्गध्वनिभि र्वा ढक्काऽपि नाच्छादि । ढक्कया तेऽपि मर्द्दला अपि नाच्छादिताः । ध्वनपंक्ति-गौरवलाघवं वाद्यमात्र तत्र मिलित । मनश्रुतिसालमाना अपि विप-ञ्च्यादिध्वनय वादककौशलात् प्रव्यक्त भेदेनोपलब्धा इति भावः । विपञ्च्यते स्वरोऽस्या विपञ्चि, औणादिक इप्रत्ययान्त. ॥ १७ ॥

विचित्रवादित्रनिनादमूर्च्छितः सुदूरचारी जनतामुखारवः । ममौ न कर्णेषु दिगन्तदन्तिनां पयोधिपूरप्रतिनादमेदुरः ॥ १८ ॥

विचित्रेति । विचित्राणि नानाविधानि वादित्राणि तेषां निनादै मूर्च्छित वर्द्धितः तथा सुतरां दूरचारी दूरसञ्चरणशील, जनता जन समूहास्तत्सारवो मुखशब्द, पयोधिपूरे समुद्रप्रवाहे प्रतिनादेन प्रतिश ब्देन पयोधिपूरस्य तटे प्रतिशब्दस्तेन वा मेदुर परिपुष्ट सन् दिग-न्तदन्तिना दिक्प्रान्तवर्ति दिक्पालहस्तिनां कर्णेषु न ममौ तत्कर्णा-नपि परिपूर्य्य बहिर्निर्गत इत्यर्थः । नानाजातीयमिश्रणादेकीभूतो जनशब्दो दिगन्तपर्य्यन्त समुल्ललासेति भाव. । स दूरेति पाठे स न-हानित्यर्थः ॥ १८ ॥

उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विपि वेदिकोदरे । यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव तां ॥ १९ ॥

उदस्येति । अथ सर्ववाद्यवादनानन्तरं पुरन्ध्रिवर्गः स्त्रीसमयष्टकु-लवृद्धसुवासिनीसमूह चतुष्कमध्येन नानावर्णकल्पितस्वस्तिकसर्वतो-भद्रादिमध्यलेन चार्वी रमणीया त्विट कान्तिर्यस्य एवम्भूते कूर्म्मपृष्ठ-चतुरस्रहस्तमात्राब्धिमत्स्यादियुक्तकल्पिते वेदिकाया उदरे मध्ये शात-कुम्भजा सुवर्णघटिता. कुम्भी उदस्योत्क्षिप्य यथाकुलाचार स्त्रीणां निम्नाय कुलाचारानतिक्रमेणाय मङ्गल मङ्गलगीतिपूर्वं यथा तथा

तामवनीन्द्रजां भैमीं स्नपयाम्बभूव। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येऽप्यथो अथेति वचनादेकोऽथशब्द आनन्तर्य्ये, द्वितीयस्तु मङ्गले इति ज्ञेय। यथा विधान नरनाथनन्दिनीमिति च पाठः। स्नपयाम्बभूव। मित्वा दुपधाह्रस्व ॥ १९ ॥

विजित्य दास्यादिव वारिहारितामवापितास्त
त्कुचयोर्द्वयेन ताः। शिखामवाप्तुः सहकारशा
खिनस्त्रपाभरम्लानिमिवाननैर्मुखैः ॥ २० ॥

विजित्येति। ता कुम्भ तस्या भैम्याः कुचयोर्द्वयेन गौरवत्वका-ठिन्यादिगुणातिशयेन विजित्य दास्यादिव वारिहारितां जलवाहित्व-मवापिताः प्रापिताः सत्य आननैर्मुखै सहकारशाखिन आम्रवृक्षस्य शिखा त्रपाभरेण जनिता म्लानि वैवर्ण्यं कालिमानमिव अवापुः प्र-हन्ति स्म। पराजितोऽपि स्त्रीभरेण नम्रमुखो वारिवाहिता प्रापित सन् म्लानिं धत्ते। कलशीमुखे माङ्गलिकाम्रपल्लवा निक्षिप्यन्ते इत्या चार.। अवापुः। वह प्रापणे लिटि ॥ २० ॥

असौ मुहुर्जातजलाभिषेचना क्रमाद्दुकूलेन
सितांशुनोज्ज्वला। द्वयस्य वर्षाशरदान्तदात
नीं सनाभितां साधु बबन्ध सन्ध्यया ॥ २१ ॥

असाविति। मुहुर्जात जलाभिषेचनं यस्या असौ भैमी, क्रमात्सि-तांशुना सिततन्तुदुकूलेन क्षौमाम्बरेणोज्ज्वला भूषिता सती, वर्षाश्च शरदश्च तासां द्वयस्य सन्ध्यया सन्धिना तदातनीं तदाभवां तात्कालि कीं सनाभितां तुल्यतां साधु सम्यक् बबन्ध दधौ। वर्षाश्च कृतजलाभि षेका, शरच्च शीतांशुना चन्द्रेणोज्ज्वला द्वयोः सम्बन्धिन्युभयगुणोपेता, वस्त्रपरिधानात पूर्वं प्रावृट्सदृशी अनन्तर शरत्सदृशी जातेत्यर्थं २१

असौ प्रभिन्नाम्बुदर्दुर्दिनीकृतां निनिन्द चन्द्रद्यु
तिसुन्दरीं दिवं। शिरोरुहौघेन घनेन संयुता
तथा दुकूलेन सितांशुनोज्ज्वला ॥ २२ ॥

अमायिमि । अमी दिव जिनिन्द तत्तुल्या आतेत्यर्थ. किम्भूता दिव । आदौ यथोप्तु प्रमिकैरतिघनै वराङ्गियां अम्बुदे दुर्द्दिनीकृता अलमायिता, अनन्तर शरदारम्भे चन्द्रद्युतिसुन्दरी । किभूतामी । कृचिद्वर्षता शिरोरुहौघन केशपाशरूपेण घनेन मेघेनोपलक्षिता । तथा दुकूलेनैव सिताशुना चन्द्रिकोज्ज्वला । जलाभिषेकस्थानेषु वर्षोदकरूप चन्द्रिकास्थाने दुकूलमिति प्रोच्य ॥ २२ ॥

विरेजिरे ताश्चिकुरोत्कराः किराः क्षणं गलन्निर्मलवारिविप्रुषः । तमःसुहृच्चामरनिर्जयार्जिताः सिता अमन्तः खलु कीर्त्तिमुक्तिकाः॥२३॥

विरेजिर इति । तस्याश्चिकुरोत्करा केशसङ्घा विरेजिरे शोभन्तेस्म । किम्भूता । गलता निर्मलाना वारिविप्रुषामुदकबिन्दूनां क्षय किरन्तीति किरा विक्षेपका उदबिन्दून मुञ्चन्त इत्यर्थ । किम्भूता इव । तमस सुहृदीनि सदृशानि अतिश्यामानि चामराणि तेषा निर्जयेनार्जिता स्वीकृत्य सङ्गृहीता सिता शुभ्रा कीर्त्तिरूपा मुक्तिका वमन्त खलु । इवार्थे खलुशब्द । श्यामचामरादप्यतिसुन्दरस्तत्केशपाश इति भाव । विप्रुषा । कण्मशि पृष्ठा ॥ २३ ॥

मृदीयसा सूनाजलस्य वाससा प्रमार्ज्जनेनाधिकमुज्ज्वलीकृता । अदभ्रमभ्राजत साऽश्मशाणनात् प्रकाशरोचिः प्रतिमेव हेमजा ॥ २४ ॥

मृदीयसेति । सा भैमी अदभ्रमधिक अभ्राजत अशोभत । किम्भूता । मृदीयसा स्नानजलस्य प्रमार्ज्जनेन प्रोञ्छनकारिणा वाससा मृदीयसा वाससा कर्त्रा स्नानजलस्य प्रमार्जनेन करणेन पूर्वापेक्षया अधिक यथा तथा उज्ज्वलीकृता । केव । अश्मशाणनात् शिलोत्तेजनाद्धेतोः प्रकाशा पूर्वापेक्षयाऽतिदीप्ता रोचिर्दीप्तिर्यस्याः सा हेमजा सौवर्णी दैवादीना प्रतिमेव । शिला घर्षणादीपिततसि सुवर्णकारपरिभाषा । प्रमार्जनेन । प्रथमपक्षे नन्द्यादित्वात् कर्त्तरि ल्यु । द्वितीयपक्षे भावे ल्युट् । शाण तेजने । भौवादिक । तस्माल्ल्युट ॥ २४ ॥

तदा तदङ्गस्य विभर्त्ति विभ्रमं विलेपनामो दमुचः स्फुरद्रुचः । दरस्फुटत्काञ्चनकेतकीद लात् सुवर्णमभ्यस्यति सौरभं यदि ॥ २५ ॥

तदेति । सुवर्णं दरमीषत् स्फुटद्विकसद्यत्काञ्चनकेतकीदलं तस्मात् सौरभं सौगन्ध्यं यद्यभ्यस्यति शिक्षते तदा तर्हि तदङ्गस्य भैमीशरीरस्य विभ्रमं विलासं विशिष्टां कान्तिं वा बिभर्ति । किंभूतस्य विलेपनस्य । यक्षकर्दमादेरङ्गरागेण आमोदं मुञ्चति तस्य । तथा स्फुरन्ती रुक् दीप्तिर्यस्य । स्वाभाविकगौरकान्तिना अभ्यङ्गानन्तरमङ्गराग कृत इति भ य । यदि तर्हीति सम्भाव्यादभ्यस्यति बिभर्तीति न लिङ् लिङर्थे लट् । क्रियानिष्पत्तिस्तु न विवक्षणीया ॥ २५ ॥

अथार्पितायाः शुचिवेदिकान्तरं कलासु तस्याः सकलासु पण्डिताः । क्षणेन सख्यश्चिरशिक्षण स्फुटं प्रति प्रतीकं प्रतिकर्म निर्ममुः ॥ २६ ॥

अथार्पिताया इति । सकलासु गीतालङ्करणादिषु कलासु विद्यासु पण्डिताः कुशलाः सख्यः शुचिगोमयाद्यनुलिप्तं सर्वतोभद्रादिभूषितं वेदिकाया अन्तरं मध्यं शृङ्गारस्थानं प्रत्यर्पितायाः प्रापितायास्तस्याः भैम्याः प्रति प्रतीकं प्रत्यवयवं चिरशिक्षणाद्वहुकालाभ्यासात् स्फुटं नि रतिशयं अत एव क्षणेन प्रतिकर्म प्रसाधनं निर्ममुश्चक्रुः ॥ २६ ॥

विनापि भूषामवधिः श्रियामियं व्यभूषि विज्ञाभिरदर्शि चाधिका । न भूषयैषाऽतिचकास्ति किन्तु साऽनयेति कस्यास्तु विचारचातुरी २७॥

विनेति । भूषा मण्डनं विनापि श्रिया कान्तीनामवधिः परमशोभा इयं भैमी विज्ञाभिः अलङ्कारचतुराभिः सखीभिः व्यभूषि विशेषेणालं-कृता । अधिका अनलङ्कृताङ्गकान्तितोऽधिककान्तिरदर्शि च । परन्तु विचारचातुरी सूक्ष्मतरनिश्चयरूपे विचारे प्रावीण्यं कस्यास्तु न कस्या-पि । इति किं एषा भूषया पूर्वापेक्षया अधिकं न चकास्ति किन्तु सा

भूषैवानया भैम्या कृत्याऽधिकं शोभते । भैम्या भूषणानाञ्च परस्परसम्ब न्धाच्छोभातिशयो यो दृश्यते तत्र भूषणैर्भैम्या शोभातिशयो न जनित किन्तु भैम्या भूषणानामिति विवेकः कस्यापि नाभूदित्यर्थः । पूर्वापेक्षयाधिकं वा शोभते स्मेति भावः । भूषा विनापि श्रियामत्यधिकेव विद्याभिर्विशेषेण बहुना प्रयासेनाभूषि पूर्वापेक्षया इयमधिका किमिति तारतम्यज्ञानार्थं पुनः पुनः विलोकिता च । परमियं भूषया नाधिकास्ति किन्तु सा भूषाऽनयेति तात्त्विकविचारचातुरी कस्यान्तु पुनः सख्या जातेत्यर्थोऽपि तु न कस्याश्चित् । प्रयासेनाऽलङ्कृत्य पुनः पुनर्विलोक्यापि विज्ञाभिरपि अनया मण्डनं मण्डितं मण्डनैर्वा इयं मण्डिता इति तारतम्यं न ज्ञातमेव । परं भूषणानां वैयर्थ्यं साधारणत्व वाधिकशोभाकारित्वं वेति किमपि न निश्चितं किन्तु भ्रान्ता एव जाता इत्यर्थ इति वा । तस्या निरतिशया कान्तिर्जातेति भावः । पूर्वोक्ता चातुरी कस्यास्तु कस्याश्चिदेव विदुष्या न तु सर्वस्याः इति वा । अलङ्कृतं तद्वपुरेव मण्डनमिति विचारचातुरी कस्यचिन्महाकवेस्सहापूर्वस्य कस्य प्रज्ञायां वाऽस्तु । मया श्रीहर्षेण प्रज्ञया वा एव निर्णेतुं शक्यते नान्येनेत्यर्थ इति वा । कस्याः पुनर्न जाता अपि तु सर्वस्या अपीति वा ॥ २७ ॥

विधाय बन्धूकपयोजपूजनं कृतां विधोर्गन्धफलीबलिश्रियम् । निनिन्द लब्धाधरलोचनार्चनं मनःशिलाचित्रकमेत्य तन्मुखम् ॥ २८ ॥

विधायेति । लब्धं प्राप्तं अधराभ्यां लोचनाभ्याञ्च कृत्वा अर्चनं पूजनं येन । ओष्ठनेत्रेण रमणीयमिति यावत् । तथाविधं तन्मुखं भैमीमुखं पत्रं माङ्गलिकं मनःशिलाख्यगौरधातुविशेषनिर्मितं चित्रतिलकं एत्य प्राप्य बन्धूकेन पयोजाभ्यां नीलोत्पलाभ्याञ्च पूजनं पूजाद्वयं कृत्वा, अनन्तरं कृतां विधोश्चन्द्रमस्सम्बन्धिनीं गन्धफल्या चम्पककलिकया एतया बलिं पूजां तज्जनितां श्रियं कान्तिं निनिन्द । यदि बन्धूकोत्पलैः चन्द्रस्य पूजां कृत्वा चम्पककलिकया चन्द्रस्य शिरसि न्यस्यति तदा सा चान्द्रमसीं न्यक्करोतीत्यभूतोपमेत्यर्थः । बन्धूकस्य अ-

धरस्य नीलोत्पलयोर्लोचनयोश्चम्पककलिकाया मनःशिलातिलकस्य च-न्द्रस्य अदनस्य चोपमानोपमेयभावः । चम्पको हेमपुष्पकः । एतस्य कलिका गन्धफलीत्यमरः ॥ २८ ॥

महीमघोनां मदनान्धतातमो तमःपटारम्भण तन्तुसन्ततिः । अबन्धि तन्मूर्द्धजपाशमञ्जरी कयापि धूपग्रहधूमकोमला ॥ २९ ॥

श्लोकत्रयेण केशप्रसाधनं वर्णयति । महीति । कयापि केशप्रसाधनचतुरया सख्या तस्या भैम्या मूर्द्धजपाशः केशपाशः तद्रूपा सौगन्ध्यादिध्योक्ष मञ्जरी प्रथमोद्भिन्नकलिकाङ्कुरदण्डः अबन्धि संयता । किंभूता मञ्जरी । महीमघोनां भूमीन्द्राणां मदनेन कामविकारेण अन्धता विवेकशून्यता सैव तमो तामसी शक्तिस्तस्यास्तमोरूपस्य पटस्यावरक-त्वादविवेकरूपस्यारम्भणे निर्माणे विषये तन्तुसन्ततिः सूत्रपरम्परा तानकरूपा । तथा धूपग्रहणसाधनस्य सच्छिद्रस्य धातुमयस्य करण्ड-कादेः सम्बन्धिना दह्यमानकर्पूरागरुचन्दनादिपरिमलबहुलेन धूमेन कोमलैरल्लका तद्वदतिसुन्दरी नितरां श्यामा । राजानो राज्ञी नीलं पट्टवस्त्रादिकं परिधाय विचरन्तीति वा । अलपराया अपि तस्याः केशपाशं दृष्ट्वा राज्ञां कामोद्रेकाद्विवेकशून्यता भवतीति भावः ॥ २९ ॥

पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसंयमं । सखीस्मितैस्तर्कितनिजभ्रमा बबन्ध तन्मूर्द्धजचामरं चिरात् ॥ ३० ॥

पुनः पुनरिति । काचन दूती तस्याः भैम्या मूर्द्धजः केशपाशस्त-द्वपा सूक्ष्मघनप्रलम्बत्वसाम्याच्चामरं चिराद्बहुना कालेन बबन्ध । चिरकालहेतुमाह । किंभूता । कचच्छटाधिया भैमीकेशपाशभ्रान्त्या सादृश्यात् धूपजस्य धूमस्य मुहुर्मुहुः संयमनं बन्धनं कुर्वती । तथा तद्भ्रान्तिदर्शिनीनां स्मितैरन्योन्यमुखविलोकनपूर्वकैर्विलम्बदीपहासैः कृत्वा तर्कितः केशपाशभ्रमेण धूपजधूमसंयमनरूपो निजः स्वीयः भ्रमो यया ॥ ३० ॥

बलस्य कृष्टेव हलेन भाति या कलिन्दकन्या घन भङ्गभङ्गुरा । तदार्पितैस्तां करुणस्य कुड्मलैर्जहास तस्याः कुटिला कचच्छटा ॥ ३१ ॥

बलस्येति । कुटिला अतिवक्रा या तस्याः कचच्छटा कुन्तलश्रेणि बलस्य बलभद्रस्य हलेनाकृष्टा सती घनैर्निबिडैर्भङ्गैस्तरङ्गैर्भङ्गुरा वक्रा यथा कलिन्दस्य पर्वतस्य कन्या यमुनेव भाति च । कचच्छटा तां यमुनां तदा तस्मिन् समये अर्पितैः शिरसि न्यस्तैः करुणाख्यस्य वृक्षस्य कुड्मलैः कलिकाभिर्जहास । यमुना पराकर्षणकृतेन महीयसा भङ्गेन पराभवेन भग्ना पुष्परहिता च । स्वयं तु स्वभावकुटिला पुनरपि कुसुमैरञ्चिता चेति हासोयुक्त इत्यर्थः । श्यामा अतिवक्रा पुष्पालङ्कृता च तस्याः कुन्तलश्रेणिर्नितरां शोभते स्मेति भावः । पूर्वं तत्तुल्या अभूत् इदानीं तु अधिका जातेति भावः । जहासेवेति वा । यमुनाकर्षणं हरिवंशादौ ज्ञेयम् ॥ ३१ ॥

धृतैतया हाटकपट्टिकालिके बभूव केशाम्बुद विद्युदेव सा । मुखेन्दुसम्बन्धवशात् सुधाजुषः स्थिरत्वमूहे नियतं तदायुषः ॥ ३२ ॥

रागात्प्रसाधनं वर्णयति । धृतेति । एतया अलिके ललाटे या हाटकस्य सुवर्णस्य पट्टिका धृता सा केशाम्बुदानां कुन्तलरूपजलदानां तेषु या विद्युदेव बभूव । चलप्रभावास्तस्याः कथं स्थिरत्वमित्यत आह । मुखेन्दुसम्बन्धवशादिन्दोः सुधाजुषोऽमृतं सेवमानस्य तदायुषो विद्युद्रूपस्यायुषः स्थिरत्वं नियतं निश्चितं अहमूहे तर्कयामि । अमृतपानादमृतत्वं तस्या जातमित्यर्थः । सुवर्णपट्टिकया ललाटमलङ्कृतमिति भावः । तदायुष इति वा पाठः । ऊहे । ऊह वितर्के ॥ ३२ ॥

ललाटिकासीमनि चूर्णकुन्तला बभुः स्फुटं नो मनरेन्द्रजन्मनः । मनःशिलाचित्रकदीपसम्भवा मषीभृतः कज्जलधूमवल्लयः ॥ ३३ ॥

कुन्तलान् वर्णयति ॥ ललाटिकेति । ललाटे रचितायाः रेखाकाराया ललाटिकायाः पत्रपाश्याया अलङ्कारविशेषस्य सीमनि पर्यन्तप्रदेशे भीमनरेन्द्रजन्मनो भैम्याश्चूर्णकुन्तला वक्रकुण्डलीभूताः केशाः कज्जलरूपस्य धूमस्य वल्लयः श्रेण्यः स्फुटमिव वभु । किंभूता वल्लयः । मनःशिलायाश्चित्रकं तिलकं तद्रूपो यो दीपः तस्मात्सम्भवो यासां ताः । तथा ज्वलतो, सङ्कुच्य वक्रीभावात् जिह्मतां कुटिलतां धारयन्त्यः । तत्रस्थगन शिलातिलकेनैव कामोद्दीपनात् तस्य दीपत्वं । धूपधूमसम्भवा कज्जलश्रेणि किल कामियुक्ता भवति । पत्रपाश्या ललाटिकेत्यमरः । कर्णललाटात् कनलङ्कारे ( पा० ४ । ३ । ६५ ) इति कन् ॥ ३३ ॥

अपाङ्गमालिङ्ग्य तदीयमुच्चकैरदीपि रेखा ज
नितालनेन या । अपाति सूत्रं तदिव द्वितीयया वयःश्रिया वर्द्धयितुं विलोचने ॥ ३४ ॥

श्लोकचतुष्टयेन कज्जलालङ्कारं वर्णयति । अपाङ्गमिति ॥ अञ्जनेन जनिता या रेखा सा तदीयमपाङ्गमालिङ्ग्य स्पृष्ट्वा उच्चकैर्नितरामदीपि शुशुभे । द्वितीयया तारुण्यरूपया वयःश्रिया कर्त्र्या विलोचने भैम्या नेत्रे वर्द्धयितुं शैशवापेक्षया विशाले कर्तुं तद्रेखादीपन सूत्रमिव अपाति । प्रायो हि सुन्दर्यो नेत्रे तत्प्रान्तनिर्गतया कपोलपर्यन्तपातिन्याञ्जनरेखया भूषयन्ति । शिल्पिनश्च किमपि लेखितुं वर्द्धयितुं चालिख्यमानस्य वर्द्धमानस्य चाकारवक्रिमपरिहाराय तथोल्लटिकाद्युपलिप्तसूत्राभिघातेन रेखापातनं कुर्वन्ति । यद्यपि नेत्रयोर्वृद्धिर्नास्ति तथापि शैशवापेक्षया तारुण्येन कटाक्षविक्षेपादिविलासवशा दैर्घ्यप्रतीतेर्दैर्घ्यकरणार्थं सूत्रपातो युक्तः । नेत्रे कज्जलाञ्चिते इति भावः ॥३४॥

अनङ्गलीलाभिरपाङ्गधाविनः कनीनिका नील
मणेः पुनः पुनः । तमिस्रवंशप्रभवेन रश्मिना
स्वपह्नुतिः सा किमरञ्जि नाञ्जनैः ॥ ३५ ॥

अनङ्गेति । अनङ्गलीलाभिः कटाक्षविक्षेपरूपैः कामविलासैः कृत्वा पुनः पुनरपाङ्गधाविनो नेत्रप्रान्तपर्यन्तं कनीनिका नीलमणेर्नेत्रतार

कारूपस्येन्द्रनीलरत्नस्य समितत्रयशब्दप्रभवेनाथ च श्यामान्यसंसर्गेनातिक्रमे न रश्मिना सकज्जलरेखारूपा सा स्वपद्धतिर्निजागमनसरणिः किम-रञ्जि अञ्जितेनं । यद्वा तन्मार्गगमनेन स्वसम्बन्धाल्लारकानीलमणिकिर-णैरेव नवप्राप्ता नीलीकृतो न तु कज्जलैरिति उत्प्रेक्षा । कामोद्दीपि सनिरतिशयकटाक्षश्रीतुल्याञ्जनशाभालङ्कारता जगामेति भाव ॥३५॥

**असेविषाता सुषमां विदर्भजादृशाववाप्याञ्ज-नरेखयान्वय । भुजद्वयज्याकिणपद्धतिस्पृशोः स्मरेण बाणीकृतयोः पयोजयोः ॥ ३६ ॥**

असेविषातामिति । विदर्भजादृशौ अञ्जनरेखया अन्वय अन्वया-वाप्य स्मरेण बाणीकृतयोर्बाणस्य प्रापितयोः पयोजयोः नीलोत्पलयोः सुषमा परमा शोभा असेविषाता अलभेताम् । किम्भूतयोः सत्याप्सस्य बाणासनस्य भुजद्वयेऽधिकरणे ज्याकिणपद्धति ज्याघातव्रणवैवर्ण्यरूपकिणमार्गं ता स्पृशत इति स्पृशो तयाः । नलतुल्यस्य कामस्य बाणकर्षणात् कर्णान्तविश्रान्तयोर्नेत्रनीलोत्पलबाणयोर्भुजज्याकिणसम्भावना युक्ता । अञ्जनरेखे किणतुल्ये नेत्रे च स्मरनीलोत्पलबाणतुल्ये इति भाव ॥३६॥

**तदाञ्जनस्फालतुलागमान नख निखाय कृष्णस्य मृगस्य चक्षुषी । विधिर्यदुद्धर्तुमियेष तद्द्वयोर दूरयत्तिकृतता स्म शंसति ॥ ३७ ॥**

तदद्दीति । विधिर्ब्रह्मा तदञ्जनेत्रगोचराधिकयोर्मैमीनेत्रयो त-स्काल तस्मिन पाणिग्रहोचिताञ्जनप्रसाधनसमये तुला साम्यकरण त-द्रूपं यागमाऽपराधेन हेतुना नख निखाय कृष्णस्य कृष्णसारहरिणस्य चक्षुषी उद्धर्तुं उन्मूलयितु यत् इयेष अभिललाष यतो कृष्णसारनेत्र या आद्दूरतां समापयतां यत् प्रत तस्य भावस्तत्ता सा तत्तत्सनि-र्गतमधरत्व प्रमति स्म । अलमात्यन्त स्फुटमिति पाठे स्फुट प्रकटमु-दप्रन्ताया या अदूरयत्ति च तद् ययास्ते अदूरयति ते तयोर्भाव इति या । मृगनेत्रयोप नखनिखननाकार तत भवति ॥ ३७ ॥

विलोचनाभ्यामतिमात्रपीडिते ऽवतंसनीलाम्बु रुहद्वयी खलु । तयोः प्रतिद्वन्द्विधियाऽधिरोप याम्बभूवतुर्भीमसुताश्रुती ततः ॥ ३८ ॥

श्लोकद्वयेनावतंसनीलोत्पले वर्णयति । विलोचनाभ्यामिति । खलु यत भीमसुतायाः श्रुती कर्णौ विलोचनाभ्यां आकर्णपूर्णत्वादतिमात्रमतितरां पीडिते पराक्रान्ते ततस्तस्मादात्मपराभवकारिणोस्तयोर्नेत्रयोः प्रतिद्वन्द्विनो तुल्यबले इमे नीलोत्पले इति धिया बुद्ध्येव स्वशिरसि अवतंसरूपनीलाम्बुरुहद्वयीं अधिरोपयाम्बभूवतु आरोपितवन्तौ दधतुरित्यर्थः । तुल्योत्प्रेक्षा । खलु वोत्प्रेक्षायां । अन्योऽप्यधिकेन पराभूतस्तस्मादात्मान तद्विरोधिनं सन्निधापयति । नीलोत्पलकरणीय कर्म नेत्राभ्यामेव कृत न तु नीलोत्पलाभ्यामधिकं किञ्चित् कृत, नीलोत्पले कर्णभूषणीकृते इति च भाव ॥ ३८ ॥

धृतं वतंसोत्पलयुग्ममेतया व्यराजदस्यां पति ते दृशाविव । मनोभुवान्ध्यङ्गमितस्य पश्य तः स्थिते लगित्वा रसिकस्य कस्यचित् ॥ ३९ ॥

धृतमिति । एतया कर्णयोरुपरि धृतं वतंसोत्पलयुग्मं, भैम्या तत्कर्णौ वा पश्यतः कस्यचिद्रसिकस्य विलासिनो दृशाविव व्यराजत् । किंभूतस्य । मनोभुवा कामेन अविवेकित्वमेवान्ध्य तद्भूतनेत्रत्वं गमितस्य प्रापितस्य । किंभूते दृशौ । अस्यां भैम्यां पतिते निपत्य । ततो रसिकत्वादेवापरावृत्य लगित्वा सम्बध्य स्थिते स्थिरतरे इत्युत्प्रेक्षा । कश्चिद्विलासी भैम्या कर्णौ प्रथममेव दृष्टवान् ततस्तस्य नेत्रे कर्णयोरेव लग्ने स्थिते नीलोत्पलद्वयमित्यर्थः । नेत्रगमनादेवास्यान्ध्य । अन्यदपि पतित वस्तु कुत्रापि लगित्वा तिष्ठति ॥ ३९ ॥

विदर्भपुत्रीश्रवणावतंसिकामणीमहःकिंशुककार्मुकोदरे । उदीतनेत्रोत्पलबाणसम्भृतिर्नलं परं लक्ष्यमवैक्षत स्मरः ॥ ४० ॥

रत्नायतस्य मर्णापति । विदर्भेति । स्मरः नलं पर केवलं नेतु, वा तद्यमवैत्य आगच्छन्त प्रतीक्षितयानित्यर्थः । किन्नूतः । विदर्भसुभ्रू श्रवणयोरुपरि प्रसृतशिखाया मणयः भूषणभूता या माणिक्यादिरत्नख- चितसुवर्णकर्णिका तत्सम्बन्धीनि माणिक्यादिरत्नानि तासा गर्भस्तेन स्तदेव किंशुककार्मुक पलाशकुसुमधनुः तस्योदरे विषये उदीता कस- रमणा नेत्रयोरवसतो नयनयोश्च सद्रूपाणां चतुर्णा बाणानां सामग्री नेत्रयोरूपाभ्यां वा नीलोत्पलाभ्यां बाणसामग्री यस्य । उदवि- धचापे समारोपितबाण इत्यर्थः । स्वलङ्कृतकर्णकज्जलाञ्चितनेत्रभी- न्द्वयं विलोकयमानेन नलः कामपरो भविष्यतीति भावः । अवतंस- कापदेनैव अवणसम्बन्धाप्यतिसन्निधिसूचनार्थे श्रवणपदप्रयोगी यु । तत्यसरणात् स्मार ॥ ४० ॥

अनाचरत्तथ्यमृषाविचारणां तदाननं कर्णलता
युगेन किं । बबन्ध जित्वा मणिकुण्डले विधु
द्विचन्द्रबुद्ध्या कथितावसूयकौ ॥ ४१ ॥

श्लोकद्वयेन कुण्डलप्रसाधनमाह । अनाचरदिति ॥ तादृशस्यात्स्फु- रितया द्विचन्द्रबुद्ध्या द्वौचन्द्राविति भ्रान्तिज्ञानेनैतौ द्वौ चन्द्रौ तदा- कर्षं न सहेते इति भैम्यास्तदाननस्य वा पुरस्तादसूयकौ स्पर्द्धाकारि णौ कथितौ प्रतिपादितौ मणिकुण्डले रत्नखचिते सुवर्णताटङ्के एव- विधौ द्वौ चन्द्रौ जित्वा तदाननकर्तृ, कर्णलतायुगेन कृत्वा बबन्ध कि । ननु द्विचन्द्रबुद्धरेव स्वरूपेणासत्यत्वात् स्तोत्वाच्च तदुक्तेऽर्थे क- थ तस्य प्रवृत्तिरित्याशङ्क्याह । किम्भूत । तथ्यमृषा विचारणां सत- या कथित सत्यमसत्य चेति विमर्शनमनाचरदकुर्वाणा । शोभासम्प- त्स्देन महत्वादित्यर्थ । किं किमिति बबन्ध न च्युचितमनुचितमेतत्क- त । यतः सत्यासत्यविचारणाभावादिति भाव इति वा । अन्योऽपि दुर्मदः सत्यासत्यविचारमकुर्वन् कस्यचिदसूयकस्य वचनादनपराधिन- मपि कञ्चित्पाशादिना बध्नाति । चन्द्राकारे मणिताटङ्के तया धृते इति भावः ॥ ४१ ॥

अथादि भैमी परिधाप्य कुण्डले वयस्ययाभ्या
मभितः समन्वय । त्वदाननेन्दोः प्रियकामज
न्मनि ध्रुवत्वयं दौरधरी धुर ध्रुव ॥ ४२ ॥

अथादीति । कयाचिद्वयस्यया सख्या कुण्डले परिधाप्य कर्णयो-
र्निक्षिप्य भैमी अथादि इत्युक्ता । इति किं । हे भैमि तवाननेन्दो
आभ्यां कुण्डलाभ्यां अभितः उभयोः पार्श्वयोरपि समन्वय समीचीनं
सम्बन्ध । प्रियस्य नलस्य कामो रत्यभिलाषः तस्य जन्मन्युत्पत्तौ वि-
षये दौरधरी पूर्वोत्तरराशिस्थगुरुशुक्रयोर्मध्यराशिस्थचन्द्रस्य दुधराख्य-
स्य महायोगस्य सम्बन्धिनी धुरं भारं ध्रुवं निश्चितं आश्रयतीति ।
ध्रुवमुत्प्रेक्षायां वा । दुर्धराख्ये महायोगे जातपुत्रादिर्यथा वृद्धिं प्रा-
प्नोति तथा कुण्डलालङ्कृतमुखचन्द्रदर्शनमात्रेण नलस्य रत्यभिला-
षो वृद्धिं प्राप्स्यतीति भावः । गुरुभार्गवयोर्मध्यगश्चन्द्रश्चैव यदा भवेत् ।
तदा तु दुधरायोग इति ज्योतिर्विदां मतमिति शास्त्रादनुसन्धेयम् ४२॥

निवेशितं यावकरागदीप्तये उगहृदीयाधरसी
म्नि सिक्थकं । रराज तत्रैव निवस्तुमुत्सुक
मधूनि निर्धूय सुधासधर्म्मिणि ॥ ४३ ॥

अधरप्रसाधनमाह । निवेशितमिति ॥ तदीयोऽधरोष्ठस्तस्य सीम्नि
तत्प्रदेशे यावकस्यालक्तकस्य रागो लौहित्यं तस्य दीप्तये प्रकाशनाय
निवेशितं न्यस्तं यत्नेन नगरमलग्नं सिक्थकं मधूच्छिष्टं स्वस्य जन-
कानि मधूनि हीनरसतया परित्यज्य माधुर्यातिशयात् सुधयाऽमृतस्य
सधर्म्मिणि तुल्यायां तत्रैवाधरसीम्नि निवस्तुं नित्यं स्थातुं उत्सुकमुत्क-
ण्ठितमिव रराज । सुधया सिक्थकस्य कदाचिदप्यसम्बन्धात्सम्बन्धा
परित्यक्तमधुकमिव तत्रैव स्थितमित्यर्थः । प्रसाधिका अलक्तकस्य
स्थित्यर्थं अधरे सिक्थकं निवेशयन्ति, अधरस्य मधुनोऽधिकत्वं सूचितं ।
अन्यदपि हीनमाश्रयं परित्यज्योत्तममाश्रयति । सुतोत्प्रेक्षा । सधर्म्मि-
णि धर्म्मादनिच् केवलात् (पा० ५ । ४ । १२४) इति धर्म्मशब्दाद-
निचि, समानस्य छन्दसीत्यत्र (पा० ६ । ३ । ८४) छन्दसीति योगवि-




भागात् समानस्य स आदेशः । समानधर्मो यस्य सा सधर्मा तस्या, सन इति ( पा० ४ । १ । ११ ) न लोप् ॥ ४३ ॥

**स्वरेण वीणेत्यविशेषणं पुराऽस्फुरत्तदीया खलु कण्ठकन्दली । अवाप्य तन्त्रीरथ सप्त मुक्तिका मराजत् परिवादिनी स्फुटं ॥ ४४ ॥**

कण्ठप्रसाधनमाह । स्वरेणेति । तदीया कण्ठ एव कन्दली अतिकौशुमाण्यादिगुणत्वादङ्कुरोद्गमप्रथमाङ्कुरदवहोऽतिमधुरेण स्वरेण कृत्वा पुरा पूर्वं अविशेषणं विशेषणरहितं यथा तथा सामान्येन वीणेयमित्येव खलु निश्चितं अस्फुरत् अभासत, न तु महतीवीणादिविशुवीणाभेदेषु विशिष्टतयेयमिदमस्ति त्यर्थः । अथालङ्कारसमये सप्त मुक्तिकासरान् सूत्रप्रोतमौक्तिकहारानेव तन्त्रीमध्यमाभिषतौरपद्मानध्वनिव्यञ्जितपद्मनादिरागा महसूत्रादिरचिताः सप्त तन्त्रीरवाप्य, विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरवचनात् स्फुटं प्रकटं परिवादिनीति विशिष्टसञ्ज्ञा सती अराजत् अशोभत । स्फुटमुत्प्रेक्षायां वा । वीणाख्योऽपि मधुरतरस्वरा, कण्ठकन्दलीसप्तसरमुक्ताहारालङ्कृता चेति भावः ॥ ४४ ॥

**उपास्यमानाविव शिक्षितुं ततो मृदुत्वमप्रौढ मृणालनालया । विरेजतुर्माङ्गलिकेन सङ्गतौ भुजौ सुदत्या वलयेन कम्बुनः ॥ ४५ ॥**

भुजप्रसाधनमाह । उपेति ॥ माङ्गलिकेन मङ्गलप्रयोजनस्य मङ्गलार्थं रचितेन कम्बुनः शङ्खस्य वलयेन कङ्कणेन सङ्गतौ युक्तौ सुदत्या भैम्या भुजौ विरेजतुः । उत्प्रेक्षते । अप्रौढा बाला या मृणालनाला तया विमर्दवहेन ततः भुजाभ्यां सकाशात् मृदुत्वं शिक्षितुं उपास्यमानाविव सेव्यमानाविव । मृणालादपि कोमलतरौ भुजावित्यर्थः । गौडदेशे विवाहकाले शङ्खवलयधारणमाचारः । बालेन वाच्यास सुकर इत्यप्रौढपद । नालामालमथास्त्रियामित्यपि क्वचित्पाठात् महाकविप्रयोगान्नालाशब्द आयतोऽपि । ततः । आस्यातोपयोग ( पा०




१ । ४ । २८ ) इत्यपादानत्वम् । माङ्गलिकेन । मयाद्यसमिति ( पा० ५ । १ । १०९ ) ठञ् ॥ ४५ ॥

पदद्वयेऽस्या नवयावरञ्जना जनैस्तदानीमुदनीयतार्पिता । चिराय पद्मौ परिरभ्य जाग्रती निशीव विश्लिष्य नवा रविद्युतिः ॥ ४६ ॥

चीयमद्वयेन पद्मप्रसाधनमाह । पदेति ॥ तदानीं तस्मिन् प्रसाधनसमये अस्याः पदद्वये अर्पिता रचिता नवा आर्द्रा यावकरञ्जना अलक्तकरञ्जना जनैर्भैमीसखीजनैरुदयसमये जाता अतिरक्ता रविद्युतिरिव उदनीयत अतर्क्यत । किम्भूता रविद्युतिः । निशि रात्रौ सूर्यस्यास्तसमयवशात् पद्माभ्यां सह विश्लिष्य दिने पुनः पद्मौ चिराय परिरभ्य जाग्रती तिष्ठन्ती । रविद्युतिर्यथा पद्मेषु श्रियमधिकां करोति तथा यावकरञ्जना तत्पादयोरिति भैमीपादौ पद्मतुल्याविति भावः । चिराय विश्लिष्येति वा । चिरविप्रलब्धावन्योन्यं प्राप्य गाढमालिङ्ग्य तिष्ठत इति उक्तिः ॥ ४६ ॥

कृतापराधः सुतनोरनन्तरं विचिन्त्य कान्तेन समं समागमम् । स्फुटं सिषेवे कुसुमेषुपावकः स रागचिह्नश्चरणौ न यावकः ॥ ४७ ॥

कृतेति ॥ पूर्वं विरहावस्थायां सुतनुतरपल्लवकाविरहात् सुतनोर्भैम्याः कृताऽपराधो यः स कुसुमेषुः काम एव पावकः अनन्तरं तु अधुना कान्तेन नलेन समं सह भैम्याः समागमं विचिन्त्य स्फुटं निश्चितं चरणौ सिषेवे अपराधमार्जनायेत्यर्थः । कामस्याग्नित्वे हेतुमाह । यतः सोऽग्निः रागचिह्नः रागो लौहित्यमेव चिह्नं यस्य रक्तिमा वह्निरयमिति ज्ञायते । अथवा अनुराग एव चिह्नं यस्य । अनुराग एव हि कामं समनुभावयति । तस्मात् कामाग्निरयमेव स्वयं यावकोऽलक्तकः स पावको नेति वा । अन्योऽपि प्रोषितभर्तृकायाः कस्याश्चित् कृतापराधः अन्तरितप्रियागमनं विचिन्त्यापराधमार्जनाय तत्पादयोः पतति । यावत्तत्पदद्वयमादेव नलस्य कामोद्दीपको भवितेति भावः ॥ ४७ ॥

स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव वि भूषितेषु च । किमूचिरेऽलङ्करणानि तानि तत् वृथैव तेषां करणं बभूव यत् ॥ ४८ ॥

सहजशोभामाहात्म्यं वर्णयति । स्वयमिति ॥ स्वयं भूषणं विनैव परस्परानपेक्ष्यैव तस्या भैम्या अङ्गेषु मुखाद्यवयवेषु प्रत्येकं स्वीयस्वीयसौष्ठवशालित्वमारोहवशाच्च चारुतां गतेषु सत्सु परस्परेणैवान्योन्येनैव च विशेषेण भूषितेषु प्रत्येकं सौन्दर्ये सत्यपि अन्योन्यसाहचर्यवशात् करानुगुणौ भुजौ भुजानुगुणौ करावित्येकस्याङ्गस्यापरेण तस्य च तेनैव सहाङ्गयोरन्याङ्गसामग्रीसङ्घटनात् सुन्दरतरेषु सत्सु तानि मत शिखातिलकादीनि अलङ्करणानि किमूचिरे अपि तु स्वाकरणप्रयोजनं न किञ्चिदूचुः । यद्यस्मात्तेषामलङ्करणानां तत्पूर्वोक्तं प्रकारं करणं निर्माणं वृथैव बभूव दुःखप्रयासा किञ्चिदूचुः । किमप्यधिकं न चक्रुरित्यर्थः । आश्रितत्वादनिराकार्यत्वेन स्थितान्यवेति भावः । तेषां करणं वृथैवाभूत् । अत्र मम करणमलं इत्यनन्वयनात साम्यय जातमिति भावः । अनं पृथाकरणं येषामिति च बहुव्रीहिणापि साम्यय जातमित्यर्थं । पूर्वार्धमन्तार्धस्य भूषणार्थत्वं पश्चादप्रयोजकत्वाक्षिप्तिद्वार्थस्यानिति चेत्यर्थः । किमुचिरे इति पाठे किमर्थं धृतानि न जाने इति शेष इति वा ॥ ४८ ॥

क्रमाधिकामुत्तरमुत्तरं श्रियं पुपोष यां भूषण चुम्बनैरियं । पुरः पुरस्तस्थुषि रामणीयके तया बबाधेऽवधिबुद्धिधोरणिः ॥ ४९ ॥

भूषणकृतमुत्कर्षं वर्णयति । क्रमेति । इयं भैमी भूषणचुम्बनैर्भूषणसम्पर्कैः करणैः उत्तरमुत्तरं यथा तथाऽग्रे क्रमेण पूर्वपूर्वभूषणापेक्षया उत्तरोत्तरभूषणेनाधिकामतिशयितां यां श्रियं पुपोष तयाऽलङ्कारशोभया रामणीयके सौन्दर्ये पुरः पुरस्तस्थुषि स्थिरतरे सति अवधिः वृद्धेरियत्ता बुद्धिधोरणिः परम्परा पद्याधे बाधिता । इतोऽप्यद्य रामणीयकं नाप्नोति यदि बुद्धिर्येषां तदा अवधिर्भवेत् पूर्वरामणीयकेयत्ताबाधेन

रासखीयकान्तरेण पुनर्न स्फुरणि सति अवधिर्बाधित इत्यर्थः । तस्या भूषणे शोभा निरवधिरभूदिति भावः । धोरणिरिति देश्यशब्दः ॥ ४९

मणीसनाभौ मुकुरस्य मण्डले वधौ निजास्यप्र
तिबिम्बदर्शिनी । विधोरदूरं स्वमुखं विधाय
सा निरूपयन्तीव विशेषमेतयोः ॥ ५० ॥

मणीति । मणीसनाभौ मौक्तिकादिरत्नतुल्ये ऽतिस्वच्छे मुकुरस्य मण्डले दर्पणतले पुनर्निजास्यस्य स्वमुखस्य दर्पणमण्डलान्तःप्रतिबिम्बं पश्यन्ती दर्शनशीला दर्शिनी सा भैमी मुखं विधोर्दर्पणरूपस्य प्रतिबिम्बरूपस्य वा चन्द्रस्य अदूरं निकटवर्ति विधाय कृत्वा एतयोर्मुखचन्द्रयोर्विशेषं तारतम्यं निरूपयन्तीव विचारयन्तीव बभौ । सन्निधौ हि विशेषः स्फुरति । बिम्बापेक्षया प्रतिबिम्बस्य न्यूनत्वात्तस्यैव चन्द्रत्वमिति विशेषो निरूपित इति भावः । भूषणानन्तरमादर्शविलोकनमिति स्त्रीजातिस्वभावः । प्रतिबिम्बदर्शिनी । आभीक्ष्ण्ये णिनिः ॥ ५० ॥

जितस्त्वयास्येन कलानिधिर्दधे द्विचन्द्रधीसाक्षि
ककायमायताम् । तथापि जिग्ये युगपत् सखी
युगप्रदर्शितादर्शबहूभविष्णुना ॥ ५१ ॥

जित इति । तया आस्येन जितः कलानिधिश्चन्द्रो नेत्रान्तविष्टीकरणादिनिमित्ता हस्तस्थितादर्शनिमित्ता वा द्वौ चन्द्राविति धीर्यस्य पुरुषस्य स एव साक्षी साक्षाद्द्रष्टा यस्याः सा माया यस्यैवम्भूतः कायो यस्य चन्द्रस्य तस्य भावस्तत्तां दधे चकार । एकत्वादहं भैमीमुखेन जित इति मायामयानेककायत्वं चन्द्रेण धृत इत्यर्थः । अत्र च पूर्वोक्तप्रकारद्वयेन भासितौ द्वौ चन्द्राविति बुद्धिरेव प्रमाणम् । कलानिधिपदेनानेकशिल्पज्ञत्वान्मायिककायव्यूहनिर्माणकलामपि वेत्तीति सूचितम् । द्वाभ्यामेकजयस्य सुकरत्वात् करस्थितादर्शच्छलेनानेककायत्वं यद्यप्यङ्गीकृतं तथापि युगपत् समकालं सखीयुगेन प्रकर्षेण दर्शिताभ्यामादर्शाभ्यां कृत्वा तयोर्बाहुना अनेकेनापि बहूभविष्णुना बहूभवनशीलेन सता तन्मुखेन चन्द्रो जिग्ये जित एव । हस्तस्थदर्पण

सहितसखीदर्पणद्वयं प्रतिफलितमुखप्रतिबिम्बैः सह बिम्बभूतस्य मुखस्यानेकत्वात् मुखतुल्यदर्पणद्वयेन सह बिम्बभूतस्य मुखस्य स्वमदृशैरा दर्शैः स्वप्रतिबिम्बैः सह वा अनेकत्वात् पञ्चसु द्वयोर्विजयस्य सुकरत्वादित्यर्थः । पूर्वं शोभया जितोऽपि सङ्ख्याधिक्येन मुखं जेतुमारब्ध वांस्तथापि मुखस्याधिकत्वसङ्ख्यत्वान्न शशाकेति भावः । वहूजयिष्णु नेति विधः ॥ ५१ ॥

किमालियुग्मार्पितदर्पणद्वये तदास्यमेकं बहु चान्यदम्बुजम् । हिमेषु निर्वाप्य निशासमाधिभिस्तदीयसालोक्यमितं व्यलोक्यत ॥ ५२ ॥

किमिति । आलियुग्मेनार्पिते दर्शिते दर्पणद्वये बहुषु प्रतिबिम्बेषु मध्ये एकमेकं सत्यायोग्यमथ च मुख्यं तदास्यं भैमीमुखं अन्यच्च हिमेषु शिशिरर्तुषु अथ च काम्येषु केदारादिहिमेषु निर्वाप्य निर्वाप्य निर्वाप्य विनाश्यमथ च मोक्षं कृत्वा प्राप्येति यावत्, निशासमाधिभिः रात्रिमध्यस्थितिभिः सङ्कोचैरथ च परमात्मदर्शनोपायैः कृत्वा तदीयं भैमीमुखसम्बन्धि सालोक्य सादृश्यमथ च सालोक्यलक्षणां मुक्तिं इतं प्राप्तं बहु अनेकमम्बुजं किं लोकैर्व्यलोक्यत । किमुत्प्रेक्षायां । भैमीमुखप्रतिबिम्बतो हीनत्वात् पद्मानि केदारादिहिमघृष्टानि भूत्वा तन्मुखप्रतिबिम्बस्य समीपे स्थितानि किमित्यर्थः । पद्मेभ्यो मुखमधिकमिति भावः । अम्बुजमिति जात्येकवचनं । निर्वापणं निर्वापणं करोति एयन्तात्ल्यपि निर्वाप्येति हिमेष्वात्मानं विनाश्येत्यर्थः । सालोक्यं । सगामर्ये ति योगविभागात् न आदेशः ॥ ५२ ॥

पलाशदामेति मिलच्छिलीमुखैर्वृता बिभ्रपाम गिरशिमकार्मुकैः । स्मराङ्गि लक्ष्यैर्धनुषामसौ तदा रतीशसर्वस्वनयाभिरङ्गिना ॥ ५३ ॥

पलाशेति । असौ भैमी पलाशानां किंशुकानां दाम माल्यमिति भ्रान्त्यां मिलन्त आगच्छन्तः शिलीमुखा भ्रमरा बाणाश्च भूतैरथ च किंशुकानां धनुराकारत्वात् मिलद्बाणैर्धनुषामसौ [illegible] विशिष्टालङ्कारसम्ब

न्निमाणिक्यादिरत्नाना रश्मिरूपै कार्मुकैरिन्द्रधनुर्भिर्वृता वेष्टिता स-
ती तदा भूषणाधानान्तरकाले रतीशस्य कामस्य मनुः स्वतया परमधनत्वेन
पेशुना धनुषा लक्ष्यैर्लक्ष्यसङ्ख्यैर्धनुर्भिः सञ्जि सामन्तैः रक्षितेव लोकैर
लक्षि तर्किता । कुत्ता प्रविशन्तीतियद्धनुषा धनुर्धराणामित्यर्थः । का
न्तिधाम्यान्तिशतया नराहस्वस्वनेभ्यः कामा रक्षितेत्यर्थः ॥ ५३ ॥

विशेषतीर्थैरिव जन्हुनन्दिनी गुणैरिवाजानिक
रागभूमिता । जगाम भाग्यैरिव नीतिरुज्ज्वलै
र्विभूषणैस्तत्सुषमा महार्घतां ॥ ५४ ॥

विशेषेति । तस्या भैम्याः सुषमा स्वाभाविकी परमा शोभा विशि-
ष्टैर्भूषणैः कृत्वा महार्घताम् अतिश्रैष्ठ्यं जगाम । का केरिव । जन्हुनन्दि
नी स्वत एव श्रेष्ठापि गङ्गा विशेषतीर्थैः प्रयागादिभिरिव । तथा आ-
जानिकरागभूमिता जननं जनः न जनो ऽजनः अजननेन निर्वृत्त । ते
न निर्वृत्त (पा० ५ । १ । ७९) इति ठक इकादेशः अनुशतिकादित्वा-
दुभयपदवृद्धिः । आजानिकः सहजो रागस्तस्य भूमिः स्थानं पुत्रादि-
स्तस्य भावस्तत्ता सहजा स्नेहपात्रता गुणैः शीललावण्यादिभिरिव ।
तथा नीतिरुज्ज्वलैर्नीतिसाधितफलप्रतिबन्धनाशनात् प्रकाशैर्भाग्यैः
पूर्वकृतशुभकर्मभिरिव । भागीरथी सर्वत्र श्रेष्ठैव परं प्रयागादौ मा-
हात्म्यातिशयः । यत्रानुरागस्तत्र श्रैष्ठ्यं परं शीलादिना त्वनुरागस्य
निरतिशयत्वं । तथा नीतिमार्गानुसरणं श्रेष्ठमेव परन्तूज्ज्वलैर्भाग्यैर-
नुगृहीतं श्रेष्ठतरं भवतीत्यर्थः । भूषणैस्तस्या निरतिशया शोभाऽभूदि-
ति भावः । उज्ज्वलैरिति उपमानोपमेयैः सम्बन्धनीयं । अशुभकर्म-
णाऽपि भाग्यस्याभिधायकत्वात् तन्निवृत्त्यर्थं भाग्यविशेषणमेव वा । उ
पमानत्रयेण क्रमेण पावित्र्य गुणत्व भाग्यवत्त्वञ्च सूचितं । विशि-
ष्यन्ते इति विशेषाः पचाद्यच् ॥ ५४ ॥

नलात् स्ववैश्वस्त्यमनाप्नुमानता नृपप्रिया भी
ष्ममहीत्स्वागताः । तदङ्घ्रिलाक्षामदधन्त मङ्ग
लं शिरःसु सिन्दूरमिव प्रियायुषे ॥ ५५ ॥

नलादिति । नलात् सकाशात् स्वस्यात्मनो वैश्वरत्य वैधव्यमनाप्तुं अप्राप्तुमानता भैमीचरणप्रणामप्रयता भीमस्य कन्यास्वयम्वररूपे महोत्सवे आकारिताः सत्य आगता नृपप्रिया अन्यराजमहिष्यः प्रियायुषे स्वप्राणेश्वरजीवनाय मङ्गलरूपसिन्दूरमिव स्वशिरःसु तस्या भैम्या अङ्घ्र्योश्चरणयोर्लीनां अलक्तकं अदधन्त अधारयन् । पत्युरायुर्विवृद्धये अन्याः स्त्रियः ता एव याः यथा शिरःसु सिन्दूरं धारयन्ति । तथा प्रणामप्रसन्नया भैम्या मदीया प्राणेशा रक्षणीया इति प्रार्थितो, नलः स्वप्राणेशान् रक्षिष्यतीति बुद्ध्या स्वभर्तृचिरञ्जीवनाय भैमीचरणयोः प्रणामं कृतवत्य इति भावः । प्रणामादेव या आर्द्रा लाक्षा लग्ना । विशुम्भाविषये समे इत्यमरः । वैश्वरत्य । ब्राह्मणादित्वात् ष्यञ् (पा० ५ । १ । १२४) । दध धारणे, लङि ।

हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
केशसंस्कारकबरीकरकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ॥

इति स्कान्दवचनम् ॥ ५५ ॥

अमोघतां तेन सनाभितां गताः प्रसन्नगीर्वाणवराक्षरस्रजाम् । ततः प्रणम्राधिजगाम सा ह्रिया गुरुर्गुरूणामपि पतिव्रताशिषः ॥ ५६ ॥

अमोघेति । ततो नलप्रणामानन्तरं प्रणम्रा कृतगुर्वादिचरणप्रणामा सती ह्रिया गुरुः अधिकलज्जेत्यर्थः, सा भैमी गुर्वोः पूज्यतमयोः विश्रुतया प्रशस्तानां वाङ्मनःकायकर्मभिः पतिमव्यभिचरन्तीनां पतिव्रतानां वृद्धाणामपि सुवासिनीनाम् अविधवा सुभगा बहुपुत्रा भवेति आशिषः अधिजगाम अलभत । किम्भूता आशिषः । अमोघभावेन सफलत्वेन प्रसन्नानां गीर्वाणानां देवानां पर्योक्ता वराक्षरस्रग्व्यास्तिन्योऽवरस्रजां वर्णमालानां सनाभितां बन्धुत्वं गताः प्राप्ताः, सत्यत्वेन तत्तुल्याः ॥ ५६ ॥

तथैव तत्कालमथानुजीविभिः प्रसाधनासज्जन
शिल्पपारगैः । निजस्य पाणिग्रहणक्षणोचिता
कृता नलस्यापि विभोर्विभूषणा ॥ ५७ ॥

तथैवेति । तथैव भैम्या वेदिकोत्सरे यथा मङ्गलस्नानादिकृत तेनैव प्रकारेण क्रमेण च तत्काल तस्मिन्नेव कालेऽथ मङ्गलस्नानानन्तर प्रसाधनासज्जन भूषणकरण तत्सम्बन्धि शिल्प विज्ञान कौशल तस्य पारगै विशेषविशेषज्ञै शृङ्गारादिभि अनुजीविभि सेवकैर्निजस्य विभो स्वस्वामिनो नलस्यापि पाणिग्रहणक्षणोचिता विवाहकाले योग्या विवाहरूपोत्सवयोग्या या विभूषणा कृता रचिता । निजस्येति स्वयप्रवृत्ति सूचिता । विभोरित्यविलम्ब सूचित । भूषयतिचुरादि तस्माद्युच् ५७

नृपस्य तत्राधिकृताः पुनः पुनर्विचार्य्य तान् व
धूमवापयन् कचान् । कलापलीलोपनिधिर्ग
रुत्यजः स यैरपालापि कलापिसंसदः ॥ ५८ ॥

श्लोकद्वयेन केशप्रसाधनमाह । नृपस्येति । तत्र केशप्रसाधनेऽधिकृता नापितादय पुन पुन विचार्य धूपजधूमसंशापण कङ्कतिकादिना प्रसाधन कृत्वा अथ च धूपजधूमस्यापि विद्यमानत्वात् पुन पुनस्तद्वत्तान्तवशादते केशा अथ न धूम इति विचार्य्य कानि पुष्पाणि कुत्र स्थाप्यानीति योग्यायोग्यत्वाय विचार्य्य वा नृपस्य तान् कचान् धम्मिल्लादिरचनाविशेषग्रन्थिरूप बन्ध अवापयन प्रापयामासु । तान् कान् । यै कचै शरदि गरुत पक्षान् त्यजति गरुत्त्यक् तस्य कलापिसंसदो मयूरसङ्घस्य सम्बन्धी कलापलीलोपनिधि कलापलीलाया उपनिधि साम्यमपालापि आच्छादित, तदपत्रयाधिकीर्त्तितमित्यर्थ । कलापलीलारूपो य उपनिधि कविसमयसिद्ध प्रतिनिधि स यैराच्छादि जित इवेत्यथ इति वा । नलकेशैर्विलासस्य गृहीतत्वात् निर्विलासतया निरर्थक बर्हभार त्यजति इति सूचनाद्गरुत्त्यज इति पद साभिप्राय । यैः कचैः पक्षत्यागिन्या मयूरसहतेः कलापशोभानिक्षेप अपालापि गृहीत्वा नाद्यापीन्यपलापित । य परस्य निक्षेप गृहीत्वा

न दत्त्या परं प्रतारयन्ति न राज्ञोऽधिकृते पुरुषे यथाहुः शिखिनो या नयति । मयूरा शरदि पक्षान्मुञ्चन्ति । पुमानूपनिधिन्यास इत्य-मरः । अपायपन् । अभ्रोतेर्ण्यन्ताल् लुङि द्वितीयस्यैकाचो द्वित्व गत्य र्थत्वादणौ कर्तुर्णौ कर्मत्वम् । अलम्भयमिति वा पाठः ॥ ५८ ॥

पतत्त्रिणां द्राघिमशालिना धनुर्गुणेन संयोगजुषां मनोभुवः । कचेन तस्यार्जितमार्जनश्रिया समेत्य सौभाग्यमलम्भि कुड्मलैः ॥ ५९ ॥

पतत्त्रिणामिति । अर्जिता लब्धा मार्जनश्रीरभ्यञ्जनिता स्निग्धशोभा येन । तथा द्राघिम्णा शालते शोभते शीलेन तस्य नलस्य कचेन केश-पाशेन सह समेत्य सम्बन्धं प्राप्य कुड्मलैर्मञ्जिकादिकोरकैः कर्तृभिः, द्राघिमशालिना तथा अर्जितमार्जनश्रिया पुनः पुनः अङ्गुल्यादिना प-र्षणाञ्जनमार्जनसम्बन्धिस्निग्धशोभेनेव भ्रमरमालारूपेण धनुर्गुणेन सं-योगजुषां सङ्गतानां मनोभुवः कामस्य पतत्त्रिणां सौभाग्यं सादृश्य-मलम्भि केशपाशस्य भ्रमरमालारूपेण कामधनुर्गुणेन साम्यं । कोर-काणाञ्च पुष्परूपैर्बाणैः नलस्य च कामेनेत्यर्थः । अतिविशालनील-तरकरिकाङ्कितनलकेशपाशदर्शनमात्रेण स्त्रीणां कामवशा भवितेति भावः । कचेन । जात्यैकवचनम् ॥ ५९ ॥

अनर्घ्यरत्नौघमयेन मण्डितो रराज राजा मुकुटेन मूर्द्धनि । वनीपकानां स हि कल्पभूरुहस्ततो विमुञ्चन्निव मञ्जुमञ्जरीम् ॥ ६० ॥

मुकुटवर्णनमाह । अनर्घ्येति ॥ अनर्घ्यरत्नौघमयेन अमूल्यदिव्य-माणिक्यादिरत्नघटितेन मुकुटेन मूर्द्धनि मण्डितो राजा स नलः हि यस्माद्वनीपकानां याचकानाम् अतिधनदानात् कल्पभूरुहः कल्पवृक्ष-स्ततो हेतोः मञ्जुमञ्जरीं कल्पवृक्षोचितां रम्यां रत्नाङ्कुरपरम्परां विमुञ्च-न्निव रराज । वृक्षो हि नानाविधपुष्पफलयुक्तां मञ्जरीमुद्गिरति । कल्पवृक्षस्य मञ्जरी रत्नमय्येवोचिता । मञ्जर्याकारो मुकुटशिखरेषु च । मञ्जर्याकारा मुकुटमणिकिरणा ऊर्ध्वं निर्गच्छन्तीत्यर्थः । प-

धनंदर्शीत्यर्थे दृशाद्वित्वाद्यः । मञ्जुरीरिति च पाठः ॥ ६० ॥

नलस्य भाले मणिवीरपट्टिकानिभेन लग्नः प
रिधिर्विधोर्बभौ । तदा ग्रासाङ्गाधिकरूपतां गते
तदानने मातुमशक्नुवन्निव ॥ ६१ ॥

भालेप्रसाधनमाह । नलस्येति । रत्नरचितायां वीरसम्बन्धिन्या वीरपुरुषधार्यया वीरपट्टिकाभिख्यया वेऽऽयोलायाः सुवर्णपट्टिकायाः श्रवणयुगपर्यन्तगामित्वव्यापिन्या निभेन व्याजेन नलस्य भाले ललाटे लग्न सन् विधोश्चन्द्रस्य परिवेषो बभौ । मुखचन्द्रेऽपि चेत् परिवेषः सम्पूर्णमण्डले किमिति न दृश्यत इत्यत आह । किं कुर्वन्निव । तदा प्रियासङ्गमकाले भूषणकाले च हर्षवशाद् उपाधवशाच्च ग्रासाङ्गाधिकरूपता चन्द्रापेक्षयाधिकपरिमाणत्वं गते प्राप्ते तदानने मातुं तुल्यप्रमाणत्वात् मातुमशक्नुवन्निव । अल्पपरिमाणस्य यदलङ्करणं तदधिकपरिमाणस्यैकदेश एव तिष्ठति न तु सर्वं मण्डयितुं शक्नोति तस्मात् मुखैकदेशे भाल एव परिधिः स्थित इति युक्तमिति भावः । मणिकिरणानां मण्डलाकारत्वेन पट्टिकायाः परिवेषाकारत्व युक्तम् । घनशक्तिमुद्दरन्निति च पाठः ॥ ६१ ॥

बभूव भैम्याः खलु मानसौकसं जिघांसतो धै
र्यभरं मनोभुवः । उपभ्रुनद्भ्रु लचित्ररूपिणी
धनुःसमीपे गुलिकेव सम्भृता ॥ ६२ ॥

श्लोकत्रयेण तिलकं वर्णयति । बभूवेति । मनोभुवो धनुःसमीपे सम्भृता सज्जीकृता उपभ्रु भ्रुवोः समीपे तस्य नलस्य भ्रुलेन चित्रतिलकस्तद्रूपिणी गुलिकेव मृन्मयगोलक इव बभूव । किम्भूतस्य । भैम्या मानसौकसं मनसि वर्तमानं धैर्यभरं धैर्यबाहुल्यमथ च धैर्यभरमेव मानससरोनिवासिनं इव पक्षित्वाद्वविद्यते धैर्यभरो यस्यैवंविध वा हंस जिघांसतो हन्तुमिच्छतः । भ्रुवोः कामधनुस्त्वं तिलकस्य च गुलिकात्वं । भ्रूसमीपस्थितवर्तुलतिलकदर्शनमात्रेण भैमी कामवशा भविष्यतीति भावः । अन्यो ऽपि हंस हन्तुमिच्छन् धन्विनो

धनुषि गुलिका सन्यत्ते । रावश्च तिलको वृत्तो वर्त्तुलो नृपवैश्ययोरिति वचनात् । नानसीकारत्वोत्प्रेक्षाया खलु । चित्र स्यादङ्गनालेख्यतिलकेष्विति विश्व । चित्रञ्च तद्रूपञ्चेति कर्म्मधारयादिनियां । चित्ररूपतेति वा पाठे तिलकस्वरूपतेत्यर्थ ॥ ६२ ॥

अचुम्बि या चन्दनबिन्दुमण्डली नलीयवक्त्रेण सरोजतर्जिना । श्रियं श्रिता का न तारका सखीकृता शशाङ्कस्य तयाङ्कवर्त्तिनी ॥ ६३ ॥

अचुम्बीति । वृत्तत्वादिना गुणेन सरोजतर्जिना कमलजैत्रेण तदधिकेनापि च कमलतर्जनयशादेव चन्द्ररूपेण नलीयेन वक्त्रेण या चन्दनबिन्दुमण्डली मण्डलाकारचन्दनतिलक अचुम्बि चिह्नता, तया चन्दनबिन्दुमण्डल्या चन्द्रस्येव सखी श्रिय श्रिता सलक्ष्मीका का च न रोहिण्यादिमध्ये तारका शशाङ्कवर्त्तिनी मध्यवर्त्तिनीकृता । तथा चन्द्रमध्यवर्त्तिनी का च न सश्रीका तारका स्वस्य सखी सहचरी कृता सा तत्तुल्या जातेत्यर्थ इति वा । का च न कापि तारका सखी न कृता किन्तु या का च न चन्द्राङ्कवर्त्तिनी भवत् सा सर्व्वापि सख्येव कृतेति वा । सरोजतर्जिनचन्द्रस्य मध्यवर्त्तिना रोहिण्यादिभिर्येषांसंच चन्दनवृत्ततिलकसरोजतर्जी नलमुखचन्द्रस्तन्तुल्यो भवेन्न चैवमित्यर्थ । तदा तन्मुखचन्द्राभ्यामधिकतम जातमिति भाव । कान्तनेति पाठे अतिशयिता श्रिय श्रिता ॥ ६३ ॥

न यावदग्निभ्रममेत्युदूढतां नलस्य भैमीति हरेर्दुराशया । स बिन्दुरिन्दुः प्रहितः किमस्य सा न वेत्ति भाले पठितुं लिपीमिव ॥ ६४ ॥

नेति । हरेरिन्द्रस्य इति एवमपरा दुराशया अनुपपद्यमानासम्भाविनमभिलाषेण नलस्य भाले ललाटे सा भैमी किमस्मि न वेत्ति मन्दिराग्निभ्रमरूपां लिपीं अक्षरलिपीं भालपट्टिकां सन्देहनिरासाय स्पष्टपठितुं वाचयितुं च चन्दनबिन्दुरेवेन्दुश्चन्द्र प्रहित प्रेषित इव इत्यु-

रप्रेक्षा । इति किं । भैमी यावदग्निस्त्वम् अग्निप्रदक्षिणीकरणपर्यन्तं नलस्य सदूढता परिणीतता भार्यात्वं नैति गच्छतीति । यद्यपि स्वयंवरो जातस्तथापि यावत्सप्तपदी गमनं भैमी नलभार्या न भवती-त्येतीन्दुरस्य दुराशया स बिन्दुचन्द्र एव प्रहित किं । पत्नीत्वं सप्तमे पदे इति स्मृतिप्रामाण्यादाह यावदग्निस्त्वमथा भैमी नलभक्ता नैति । प्रत्तलिपिर्निश्चय चन्द्रद्वारा युक्ता तस्मात्स्वयं वयं प्रयतामह इति दुराशया लिपिधारणार्थं प्रेषितो लल टे स्थितचन्द्र इव तिलको रराज इति भाव । यावदग्निस्त्वमव्ययीभाव । लिपौ । कृद्विकारादिती-कार (पा० ४ । १ । ४५ । सि० कौ) ॥ ६४ ॥

कपोलपालीजनितानुबिम्बयोः समागमात् कुण्डलमण्डलद्वयी । नलस्य तत्कालमवाप चित्तभूरथस्फुरच्चक्रचतुष्कचारुतां ॥ ६५ ॥

कर्णभूषणं वर्णयति । कपोलेति । तत्काले तस्मिन्नलङ्करणसमये नलस्य कुण्डलमण्डलद्वयी कर्णभूषणीभूतमण्डलाकारकुण्डलद्वयी कपोलपाल्या प्रशस्तातिस्वच्छनलकपोलयुग्म जातौ मिलौ स्वीयौ अनुबिम्बौ प्रतिबिम्बौ तयो समागमात् सम्बन्धाद्धेतोश्चित्तभूरथे कामरथे स्फुरद्विलसत् चक्रचतुष्क तस्य चारुता सौन्दर्यमवाप । रथचतुश्चक्रो भवति । पाली फलक, चतुष्क परिमाणोपाधिके सङ्ख्यायै । सङ्ख्याया सञ्ज्ञा सङ्घेति (पा० ५ । १ । ५८) कन । तत्र प्राणिसङ्घे यद्यपि प्रत्ययस्तथाप्यत्रौपचारिक प्रयोग ६५ ॥

श्रितास्य कण्ठं गुरुविप्रवन्दनाद्विनम्रमौलेश्चिबुकाग्रचुम्बिनी । श्रवाप मुक्तावलिरास्यचन्द्रमः स्रवत्सुधातुन्दिलबिन्दुवृन्दतां ॥ ६६ ॥

श्रितेति । अस्य कण्ठं श्रिता मुक्तावलि मौक्तिकहारलता आस्यमेव चन्द्रमास्तस्मात् स्रवन्ती या सुधा तस्यास्तुन्दिल स्थूल बिन्दुवृन्द तस्य भावस्तता तामवाप । किम्भूतस्य । गुरूणा पित्रादीना विप्राणाञ्च वन्दनया विनम्रो मौलिर्यस्य अत एव किम्भूता हारावली चिबुका-

धुकाङ्क्षिणो वरान् यः पपार, बह्व्यो ब्राह्मणा येन विवाहिता इत्यर्थ इति वा । अथ च सागरस्य जेजे यस्मात्सागराल्लक्ष्मीरजनि यदुत्पन्नेन वारुणैरावणाद्येन सकलारातिः आजिषु सकलानभून् । पक्ष वृष्ट्यर्थं जलाभिलाषिणो मेघान् पूरयति । नामनामाद्यङ्किता मुद्रिका मुद्रा । यदुद्गता, पपार यस्तानिति च पाठः । सलिलं कमलं जलमित्यमरः । कमला श्रीहरप्रियेति विश्वः । बलन बलः । घञर्थे कविधानात्कः । अपूपुरदिति पूरयतेः लुङि ह्रस्वे, दीर्घो लघोरिति (पा० ७ । ४ । ९४) अभ्यासस्य दीर्घः । पपार, पृधातोः पूरणार्थाल्लिट्, इट बाधित्वा परत्वाद् वृद्धिः ॥ ६७ ॥

कृतार्थयन्नर्थिजनाननारतं बभूव तस्यामरभूरुहः करः । तदीयमूले निहितं द्वितीयवत् ध्रुवं दधे कङ्कणमालवालताम् ॥ ६८ ॥

कृतेति । तस्य करः अमरभूरुहः कल्पवृक्षो यतः बभूव । किं कुर्वन् अर्थिजनान् याचकलोकान् बहुधनदानादनारतं सदा कृतार्थयन् प्राप्तप्रयोजनान् कुर्वन् । तस्मात्कल्पवृक्षरूपे तदीयकरमूले निहितं स्थापितं द्वितीयवद्द्वितीयेन वैवाहिकेन सूत्रमयेन माङ्गलिकेन कङ्कणेन युक्तं मौघस्यं कङ्कणमालवालता दधे तदीयकरकल्पतरोः कङ्कणमालवालस्थाने जातमित्यर्थः । वृक्षमूले बालवालद्वयं भवति । निशितमुद्रिकाद्वयवत् द्वयोर्मिलितयोर्घटनात् द्वितीयवदिति वा । ध्रुवमुत्प्रेक्षायां । विनिवेशितं तदेति पाठः साधु ॥ ६८ ॥

रराज दोर्मण्डनमण्डलीजुषोः स वज्रमाणिक्यसितारुणत्विषोः । मिषेण वर्षन् दशदिङ्मुखोन्मुखौ यशःप्रतापाववनीजयार्जितौ ॥ ६९ ॥

रराजेति । स नलः रराज । किं कुर्वन्निव । दोर्मण्डन बाहुभूषण तस्य मण्डली श्रेणी जुषेते इति जुषौ तयोरङ्गदादिवलयबाहुभूषणयोर्वज्रमाणिक्ययोः क्रमेण सितारुणत्विषोः श्वेतरक्तदीप्त्योर्मिषाद्व्याधोदिक्सहितप्राच्यादिदशदिङ्मुखाभिमुखौ तत्र प्रसरन्तौ अवनी-

जयेन। जितौ क्रमेण यत्र प्रतापौ दर्पं प्रसारयन्निव। क्षीरक्ष्माणिक्याना मण्डनाश्रितत्वात् तद्दीप्त्योरपि मण्डनाश्रितत्वं युक्तं। यत्र प्रतापौ सितरक्तशोभाविति कविसङ्केतः। इवाध्याहार ॥ ६९ ॥

घने समस्तापघनावलम्बिनां विभूषणानां मणि
मण्डले नलः। स्वरूपरेखामवलोक्य निष्फलीच
कार सेवाचणदर्पणार्पणं ॥ ७० ॥

घन इति। नलः समस्ता ये अपघनाः हस्तमस्तकाद्यङ्गानि तान- वलम्बन्ते एव शीलानि तत्र स्थितानि तेषां विभूषणानां घने सान्द्रे मणिमण्डले रत्नपुञ्जे स्वरूपस्य स्वाकारस्य रेखां परमां शोभां स्वलाव- ण्यपरमां मर्यादां वावलोक्य सेवाया चणाः प्रसिद्धाः सेवाचतुरा ना- पितादयस्तेषां दर्पणार्पणं प्रतिबिम्बदर्शनार्थं मुकुरार्पणं निष्फलीचकार। आदर्शकृत्यस्य रत्नैरेव कृतत्वादिति भावः। मङ्गलमादर्श इति बुद्ध्या दर्पणमानीतं तेन च विलोकितं इति तेषां सेवाचातुर्यं। सेवाचणे- ति तेनवित्त (पा० ५।२।२६) इति चणप् ॥ ७० ॥

व्यलोकि लोकेन न केवलं चलन्मुदा तदीयाभ
रणार्पणद्युतिः। अदर्शि विस्फारितरत्नलोचनैः
परस्परेणैव विभूषणैरपि ॥ ७१ ॥

व्यलोकीति। चलन्ती व्याघुट्य व्याघुट्योत्पद्यमाना मुत् यस्य तेन निरन्तरहर्षेण लोकेन तदीयानां नलीयानां आभरणानां अर्पणद्युति संस्थानविशेषे स्थापनेन कृता शोभा केवलं न व्यलोकि किन्तु विस्फा- रितानि प्रसारितकिरणानि रत्नान्येव लोचनानि येषां तैर्विधैर्विस्फा- रितरत्नलोचनैः एतस्य वा अचेतनैर्विभूषणैरपि परस्परेणान्योन्यस्याद- र्शीव विलोकितमेव अन्योन्यशोभाविलोकनार्थं अचेतनैरपि तैर्नेत्राणि प्रसारितानीत्यर्थः। आभरणशोभा सर्वैर्विलोकिता मण्डनानामद्भुत ए- वितरणमिति भावः ॥ ७१ ॥

ततो ऽनु वार्ष्णेयनियन्तृकं रथं युधि क्षतारिक्षि

तिन्नृउज्जयद्रथः । नृपः पृथासूनुरिवाधिरूढवान्
स जन्ययात्रामुदितः किरीटवान् ॥ ७२ ॥

तत इति । ततो भूयल्पायनाद्नु पश्चात् स नलः नृप पार्थः यथा नियन्ता सारथिर्यस्य, अथ च कृष्ण सारथिर्यस्य तं रथं किरीटवान् सत्कितिरीटयोगात् किरीटिनामा पृथासूनुरर्जुन इवाधिरूढवान् । किम्भूतो नलो र्जुनश्च । युधि यता भङ्गं प्रापिता अरिक्षितिभृता वैरिनृपाणां जयन्ता जयदातारो ऽपि रथा येन । सवैरिनृपद्याती जयद्रिपुरथो यस्येति वा । सता वैरिनृपाणां जयन्तो रथा सन्ति यस्य तथा दिस्वाद्वा महारथातिरथादिरथप्रमुखा बाधा येनेति वा । अर्जुनपक्षे युद्धे हतो ऽभिमन्युवधादरि शत्रुभूत क्षितिभृद्राजा जयद्रथो यत्र । सतोऽरीणां कौरवाणां सम्बन्धी राजा जयद्रथो येनेति वा । तथा ग मी वधूं हतो जन्यो वरस्तत्सम्बन्धिन्या यात्रया मुदितो हृष्ट । ल- न्या वरपक्षीयास्ते सह यात्रया वा हृष्ट । अथ च युद्धसम्बन्धिन्या विज यायात्रया हृष्ट । तथा मुकुटेन सहित वरयात्रार्थं निर्गत इत्यर्थः । पार्थेन । पृथोरपत्य इतश्चानिञ (पा० ४ । १ । १२२) इति ठक् । नि यन्तृक । नद्यृतश्चेति (पा० ५ । ४ । १५३) कप् ॥ ७२ ॥

विदर्भनाम्नस्त्रिदिवस्य वीक्षितु रसोदयादप्सरस
स्तमुज्ज्वलं । गृहाद्गृहादेत्य धृतप्रसाधना व्य
राजयन् राजपथानथाधिकं ॥ ७३ ॥

इदानीं वरसन्दर्शनार्थं पुरनारीसम्भ्रममाह । विदर्भेति । अथ र- थारोहणानन्तर विदर्भेति नाम त्रिदिवस्य कुण्डिनरूपस्य स्वर्गस्याप्सर स सुन्दरनार्य एव स्वर्वेश्या उज्ज्वलं प्रकाशमानं मूर्तं शृङ्गाररूपं वा त नलं रसादयदर्शनानुरागाभिवृद्धिहेतोर्वीक्षितु विशेषेण द्रष्टु धृतप्र साधना सालङ्काराः सत्य गृहात् गृहादेत्यागत्य निसगरम्यान् राजप- थान् अधिक नितरां व्यराजयन् तद्योगात्तेऽप्यधिकं शुशुभिरे इत्यर्थ । तासामतिसौन्दर्यमुक्तम् । सर्वाऽपि तद्दर्शनार्थमागता इति भाव ७३

अजानती कापि विलोकनोत्सुका समीरधूतांशु.

मपि स्तनांशुकं । कुचेन तस्मै चलत्यकरोत्पुरः पुराङ्गना मङ्गलकुम्भसम्भृतिं ॥ ७४ ॥

अजानतीति । नलस्य दर्शनोत्सुका अत एव समीरेण धूतार्द्धं कम्पितार्द्धमपि स्तनांशुकं चोलकाख्यं कुचावरणवस्त्रं अजानती अनावृतवक्षा अपि पुराङ्गना चलते वरयात्रोन्मुखाय तस्मै नलाय पुरोऽग्रभागे कुचेन कृत्वा मङ्गलकुम्भस्य शुभसूचकशकुनरूपपूर्णकुम्भस्य सम्भृतिं सम्भारमुपदामकरोत् । समीरधूतेत्यनेनाचेतनस्याप्यनुरागोत्पादकता कुचस्यातिसौन्दर्यमिति च व्यज्यते । वरस्य च पुरः पूर्णकलशदर्शनेन शुभाय भवति । तस्मै । क्रियया यमभिप्रैति स सम्प्रदानम् ॥ ७४ ॥

सखीं नलं दर्शयमानयाकृतो जवादुदस्तस्य करस्य कङ्कणे । विपद्य हारैस्त्रुटितैरतर्कितैः कृतं कयापि क्षणलाजमोक्षणं ॥ ७५ ॥

सखीमिति । सोऽयं नलः समागच्छतीत्येवं करेण सखीं नलं दर्शयमानया दर्शयन्त्या कयापि प्रदर्शनार्थमेवाकूतः स्वरभङ्गात् सकाशात् जवाद्वेगादुदस्तस्य करस्य सुवर्णहीरकधारातीक्ष्णाग्रभागे कङ्कणाख्ये भूषणे विपद्य वेगाज्जिघातवशात् लग्नित्वा त्रुटितैश्छिन्नैर्हारैर्नलविलोकनरसात् तर्कितैरज्ञातविच्छेदैः पतद्भिर्हारैस्तदीयमुक्ताफलैः कृत्वा क्षणमात्रं क्षण उत्सवस्तत्सम्बन्धि वा लाजमोक्षणं कृतम् । अन्यरमणीभिरन्तरक्षिप्यमाणलाजमोक्षणमध्ये मौक्तिकमोक्षणमपि तद्वत्कार्यमभूदित्यर्थः । दर्शयमानया । णिचश्चेति (पा० १ । ३ । ७४) कर्त्रभिप्राये क्रियाफले आत्मनेपदम् । दृशेश्चेति वक्तव्यात् (पा० १ । ४ । ५३ । वा०) द्विकर्मकत्वात् सखीमिति कर्मत्वं । सखीरिति वा पाठः ॥ ७५ ॥

उदस्तसादर्शमुखाम्बुजास्मितप्रसूनवाणीमधुपाणिपद्मया । विलासवत्यस्य नृपस्य जज्ञिरे प्रशस्तवस्तूनि तदैव वीक्षितं ॥ ७६ ॥

लभदिति । तत् युवतीनां समूहो यौवतमेव पियासतोः वरयात्रो न्मुखस्य तस्य नृपस्य प्रशस्तवस्तूनि शुभसूचकमङ्गलद्रव्याणि जज्ञिरे । किम्भूतं । नखा एवादर्शा मुखान्येवाम्बुजानि स्मितान्येव प्रसूनानि पुष्पाणि वाच एव मधूनि पाणय एव पल्लवानि इतरेतरयोगद्वन्द्वः समाहारो वा ततस्तैः स्फुरत्कान्तयो नखादर्शादयो यस्य तत् । एवं-विधपुरनारीदर्शनाद्भैमीपाणिग्रहो नितरां मम शुभायैव भविष्यतीति तस्य बुद्धिरुदभूदिति भावः । अतिसौन्दर्य्यं तासां सूचितं । दध्यक्षतादर्शा-दिदर्शनं शुभावहमिति वसन्तराजग्रन्थे द्रष्टव्यम् । आरोप्यमाणस्य प्राधान्याज्जज्ञिरे इति बहुवचनम् ॥ ७६ ॥

करस्थताम्बूलजिघत्सुरेकिका विलोकनैकाग्रवि लोचनोत्पला । मुखे निचिक्षेप मुखद्विराजता रुपेव लीलाकमलं विलासिनी ॥ ७७ ॥

करेति । एकिका कापि विलासिनी पुरनारी करस्थं ताम्बूलं जिघत्सुर्भक्षयितुमिच्छुः सती करस्थलीलाकमलं मुखे निचिक्षेप । यतो नलविलोकनं विषये एकाग्रे तत्परे विलोचनोत्पले यस्याः सा । ताम्बूलभ्रान्त्या कमलं मुखे निक्षिप्तमित्यर्थः । कथेव मुखलक्षणे राजनि विद्यमाने कमलस्य द्वितीया राजता तया जातया रुट् क्रोधस्तयैव एतमेन मन्मुखेन सहैतत् स्पर्द्धत इति क्रोधादिव मुखे कमलं निक्षिप्तमित्यर्थः । नलसौन्दर्य्यातिशयदर्शनेन विमनस्कतोक्ता । जिघ त्सु । लुङ्सनोरित्यादिना (पा० २ । ४ । ३७) घसादेशे, घस्लृ अदन इत्येतस्माद्वा सनन्तादु । न लोकेति (पा० २ । ३ । ६९) षष्ठीनिषेधात्ताम्बूलं जिघत्सुरिति द्वितीयेति योगविभागात् समासः ॥ ७७ ॥

कयापि वीक्षाविमनस्कलोचने समाज एवोपपतेः समीयुषः । घनं सविघ्नं परिरम्भसाहसैस्तदा तदालोकनमन्वनूयत ॥ ७८ ॥

कयेति । कयापि स्वैरिण्या वीक्षया नलदर्शनेन विमनस्के त्यक्तविषयान्तरे लोचने यतस्तस्मिन् समाजे जनसङ्घे एव समीयुष समा-

विभूषणेति । अपरा अन्तःकरणे शरीरमध्ये अमान्ती सम्मद शरीरमानाधिकमानं बहिरवस्थितं नलदर्शनजं प्रमोद विभूषणानां स्रमनस्य स्रंसने तव मयहन गलितं तव मयहन गलितमिति प्रत्येकं कथने विषये ऽपि तैर्दत्तैः करप्रहारैरपि धूननैरपि तच्छरीरकम्पनैश्च कृत्वा प्रसभ बलात्कारेण स्वसखी पुपुरा सम्मापयतीव प्रावीविशदिव, विभिन्नत्वेन शब्द मशृण्वन् करेण ताड्यते पतितविस्मृतभूषणादिसंवेदनाय कम्प्यते चेति । तथान्यदपि कुसूलनामकमध्याद्व्रीह्यादि बहिरवसंस्थितं सत् बलात्कारेण करताडनैः करकृतैर्धूननैश्चान्तर्माप्यत इति च लौकिकी रीतिः । नलदर्शनानुरागादतिविमनस्का जाता इति भावः । पुरा सम्मापयतीति । पुरियुङ्यास्ले (पा० ३ । २ । १२२) इति भूत लट् ॥ ८० ॥

वतंसनीलाम्बुरुहेण किं दृशा विलोकमाने वि
मनीबभूवतुः । अपि श्रुती दर्शनसक्तचेतसां
न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

विभूषणस्रंसशब्देन किमिति न्यापित इत्यत आह । वतंसेति । नलदर्शने सक्त चेतो यासां मृगीदृशां श्रुती कर्णावपि वतंसनीलोत्पलेन कर्णभूषणनीलाम्बुरुहेणैव दृशा नेत्रेण नल विलोकमाने सत्यौ यस्माद्विमनीबभूवतुर्व्याकुले जाते तेन हेतुना ते श्रुती किं भूषणस्रंसन न शुश्रुवतु । चक्षुषी किल श्रवणानर्हत्वान्न शृणुतां, कर्णौ तु श्रोतुं योग्यावित्यपेरर्थः । ताः सुदृश्यो यथा नलविलोकनेन विमनस्का जाताः तथा तत्कर्णावपि विमनस्कौ जाताविति वा अपेरर्थः । विमनीबभूवतुः । अरुर्मनश्चक्षु (पा० ५ । ४ । ५१) इति च्विः । सलोपश्च ॥ ८१ ॥

काञ्चिन्निर्माय चक्षुःप्रसृतिचुलुकितं तास्वशङ्कन्त
कान्ता मौग्ध्यादाचूडमोघैर्निचुलितमिव तं भू
षणानां मणीनां । साहस्रीभिर्निमेषाकृतमति
भिरयं दृग्भिरालिङ्गितः किं ज्योतिष्टोमादिव
त्तनफलजगतीसार्वभौमभ्रमेण ॥ ८२ ॥

. मा जानीतेति । भो सख्यो यूयं विदर्भजां मुदो हर्षात् सकाशात् कीर्तिं श्रेयसीं श्रेष्ठतरामवितुपोमजानतीं मा जानीत किन्तु ह्पामिश्रया कीर्त्तिः प्रशस्यतरेति भैमी वेत्त्येवेति जानीत । यस्मात् सेयं भैमी मघवता प्रयोत्स्येत स्वमात्मानं द्वितीया शची भद्रं साधु नाधीकारत् न कारयामास । इन्द्रे वृते तत्पत्नीत्वाच्छचीप्रद्वयाच्यत्वं भवेत् न त्वभी वृतस्तस्माद्द्वितीया शची नाभवदिति युक्तमेव अनया कृतमित्यर्थः । इन्द्रे वृतेऽपि कीर्तिर्भविष्यतीत्याशङ्क्य नेत्याह । गुच्यायरितं कः कविः सर्गबन्धनादिरूपेण वर्णनात्मकं काव्यं प्रबन्धं रचयाञ्चकार न शचीवर्णनकारी नोऽस्माकमग्रेऽस्मभ्य च कथ्यतां यद्यस्ति, अपि त्वमि रूपणात्वास्त्येव । एतस्यास्तु भैम्या. पुनारसानां शृङ्गारादीनामेव रसाभांजनानां पुनी नदी तस्याः पात्रे स्थानभूतेऽपि च रसनदीप्रवाहरूपे श्रीलादिचरित्रे विषये कैः पराशरव्यासशुकादिभिः काव्यं न करिष्यतेऽपि तु तैरपि भारतादी तद्वर्णनकाव्यं करिष्यते किं पुनः श्रीहर्षादिकविभिरित्यर्थः । इन्द्रवरणेन यद्यपि स्वर्गसुखप्राप्तिस्तथापि तत्पत्नीत्वाच्छचीत्वेऽपि तस्याः कुत्रचित् केनाप्यवर्णितत्वादिन्द्राणीत्वयाधिकाकीर्तनस्य वरणे पुण्यश्लोकत्वात् सर्वैरपि वर्णनीयत्वातत्प्रसङ्गात् स्वस्यापि वर्णनीयत्वान्महती कीर्तिर्भविष्यति सा च स्वर्गसुद. सकाशाच्छ्रेयसीति विचार्येन्द्रपरित्यागद्वारा स्वर्गसुखमपि परित्यज्य भैम्या नलो वृत इति युक्तकारित्वादेतादृशी कापि विदुषी नास्तीति भावः । दिव इति पाठे स्वर्गसुखादित्यर्थः । करिष्यते ऋदन्तत्वादिट् ॥ ८६ ॥

वैदर्भीबहुजन्मनिर्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवायमवनीवासः प्रसूनायुधः ।
गीर्वाणालयसार्वभौमसुकृतप्राग्भारदुःप्रापया
येशं श्रीमजयानुभूय भजतामद्वैतमद्य त्विषां ॥ ८७ ॥

वैदर्भीति । हे भरत्य अवन्त्यां वासः स्थितिर्यस्य स प्रसूनायुध इव कामरूपोऽयं नलनामा युवा तरुणो देहश्रिया कायकान्त्या कृत्वा च-

श्यन्तीनामस्माकं नैषध्या स्वदते रोचते । किम्भूतया । वैदर्भ्या बहु जन्मभिरनेकजन्मसु वा निर्मितस्य कृच्छ्रचान्द्रायणादिजन्यस्य तपस. सुकृतस्य शिल्पेन फलभूतया । अतिसुन्दरमनु प्रीत्यास्माकं पश्यत इत्यर्थः । विशिष्टया देहश्रियोपलक्षितो वा । अशरीराऽपि भैमीपुण्य बाहुल्यवशात् सशरीरकामस्येति भाव इति वा । सोऽयं नल भीम-जया सह योगमद्य दाम्पत्यमस्यमनुभूय त्विषां कान्तिभराणामन्य-त्रात्यन्ताभावेनाद्वैत सामस्त्य भजतां आश्रयतु । उभयोरेकत्र मेलना दयमेव कान्तीनामाश्रयः कान्तिस्वरूपो वा भवतु नान्य इत्यर्थ । कि म्भूतया । गीर्वाणालये स्वर्गलोके सार्वभौम इन्द्रस्तस्य शुभप्राग्-भार. पुण्यराशिस्तेनापि दुष्प्रापया अलभ्यया । शतमखजन्येन पुण्येन स्वर्गचक्रवर्तित्वं येन लब्धं तेनापि दुष्प्रापत्वाद्भैम्या सौभाग्याति-शयो नलस्य चन्द्रापेक्षया सौभाग्यातिशयः पुण्यातिशयश्च गीर्वाणाल-येत्यादिना सूचित । अन्योऽप्यष्टाङ्गयोगमनुभूय बहुपुण्यदुष्प्रापयापि भीमात् हराज्जातया ईश्वरप्रसादलब्धया विद्ययाऽद्वैत परमात्मस्वरूपं भजति । नैषध्या । रुच्यर्थानामिति (पा० १।४।३३) सम्प्रदानत्व । प्राग्भारदु प्रापया । तृतीयेति योगविभागात् समास ॥ ८७ ॥

**स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभू**
**दभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्त**
**ये । आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडया**
**प्येतज्जम्पतिगाढरागरचनात् प्रागपि चेतोभुवः ॥८८॥**

स्त्रीति । स्त्रीपुंसयो सर्वयो॰ व्यतिषञ्जनं विशेषेणातितरां सम्ब-न्धन जनयतः कुर्वत. प्रजानां पत्युर्ब्रह्मण पुनरनयोर्जगन्निखिलद-र्णाऽप्यासीऽनयोर्नलभैम्योर्दाम्पत्यसम्पत्तये जायापतिभावस्योत्कर्षाय परिपाकिमः परिपाकेन निर्वृत्त स्वारस्येन परिणमतया कोऽभूदिति, सर्वस्त्रीपुंसयोजनाभ्यास॰ अन्यूनानुरूपतदुभयसङ्घट्टेन फलित किमि त्यर्थः । तथा चेतोभुवः कामस्यापि आसंसारं संसार मर्यादीकृत्य

सर्गादिमारभ्य प्रलयपर्य्यन्तं पुरन्ध्रिपूरुषयोः स्त्रीपुंसयोर्मिथः प्रेमा-न्योन्यमनुरागस्तस्यापञ्चमासज्ञन तदेव सदा मनोविनोदनरूपा क्रीडा लीला तथापि एतज्जन्मन्यारमयोर्नलभैमीरूपयोर्नाटसेन्द्रे वाप्यनेन यस्य मिथोऽनुरागस्य रचनाज्ञाननाद्धेतोः प्राक्कापि प्रकृष्टकाष्ठापन्नया जाता । अनुरागजननक्रीडाया प्रकर्षोऽत्रैव विश्रान्त । उत्तरश्चाप्यं य-मनुरागस्याजायादित्यर्थः । एतादृशौ स्वरूपौ समानानुरागौ चान्यौ स्त्रीपुंसौ कालत्रये न स्त इति भावः । व्यतिपज्जन । उपसर्गात् सुनो-तीति (पा० ८ । ३ । ६५) षत्व । पारिपाकिम । भावप्रत्ययान्तात्, पृथ्वादिभ्य (पा० ५ । १ । १२२) इति इमनिच् । जम्पती । जायापा ज्ञभाव. ॥ ८८ ॥

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे म
न्महे यद्दृग्भिः पुरुषोत्तमः परिचितः प्रागमश्च
मश्चत् कृतः । सा स्त्रीराट् पतयालुभिः क्षिति
सितैः स्यादस्य दृक्चामरैः सस्ने माघमघाभि
घातियमुनागङ्गावयोगे यथा ॥ ८९ ॥

ताभिरिति । महत्या अतिप्रसिद्धाया ज्येष्ठानक्षत्रयुक्ताया ज्येष्ठपू-र्णिमाया. मस्थन्निमि महे उत्सवे, मह-अतिप्रसिद्धे वा ज्यैष्ठीमहे यद्दृ-ग्भिर्याभिः मैत्री प्राग् जन्मान्तरेऽपवाल्यापेक्षया प्रथम सद्य परपञ्च-मज्जन प्राप्त मज्जस्यो मार्गे गच्छन् श्रीपुरुषोत्तम परिचितो बहुवार दृष्टः जनस्ताभिरेव स्त्रीभि पथि यात्रायाया यान् रथस्थ आगच्छन्नेष नला दृश्यते । यत्नाद्दृष्टपूर्व याभिरस्माद्दृशाभिरजित ताभिरेवाय द्रष्टु शक्यो न त्वन्याभिरित्यर्थं । अथ च याभि पुरुषोत्तमो दृष्टस्ताभिरेव नल-पाऽयनपोति द्रष्टु शक्यते न त्वन्याभिरित्यर्थः । ताभिरेव याभि शाप कटाक्षैर्दृश्यते याभिरेव सुकृत कृत । अन्याभिस्तु कौतुकेनापि वीक्षितु न शक्यते किं पुन सानुराग कटाक्षैरिति ।

ऐन्द्रे गुरुः शशी चैव प्राजापत्यं रविस्तथा ।

पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठीति कीर्त्तितेति ॥

पुरुषोत्तमतुल्योऽयं मन्महे जानीमह इति भावः । वाक्यार्थः कथं । उत्कलदेशे ज्यैष्ठपूर्णिमायां इन्द्रनीलगिरिनिवासिनः श्रीपुरुषोत्तमस्य महोत्सवः क्रियते । तत्र च श्रीकृष्णबलभद्रसुभद्राप्रतिमाधिष्ठिता विरचितसप्तभूमिका रथाः पृथक् निर्गच्छन्तीति तस्य दर्शनं भूयसे श्रेयसे भवतीति पौराणिकाः । यदाहुः ।

दोलारूढं तु गोविन्दं मञ्चस्थं मधुसूदनं ।
रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते इति ॥

यथा । यथा स्त्रिया अघाभिघातिनी पातकविनाशिनी यमुना गङ्गा च तयोरोघयोर्योगे सङ्गमे प्रयागाख्ये माघ मासे मकरस्थे रवौ माघे मासावच्छेदेन स्नानं कृतं मास्य नलस्य पतयालुभिरतिचञ्चलैः शितसितैः कृष्णधवलैर्द्वयधारैर्नेत्रैरेव चामरैर्नेत्रव्यापाररूपैश्चामरैस्त्रीराट् स्त्रीराजेश्च स्यात् भवेत् इति मन्महे । राजा हि कृष्णधवलैश्चामरैर्वीज्यते । प्रयागे माघस्नानजन्यसुकृतात् स्त्री राजत्वं प्राप्नोति तत्र स्नानेन ।

सितासिते तु ये स्नानं माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपीति ॥

वचनात् स्त्रीषु श्रेष्ठा सैव भवेदिति वचनादित्यर्थः । अयञ्च कटाक्षैर्यं पश्यति सा सर्वाभ्योऽप्यधिका सा च भैम्येवनान्या । भैम्या च प्रयागे मकरमाघस्नानफलं लब्धं यतो भैमीसदृशी कापि कुत्रापि नास्तीति भावः । ज्यैष्ठीति । ज्येष्ठानक्षत्रयुक्ता पौर्णमासीति । नक्षत्रेण युक्तः कालः (पा० ४ । २ । ३) इत्यणि वृद्धि । तद्युक्तमासाभिधायित्वेऽपि मासिन् पौर्णमासीत्यादिना (पा० ४ । २ । २१) ज्यैष्ठी इत्येव भवति । ज्यैष्ठीत्येव पाठे वृद्ध्यभावश्चिन्त्य । स्त्राणपूर्वस्य विधेरनित्यत्वाद्वृद्ध्यभावः कथञ्चित् समर्थनीय । स्त्रीराडिति सम्बन्धपरतया निर्धारणपरतया वा समास । स्त्री इति पृथग्वा पदं । अत एव सा स्त्री इत्यर्थः । अकर्मकधातुभिर्योगे, देशः कालो भावो गन्तव्योऽध्वेत्यादि ( पा० १ । ४ । ५१ । सि० कौ० कारकप्रकरणे माघस्य कालवाचित्वात् कर्मसंज्ञत्वे धातोः अकर्मकत्वात् कर्मणि विहितेन

तद्धा तस्याभिहितत्वान्माघः सन्न इति प्राप्ते माघमिति द्वितीया चिन्त्या। अत्रार्थे हरदत्तमिश्रैर्गतिबुद्ध्यादिसूत्रं (पा० १ । ४ । ५२) अकर्मकाणामिति कालभावाध्वदेशव्यतिरिक्तकर्मरहितानामित्यर्थो ग्राह्य इति सिद्धान्तितं। एवं कर्मणि च (पा० ३ । ४ । ६९) इत्यादावपि यथाकर्मकग्रहणं तत्र सर्वत्र द्रष्टव्यं। तेनात्र माघस्य कर्मत्वेऽपि सन्ने इति भावे लिट् सिद्धो भवति। यद्वा माघ्यं यस्यां क्रियायां यथा तथा स्नातायां मम सर्वपापक्षयपूर्वकं सर्वमनोरथसिद्धिर्भवतु इति सङ्कल्प्येत्यर्थः। कलुषं वृजिनैनोघेत्यमरः। यमुनागङ्गेति पूर्वनिपातोऽनियमः पूर्ववत् परिहरणीयः ॥ ८९ ॥

वैदर्भीविपुलानुरागकलनात् सौभाग्यमत्राखिल
क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः।
किञ्चास्माकनरेन्द्रभूसुभगतासम्भूतये लग्नकं दे
वेन्द्रावरणप्रसादितशचीविश्राणिताशीस्तुतिः ९०

वैदर्भीति। हे सख्यः तस्य नलस्य सम्बन्धीनि वृत्तान्यधीतानि यानि वृत्तानि पद्यानि तेषां क्रमैः नलविषये कविभिः कृतैः अस्मदादिभिश्च पठितैः काव्यैर्वृत्तैरतीतैः सकलद्वीपाधिपादिराजेन्द्रदेवेन्द्रादिदिक्पालपरित्यागरूपस्य चरित्रक्रमैः परिपाटीभिर्वा कल्या वैदर्भ्यां जेत्र्या विपुलस्य नलविषयानुरागस्य कलनात् ज्ञानात् अखिलक्षौणीचक्रशतक्रतावि(न्द्रे)ऽत्रास्मिन्नले क्षोणीमण्डलसकलवरप्रेमास्पदत्वादिलक्षणं सौभाग्यं निजगदे स्पष्टं कथितं। निश्चितमस्माभिरिति यावत्। अतिसुन्दरीयमिन्द्रादीन् परित्यज्य यस्मादेनमवृत तस्मादयमेव सुभगताभाग्य इति सर्वैर्निश्चितमित्यर्थः। जैमीकृताकल्पविषयविपुलानुरागस्वाङ्गीकरणाद्धेतोस्तस्या एव वृत्तस्य भूतस्य चतुःप्रीत्यादिकामदशाः स्फुट विरहव्यथानुरूपस्य वृत्तस्य चरित्रस्य क्रमैस्तेऽनिप्रसिद्धा ये वृत्ता वृत्तक्रमास्तैर्वा निगदितं। भैम्या अप्येतद्विषयमहानुरागजनितपूर्वविरहव्यथानिरेवायं सकलसौभाग्यनिधानमिति सर्वेषां पुरस्तात् कथि-

ऽर्थं प्रयोजनं यस्य तस्य भावस्तादर्थ्यं तेन नलप्रयोजनत्वेन नलवर-
णार्थं यदागमनं तत्र च पश्चात्तस्मिन्भुवा नलानुरक्तया कृत एव
इन्द्रादीनां त्यागः कृत इति वा । तर्हि इन्द्रादीनां लज्जा रोषोऽप्री
तिश्च कृतेति देवद्रोहादशुभाशङ्कां परिहरति । अनया भैम्या पत्ये
नलायास्मात् त्रिदशप्रसादस्य फलता वरत्वप्रत्य विधाय सुराणामिन्द्रा
दीनामपि व्रीडोपायप्रशमौ कथायाः कथाशाऽस्यापि अनवसरः . अव-
काशाभावः स्पष्टः कृतः । अस्माकमप्याप्यादिति सजातीयान् कृत्रिमप्र
प्रति लज्जा अस्माकं पश्यतां नलमवृणोदिति शेषः । नलं स्वीकृत्य
देवानपमानितवतीत्यपयशः । देवैश्च प्रसन्नीभूय वरत्वेन नलाय भैमी
दत्ता । एतदर्थमेव ते पृथिव्यामागता न त्वन्याभिलाषेणेति लोकप्रती-
तयैवा देवानामपि लज्जादिनाशेन कृतमिति सद्भावानुरागादनयोः शु-
भपरम्परैव भविता नाशुभशङ्कालेशोऽपीति भावः । पत्ये नयत्येति
पाठः समीचीनः । आत्मानं त्रिदशप्रसादफलतां नयत्या प्रापयन्त्ये-
त्यर्थः । आनुग्राम । आङ्मर्यादाभिविध्योः । अव्ययीभावे, अनश्चेति पा०
५।४।१०८) टच् । भुजा । भिदादित्वादङ् (पा० ३।३।१०४) ॥११॥

**इत्यालेपुरनुप्रतीकनिलयालङ्कारसारश्रिया ऽहंकु**
**र्वन्नु रामणीयकममूरालोक्य पौरस्त्रियः । सान**
**न्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं त**
**स्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दो**
**रिव ॥ १२ ॥**

इतीति । अमूः पौराणां स्त्रिय इति पूर्वोक्तप्रकारेण यथास्फूर्ति
यथाभिप्रायमन्योन्यमालेपुः संवादं चक्रुः । किम्भूताः । कुरुविन्दवत्
पद्मरागवत् सुन्दरौ रक्तौ करौ यस्य तस्य आनन्दनं वेगवत्त्वादिगुण-
योगादानन्दकारिणं स्यन्दनं रथमध्यास्य यतो गच्छतस्तस्य नलस्य अ-
नुप्रतीकं प्रत्यवयवं निलयं स्थानं येषां तेषामलङ्काराणां सारश्रिया श्रे-
ष्ठशोभया कृत्वा करसौन्दर्यादहमधिकमिति हस्तसौन्दर्यं वदति,

हस्तसौन्दर्य्यादिदमधिकमिति करसौन्दर्य्यमित्येवं प्रत्येकमप्युपमेयं कुर्वद्भिः एकाकारं कुर्वत् तनुरामणीयकं शरीरसौन्दर्य्यमालोक्य सानन्दा हर्षपराः । कस्येव । पद्मरागवद्रक्तकिरणस्य नन्दनवनमभिव्याप्य मर्य्यादीकृत्य चास्थित नन्दनसमीपे स्थितं । शतक्रतोरैरितदिक् प्राची दिक् तस्याः क्रीडाद्रिमुदयाचलमधिष्ठाय गच्छत उदितस्वरस्येन्दोरिव । ताराः यक्षाति विलोक्य यथा सानन्दा भवन्ति तथेत्यर्थः । चन्द्रोदये क्रीडा हर्षं । स्यन्दनमध्यास्य । अधिशीङ्स्थासां कर्म्म ( पा० १ । ४ । ४६ ) त्याधारस्य कर्म्मत्वं । यतः । इण् गतौ रूपं ॥ ९२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ।
यातः पञ्चदशः कृशेतररसस्वादाविहायं महाकाव्ये तस्य हि वैरसेनिचरिते सर्गो निसर्गोज्ज्वलः॥१५

श्रीहर्षमिति । अर्थः पूर्ववत् । कृशेतरेणातिभूयसा रसेन स्वादावमृतरूपे नलीयचरिते पञ्चाधिकानां दशानां पूरणः पञ्चदश । स्वादावित्ति भाषितपुंस्कं ॥ ९३ ॥

इति श्रीवेदरकरोपनामक श्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे पञ्चदशः सर्गः ॥ १५ ॥

## उत्तरनैषधचरिते ।

### षोडशः सर्गः ।

---

श्रीलक्ष्मीनृसिंहौ जयतः ।

**वृतः प्रतस्थे स रथैरथो रथी गृहान् विदर्भाधिपतेर्धराधिपः । पुरोधसं गौतममात्मवित्तमं द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥**

वृत इति । अथो रथारोहणानन्तरं रथैः कुन्ताः प्रविशन्तीतिवद्रथिभिर्वृतस्तथा रथी प्रशस्तरथोपेतः स धराधिपो नलः विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ । किम्भूतः । आत्मवित्तमं ब्रह्मज्ञानिश्रेष्ठं गौतमं गौतमगोत्रं एतन्नामानं वा पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा सम्पूज्य च विवाहे कार्यकारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि मङ्गलानि येन । रथैः सह वर्तमानैः पुरुषैर्वा प्रतस्थे । समवप्रविभ्यः स्थः (पा० १ । ३ । २२) इति तङ् ॥ १ ॥

**विभूषणांशुप्रतिबिम्बितैः स्फुटं भृशावदातैः स्वनिवासिभिर्गुणैः । मृगेक्षणानां समुपासि चामरैर्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥**

विभूषणेति । मृगेक्षणानां चामरधारिणीनां विधुप्रभैश्चन्द्रधवलैस्तथा विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपासि वीज्यते स्म स्फुटमुत्प्रेक्षे । विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः, तथा भृशावदातैरत्युज्ज्वलैः, स्वस्मिन्निवसनशीलैः, श्रुतशीलसौन्दर्यादिभिर्गुणैरिव प्रत्यक्षीभूतैर्नलगुणैरिव चामरैरुपासी

त्यर्थः । चामराण्यपि विभूषणांशुप्रतिबिम्बितानि । स्फुटं निश्चितं । इं दुर्भिर्भाग्मरैरेव शुभ्रैरिति वा ॥ २ ॥

**पराध्यवेशाभरणैः पुरःसरैः समं जिहाने निषधावनीभुजि । दधे सुनासीरपदाभिधेयतां स रूढिमात्राद्यदि वृत्रशात्रवः ॥ ३ ॥**

पराध्येति । निषधावनीभुजि नले पराध्यानि श्रेष्ठानि वेशाभरणानि रूपालङ्कारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति वृत्रशात्रव इन्द्रः सुनासीर इति पदस्याभिधेयता वाच्यत्वं यदि दधार तर्हि रूढिमात्रं दधार न तु शोभनं नासीरं सेनामुखं यस्येति यौगिकतया । शुद्धवृत्त्या मुख्यया वृत्त्या नले एव दृश्यते न त्विन्द्रे । त्रिविधा शब्दाः केवलयौगिकाः, केवलरूढाः योगरूढिकाश्च । तत्र पाचकादयो यौगिकाः । तैलपायिकादयो रौढिकाः । आतपत्रादयो यौगरौढिकाः । तदेवं तादृशाग्रेसराभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यस्ति तर्हि रूढ्यैवास्तु व्युत्पत्त्या तु नल एवोचितमित्यर्थः । इन्द्रादप्यधिको नल । तत्पुरःसराश्चेन्द्रपुरःसरदेवेभ्योऽप्यधिका इति भावः । परार्ध्ये भवानि परार्ध्यानि परावराधमोत्तमपूर्वाच्चेति (पा० ४।३।५) यत् । शत्रुरेव शात्रवः प्रज्ञादित्वात् स्वार्थे ऽण् । वृद्ध श्रवाः सुनासीर इत्यमरः ३

**नलस्य नासीरसृजां महीभुजां किरीटरत्नैः पुनरुक्तदीपया । अदीपि रात्री वरयात्रया तया च मूर्जामिश्रतमिस्त्रसम्पदा ॥ ४ ॥**

नलस्येति । तया भैमीवरस्य नलस्य यात्रया रात्री अदीपि शुशुभे । किंभूतया । नलस्य नासीरसृजां सेनायामग्रेसरीभूतानां महीभुजां राज्ञां किरीटरत्नैः स्वैरेवान्धकारनिराकरणात् पुनरुक्ता व्यर्थीकृता दीपा यस्यां तया । तथा चमूरजोभिर्मिश्रा यहुता तमिस्रसम्पत्तिमिरसमृद्धिर्यया । महान्धकारेऽपि रत्नदीपप्रकाशैर्भूयिष्ठप्रकाशत्वाददीपीत्यर्थः । महान्धकारे एव हि दीप्यः शोभत इत्यर्थः । राज्ञां सेनाग्रसरवर्तित्वेन नलस्य चक्रवर्तित्वं सूचितं । अदीपि । भावे लः ॥ ४ ॥

विदर्भराजः क्षितिपाननुद्रुतं शुभक्षणासन्नतरत्वसत्वरः । दिदेश दूतान् पथि यान् यथोत्तरं चमूममुष्योपचिकाय तद्व्रजः ॥ ५ ॥

विदर्भेति । विदर्भराजो यान् क्षितिपानेव दूतान् अनुद्रुतं वारंवारं नलाकारणार्थं दिदेश प्राहिणोत् । तेषां व्रजः पूर्वं पूर्वं प्रेषितस्तदनन्तरज्ञान्यः । एवमुत्तरोत्तरमतिक्रम्य पथि अमुष्य नलस्य चमूमुपचिकाय भूयसीमकृत । किम्भूतः । शुभस्य क्षणस्य लग्नस्य समयस्यासन्नतरत्वेन निकटत्वेन सत्वरो वेगवान् । भूयांसो नृपाः प्रेषिताः । दूता इत्यनेनादरातिशयः सूचितः ॥ ५ ॥

हरिद्विपद्वीपिभिरंशुकैर्न्नभो नभस्वदाध्मापनपीनितैरभूत् । तरस्वदश्वध्वजिनीध्वजैर्वनं विचित्रचीनाम्बरवल्लिवेल्लितम् ॥ ६ ॥

हरीति । तरस्वता वेगवता अश्वाना ध्वजिनी सेना । तरस्वन्तोऽश्वा यस्याः सा वा, तस्याः ध्वजभूतैरंशुकैर्वस्त्रनिर्मितैस्तथा नभस्वता वायुना कृत यदाध्मापनं परिपूरणं तेन पीनितैः पुष्टीकृतैः मत्तीवसिंहादितुल्यैर्हरिभिः सिंहैर्द्विपैर्हस्तिभिर्द्वीपिभिर्व्याघ्रैः कृत्वा तरसैवाधा उपरितनं नभश्चाकाशं वनं विपिनतुल्यमभूत् अजनि । किम्भूतं वनं । विचित्राणि नानावर्णानि चीनदेशोद्भवानि सूक्ष्माणि ध्वजसम्बन्धीनि चाम्बराणि वस्त्राणि तान्येव वल्ल्यो लतास्ताभिर्वेल्लितं वेष्टितं । वने सिंहादयो वृक्षा लताश्च सन्ति । ध्वजपदेन वृक्षा अपि लक्ष्यन्ते । तरस्विनोऽश्वा यस्य गणस्य तरस्वदश्वा या या ध्वजिनी प्रकृतत्वात्तस्यैव सा ध्वजिनी नभसि नभस्वदाध्मापनपीनितैरंशुकैर्ध्वजैः पताकाभिः कृत्वा वनमभूत । किम्भूता । ध्वजिनी हरिभिरश्वैर्हस्तिभिर्द्वीपिभिर्वा द्वीपान्तरवासिभिः सेनाचरीभूतैराजभिरुपलक्षिता । वनमपि सिंहादिभिरुपलक्षितं । विचित्रेति पूर्ववदिति वा । वनपक्षे वनो मृगविशेषः । ऊर्ध्वं विस्तृतत्वादम्बरगामिन्या वल्ल्यः ॥ ६ ॥

स्रुवाऽऽह्वयन्तीं निजतोरणस्रजा गजालिकर्णानि
लखेलया ततः । ददर्श दूतीमिव भीमजन्मनः
स तत्प्रतीहारमहीं महीपतिः ॥ ७ ॥

स्रुवेति । ततः प्रस्थानानन्तरं स महीपतिर्नलस्तस्य भीमस्य प्रतीहारभूमिं भीमजन्मनो भैम्या दूतीमिव ददर्श । किम्भूतां । द्वारे निबद्धा गजास्तेषामालिः पङ्क्तिस्तस्याः कर्णानिलेन कृत्वा खेलति चलतीति खेला तया निजया स्वीयया पुष्पदलरचितया तोरणस्रजा तल्लक्षणया स्रुवा अनुरागातिशयोत्सुकतया आह्वयन्तीं शीघ्रमागच्छेति भ्रूसंज्ञया आकारयन्तीं । दूत्यपि चलन्त्या भ्रुवाह्वयति । राजगृहद्वारदर्शनेनातित्वरोऽभूदिति भावः । स्त्री द्वार्द्वारं प्रतीहार इत्यमरः । पर्यायम् । प्रतीहार । उपसर्गस्य घञीति (पा० ६।३।१२२) दीर्घः ॥७॥

श्लथैर्दलैस्तम्भयुगस्य रम्भयोश्चकास्ति चण्डात
कमण्डिता स्म सा । प्रिया सखीवास्य मनस्थि
तिस्फुरत्सुखागतप्रश्नितत्तूर्यनिस्वना ॥ ८ ॥

श्लथैरिति । सा द्वारभूमिः रम्भयोः कदल्योर्द्वारमण्डनार्थं प्रकृतार्थं च रोपितस्तम्भयुगस्य संदेशगाद्वायुवशाद्वा श्लथैः शिथिलैर्दलैः पत्रैः कृत्वा लम्बमानचण्डातकमण्डनेन वस्त्रेण मण्डिता भूषितास्य नलस्य प्रियाया भैम्याः सखीव चकास्ति स्म । किम्भूता सा । अनुरागवशान्मनसि अन्तःकरणे या नलस्य स्थितिस्तया स्फुरन् सदा चित्तनिवासेनोल्लसन् य सुखेनागतस्यागमनस्य सम्बन्धी प्रश्न सुखेनागत इत्येवंरूपः प्रश्नः स कृतः प्रश्नितः सुखागतप्रश्नतां प्रापितस्तूर्यनिस्वनो यया सा । चिरप्रार्थिते हि नायके समागच्छति सति प्रेयस्यां अथवा तूर्णं स्थितायां चण्डातकमण्डिता तन्मयी सुखागतप्रश्नं करोतीति स्थितिः । अत्र दलानि चण्डातकस्थाने । तूर्यनिस्वनाश्च सुखागतप्रश्नस्थाने । कदलीस्तम्भौ तु ऊरुस्थानीयौ । अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकमित्यमरः । नृपाय मुक्तं पुरः पपात प्रणम्य पद्मेणभागद्वय । कदलीमदृशा यत्तं नसंबन्धिरन्तःपरिधीयमान चण्डातक । प्रश्नितेति । तत्करोतीति ण्य-

त्याक्लिष्टा न तारकादि ॥ ८ ॥

विनेतृभर्तृद्वयभीतिदान्तयोः परस्परस्मादनवाप्तशंसः । अजायत द्वारि नरेन्द्रसेनयोः समागमः स्फारमुखारवोद्गमः ॥ ९ ॥

विनेत्रेति । नरेन्द्रौ भीमनलौ तयोः सेनयोः समागमो राजगृहद्वारि एवम्भूतोऽजायत जातः । किम्भूतयोः । विनेतृशासकं नलभीमलक्षणं भर्तृद्वयं तस्माद्भीतिस्तया दान्तया शान्तयोः । ताभ्यां नियमितत्वाद्युद्धकलहादिरहितयोः । अत एव परस्परस्मादन्यान्यस्मादनवाप्तमलं च युद्धनिमित्तं येन स तथा । सैन्यद्वयमेलने हि कलहो भवति परं सौहार्दनियमितत्वादनयोर्नाभूदित्यर्थः । तथा स्फारोऽतिमहान् मुखारवस्यास्फुटवर्णविशेषस्य मुखध्वनेरुद्गम उदयो यत्र ॥ ९ ॥

निर्दिश्य बन्धूनिति इत्युदीरितं दमेन गत्वार्द्धपथे कृतार्हणं । विनीतमाद्वारत एव पद्गतं गतं तमैक्षिष्ट मुदा विदर्भराट् ॥ १० ॥

निर्दिश्येति । विदर्भराट् भीमः मुदा उचितो जामातेति हर्षेण तमैक्षिष्ट नलमद्राक्षीत् । किम्भूतं । भीमेनैव सम्मुखं गत्वा बन्धून् सुहृदो ज्ञातीन् वा स्वमातापितृसम्बन्धिनो निर्दिश्याज्ञाप्य प्रस्थाप्य इत्यनेन यथा आगम्यतामित्यादिप्रकारैरुदीरितमुक्तं । बन्धुमुखेन ज्ञापितमार्गं तथा दमाख्येन भैमीभ्रात्रा ऽर्द्धपथे कृताऽर्हणा ऽर्घ्यादिपूजा यस्मै । तथाऽनुकूलवेशत्वाद्विनीतं । अत एव द्वारत आद्वारसीमामेवावधीकृत्य रथादुत्तीर्य पद्भ्यां पादचारित्वेन गतं प्राप्तं । दमनैव बन्धून् पुरः प्रस्थाप्य इत इत्युदीरितमिति वा । आद्वारतः पद्भ्यां पद्गत इति, पादस्य पदाऽऽज्यातिगोपहतेष्विति ( पा० ६ । ३ । ५२) पादस्य पत् ॥ १० ॥

अथायमुत्थाय विसार्य्य दोर्युगं मुदा प्रतीयेष तमात्मजन्मनः । सुरस्रवन्त्या इव पात्रमागतं

धृताभितोवीचिगतिः सरित्पतिः ॥ ११ ॥

अथेति । अथ नलदर्शनानन्तर अथ भीम उत्थाय प्रत्युत्थानं कृत्वा आत्मजन्मनो भैम्याः पात्र योग्य आगत त नल दोर्युग विसार्य्य प्रसार्य मुदा प्रतीपेष आलिलिङ्ग । क कमिव । सरित्पतिः सुरस्रवन्त्या भागीरथ्या आगत पात्र प्रवाहमिव नौकादिकं वा । किम्भूतः । धृतेऽभित. पार्श्वद्वये वीचीनां तरङ्गपरम्परेयेन । वीचिततिरित्यपि पाठ ॥११॥

यथावदस्मै पुरुषोत्तमाय तां स साधुलक्ष्मीं ब हुवाहिनीश्वरः। शिवामथ स्वस्य शिवाय नन्दि नीं ददे पतिः सर्वविदे महीभृताम् ॥ १२ ॥

यथावदिति । अथालिङ्गनानन्तर महीभृतां राज्ञां पतिर्बहुवाहिन्या ईश्वर स्वामी स भीम सर्वविदे सर्वविद्याविज्ञाय शिवाय शुभस्वरूपाय कीर्तनायात एव पुरुषोत्तमाय पुरुषश्रेष्ठायास्मै नलाय साधुलक्ष्मीं समीचीनकायकान्ति अत एव शिवां शुभरूपां तां भैमीं स्वस्य नन्दिनीं कन्यां यथावद्दीक्षाविधिना ददे । मधुपर्कात पूर्वं कन्यादानमित्याचार । मधुपर्कादिविधिपूर्वं ददे । दातुमारब्धवानिति वा । अथ बहुनदीश्वर समुद्र पुरुषोत्तमाय तां कन्यां लक्ष्मीं यथावद्देतत् साधु तथा पर्वतराजो हिमालय महादेवाय श्रीमहादेवाय स्वपुत्रीं पार्वतीं ददे तदपि साधु । यद्वा मैनाकादिप्रभृतीनां पालयिता समुद्र शिवरूपाय विष्णवे शुभरूपां लक्ष्मीं ददे तत्साधु । अथ वा बहुनदीयुक्तो हिमालय पुरुषोत्तमरूपाय श्रीहराय पार्वतीरूपां लक्ष्मीं लक्ष्मीरूपां पार्वतीमिति वा । नलाय पुरुषोत्तमायेव शिवायेव भैमीं लक्ष्मीमिव शिवामिव भीम समुद्र इव हिमवानिवेत्युपमालङ्कारो व्यज्यते । साधुलक्ष्मीमित्यत्र समासान्तविधेरनित्यत्वात् कबभाव ॥ १२ ॥

असिस्वदद्यन्मधुपर्कमर्पितं स तद्व्यधात्तर्कमुद र्कदर्शिना । यदेष पास्यन्मधु भीमजाधरं मिषे ण पुण्याहविधिं तदा कृतं ॥ १३ ॥

इदानीं विवाहविधिमाह – ‘अभिस्वददि’ति । स नलः आप्तैः भीमेन दत्तं सहमिश्रितं कांस्यपात्रस्थं दधिमधुघृतरूपं मधुपर्कं यदसिस्वदत् आस्वादितवान् तत् स्वादस्य उद्रेकदर्शिना विवाहानन्तरफलपरिपाकभूताधरचुम्बनादिविचारिणा लोकानां इति तर्कं ऊहं व्यधात चक्रे । इति किं । यद्यस्मादेव नलो भीमजाधररूपं मधु पास्यन् पास्यति तस्मात् तदा मधुपर्कदानावसरे मधुपर्कास्वादनमिषेण पुण्याहविधिं शुभलग्नादियुक्तपुण्यदिनकृत्यं मङ्गलपूर्वमुपक्रममकृत । अन्योऽपि-शुभकार्यं करिष्यन् शुभविवाहदिनादौ तदाद्यमारम्भं करोति । तथा तेनापि भैम्यधरपाने मुहूर्तं चक्रे इति जनैः तर्कितमित्यर्थः । अधरस्यापि स्वादुत्वमुक्तम् । अभिस्वददिति । चौरादिकत्वात् स्वदेर्लङ् । ये तु णिजन्तमपि पोपदेशं मन्यन्ते ते षत्वाभावश्चिन्त्य । अपिस्वददिति पाठाभावादर्थस्य दुर्योज्यत्वाच्च चौरादिक एव । पास्यन् । लृटः सद्वेति (पा० ३।३।१४) शतृ । पुण्यञ्च तदहश्चेति राजाहःसखिभ्यष्टच् (पा० ५।४।९१) टचि पुण्यसुदिनाभ्यामह्नः क्लीबतेति पुण्याहं तत्र विधिरिति विग्रहः ॥ १३ ॥

**वरस्य पाणिः परघातकौतुकी वधूकरः पङ्कजकान्तितस्करः । सुराज्ञि तौ तत्र विदर्भमण्डले ततो निबद्धौ किमु कर्कशैः कुशैः ॥ १४ ॥**

वरस्येति । वरस्य पाणिः परघातकौतुकी शत्रुमारणकुतूहली, वधूकरः पङ्कजकान्तितस्करः कमलश्रीचौरो यस्मात्तस्मात् कारणात् किमु सुराज्ञि राजन्वति तत्र तस्मिन् विदर्भमण्डले विदर्भराज्ये तौ वरवधूकरौ कर्कशैः कुशैः निबद्धौ बद्धौ उभयहस्तयोः कुशबन्धनपूर्वकं पाणिग्रहणमभूत् । तत्र कुशबन्धने कारणोत्प्रेक्षा क्रियते । एको हिंस्रोऽपरश्चौर इति सापराधत्वात् किमु बद्धावित्यर्थः । अन्यत्रापि सौराज्ये अन्यघातकतस्करौ कठिनतरदारकैर्बध्यते । पाणिग्रहणं जातमिति भावः । कुशैः पाणिबन्धनमाचारप्राप्तम् । यथाक्रमं करयोः शौर्यं मार्दवञ्च सूचितम् । सुराज्ञि । राजाहःसखिभ्यष्टच् (पा ५।४।९१) इत्यस्य नियततत्पुरुषविषयत्वादत्र बहुव्रीहिविषयत्वाट्टच् प्राप्त्यभावः ॥ १४ ॥

विदर्भजायाः करवारिजेन यन्नलस्य पाणेरुपरि स्थितं किल । विशङ्क्य सूत्रं पुरुषायितस्य तद्भविष्यतोऽस्मायि तदा तदालिभिः ॥१५॥

विदर्भेति । विदर्भजाया करवारिजेन यत् तदा पाणिग्रहणसमये नलस्य पाणेरुपरि स्थितं तदुपरिस्थानं किल निश्चितं विपरीतरतं भविष्यत. पुरुषायितस्य पुरुषवदाचरितस्य विपरीतरतस्य इति यावत् सूत्रं सूचनाकारि विशङ्क्य वितर्केण सम्भाव्य कौतुकविलोकनार्थं निकटस्थिताभिस्तदालिभिरस्मायि ईषद्धसितं । विपरीतरते हि स्त्रीपाणिरुपरि भवति विवाहे वधूकरो वरकरस्योपरि भवति । सूत्रञ्च सूचनाग्रन्थ इति विश्वः ॥ १५ ॥

सखा यदस्मै किल भीमसंज्ञया स यक्षसख्याधिगतं ददौ भवः । ददे तदेव श्वशुरः सुरोचितं नलाय चिन्तामणिदाम कामदं ॥ १६ ॥

ददामीमित आरभ्य न तन यद्दीदिति यावद्विवाहोचितं यौतक प्रतिपादयति । सखेति । भीमसंज्ञया भीम इति नाममात्रेण सखा स्वस्यापि भीमनामत्वात् किलोत्प्रेक्षायां स भवो महेश्वरः अस्मै भीमाय यक्षेण कुबेरेण सह यस्तस्य मैत्री तेनाधिगतं प्राप्तं यच्चिन्तामणीनां दाम मालां ददौ, एष श्वशुरो भीमः तत्कामदं सकलाभिलषितदायि सुराणामुचितं चिन्तामणिदाम नलाय ददे । उत्प्रेक्षायामेव तात्पर्यं । सुरोचितमिति पाठे निम्युचितम् ॥ १६ ॥

यहोदुरापस्य वराय वस्तुनश्चितस्य दातुं प्रति विम्यफैतवान् । वनीतरामन्तरवास्थितं दधद्य दर्पमभ्यर्थितदैयमर्थिने ॥ १७ ॥

तदेव वर्णयति । यहोरिति । यश्चिन्तामणिदाम वनीतरां । किं भूतं । यहोरपरिमितस्य तस्य तथा दुरापस्य दुर्लभस्य दिव्यस्य वराय जामात्रे दातुं चितस्य पुरः पुञ्जीकृतस्य रत्नादेर्धनवस्तुनः पदार्थ-

समूहस्य स्वस्मिन् प्रतिबिम्बस्य कैतवाद् व्याजात् अन्तरवस्थितं स्वस्य मध्ये स्थितमर्थिने याचकायाभ्यर्थितं प्रार्थितं सत् तदानीमेव दातुमर्हं अर्थं वस्तुजातं दधत् धारयदिव । ददाविति पूर्वेण सम्बन्धः । यदा यद्यो याचकैर्याचिष्यते तदा तद्वस्तु तस्मै दातव्यमिति बुद्ध्यास्य नाम सार्थकीकर्तुं वस्तुजातं पुरः स्थापितमेवेत्यर्थः । वह्वीरिति भावितपुंस्कः ॥ १७ ॥

**असिं भवान्याः कलकासरासुरं वराय भीमः स्म ददाति भासुरम् । ददे हि तस्मै धवनामधारिणे स शम्भुसम्भोगनिमग्नयाऽनया ॥ १८ ॥**

असिमिति । भीमः कलतः कासराख्यो महिषाख्यो ऽसुरो येन तं भासुरं देदीप्यमानं भवान्या दुर्गाया असिं खड्गं वराय ददाति स्म । तस्याः खड्गस्तेन कथं प्राप्त इत्यत आह । हि यस्मात् स्फुटं वा शम्भुना सह सम्भोगस्तत्र निमग्नया सुरतरसासक्तया अनया दुर्गया वैरिहननाभावात् स्वस्य प्रयोजनाभावात् सुरतासक्तत्वे खड्गधारणस्य रसभञ्जकत्वाच्च धवनामधारिणे भीम इति शिवनामधारकाय शम्भुसेवकाय तस्मै भीमाय ददे । शम्भौ सम्यगविच्छेदेन निरन्तरं भोगाय निमग्नया दक्षिणार्द्धेन प्रविष्टया वा तद्वस्तु तया प्रसादो दत्तः । लुलायो महिषो वाहद्विषत्कासरसैरिभा इत्यमरः । भासुरं । भञ्जभासेति ( पा० ३ । २ । १६१ ) घुरच् ॥ १८ ॥

**अधारि यः प्राङ्महिषासुरद्विषा कृपाणमस्मै तमदत्त कुकुदः । अहायि तस्या हि धवार्द्धमज्जिना स दक्षिणार्द्धेन पराङ्गदारणः ॥ १९ ॥**

अधारीति । महिषासुरद्विषा दुर्गया प्राक् यः खड्गो ऽधारि, कुकुदः कन्यादाता भीमः तं कृपाणं खड्गं सत्कारपूर्वं सालङ्कारमस्मा अदत्त । कथं तेन लब्ध इत्याशङ्क्याह । हि यस्मादर्धनारीश्वरत्वाद् धवस्य भर्त्तुः शिवस्य अर्द्धमज्जिना अर्द्धप्रविष्टेन तस्याः पार्वत्याः दक्षिणार्द्धेन दक्षिणशरीरभागेन पराङ्गदारणः स खड्गः अहायि त्यक्तः ।

सखड्गेन घर्षणाद्धि विधृता यदीयदक्षिणार्द्धेन तद्विदारिष्यते इति भिया त्यक्तः । अदायीति पाठेऽनर्थो न । तस्या दक्षिणार्द्धेन तस्मै यस्माददायीत्यर्थः । अयं पाठः सधीयान् । सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद इत्यमरः ॥ १९ ॥

उवाह यः सान्द्रतराङ्ककाननः स्वशौर्य्यसूर्य्योदयपर्वतव्रतम् । सनिर्भरः शाणनधौतधारया स मूढसन्ध्यः क्षतशत्रुजासृजा ॥ २० ॥

उवाहेति । यः स्वस्य भीमस्य खड्गस्यैव या शौर्य्यं प्रतापरूपो यः सूर्य्यस्तस्योदयस्तत्सम्बन्धी पर्वत उदयाचलस्तस्य व्रतं नियमं सदा सूर्य्योदयकारित्वलक्षणं उवाह धारयामास । किम्भूतः । सान्द्रतराणि अल्पानि सूक्ष्माणि अङ्ककानि अङ्कानि मुद्रामुद्गरपत्रीवल्लीरूपाणि तेषां काननं जीवनं यत्र दधार इति यावत् । सान्द्रतराणां वा पूर्वोक्तानामेवाङ्कानां काननं समूहो यत्र । उदयाचलपक्षे सान्द्रतराणि अङ्केषु ऊर्द्ध्वाधोभागेषु वनानि यस्य । तथा शाणनेन लोहकारचक्रघर्षणेन धौतया उज्ज्वलीकरणेन दत्तपानीयधारया कृत्वा सनिर्भरः सप्रवाहः । धारैव निर्झरीभूतेत्यर्थः । उदयाचलोऽपि सनिर्झरो भवति । तथा क्षतेभ्यः खण्डितेभ्यः शत्रुभ्यो जातेनासृजा रक्तेन कृत्वा सम्यक् ऊढा धृता प्रातःसन्ध्या येन । प्रातःसन्ध्यास्थाने रक्तमेव येन धृतमित्यर्थः । सम्यग् धृता सन्ध्यान् मरूकपः फलकसन्धिर्येन असिदृढसन्धिरित्यर्थ इति वा । यद्वा क्षतशत्रुजासृजा समूढः प्राप्तः सन्धिर्यस्य त्सरुफलकसन्धिपर्यन्तं शत्रुशरीरे निमग्न इत्यर्थः । उदयाचलोऽप्यूढप्रातःसन्ध्य उदयाचलतुल्योऽभूदित्यर्थः । तमधत्तेति पूर्वेण सम्बन्धः । अङ्ककेतिपक्षे, अल्पे (पा० ५ । ३ । ८५) इति कः ॥ २० ॥

यमेन जिह्वा प्रहितेव या निजा तमात्मजां या पितुमर्थिना भृशम् । स तां ददेऽस्मै परिघारघातिनीं करग्रहार्हामसिपुत्रिकामपि ॥ २१ ॥

यमेनेति । स भीमः तामसिपुत्रिकां छुरिकामपि अस्मै ददे न के-

यत खड्ग इत्यपरेऽर्थः । न केवलं पुत्रीमपि तु छुरिकामपि । ता का । भृशमर्पिता भैम्यनुरागिणा यमेन त भीम जैमीं महां ददीति आत्मजा याचितुं दूतीप्रेषणावसरे निजा स्वीया प्रहिता प्रेपिता या जिह्वेव । नियत प्राणहारित्वाद्यमजिह्वातुल्या अतितीक्ष्णा शौर्येण तुष्टो यमो यां भीमाय दत्तवान् । किम्भूता । परिवारशालिनीं चर्मकोशेन शोभमाना । अथ सखीलक्षणपरिजनशोभिनीं । करग्रहार्हां हस्तग्रहणयोग्या साधुमुष्टिदेशा । पूर्वं यद्यपि भैमी दत्ता तथापि परिवारसहित्वेनेदानीं दत्तेत्यर्थः । छुरिका सखीत्व यौतकत्वेन ददाविति भावः । छुरिका चासिपुत्रिकेत्यमरः । याचिर्द्विकर्मा ॥ २१ ॥

यदङ्गभूमौ वभतु स्वयेोपितामुरोजपत्रावलिनेत्रकज्जले । रणस्थलस्थण्डिलशायितावते गृहीत दीक्षैरिव दक्षिणीकृते ॥ २२ ॥

यदिति । यस्या शस्त्र्या अङ्गभूमौ पट्टिकाया ऊर्ध्वाधोदेशौ स्वयोपिता स्वस्य स्त्रीणा उराजपत्रावलि कस्तूरिकालिखितस्तनपत्रवल्ली नेत्रकज्जलाञ्जु यत इव वभतु शुशुभाते । किम्भूते । रणस्थले या स्थण्डिलशायिता व्रतवशाद्धो वेदिकाया शेते स स्थण्डिलशायी तद्भाव एव व्रतं तत्र विषये गृहीता दीक्षा यै स्वीकृतनियमविशेषण भूपतिरी शत्रुभि दक्षिणीकृते व्रतान्तदक्षिणात्वेन शस्त्रे दत्ते । दीक्षापदेशिन हि स्त्रीणा स्वमलङ्काराद्रि दक्षिणात्वेन दीयते छुरिकयैव स्वकृतमारणद्वारा शत्रुणा रणस्थलस्थण्डिलशायिताव्रतमुपदिष्टं तस्मात्स्यैते दक्षिणात्वेन दत्ते पत्रावलीनेत्रकज्जले इव । लाञ्छनद्वयस्य यसौ स्तनपत्रावलीनेत्रकज्जलत्वेनोत्प्रेक्षिते इव छुरिका निखिलपरविदारणा वैरिनाभ्यन्द वैधव्यात्यक्तकज्जलपत्रावल्य इति । स्थण्डिलशायीति । स्थण्डिलाच्छयितरि व्रते ( पा० ४ । २ । १५ ) इत्यण् ॥ २२ ॥

पुरैव तस्मिन् समदायि तत्सुताभिकेन यः सौहृदनाटिनाग्निना । नलाय विश्राणयति स्म तं रथं नृपः सुलङ्घ्याद्रिसमुद्रकापथं ॥ २३ ॥

पुरेति । तस्य भीमस्य सुताया अभिकेनानुरागिणा यथा मैत्री दातव्येति बुद्ध्याय न प्रेषितः किन्तु शत्रुभराक्रान्तभूभारनिराकरणद्वारा त्वमस्माकं सुहृदिति प्रेषित इति सौहार्दस्नेह नाटयति, एवंशीलेनाग्निना पुरैव दूतीप्रेषणावसर एव यो रथ तस्मिन् भीमे समदेशि प्रेषितो दत्त, नृपो नलाय त रथ विश्राणयति स्म ददौ । किम्भूत । सुलंघ्या अनायासेनातिक्रमणीया अद्रय अत्युच्चपर्वताः समुद्रा कापथा विषमनिम्नगर्त्तरूपा मार्गाश्च यस्य । सर्वत्र सञ्चरणसमर्थे । कदध्वा कापथः समा इत्यमर । कापथ इति । कापथ्यक्षयोरिति (पा० ६ । ३ । १०४) कादेश । ऋगादिना (पा० ५ । ४ । ७४) समासान्तो ऽप् ॥ २३ ॥

**प्रसूतवत्ता नलकूवरान्वयप्रकाशितास्यापि महारथस्य यत् । कुवेरदृष्टान्तवलेन पुष्पकप्रकृष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥**

रथमेव वर्णयति । प्रसूतेति । अस्यापि भीमेन नलाय दत्तस्यापि महतो जयादिगुणयुक्तस्य रथस्य प्रकृष्टा सूतवत्ता सूतो विद्यते यस्य स सूतवान् तद्भाव सूतवत्ता सारथिमत्ता, प्रकृष्टश्चासौ सूतश्च तद्वत्ता वा, यस्मान्नलस्य कूवरेण युगन्धरेण सहयोऽन्वय. सम्बन्ध, नलेन सह यो य कूवरस्यान्वय, तेन प्रकाशिता प्रकटीकृता शोभिता च, ततस्तस्मादेतस्य रथस्य पुष्पकपरकामगामि धनदविमानवत् प्रकृष्टता उत्कृष्टगुणयुक्तता पुष्पकात् सकाशाद्वा जयादिगुणैरधिकत्वात कुबेरस्य दृष्टान्त उदाहरण तस्य बलेन तत्सामर्थ्येनानुमीयते अनुमानजन्यज्ञानस्य विषयीक्रियते । न केवलं कुबेरस्य महारथस्य किन्त्वस्यापीति समुच्चयेन व्याप्तिदर्शनपुरःसर उपनयनिगमे सूचयत्यपिशब्द. । कुबेरस्यापि महारथस्यायुतमहत्यायुधसंयुक्तपुष्पकविमानेन कृत्वा प्रकृष्टता प्रकृष्टयन्तृमत्ता प्रकृष्टेन तेना तेनोद्यमानता वा भवति । एव कुबेरदृष्टान्तबलाग्रे एतस्य पुष्पकप्रकृष्टता भविष्यतीत्यनुमीयते । यतोऽस्यापि कुबेरस्य नलकूबराख्येनान्वयेन नलनाम्ना पुत्रेण प्रकाशिता प्रकटिता शोभिता प्रसूतवत्ता सन्ततिमत्ता इति साधर्म्यदृष्टान्तः । संयय-

लेनानुमानस्त्वेवं । विमतो महारथः पुष्पकः प्रकृष्टो भवितुमर्हति नलकूबराख्यप्रकाशितप्रसूनवत्त्वात् । यो यो नलकूबराख्यप्रकाशितप्रसूनवान् स पुष्पकः प्रकृष्टः । तथा कुबेर इत्यनुमानवशादेतत् सर्वमुच्यत इति यथा कथञ्चित् श्लोको व्याख्येयः । किन्तु प्रकृष्टः सुतः पुत्र इति वा । पुष्पकस्य नलः सारथिर्नास्ति तेन तत्तुल्यता नास्ति । किन्तु तत्स्वामिना कुबेरेणेति, अस्य तु नलः सारथिरित्ययं रथो रमणीय इति भावः । कूबरस्तु युगन्धर इत्यमरः ॥ २४ ॥

महेन्द्रमुच्चैःश्रवसा प्रतार्य्य यन्निजेन पत्या कृ
तसिन्धुरन्वितम् । स तद्ददोऽस्मै हयरत्नमर्पितं
पुरानुबद्धुं वरुणेन बन्धुताम् ॥ २५ ॥

महेन्द्रेति । सिन्धुः समुद्रो नाम्ना उच्चैःश्रवसा अथ चोन्नतकर्णेन सलक्षणेनाथ च दीर्घकर्णेन दुर्लक्षणमार्गेण महेन्द्रं प्रतार्य्य यद्धयरत्नं निजेन पत्या स्वस्वामिना वरुणेन अन्वितं युक्तमकृत वरुणायादत्तेत्यर्थः । स भीमस्तदश्वरत्नं अस्मै नलाय ददे । अनेन कथं तल्लब्धमित्यत आह । किंभूतं । वरुणेन बन्धुतामलीकमैत्रीं अनुबद्धुं वर्द्धयितुं पुरा दूतीप्रेषणावसरे अर्पितं भीमाय दत्तं । उच्चैःश्रवसोऽप्यधिकमश्वं तस्मै ददाविति भावः ॥ २५ ॥

जवादवारीकृतदूरदृक्पथस्तथाक्षियुग्माय ददे
मुदं न यः । ददद्दिदृक्षादरदासतां यथा तथैव
तत्पांशुलकण्ठनालताम् ॥ २६ ॥

जवादिति । योऽश्वो लोकानामक्षियुग्माय नेत्रयुग्माय दिदृक्षायाः स्वीयरूपदर्शनेच्छाया आदरस्तस्य दासतां दासत्वं ददानः पारवश्यं कुर्वन् जवाद्धेतोः अवारीकृतः अर्वाक्तिरीकृतो दूरो बहुयोजनो दृक्पथो नेत्रपथो येन दूरं गतत्वान्नेत्रयोरविषयः सन् यथा नेत्रयुग्माय मुदं प्रीतिं न ददे, दर्शनाभावात्प्रीतिं नोत्पादितवानित्यर्थः, तथा पुनरागमनसमयेऽपि तथैव दिदृक्षादरदासतया तस्य नेत्रयुगस्य पांशुलं रेणुयुक्तं कण्ठनालं यस्य तस्य भावस्तत्ता तां लक्षणयोत्कण्ठितत्व दद

न्मुद न ददे। तमश्व दद इति परवैण सम्बन्ध । यथातथाशब्दौ व्यस्तौ योज्यौ । रूपादिविलोकनकौतुकिभिर्यावदश्वो द्रष्टुमारब्धस्तावद्वेगवशाद् दूरं गतत्वान्न दृष्ट । इदानीं यद्यपि न दृष्टस्तथापि व्याघुत्यागमनेऽवश्य द्रक्ष्याम इति बुद्ध्या व्यापारान्तरपरित्यागपुरःसरं तद्रूपादिविशेषदर्शनादरान्नेत्रे प्रसार्य तत्रैव यावत् स्थितास्तावत् पुनरागमनसमयेऽपि खुरपुटहतक्षोणीरेणुसम्बन्धान्न दृष्ट । तथा चोभयथापि दर्शनाभावादुत्कण्ठ या अपरिपूर्णत्वान्नेत्रयुगस्य हर्षो नाभूदित्यर्थं । अतिजवनोऽश्व इति भाव । जवादप्रतिविद्धो दूरो दृक्पथो येनातिदूरं नेत्राभ्यामननुगतमार्ग इति यावदेवभूतो याऽङ्घ्रियुगाय दशनहर्षं तथाऽनादृत्य यथा विदूषादरदासता ददाम सत्तयैव तस्य नेत्रयुगस्य द्रष्टुर्वा शुष्ककण्ठत्व ददे। निरन्तरदर्शनाभावात्साऽदृष्टी प्रीतिर्न जाता किन्तु पूर्वोक्तप्रकारेण नेत्रपादद्वयेऽपि वा भूरेणुसम्बन्धात् शुष्ककण्ठत्वमेव जातमित्यर्थ । द्रष्टव्यदर्शनाद्धि दृङ्मार्गस्य प्रतिषेधो भवति अत्र तु वेगातिशयाद्दर्शनाभावात प्रतिषेधस्तस्येति वा । अथ च जलरहित कृतो दूरा दृष्टिगोचरा यो मार्ग स पिपासोर्नेत्रयुगाय हर्षं ददाति किन्तु जलावलोकने पारवश्य तथापि पिपासा शुष्ककण्ठत्व वेत्युक्तिरिति वा । दासतामिति पाठ विदूषादरस्य दानपात्रं ददावित्यर्थ. । दाण् दाने दाशगोघ्नौ सम्प्रदाने इति (पा० ३ । ४ । ७४) निपातनाद्ददतेऽस्मै इति दानपात्र । पारावारे परार्वाचीतीरे पात्रमित्यमर । यत्र नास्तिवारि यस्मिन्नभाववारि । यद्वेत्यारण वार यन्तात् यस् स नास्त्यस्यामी । अथवारशब्दाद्वारिशब्दाच्च विद् इं

युगमम्

दिवस्पतेरादरदर्शिनादरादढौकि यस्तम्प्रति वि
श्वकर्म्मणा । तमेकमाणिक्यमयं महोन्नतं पत
द्ग्रहं ग्राहितवान्नलेन सः ॥ २७ ॥

दिवस्पतेरिति । दिवस्पतेरिन्द्रस्य भैम्यनुरागवशाद्भीम आदरदर्शिना विश्वकर्मणा च स भीम प्रत्युद्दिश्य आदराद्ढौकि उपदारूपेण प्रापितः स भामन्तिक महापरिणाह माणिक्य तन्मय तद्रूप तन्निर्मित वा म

ष्ठीवनमत्युच्च पतत् ग्राह पतत गण्डूषजलताम्बूलोद्गारादि गृह्णातीति ग्रहः स नलेन प्रयोज्येन ग्राहितवान् अङ्गीकारितवान् नलाय ददावि त्यर्थः । प्रभोर्यस्मिन्नादरः स तदनुजीविन स्वस्वशिल्पेन सेवन्त इति लोकरीतिः । पतद्ग्राह पतद्ग्रह इत्यमरः । द्विवरपते । तत्पुरुषे कृ-तीति (पा०६।३।१४) बाहुलकात् षष्ठ्या अलुकि कस्कादित्वाद्विसर्जनी-यस्य (पा०८।३।४३) स । षष्ठ्याः पतिपुत्रेति (पा०८।३।५३) छन्दोविष-यत्वात् लोके गत्यर्थमकर्मकत्वात् कर्मणि चिण् । पतत् गृह्णातीति पतद्ग्रह । पचाद्यचि (पा०३।१।१३४) पतता ग्रह इति (पा०३।३।५८) अप् ॥ २७ ॥

**नलेन ताम्बूलविलासिनोज्झितैर्मुखस्य यः पूग**
**कणैर्भृशो न वा । इति व्यचारि स्वमयूखमण्ड**
**लादुदञ्चदुस्रारुणचारुणश्चिरात् ॥ २८ ॥**

नलेनेति । उदञ्चदुस्रारुणचारुणा उदित्वराम्रतसूर्यवद्वा सुन्दरादति-रक्तात् ऊर्ध्वमसरत्किरणोऽतिशयिता य स्वीया रूपगुणस्तेन चारणां र क्ततरात् स्वमयूखस्य मण्डलान् मद्दहेसा ताम्बूलविलासिना ताम्बू-लरसमात्रग्राहिणा पूगनागवल्लीदलभवद्रव्यागिना नलेन गृहीतरसत्या-त् उज्झितैस्त्यक्तैर्माणिक्यशकलसदृशैरुद्गारकणैः पूगकणैः क्रमुकाख्यतरु-फलैः अयं भृतः पूरितो न वा पूरित इति य पतद्ग्रहः चिराद्भूय-सा कालेन सूक्ष्मेक्षिकया क्रमेण मुक्तसंशयैर्लोकैश्चयघि निश्चितस्तं प्रा-हितवानिति पूर्वेण सम्बन्ध । समीपं गत्वा सूक्ष्मेक्षिकयाऽयमिदानी पूगकणैः भृत इति निश्चित कदाचित् कदाचिच्च इदानीं न भृत इत्य-पि निश्चितं इत्यर्थः । भृताभृतत्वसन्देहे रक्तमयूखमण्डल हेतु । मा-णिक्यमयत्वादतिरक्त इत्यर्थः । इदानीं ताम्बूलस्यानवसराद्धाविन्युपचा-रे भूतवदित्युपचार । यद्वा तस्यैवारक्तत्वाज्ज्ञानस्योद्गारत्यागत्वम । अ-सो पूगकणा किंवा किरणसमूहा इति सन्देहश्चिरान्निर्णीत इति वा ॥२८

**भयेन भीमं भगवन्तमर्चता नृपेऽपि पूजा प्रभु**
**नाम्नि या कृता । अदत्त भीमोऽपि स नैप**

धाय तां हरिन्मणेर्नीजनभाजनं महत् ॥ २९ ॥

मयेनेति । भगवन्तं षड्गुणैश्वर्यसम्पन्नं भीम शिवमर्घादिभिरुपचरि-र्चता पूजयता शैवेन मयनाम्ना ऽसुरेण प्रभुनाम्नि शिवनामधारके नृ-पेऽपि भीमेऽपि या पूजा कृता तपदा अकारि सभीमोऽपि तां पूजां पूजारूपहरिन्मणेर्गारुडमणिमयमस्त्विन्धि विषापहारसमर्थं अतिविस्तृत भो-जनार्थं भाजनं नैषधायादत्त मयेन तस्मै दत्तं सोऽपि नलायादत्तेति । अपिशब्दः समुच्चयार्थः । अर्चयतिर्भौवादिकः ॥ २९ ॥

छदे सदैव छविमस्य विभ्रतां न केकिनां सर्प
विषं प्रसर्पति । न नीलकण्ठत्वमधास्यदत्र चेत्
स कालकूटं भगवानभोक्ष्यत ॥ ३० ॥

छद इति । अस्य भोजनपात्रस्य छविं नीलां द्युतिं सदैव छदेऽपि बिभ्रतां केकिनां मयूराणां सर्पविषं न प्रसर्पति तच्छरीरं नाक्रामतीत्यर्थः । स भगवान् शिवोऽत्र पात्रे एतदाधारत्वेन कालकूटमभोक्ष्यत् तर्हि नीलकण्ठत्वं नाधास्यत् । अत्र पात्रे विषभक्षणे कृते सति त-च्छवीर्यतया नीलकण्ठत्वं न स्यादित्यर्थः । लिङ् निमित्ते लृङ् क्रिया-तिपत्तौ (पा० ३ । ३। १३९) इति लृङ् । भुजोऽनवने इति (पा० १ । ३। ६६) तङ् ॥ ३० ॥

विरोध्य दुर्वाससमस्खलद्दिवः स्रजं त्यजन्नस्य
किमिन्द्रसिन्धुरः । अदत्त तस्मै स मदच्छलात्
सदा यमभ्रमात्तद्गतयेव वर्धुकं ॥ ३१ ॥

विरोध्येति । स भीमस्तस्मै नलाय मदच्छलाद् दानजलव्याजात् स-दा वर्षुकं वर्षणशीलं च हस्तिनं अदत्त स दुर्वाससं विरोध्य रोषयि-त्वा तच्छापादिन्द्रसिन्धुर ऐरावतो दिवः स्वर्गाद् अस्खलत् पतितः किं । भुवमागत ऐरावत किमित्यर्थः । विरोधे हेतुः । अस्य दुर्वाससः स्र-जं मालां त्यजन् भुवि क्षिपन् । अत्र पौराणिकी कथा । कदाचिदैरा-वतमारूढाय गच्छते इन्द्राय दुर्वाससा प्रसादेन मन्दारपुष्पमाला दत्ता । तेनेन्द्रेण करीन्द्रकुम्भे स्थापिता च तां शुण्डादण्डेनापविध्य ततः

कुपितेन मुनिना स्वमपि मालावद्ध पतेति ग्रह सम्भूतिमुत्प्रेक्षा । वपुंकत्वे पुनरुत्प्रेक्षते । अञ्जनाकृतया ऐरावतत्वेनैव । ऐरावतो हि सदा मदजलं स्रवति अयमपि तावत् स्वगांङ्कुर. स एवेति सदा दानजलं मुञ्चतीत्यर्थ. । अञ्जनमालत्तुल्यतया वा श्यामत्वात् सजलघनतुल्य इत्यर्थ । अत्र भीमस्य सम्यग्विस्मेनारयलतिकमिति वा । वपुंकलपते (पा० ३ । २ । १५४) स्युकञ् ॥ ३१ ॥

मदान्मदग्रे भवताथवा भिया परं दिगन्तादपि यात जीवत । इति स्म यो दिक्करिणः स्वकर्णयोर्विनाह वर्णं स्वजमागतैर्गतैः ॥ ३२ ॥

मदादिति । यो गजः स्वकर्णयोरागतैर्गतैरागमनैर्गमनैश्च कृत्वा वर्णं स्रजं वर्णमालां विनैव दिक्करिणो दिग्गजान् प्रति इत्याह स्मेव । इति कि । भो दिग्गजा भवता मत्ताऽभिमानवेदस्ति तर्हि मदाद् युद्धं कर्तुं यूय मदग्रे भवत मम पुरस्तात्तिष्ठत । अथवा चेन्मदो नास्ति तर्हि भिया दिगन्तस्या यूय दिगन्तादपि परं यात गच्छत । पलायिताश्च सन्तः तत्रैव सुखेन जीवत स्वप्राणान् रक्षत । इय लुप्तोत्प्रेक्षा ॥ ३२ ॥

बभार बीजं निजकीर्तये रदौ द्विपामकीर्त्यै खलु दानविप्रुषः । श्रवःश्रमैः कुम्भकुचां श्रियः स्रियं मुदे मदस्वेदवतीमुपास्त यः ॥ ३३ ॥

बभारेति । यो गजो निजकीर्तये रदौ दन्तौ बीजं कारणं बभार, द्विपामकीर्त्यै दानविप्रुषो दानोदबिन्दूनेव कारणं बभार । खलूत्प्रेक्षायां । दन्ताभ्यां परगिपदारणात् स्वस्य यश समुत्पन्नं तयो कीर्तिकारणत्वम् । अथ च कीर्तिः लक्षणस्य शुभ्रत्वात् कारणेनापि तादृशेनैव भवितु युक्तमिति । दन्तौ कीर्तिबीजभूतकन्दाविव मदजलगन्धाघ्राणमात्रेण परगजानां भङ्गात् दानबिन्दूना रदकीर्तिलक्षणत्वं । कार्यस्य श्यामत्वात् कारणेनापि तादृशेनैव भवितु युक्तमिति श्यामदानबिन्दव एवा कीर्तिबीजमिवेत्युत्प्रेक्षा । तथा मुहुर्मुहुर्गतागतै श्रव:श्रमै कर्णप्रयासैरेव अजनचालनै कृत्वा कुम्भाविव कुचौ यस्यास्ता मदस्वेदवतीं दा-

नरूपधर्मोदकयुक्ता शिरःश्रियः घर्मजलापहरणद्वारा तस्या एव मुदे ह-र्षाय उपस्तसिषवे । एवम्भूतः शिरा दधानः प्रीतिमुदपादयदित्यर्थः । कामकेलिविस्रम्भकुपिता कामिनीं स्वेदमपनयन् कामी तालवृन्तचा-लनेन वीजयतीति मदस्य स्वेदरूपेण शिरःश्रियः स्त्रीत्वरूपणम् । घ-र्मेत्यपि पाठः ॥ ३३ ॥

न तेन वाहेषु विवाहदक्षिणीकृतेषु सङ्ख्यानुभवोऽभवत् क्षमः । न शातकुम्भेषु न मत्तकुम्भिषु प्रयत्नवान् कोऽपि न रत्नराशिषु ॥ ३४ ॥

नेति । तेन भीमेन नलाय विवाहे दक्षिणीकृतेषु कन्यादानदक्षिणा-त्वेन दत्तेषु वाहेषु रथादिषु तुरङ्गेषु वा सङ्ख्यानुभवे सङ्ख्याज्ञाने प्रयत्नवानपि कोऽपि कश्चिदपि न क्षमः कियन्तो वा दत्ता इत्येव स-ङ्ख्यापरिच्छेदे समर्थो नाभवत् तथा शातकुम्भेषु नैकरूपभूतघटि-ताघटितकाञ्चनेषु न तथा मत्तकुम्भिषु गजान्मदमातङ्गेषु न, तथा रत्न-राशिषु न क्षमोऽभवदिति । सर्वत्र विवाहदक्षिणीकृतेष्विति च । बहुत-रं यौतकं दत्तवानिति भावः ॥ ३४ ॥

करग्रहे वाम्यमधत्त यस्तयोः प्रसाद्य भैम्या नु स दक्षिणीकृतः । कृतः पुरस्कृत्य ततो नलेन स प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः ॥ ३५ ॥

करेति । य आशुशुक्षणिरग्निस्तयोः करग्रहे विवाहे विषये वाम्यं वक्रत्वमधत्त भेजे । भैम्यभिलाषाविलाकारधारणादिद्वारा पूर्वं विरु-द्धोऽभूदनु च पश्चात्तनवरणावसरे भैम्या स्तुतिध्यानादिना प्रसाद्य स-न्तोष्य दक्षिणीकृत आनुकूल्यं नीतः सोऽग्निः । ततः पाणिग्रहणान-न्तरं नलेन पुरस्कृत्याग्निस्थापनादिसंस्कारपूर्वं मग्रे प्रतिष्ठाप्य तत्क्षण तस्मि-न्विवाहसमये प्रदक्षिणः प्रकर्षेणापसव्यः कृतः प्रदक्षिणभागेन यागा-कारेण वेष्टितः । अथ च स पूर्वं यौतकदानकाले वामभागेऽभूत् प-श्चाद्भैम्या पुरस्कारादिना प्रबोध्य सुकूलः कृतः । अथ च दक्षिणभागे कृतः सोऽर्चनादिभिः सम्पूज्य नलेन सुतरामनुकूलः कृतः । अथ च प्रकर्षेण

दक्षिणभागे कृतः । अन्योऽपि महान् पूज्य विरोध्यते स विवाहादौ प्रसाद्यानुकूलः क्रियते इत्युक्तिः । अत्र क्वचित् क्वचिद्विधिक्रमभङ्गो देशाचाराच्छाखाभेदात् कुलाचारविशेषाद्वाद्रष्टव्यः । न पुनः ग्रन्थकर्तुर्लेशोऽपि । अत एव पूर्वं यथाविधानं प्रायुङ्क्त । आशुशुक्षणि । आशुपूर्वाच्छुषेर्धातोः सन्नन्तादनिः शुषेर्वा । शिष्टप्रयुक्तत्वात् प्रयोगान्तरमपि साधुत्वं ज्ञेयम् ॥ ३५ ॥

स्थिरा त्वमश्मेव भवेति मन्त्रवागनेन दाक्षास्य किमाशु ता ह्रिया । शिला चलेत् प्रेरणया नृणामपि स्थितेस्तु नाचालि विदौजसापि सा ॥३६॥

स्थिरेति । हे भैमि इममश्मानमारोहेत्युक्त्वा त्वं अश्मेव स्थिरा भवेति नलेनोक्ता मन्त्ररूपा वाक् ता भैमीमाशास्य शिलावत्स्थिरा भवेति तस्यै आशिषं दत्वा आशु अनेनैव अनन्तरात् । अश्मा शिला यथा मध्यस्था भवन्ति, । सा भैमी मते ह्रिया किं । किमिति तस्याः लज्जेत्यत आह । शिला अचेतनत्वात् नृणामपि प्रेरणया करचरणव्यापारमात्रेण चलेत् स्वस्थानादन्यत्र गच्छेत् सा तु भैमी पुनः अतिप्रभविष्णुना विदौजसा इन्द्रेणापि स्थितेः स्वमर्यादायाः सकाशान्न चालि । पतिव्रतासीमा न त्याजिता इति स्थिरतरत्वेनाधिकाया भैम्या अश्मदृष्टान्तः स्वदोषः विधायत्वे नलेनैव नष्टं तस्याः । वैधम्यमारोहणे तेन कारितमिति भावः । अत्र अदृष्टाने अस्माकं हि पुरुषत्वादिह नञिमत्योरलिट्यैत्वमिति (पा० ६ । ४ । १२१ । वा०२) एत्वं रूपं ॥ ३६ ॥

प्रियांशुकग्रन्थिनिबद्धवाससं तदा पुरोधा विदधे विदर्भजां । जगाद विच्छिद्य पटं प्रयास्यतो नलादविश्वासमिवैष विश्ववित् ॥ ३७ ॥

प्रियेति । तदा अग्निप्रदक्षिणकाले पुरोधा गौतमो विदर्भजां प्रियस्य नलस्यांशुकेन सह ग्रन्थिना निबद्धं वासो यस्यास्तामेवविधां विदधे चकार, उत्प्रेक्षते, पटं विच्छिद्य कर्तित्वा अरण्ये भैमीं विहाय प्रया-

स्तो गमिष्यतो नलात् सकाशादेव पुरोधा अविश्वास विश्वासाभाव वशादेव । वस्त्रं छित्वा त्वां हित्वाऽयं गमिष्यतीत्येतस्य विश्वासो न कार्य इत्यस्य वस्त्रेण सह स्ववस्त्रस्य ग्रन्थिं ददिवानेन सह विचरणी यमित्युवाचेत्यर्थः । कथमेतज्ज्ञातमत आह । यतो विश्वं सर्वं वेत्तीति कालत्रयज्ञ इत्यर्थः । तस्माद्भविष्यदपि तेन ज्ञातमित्यर्थः । कलिना पराभूतो नलो द्यूतद्वारा हारितसर्वस्व स्त्रीयेस्त्यक्तो वासरेण कलिना पक्षिरूपेण तद्वारणार्थं विक्षिप्तस्य वस्त्रस्यापहाराद्वस्त्रान्तराभावादेकमी-वस्त्रार्द्धधारी सन् निद्राणायास्तस्या वस्त्रार्द्धं विच्छिद्य तां महारण्ये तत्याजेति भारते कथा ॥ वेधनुभयवस्त्रग्रन्थिबन्धनं तेन कृतमिति भाव । विदधदिति पाठे कुर्वन् सन्निति योजना ॥ ३७ ॥

ध्रुवावलोकाय तदुन्मुखभ्रुवा निर्दिश्य एत्यान्ति
दधे विदर्भजा । किमस्य न स्यादणिमाक्षिसाक्षि-
कस्तथापि तथ्यो महिमाऽऽगमोदितः ॥ ३८ ॥

ध्रुवेति । तस्य ध्रुवस्य दर्शनार्थमुन्मुखी ऊर्ध्वस्य तेन पत्या नलेन विदर्भजा निर्दिश्याप्य ध्रुवस्यावलोकनार्थं अभिदधे उक्ता । तदु-न्मुख्या भ्रुवा कृत्या संज्ञाप्येति वा । न तु स्थूलस्य ध्रुवस्य स्वयदर्श नयोग्यत्वात् सा स्वयमेव स पश्येत् । तेन किमिति दर्शनं कारितमि त्यत आह । अस्य ध्रुवस्य अणिमा सूक्ष्मप्रमाणत्व आक्षिसाक्षिको नेत्र गोचरः किं न स्यादपि तु स्यादेव यद्यपि तथापि स्वयदर्शनयोग्यत्वे ऽपि आगमोदितो महिमा वेदोक्तं गौरव सत्योऽस्त्विति शेषः । श्रु-त्युक्तं हि प्रमाणमित्यर्थः । श्रुतिर्हि ततो वधूं ध्रुवमीक्षयी-तेति ध्रुवे दर्शिते ध्रुवं पश्यामि प्रजां विन्देय इति सा ब्रूयात् तस्मात् स्वयं दृष्टुमशक्यत्वेऽपि नल एवादर्शयदिति युक्तमित्यर्थः । वेध ध्रुव दर्शनं कारितमिति भाव । एतत् कार्यं कथयति । अप च यद्यस्या-णुत्वं प्रत्यक्षं तथापि ज्योतिःशास्त्रोक्तं ध्रुवमण्डलस्य महापरिमाणत्व मस्त्येव ॥ ३८ ॥

धयेन चादर्शि वधूरुन्धती सतीमिमां पश्य

गतामिवाणुताम् । कृतस्य पूर्वं हृदि भूपतेः कृते तृणीकृतस्वर्गपतेर्जनादिति ॥ ३९ ॥

वधेनेति । सा वधूर्वधेन नलेन अणुतामतिसूक्ष्मत्वं गतामिमां सतीं पतिव्रतामरुन्धतीं त्वं पश्येत्युक्त्वा अदर्शि दर्शिता । तत्राणुत्वमुत्प्रेक्षते । यस्याः पूर्वमेव हृदि कृतस्य मनोरथमात्रेण हृदये कृतस्य भूपतेः कृते तृणीकृतस्वर्गपतेः तृणवल्लाघवेन त्यक्त इन्द्रो येनैवंभूताज्जनादिव लज्जयेति शेषः । अहं हि परिणीता सतीन्द्रं तृणप्रायमकरवं भैमी तु हृदि भावमात्रादेवेति । अतोऽपीयमेवाधिका सतीति भैम्याः सकाशाल्लज्जयेव कृशामित्यर्थः । स्वतः कृशत्वमेव उत्प्रेक्षितं । भूपतेर्जनादिति शब्दद्वयसामान्यवाच्यपि नलभैमीलक्षणे विशेषे पर्यवस्यति । वैधमरुन्धतीदर्शनं कारितमिति भावः । अदर्शि । पश्यतेर्णिच् । अभिवादिदृशोरिति (पा० १ । ४ । ५३ वा० १) अणौ कर्तुर्णौ कर्मत्वं । तस्य चाभिहितत्वान्न द्वितीयाभावः ॥ ३९ ॥

प्रसूनता तत्करपल्लवस्थितैरुडुच्छविभ्यामिव विहारिभिः पथि । मुखेऽमराणामनले रदावलेरभाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥

प्रसूनतेति । तस्या भैम्याः करयोरेव पल्लवयोः स्थितैरंजलिगतैर्लाजैः प्रसूनता पुष्पत्वं अभाजि प्राप्ता । पल्लवेषु च पुष्पाणि युक्तानि तथा अनया भैम्या उज्झितैः करान्मुक्तैर्व्योम्नि विहरणशीलैः सद्भिः पथि कराग्रान्तरालरूपे मार्गे उडुच्छविर्नक्षत्रशोभा भेजे । व्योम्नि नक्षत्राणि युक्तानि । तथाऽमराणां मुखेऽनलेऽनया हुते रदावलेः दन्तपङ्क्तेर्द्युतिः शोभा भेजे । मुखे दन्तपङ्क्तिर्युक्ता । त्रेधा लाजहोमस्तया कृत इति भावः ॥ ४० ॥

तया प्रतिग्राहुतिधूमपद्धतिः[illegible]ता कपोले मृगनाभिशोभिताम् । ययौ दृशोरञ्जनतां श्रुतौ श्रिता तमाललीलामलिकेऽलकायिता ॥ ४१ ॥

नयति। तथा भैम्या प्रतिष्ठा करयुगलाभ्यां स्वीकृता आहुतिधूमपद्धति हूयमानलाजादिद्रव्यसम्बन्धिनी धूमपरम्परा कपोले मृगनाभिशोभिता कस्तूरीशोभा जाता प्राप्ता। तत ऊर्ध्वं गच्छन्ती दृशोः चक्षुषोरञ्जनतां ययौ प्राप। ततोऽप्यूर्ध्वं गच्छन्ती श्रुती कर्णयोस्तमालनीलावतंसभूते तमालदलसादृश्ये श्रिता। ततोऽप्यूर्ध्वं तरं गच्छन्ती अलिके ललाटे अलकायिता चूर्णकुन्तलवदाचरिता तत्तुल्या जातेत्यर्थः। कपोले कस्तूरी दृशोरञ्जनं श्रुती तमालं ललाटे चालका इति युक्तम्। वैधधूमवर्णन कृतमिति भावः। मृगनाभिशोभीति। कर्तर्युपमान इति (पा० ३। २। ७९) णिनी मृगनाभिशोभिनी तस्या भावस्तत्ता, त्वतलोरिति (पा० ६। ३। ३५ वा०२) पुंवत् ॥ ४१॥

**अपन्हुतः स्वेदभरः करे तयोस्त्रपाजुषोर्दानजले मिलन्मुहुः। दृशोरपि प्रस्तुतमस्रु सात्त्विकं घने समाधीयत धूमलड्घनैः ॥ ४२ ॥**

अपन्हुत इति। त्रपाजुषोर्लज्जायतोस्तयोः करे वर्तमानः स्वेदभरः सात्त्विकघर्मजलसङ्घो दानजलैर्ब्राह्मणेभ्यो दक्षिणादानार्थं ग्रस्तैः सङ्कल्पजलैः सह मुहुर्वारंवारं मिलन् सम्बन्धं प्राप्नुवन् सन् अपन्हुतः दानजलयोगात् सात्त्विकः स्वेदोऽयमिति लोकेन न ज्ञात इत्यर्थः। करे मुहुर्मिलन् पुनः पुनरुद्भवन् दानजलैरपन्हुत इति वा। तत्रापि कामविकारवशात् स्वेद लोको ज्ञास्यतीति भिया वा। दृशोरपि सम्यक् प्रस्तुत गलित सात्त्विकं कामविकारजमस्रु घनैः सान्द्रैर्धूमलङ्घनैर्धूमाक्रमणैः कृत्वा समाधीयत परिहृत तास्याभित्यर्थात् तैरेव कर्तृभिरपन्नमित वा। परस्परस्पर्शनतयोः स्वेदादयः सात्त्विका प्रवृत्ता इति भावः ॥ ४२ ॥

**बहूनि भीमस्य वसूनि दक्षिणां प्रयच्छतः स द्रुयमपेक्षत तत्क्षणं। जनेषु रोमाञ्चमितेषु मिश्रतां ययुस्तयोः कण्टककोरकश्रियः ॥ ४३ ॥**

बहूनीति। बहूनि वसूनि दक्षिणां प्रयच्छतो दक्षिणात्वेन ददतो

भीमस्य स्वस्य दानशौण्डत्वमवेत्य तत्क्षण तस्मिन्नेव क्षणे आश्चर्यातिशयेन रोमाञ्चमितेषु प्राप्तेषु जनेषु मध्ये तयोर्भैमीनलयोरपि कण्टककोरकाणिव कण्टककलिकाशाला सिम्रिताम ऐक्य प्रापु । सात्त्विकोऽपि रोमाञ्चो ऽन्यजनवदाश्चर्यादय जात इत्युपलक्षित इति भाव ४३

बभूव न स्तम्भविजित्वरी तयोः श्रुतिक्रियारम्भपरम्परात्वरा । न कम्पसम्पत्तिमलुम्पदग्रतः स्थितोऽपि वह्निः समिधा समेधितः ॥ ४४ ॥

बभूवेति । श्रुतिक्रियाया वेदविहितलाजाहोमाग्निपरिक्रमणादिकाया आरम्भस्य परम्परा एकस्मादनन्तरमन्यस्यारम्भस्तस्मादनन्तरमन्यस्यैवमव्यवहितो य उत्तरोत्तरभावस्तद्विषयत्वरा वेगता, तयोरवश्यापतितायामपि कर्मवेगितायां सात्त्विकजनितस्तम्भवलनात्मकस्य स्तम्भस्य विजित्वरी जयनशीला न बभूव तत्कार्यमलोपि । स्तम्भवशात्तौ किमपि कर्म प्राघु कर्तुं समर्थौ नाभूतामिति भाव । तथा समिधा यज्ञकाष्ठेन समेधित सर्धाङ्गितो वह्निरपि अग्रत स्थित सन् तयो कम्पसम्पत्तिं सात्त्विककम्पबाहुल्यम नालुम्पत् न शमयति स्म । शीतजं हि कम्पमग्नि शमयति न तु सात्त्विक तस्य तत्राशमयत्वादित्यर्थ । तयोरन्य सात्त्विकापलापेऽपि स्तम्भकम्पौ लोकैर्ज्ञाताविति भाव । अर्थवत्तास्तम्भेति पाठे न स्तम्भविजित्वरीति नञ्समास । अलुम्पत् शे मुचादीनामिति (पा० ७ । १ । ५९) नुम ॥ ४४ ॥

दमस्वसुः पाणिममुष्य गृह्णतः पुरोधसा संविदधे तरां विधेः । महर्षिणेवाङ्गिरसेन साङ्गता पुलोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥

दमेति । दमस्वसु पाणि गृह्णतो ऽमुष्य नलस्य सम्बन्धिनो वैवाहिकस्य श्रौतस्य विधे साङ्गता ऽङ्गसाहित्य पुरोधसा संविदधेतरां नितरा साकल्येन चक्रे । प्रधानमात्र नलेन कृत अङ्गानि तु पुरोधसा कारितानीति भाव । कस्य केनेव । पुलोमजामुद्वहत शतक्रतो सम्बन्धिनो विधे साङ्गता आङ्गिरसेन महर्षिणा बृहस्पतिनेव ॥ ४५ ॥

स कौतुकागारमगात् पुरन्ध्रिभिः सहस्ररन्ध्रीकृत मीक्षितुं ततः । दधात् सहस्राक्षतनुत्रमित्रता मधिष्ठितं यत् खलु जिष्णुनाऽमुना ॥ ४६ ॥

स इति । ततः वैवाहिकविधेरनन्तरं स नलः पुरन्ध्रिभिः पुरनारीभिरीक्षितुं वधूवरचेष्टादिदर्शनार्थं सहस्ररन्ध्रीकृतं तृणकाष्ठादिरचितं बहुच्छिद्रगवाक्षं वधूवरसवेशार्थं रचितशृङ्गारवेदिकं कौतुकागारं कुतूहलावहं दूर्वायवाङ्कुरादिनवमङ्गलद्रव्यसंहितं गृहमगात् ययौ । यद्गृहं जिष्णुना जयशीलेनामुना नलेनाधिष्ठितं सत् विलोकितुं नेत्रसहस्रात्मकाम् अदोऽपि रन्ध्रसहस्रधारिणा सहस्राक्षस्य कवचेन सह मित्रतां साम्यं अधात् धारयामास तदपि जिष्णुनेन्द्रेणाधिष्ठीयते खलु उत्प्रेक्षायां निश्चये वा ॥४६॥

तथाशनाया निरशोपि नो ह्रिया न सम्यगालोकि परस्परक्रिया । विमुक्तसम्भोगमशायि स स्पृहं वरेण वध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥

तथेति । वरेण वध्वा चाशनाया बुभुक्षा ह्रिया कृत्वा तथा पूर्ववत् नो निरशोपि निःशेषिता आतृप्ति न भुक्तमित्यर्थः । तथा परस्परक्रियाऽन्योन्यं चेष्टादिव्यापारोऽपि ह्रियैव सम्यक् सम्मुखदर्शनेन नालोकि न विलोकिता किन्तु इङ्गितमात्रेणेत्यर्थः । तथा त्र्यहं दिनत्रयं यथाविधि मुक्तसम्भोगं त्यक्तसुरतं सस्पृहं सुरतेच्छासहितं यथा तथाऽशायि शयितं । त्र्यहमिति सर्वत्र योज्यं । विध्यतिक्रमभयाद् दिनत्रयं ताभ्यां सह भुक्तं अन्योन्यं विलोकितं सहनिद्रितञ्च । परं लज्जयाऽशयया च नातृप्ति भुक्तम् नाशेषाङ्गं दृष्टं न च चुम्बनालिङ्गनादिपूर्वं शयितमित्यर्थः । एकत्र शयनं त्रिरात्रं ब्रह्मचर्यं चेति त्रिविधिः । अशनाया । अशनायोदन्यधनाया (पा०७।४।३४) इति साधुः । त्र्यहः समाहारे द्विगौ राजाहःसखिभ्यष्टच् (पा०५।४।९१) इति टच्, न सङ्ख्यादेः समाहारे इति (पा०५।४।८९) अह्नादेशाभावः । रात्राह्नाहाः पुंसि (पा०२।४।२९) इति पुंस्त्व । अत्यन्तसंयोगे द्वितीया (पा०२।१।२९) । अपह विमुक्तसम्भोगमिति पाठान्तरम् ॥ ४७ ॥

कटाक्षणाज्जन्यजनैर्निजप्रजाः क्वचित् परीहास मचीकरत्तरां । धराप्सरोभिर्वरयात्रयागतानभो जयद्भोजकुलाङ्कुरः क्वचित् ॥ ४८ ॥

कटाक्षेति । भोजकुलस्य भीमपूर्वजान्वयक्षत्रियवंशस्याङ्कुरो बालो दमः क्वचिद्भीमद्रूपपानगोचरे कस्मिंश्चिद्देशे जन्यजनैर्वरयात्रिकैर्वरपक्षीयैः सह निजप्रजाः परिहासपात्रभूतपौरवारस्त्रीमुख्याः ताभिः प्रयोज्याभिरित्यर्थः, कटाक्षणाक्रमभङ्ग्या परिहास सोपवक्रोक्त्यादिना अपाङ्गलोपदर्शनरूप उपहासमचीकरत्तरां अतितरां कारयामास । तथा क्वचिच्च वरयात्रया निमित्तेनागतान्नलपक्षीयानन्यान् राजलोकान् धराप्सरोभिः दासीधेरिणीभिरम्भाप्रभृतिभिः पुरसुन्दरीभिर्वाराङ्गनाभिरभोजयत् भोजनमकारयत् । परिवेषणार्थं काश्चित् सहभोजनार्थं काश्चिदादिष्टवानित्यर्थः । विवाहे कनीयमानेषोपहासकरणयोग्यस्यादङ्कुरपदप्रयोगो युक्तः । कटाक्षशब्दात् तत्करोतीति ( पा० ३ । १ । २६ वा० १ ) णयन्तात् ल्युट । निजप्रजाः । हृक्रोरिति ( पा० १ । ४ । ५३ ) कर्मत्वम् । आगतान् । भुजेः प्रत्यवसानार्थत्वात् , गतिबुद्धीति ( पा० १ । ४ । ५२ ) कर्मत्वम् । अभोजयत । निगरणचलनार्थेभ्यश्चेति ( पा० १ । ३ । ८७ ) परस्मैपदम् ॥ ४८ ॥

स कञ्चिदूचे रचयन्तु तेमनोपहारमत्राङ्ग रुचेर्यथोचितं । पिपासतः काश्च न सर्वतो मुखं तवार्पयन्तामपि काममोदनं ॥ ४९ ॥

तमेव प्रकारमाह । स इति । स दमः कञ्चिन्नलपक्षीयं एवमूचे स्वजनमुखेनेति शेषः । अङ्ग हे वरयात्रिक अत्र पार्श्वे आसु परिवेषिकासु मध्ये याः काश्चन स्त्रियः तव रुचेरभिलाषस्य यथोचितं उचितमनतिक्रम्य तेमनाख्यस्य व्यञ्जनस्य उपहारं आनयनं रचयन्तु कुर्वन्तु यावदभिलाषं तेमनमानयन्तु किमिति प्रश्नः काकुः । एता एवकुर्वन्तु त्वं भुङ्क्ष्वेति भोजनोपदेशो वा । एवमुत्तरत्रापि । तथा पिपासतः तृषालोस्तव पानार्थं सर्वतोमुखं जलमपि अर्पयन्ता ददतु । स-

या ओदनमपि कामं यथेच्छमर्पयन्तु ॥ परिहासस्तु अत्र आसु मध्ये विविक्ते स्थाने वा अङ्गरुचे स्तनजघनाद्यङ्गानां रुचेर्दर्शनाद्यभिलाषस्योचितं यथा भवति तथा तव मनसः अपहार अपहरणं रचयन्तु स्तनादिदर्शनादिनान्तःकरणहरणं कुर्वन्तु इत्यर्थः । कायकान्तिहेतोः सौन्दर्यातिशयान्मनोहरणं कुर्वन्त्वित्यर्थः । तथा पिपासतश्चुम्बनेच्छोस्तव मत्यतो नेत्रादिचुम्बनस्थाने दर्शनमात्रेण कामस्य हर्षकरं मुखमर्पयन्तां । बहूनां चुम्बनस्थानानामेकत्र मुखे वर्तमानत्वान्मुखमेव तव ददत्वित्यर्थः । अथ च कामस्य मोदनं हर्षकरं वराङ्गमपि चुम्बनार्थमर्पयन्तां । अथ च मुखं पिपासतस्तव सर्वदा वराङ्गमेव ददतु । स्यादीमन तु निष्ठानमित्यमरः । पूर्वव्याख्याने तवेत्युभयत्र योज्यं । मुखं सदनं इति, उभयप्राप्तौ कर्मणीति द्वितीया ( सि० कौ० ३६ । १ । प० ) । तव ते इति च सम्बन्धसामान्ये षष्ठी ॥ ४९ ॥

**मुखेन तेऽत्रोपविशत्वसाविति प्रयाच्य सृष्टानुमतिं खलाहसत् । वराङ्गभागः स्वमुखं मताऽमुना स हि स्फुटं येन किलोपविश्यते ॥ ५० ॥**

मुखेनेति । काचित् खला वक्रोक्त्यादिभाषिणी हे वरयात्रिक असौ मामकी पुरुषो वाऽत्र स्थाने ते तव मुखेनोपलक्षिता, मन्मुखमिति यावत् त्वदुपायेन वा त्वदाज्ञयेति यावत् त्वया सह भोजनार्थं तव पुरस्ताद्वा भोजनार्थं उपविशतु इति प्रयाच्य सम्प्रार्थ्य मुखेनोपविशत्विति सृष्टा दत्ताऽनुमतिरनुज्ञा येन तं वरयात्रिकं पश्चादहसत् । हासे कारणमाह । हि यस्माद्येन साधनेन किलोपविश्यते स हि वराङ्गभागो गुह्यदेशः अमुना जनेन स्वस्यात्मनो मुखं स्फुटं निश्चितं अतो मुखेन करणेनोपविशत्वित्येवमर्थपरं तद्वचनमध्याप्य तेनानुज्ञायां दत्तायां कटिदेशाधःप्रदेशेन किलोपविश्यत इत्येवं वदता अनेन स्वमुखं वराङ्गत्वेन मतं यस्मात्तस्मात्तस्य हास्यं युक्तमित्यर्थः । मध्यं कलयोः धपुरःसरजघनेति वा । अथ च सं मुखेनोपविशतु अपि तु पुरोभागमर्पयतु उपविशत्विति प्रयाच्य तदीयं गुणरहितमर्थं गृहीत्वा सृष्टानुमतिं तमहसत् । मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपीति विश्वः ॥ ५० ॥

युवामिमे मे स्मितमे इतीरिणो गले तयोरक्ता
निजगुच्छमेकिका । न भास्यदस्तु च्छगलो वद-
न्निति न्यधत्त जन्यस्य ततः पराकृपत् ॥ ५१ ॥

युवामिति । इमे पुरवर्तिन्यौ युवां मे मम स्मितमे उत्तमस्त्रियौ भवादृशौ स्त्रीरत्ने न दृष्टे इतीरिणो वदतः स्तुवतः, अथ च मत्सम्बन्धिन्यौ प्रियतमे भवेतम् इति परिहासाद्वदतः कस्यचिज्जनस्य वरपक्षीयस्य गले यथा त्वयाच्यते तथेत्युक्त्वा तयोर्द्वयोर्मध्ये एकिका एकैव निजगुच्छं रज्जुस्थाने हारविशेषमेव इत्युक्त्वा न्यधत्त । इतीति किम् । हे जन्य त्वं अदः पूर्वोक्तं इमे मे इति शब्दं वदन् तु पुनः छगलः छागो न भासि अपि तु मे मे इति शब्दं कुर्वन् छाग एव स्फुरसि । अथ च तुच्छः स्तनशून्यो गलः कण्ठो यस्य तथाभूतो न भासि । छागस्य गले स्तनौ तिष्ठतः त्वन्तु तादृशोऽपि स्तनशून्य इति कारणात् न भासे । अथ च रज्जुरहितकण्ठो न भासीति रज्जुस्थाने हारं धत्ते स्मेति । उभयतो लम्बमानो हार एव गलस्तनस्थाने भवत्वित्यर्थः । ततः अनन्तरं परा द्वितीया रज्जुवद्धारमेव धृत्वा अजमिव तमाकृष्य कण्ठे बद्ध्वा दूरं निनाय । अजो हि मे मे इति शब्दं करोति रज्ज्वा कण्ठे बद्ध्वा आकृष्यत इति परिहासः । अथ च रिक्तकण्ठो भारहितो न भासीति निजगुच्छं स्वहस्तस्थितपुष्पपल्लवस्तबकं गले कृतान्तं न्यधत्त नितरां बलाद्विक्षेप, द्वितीया च हस्तपल्लवपुष्पगुच्छं छागमिव चकर्षेति परिहासः । अथवैवमस्माकं स्तुतिं कुर्वन् तुच्छगलो हाररहितकण्ठो न भासीति वदन्ती गले हारं परिलोपयन्ती चिक्षेपेति वा । यद्वा अस्मत्प्रमत्त्याः भवत्यौ मे प्रियतमे इति वदंस्त्वं शून्यकण्ठो न भासि तथापि त्वं वरणीय इति मान्यस्थाने हारमेव चिक्षेप । परा च तत्रैव धृत्वा परिहासमपि वा भोगार्थं चकर्षेति ज्ञेयम् । मे मे मे इति परिहासपक्षे युवामिति बिन्दुच्युतकेन एव वदन् युवा तरुणः छाग इति वा योज्यम् । अकृष्यत् लुङ् ॥ ५१ ॥

नलाय वालव्यजनं विधुन्वती दमस्य दास्या

स्वयं कथाभिर्वरपक्षसुभ्रुवः स्थिरीकृतायाः पद
युग्ममन्तरा । परेण पश्चान्निभृतं न्यधापयत् द
दर्श चादर्शतले हसन् खलः ॥ ५४ ॥

स्वयमिति । कश्चित् खल परिहासचतुर स्वयं स्वेनैव कथाभिर्ह- मदीत्यादिवाक्यैर्जिस्थिरीकृताया कथाश्रवणप्रवणीकृताया वरपक्ष- सुभ्रुवो नलपक्षीयाया सुन्दर्या वरस्य पक्षे पार्श्वे स्थिताया पादयुग्म मन्तरा चरणद्वयमध्ये परेण स्वसखेन पश्चान्निभृतं गुप्तं यथा तथा महाङ्गोनादर्शतलं दर्पणं न्यधापयत् स्थापयत । हसन् प्रतिबिम्बि तामुजघनकामसदनदर्पणे ददर्श च । भगादिदर्शनादवहास । पद्मा- दुपन्नात् दधुर्येति वा । पदयुग्म । अन्तरान्तरेण युक्तेति (पा० २ । ३ । ४ ) द्वितीया ॥ ५४ ॥

सुधोपचारोद्धुरचारुलोचना विलासनिर्वासित
धैर्य्यसम्पदः । स्मरस्य शिल्पं वरवर्गविक्रिया
विलोकक लोकमहासयन्मुहु. ॥ ५५ ॥

सुधेति । अथ कामरहितकेवलपरिहासानन्तर वरवर्गीया नलप- क्षीयराजसद्मना विक्रिया मनोविकारो याभ्यस्ताभ्या यासां सन्दर्शनेन नलपक्षीयाना कामविकारो भवति ता वराङ्गना विलोकक द्रष्टार लोक मुहुरहासयत् । तद्रूपादिदर्शनसमुत्पन्नकामविकार वरलोक दृष्ट्वा लो- कोऽहसदिति भाव । कीदृश्य । उपचारेण कटाक्षक्षेपादिना स्वानु- रागज्ञापिके प्रीतिविलोकने विषये उद्धुराण्युत्सुकानि चारूण्यतिविशा- लानि चतुराणि विलोचनानि यासाता । तथा विलासै कटाक्षविक्षे- पादिभि कृत्वा निर्वासिता त्याजिता धीराणां विलासिता धैर्य्यसम्पद् याभिस्ता । तथा स्मरस्य शिल्प कृतिरतिसुन्दर । उपचारे परिवेष- णादावुद्धुराश्च ताश्चारुनेत्राश्चेति वा । उपचाराद्धुरचारुलोचनाना विलासै त्याजिता धैर्यसम्पद्येन तस्य स्मरस्य शिल्पं विलसित कर्तृ वरवर्गविकारदर्शिन लोक मुहुरहासयदिति वा । स्वाशयज्ञापनोत्सु- कानि चारूणि नेत्राणि यासु । तथा विलासै पूर्वोक्तैरेव त्याजिता

न खल सूचक खलु प्रेक्षित निश्चित या । दुर्जनो ह्यन्यदीयमनोगत मन्यस्मै निवेदयति । लज्जानुभयवशादिमयप्यनुरक्तेति सोऽज्ञासीदिति भाव । खले इति पाठे स्वाशयद्योतनपरेङ्गितज्ञानचतुरे इति का मुक विशेषण ॥ ५७ ॥

जलं ददत्याः कलितानतेर्मुखं व्यवस्यता साहसिकेन चुम्बितुम् । पदे पतद्धारिणि मन्दपाणिना प्रतीक्षितोऽन्ये क्षणवञ्चनक्षणः ॥ ५८ ॥

जलमिति । काञ्चित् पिपासु जल पाययमानायाः पादप्रक्षालनार्थं या कस्मैचिज्जलं ददत्या, अत एव कलितानते नम्रीभूताया कस्याश्चित सुन्दर्या समीपवर्त्ति मुख जनमध्ये चुम्बितु व्यवस्यता कृतोद्यमेनात एव साहसिकेनाविचार्यकारिणा केनचित् कामुकेन पतद्धारिणि पदे मन्दपाणिना विलम्ब्याथ विरलाङ्गुलिमङ्गलजलपाणिना सता पादप्रक्षालनसलिलपाणिना वा [सता अन्यस्या चुम्बनसाक्ष्यास त्या एकपङ्क्तिनिविष्टानामन्येषा तत्र विमुखता वा ईक्षणस्य दर्शनस्य वंचनाना नेत्राणा वा वञ्चनार्थं प्रतारणार्थमनीक्षणार्थं क्षणोऽवसर प्रतीक्षिता विलम्बेन गवेषित । पानपक्षे पानकाले पदे चरणे विरलाङ्गुलिभ्य पतद्धारि यस्मिन्नेवम्भूते । पादप्रक्षालनपक्षे पतद्धारिणि पदे मन्दपाणिनेति योज्य । अन्यनिरीक्षणावसर सम्प्रतीक्ष्य तन्मुख चुचुम्बेति भाव ॥ ५८ ॥

युवानमालोक्य विदग्धशीलया स्वपाणिपाथोरुहनालनिर्म्मितः । श्लथोऽपि सख्यां परिधिः कलानिधौ दधावहो तं प्रति गाढबन्धताम् ५९॥

युवानमिति । विदग्धशीलया चतुरया कयाचित् सुन्दर्या युवान कञ्चित्तरुणमालोक्य कलाना सकलविद्याचातुर्य्याणा निधौ स्थानभूताया स्वाशयज्ञाया प्रियसख्या अथ च सखारूपे चन्द्रे स्वपाणिभ्यामेव पाथोरुहनालाभ्या कमलाभ्या निर्म्मिता रचित कण्ठाश्लेषरूप परिधि श्लथोऽपि शिथिलसम्बन्धोऽपि स नेत्रलक्ष्य युवान प्रति लक्षीकृ-

विलोक्य यूना व्यजनं विधुन्वतीमवाप्तसत्त्वेन
सुतां प्रसिष्विदे। उदस्तकराठेन मृषोष्मनाटिना
विजित्य लज्जां ददृशे तदाननम् ॥ ६२ ॥

विलोक्येति। यूना व्यजनं विधुन्वतीं चालयन्तीं सुन्दरीं अकस्माद्विलोक्य तद्दर्शनादेवाप्तसत्त्वेन आप्तसात्त्विकभावेन सता सुतं प्रसिष्विदे सात्त्विकः स्वेदः प्राप्त इत्यर्थः। आनन्दोद्रिक्तो मनोविकारः सत्त्वं तमेव प्रस्वेदं निन्होतु नाशितु मृषा अलीक ऊष्माण प्रस्वेदनिमित्तं सन्तापं नाटयत्येवशीलेनाभिनयता स्वेदापाकरणव्याजेनोदस्तकण्ठेनोर्द्ध्वीकृतमुखेन सता लज्जा विजित्य तदाननं तस्या आननं ददृशे, स्वकामपीडापापनार्थं तया अपश्यदिति भावः। प्रसिष्विदे। षोपदेशत्वात् षत्वं। प्रसिस्विदे इति पाठश्चिन्त्य ॥ ६२ ॥

स तत्कुचस्पृष्टकचेष्टिदोर्लताचलद्दलाभव्यजनानिलाकुलः। अवाप नानानलनालशृङ्खलानिबद्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

स इति। स पूर्वोक्तो युवा व्यजनं चालयन्त्यास्तस्याः पूर्वोक्तायाः स्त्रिय कुचयो स्पृष्टकाख्यमालिङ्गन चेष्टते करोत्येवंशीला दोर्लता बाहुयष्टी तस्या सम्बन्धि चलद्दलाभ चपलपर्णतुल्यं व्यजनं तालवृन्तं तस्यानिलेन कम्पनसञ्जातवायुना आकुलो विवशीकृतः। स्तनस्पर्शिभुजचालितव्यजनविलोकनमात्रसञ्जातानुरागतरल सन् नानानलानां अनेकशरकाण्डानां नालस्य मङ्कस्य नलमालाना नलदण्डानां या या शृङ्खला निबन्धनहेतुत्वात्सेपा परस्परग्रथननिर्मित पञ्जरस्तया नितरां बद्ध सङ्कुचितप्रचारीकृतः नीडोद्भव पक्षी तस्य विभ्रमं पञ्जरमध्य एव यद्विशिष्ट भ्रमणं अथ च तस्य विलास साम्य अवाप जनसम्मर्देऽप्यनुरागातिशयाद् व्यजनचालनचलद्भुजान्तर्वर्ति तत्कुचयोः परम्परयापि सस्पर्शे सांसर्गिकप्रीत्या साक्षादिव तत्कुचस्पृष्टकालिङ्गनमनुभवत् जनशङ्कया यथेष्टं चेष्टितुमशक्त कामातुर पञ्जरबद्धपक्षिनिर्बन्धमिवानुभवदिति भाव। सतायाश्च चलद्दलत्व युक्त। व्यजनचालनव्याजाच्चल

तो भुजस्यापि स्तनस्पर्शो स्पष्टकालिङ्गनत्वं युक्तम् । नलजालेति पाठः समीचीनः । नलनालेति पाठे नानाविधाः कण्टकानां नलसम्बन्धिन्यः कण्ठबन्धनकारिण्यः शृङ्खला इत्यर्थः ॥ ६३ ॥

आवच्छटा कापि कटाक्षणस्य सा तथैव भङ्गी वचनस्य काचन । यया युवभ्यामनुनाथने मिथः कृशोऽपि दूतस्य न शेषितः श्रमः ॥ ६४ ॥

आवेति । सा कापि वर्णयितुमशक्या भावोल्लसनचतुरा, कटाक्षणस्य नेत्रप्रान्तवक्रवीक्षणस्यावच्छटा भङ्गिः परम्परा वा तथैव तदुचितैव सा काचन कापि वक्रोक्त्यादिरूपा वचनभङ्गी रचनापि अभूदिति शेषः । सा का । यया कटाक्षावच्छटया वचनभङ्ग्या च कत्र्यां युवभ्यां मिथः परस्परं अनुनाथने अन्योन्यप्रार्थने विषये कृशोऽप्यल्पोऽपि दूतस्य श्र मः प्रयासो न शेषितोऽविफलीकृतः । यया कृत्वा युवभ्यां न शेषितं इति वा । आत्मनैव चेष्टाविशेषरचनाद्वारा त्वं किमेष्यसि अहं वा ग-च्छामीत्यादिप्रश्ननिश्चयाद्दूतस्यानवसर इति भावः । यूनोरिदं राज्य सू-चितं । युवतीच युवा चेत्यत्र, पुमान् स्त्रियेत्येकशेषः (पा० १।२।६७) क र्तरि तृतीया चतुर्थी वा । शेषितः । तत्करोतीति ण्यन्तात्क्तः ॥ ६४ ॥

पपौ न कश्चित् क्षणमास्यमेलितं जलस्य गण्डूषमुदीतमन्मथः । चुचुम्ब तत्र प्रतिबिम्बितं मुखं पुरः स्फुरन्त्याः स्मरकार्मुकभ्रुवः ॥ ६५ ॥

पपाविति । कश्चित्कोऽपि युवा आस्येन मुखेन मेलितं योजितं करपुटे पानार्थं धृतं जलस्य गण्डूषं पेयं जलं क्षणमात्रं न पपौ । यत उदीतमन्मथः उत्पन्नानुरागः । तथापि किमिति न पपावित्यत आह । तत्राधरसम्पृक्ते करपुटधृते जले प्रतिबिम्बितं पुरः स्फुरन्त्या विलसन्त्याः स्मरकार्मुकवद्भ्रुवौ यस्यास्तस्या मुखं चुचुम्ब । उदीतमन्मथः स न् या चुम्बितवान् । जले पीते प्रतिबिम्बाभावात् पानार्थं गृहीते जले तस्या मुखप्रतिबिम्बे प्रतिबिम्बजनितमुखचुम्बनदर्शनकौतूहलवशात्स्या यावदवस्थान तावन्न पपौ । गतायां तु प्रतिबिम्बाभावात् प

पावितिति भावः । पुरः स्फुरन्त्या जल ददन्त्या एव मुखमिति वा ॥ ६५ ॥

हरिन्मणेर्भोजनभाजनेऽर्पिते गताः प्रकोपं किल
वारयात्रिकाः । मृत न शाकैः प्रथितास्म मस्ति
वस्त्विपेटमेवं हरितेति बोधिताः ॥ ६६ ॥

हरिदिति । हरिन्मणेर्भोजनार्थं भाजने पात्रेऽर्पिते पुरः स्थापिते स
ति पत्रावलीभ्रान्त्या शाकपूर्णत्वभ्रान्त्या वा किल स्फुटं प्रकोपं नितरां रोषं प्राप्ता वारयात्रिका वरपक्षीया राजानो भोजनसम्बन्धिभिर्लोकैरि
ति बोधिताः । इति किं । इदं वो युष्मभ्यं प्रथितोऽस्मि पात्रं शाकैः प
लाशादिपूर्णपत्राणैर्वास्तुकादिभ्यामथ्यद्भिरेव वा न भृतं तद्रचितं पूर्ण
वा किन्त्वीदृशादियुक्तमपि हरिन्मणिमयं त्विषा भृतं न पत्रावली ना
पि शाका इत्येवं ज्ञापितास्तत्तुष्टा इत्यर्थः । वारयात्रिकाः । वरयात्रा प्रयोजनमेषां इत्यर्थे, प्रयोजनमिति (५।१।१०९) ठक ॥ ६६ ॥

ध्रुवं विनीतः स्मितपूर्वगाग् युवा किमप्यपृच्छद्व
विलोकयन्मुखं । स्थितां पुरःस्फाटिककुट्टिमे व
धूं तदङ्घ्रियुग्मावनिमध्यबद्धदृक् ॥ ६७ ॥

ध्रुवमिति । विनीत ध्रुवमाचारवानिव स्मितपूर्वं वाक् मुखं न वि
लोकयन अपश्यन् युवा तस्या अङ्घ्रियुग्मस्यावनिमध्ये भूमिभागे बद्ध
दृग्योजितनेत्रः सन् पुरः स्फाटिकनिबद्धभूमौ स्थिता वधू किमप्यपृच्छत् ।
अपि स्फटिककुट्टिमप्रतिबिम्बिततदङ्गदर्शनार्थमेव वीक्षोमिमेव तां स्थि
तीयकारेति भाव । अथादर्शनार्थमेव मुखं न विलोकितं । अथ शा-
कः कश्चित् ॥ ६७ ॥

अमी लसद्बाष्पमखण्डिताखिल त्रियुक्तमन्यो
न्यमभुक्तमार्द्रव । रसोत्तरं गौरमपीवरं रसाद
भुञ्जतामोदनमोदनं जनाः ॥ ६८ ॥

अमी इति । अमी जना रसात् स्वादुविशेषानुरागादोदनं अभुञ्ज
त । किम्भूत । लसद्बाष्पं विद्यमानोष्माणं ईषत्कदुष्णं । तथा अखण्डि

तथाचाखिलः सम्पूर्णश्च पाकेऽपि अविच्छिन्नं तण्डुलमिति यावत् । अभग्नमखिलं स्वरूपं यस्येति वा । तथा पाकसमये नवनीतक्षेपात् अन्योन्यं वियुक्तमसंलग्नसिक्थक । तथा अमुक्तं अत्यक्तं मार्दवं येन सुजातिशालिबीजत्वादतिकोमल । तथा रसोत्तरं स्वादुबहुल । तथा गौरं चन्द्रधवल । तथा अपीवरं जीरकादिसुजातिशालिबीजत्वात् सूक्ष्मं दीर्घतण्डुलं अत एवामोदनं हर्षहेतुं । परिमलबाहुल्याद्वा आमोदन । अखतत्वे गलद्वाष्पत्वं । मार्दवात्यागे अन्योन्यवियुक्तत्व । अत कारणागुणार्द्रवैः परस्परविरोधाभासः ॥ ६८ ॥

वयोवशास्तोकविकस्वरस्तनीं तिरस्तिरश्चुम्बति सुन्दरे दृशा । स्वयं किल स्रस्तमुरस्यमम्बरं गुरुस्तनी ह्रीणतरापराददे ॥ ६९ ॥

वय इति । सुन्दरे अन्यजने दृशा वयोवशेन निर्गच्छदागच्छच्चैव यतारुण्यपारतन्त्र्येण स्तोकमीषद्विकस्वरौ उच्छ्वसितमण्डलौ स्तनौ यस्यास्तां वयःसन्धौ वर्त्तमानां मुग्धां तिरस्तिरो वक्रं वक्रं यथा चुम्बति पश्यति सति सानुरागकटाक्षमात्रेणापि चुम्बनजन्यं सुखमनुभवति गुरुस्तनी तारुण्यभरपीवरदृढतरकुचाऽपराऽन्या स्त्री तदनुरागाद्ध्रीणतरा अधिकलज्जा सती यथास्थानस्थितमपि स्वयमात्मनैव स्रस्तं किल स्थानच्युतं जातमिवोरस्यमम्बरं हृदयावरणं बलाद्विगलितं कृत्वा पुनस्तदाच्छादनाय आददे अङ्गीचकार । मुग्धां प्रत्यनन्तरं हृदयावरणच्छादनं चकार । विदग्धस्त्रीरीतिरीदृशी । अथ च त्वमिमामल्पस्तनीं मुग्धां त्वत्सम्भोगसहनाक्षमां किं पश्यसि पक्वमालूरसमानस्तनीं त्वत्सम्भोगक्षमां मां पश्येति व्याजव्यापनायादृष्टमपि पीनघनस्तनयुगमदर्शयदिति भावः । ह्रीणतरा । नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि (पा०८।२।६१) [illegible] इति पुंवद्भावः ६९

यदादिहेतुः सुरभिः समुद्भवे भवेत्तदाज्यं सुरभि ध्रुवं ततः । वधूभिरेभ्यः प्रवितीर्य पायसं तदोघकुल्यातटसैकतं कृतम् ॥ ७० ॥

यदिति । सुरभिः कामधेनुर्गौर्वा । अथ च सौरभ्ययुक्त पदार्थ-समुद्भवे उत्पत्तिविषये यस्यादिहेतुः दुग्धादिद्वारा परम्परया मूलकारणं ततोऽथ तस्मादिव सौरभ्यधर्मयुक्तकारणादिव यदाज्यं सुरभि भवेत् तस्मात् कारणगुणा हि कार्ये समवयन्तोऽतिसुरभीजयितुमर्हन्ति । तदाज्यमेभ्यो जनेभ्यो वधूभिः प्रवितीर्य परिवेष्य पायसं क्षारपङ्कल-बहुलमन्नं तदोघकुल्यानां घृतप्रवाहरूपाणां कृत्रिमाल्पसरितां तटयोः सैकतं कृतम् । पूर्वं पायसं परिवेष्य तस्योपरि धाराप्रवाहरूपे घृते क्षिप्ते द्विधा भूय घृतमभितः स्थितं पायसं शुक्लत्वात् घृतकुल्यासैकतमिव शोभते स्मेति भावः । आत्मसौरभ्यबाहुल्यमुक्तम् । यदाज्यमित्येव पाठः ॥ ७० ॥

**यदप्यपीता वसुधालयैः सुधा तदप्यदः स्वादु ततोऽनुमीयते । अपि क्रतूपर्बुधदग्धगन्धिने स्पृहां यदस्मै दधते सुधान्धसः ॥ ७१ ॥**

यदपीति । यदपि वसुधालयैर्मनुष्यैः सुधा अमृतं न पीता तदपि तथापि सुधास्वादाज्ञानेऽपि अदः आज्यं ततोऽमृतादपि सकाशात् स्वादु मिष्टमित्यनुमीयते । यस्मात् सुधान्धसः अमृताशा देवा अपि क्रतौ उपर्बुधेन अग्निना दग्धगन्धिने विनाशितसौरभाय यस्मै घृताय स्पृहां इच्छां दधते । यागे हि हुतं घृतं देवा भुञ्जते । यद्यमृतादधिकरसं मा भविष्यत्तस्मादमृताशा अपि देवा यागानलविकृतगन्धमप्येतद्रसानुराग-वशमभ्यवहरिष्यन् अभ्यवहरन्ति तावत्तस्मादमृतादपि विकृतगन्धमपि घृतमधिकरसं । किमुत स्पष्टसौरभमिति भावः । मनुष्यैरपि सुधा यस्मान्न पीता सुधान्धसोऽपि विशिष्टायास्मै यस्मात् स्पृहयन्ति तस्मादपि च हेतोरदो घृतं सुधायाः स्वादुतरमनुमीयते । एकोऽन्यपरस्त्वा-दबुद्धिपूर्वममृतं मास्वादयत्येव । अन्ये च नित्यं प्राशामृता अपि यस्माद्घृताय स्पृहयन्ति तस्माद्धेतुद्वयादमृतादप्यधिकमेतदनुमीयत इति वा । क्रतूपर्बुधेन दग्धगन्धो गन्धस्य सोऽस्त्यस्येति कर्मधारया-दिनिः । स्पृहेरीप्सितः (पा० १ । ४ । ३६) इति सम्प्रदानत्वम् ॥ ७१ ॥

**पयोधि नो हीनिहुतं मदिङ्गितं प्रतीत्य या ना ·**

द्रुतवत्यसावितिः। लुनाति यूनः स्म धियं कियद्
द्रुता निवृत्य बालादरदर्शनेपुणा ॥ ७२ ॥

असाधीति। असौ बाला स्त्रीनिकृत बालत्वाल्लज्जावशादविस्पष्ट इति च हेतोर्भावसूचकं मदिङ्गितं भ्रूविक्षेपादि मम चेष्टितं नो असाधि अज्ञासीत् किंवा। अथवा प्रतीत्य ज्ञात्वा ननु रागाज्ज्ञातवती अज्ञातवतीऽस्येयरूपा पुन पुनर्जायमाना यूनो धियं संशयबुद्धिं कियन्तं मार्गं गतापि बाला निवृत्य परावृत्य आदरदर्शनं सादरकटाक्षविलोकनं तद्रूपेणोपुणा लुनाति स्म चिच्छेद। मदिङ्गितज्ञानपुरःसरं स्वानुरागं प्रकटीचकारेत्यर्थः। सादृग्विलोकनात् मदिङ्गितं ज्ञात्वा इयमप्यनुरक्तेति युवा निश्चिकायेति भाव। कियद्द्रुता। द्वितीयाश्रितेति ( पा० २। १। २४ ) समास। कियद्यथातथागतेति क्रियाविशेषण वा ॥ ७२ ॥

न राजिकाराद्धमभोजि तत्र कैर्मुखेन सीत्कार
कृता दधद्दधि। धुतोत्तमाङ्गैः कटुभावपाटवाद
काण्डकण्डूयितमूर्द्धतालुभिः ॥ ७३ ॥

नेति। युग्म। तत्र भीमगेहे भोजनावसरे वा राजिकाभीराद्ध साधितं दधि दधत् दधिमिश्रितं व्यञ्जनं तैरेवातिशयात् सीत्कारकृता मुखेन कैर्जन्यजनैर्नाभाजि अपि तु सर्वैरपि भुक्तं। किम्भूतैः। कटुभावपाटवात् कटुत्वातिशयात् धुतोत्तमाङ्गैः कम्पितशिरोभिः। तथा भोजनकाले शिर कण्डूयनस्य स्मार्तैर्यवनैर्निषिद्धत्वादकाण्डे अकाले कण्डूयिते मूर्द्धतालुनी यै तैः। मुखस्यैव भोजनसाधनत्वे सिद्धेऽपि सीत्कारादिविशिष्टत्वद्योतनार्थं मुखेनेत्युक्तं। राजिकाराद्धमाजिगामिव जातिः ॥ ७३ ॥

धियेगिदाहाय कटूभयत्विपन्तुपारभानोरिव स
ष्टडमाह्नम्। श्रित मृदु मागध दाहदायि तत्
सतः सुहृत्पूर्वमिवाहितस्ततः ॥ ७४ ॥

वियोगीति । वियोगिना स्त्रीपुंसां दाहाय मोहार्थं कट्भवन्त्यरित्यर्थो दोषयो यस्मात्तद्वदीतित्तुषारभानोश्चन्द्रस्याहृत खण्डमिव सित ग्येत तथा प्राक् प्रथमं मृदु प्रथमस्पर्शसमये कोमल अथ पश्चान्मुखप्रक्षेपानन्तर तालुजिह्वादेस्तैक्ष्ण्यातिशयाद्दाहदायि दाहकारि आदृतं आनीत तद्राजिकाराद्गमभोजीति पूर्वेणान्वयः । तुषारभानोः सकाशादाहृतमिति वा । क इव । खल इव । किम्भूतः । पूर्वं सुहृदाचातरमणीयस्ततोऽनन्तरमहितो वैरी । रायी इति कान्यकुब्जभाषया। मोहरया इति दाक्षिणात्यभाषया राजिकाना नाम ॥ ७४ ॥

नवौ युवानौ निजभावगोपिनावभूमिषु प्राग्विहितभ्रमिक्रमम् । दृशोर्विधत्तः स्म यदृच्छया किल त्रिभागमन्योन्यमुखे पुनः पुनः ॥ ७५ ॥

नवाविति । नव नवौ वर्तमानौ नवावप्रगल्भौ अत एव निजभावगोपिनौ स्वानुरागापह्नवपरौ कौचिद् युवानौ अभूमिषु लोकव्यवहारायोग्येषु स्वयोग्येषु वा अनुचितेषु वा वस्तुषु प्राक् पूर्वं विहितः कृतः क्रमेनिरर्थकभ्रमणस्य क्रमः परम्परा यत्र येन वा एवम्भूतं दृशोर्नेत्रयोस्त्रिभाग तृतीयांशरूप कटाक्ष अन्योन्यमुखे पुनः पुनः विधत्त स्म चक्रतुः यदृच्छया किल । अन्यविलोकनवत स्वेच्छामात्रेण क्रमसम्प्राप्तमन्योन्यमुखविलोकन कुरुत न त्वनुरागेणेति लोकप्रतीतिर्यथा स्यादेवं वस्त्वन्तरविलोकनव्याजेनान्योन्यमुखे कटाक्षैर्दधाविचक्राते इति भाव । त्रिभागमिति पूर्ववत् समर्थनीयम् ॥ ७५ ॥

व्यधुस्तमां ते मृगमाससाधितं रसादशित्वा मृदु तेमनं मनः । निशाधवोरसङ्गकुरङ्गजैरदः पलैः सपीयूषजलैः किमश्रपि ॥ ७६ ॥

व्यधुरिति । ते जन्यजना मृगमांसे साधित राद्ध संस्कृत मृदु तेमनाख्य व्यञ्जनविशेष रसात् प्रीत्याऽशित्वा भुक्त्वा इति मनो व्यधुस्तमां नितरां चक्रु । इति किं । अद तेमन निशाधवश्चन्द्रः तस्योरसङ्गे वर्तमान कुरङ्गो हरिणस्तस्माज्जातैः सपीयूषजले अमृतरूपैः जलैः

मद वर्त्तमानैः पलैर्मांसैरपि किं घृपादि किं । रसातिशयान्मनमा शय तार्कितवन्तस्ते इत्यर्थः । तेमनस्यातितरा स्वादुत्वमुक्तम् । श्रपि । श्रा पाके इत्यस्मात् कर्मणि चिणि घटादित्वान्मित्वाद्ध्रस्वः ॥ ७६ ॥

परस्पराकूतजदूतकृत्ययोरनङ्गमाराद्धुमपि क्षणं प्रति । निमेषणेनैव कियच्चिरायुषा जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥

परस्परेति । परस्परस्याकूतात् चेष्टाविशेषादेव जात दूतकार्यं समागमस्वीकृतिर्ययोः कयोश्चिद्यूनोः स्त्रीपुंसयोरनङ्गमाराद्धुं सुरतं कर्त्तुं यत्क्षण समयस्तं प्रति उद्दिश्य सदा क्रियमाणनियमापेक्षया कियच्चिरायुषा कियच्चिरं किञ्चिदधिककालमायुर्वर्त्तमानता यस्यैवम्भूतेन कियच्चिरकालस्थायिना निमेषेणैवाक्षिपक्ष्मसङ्कोचेनैव कर्त्रा करणेन वा जनेषु मध्ये बहुजनेषु वर्त्तमानेषु सत्सु अपि निर्णयः निश्चय उदपादि कृत जातो वा । कदा सम्भोग इति इङ्गितेन पृष्टे सति नेत्रे निमील्य किञ्चित्काल स्थित्वा जने निद्राणे सति आगन्तव्यमिति रात्रिः सङ्केतसमय इति निरणायीति भाव । उदपादि । चिण्तेपद इति (पा० ३। १। ६०) कर्त्तरि कर्मणि वा चिण् ॥ ६७ ॥

अहर्निशा वेति रताय पृच्छति क्रमोष्णशीता न्करार्पणाद्विटे । ह्रिया विदग्धा किल तन्निषेधिनी न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलीम् ॥७८॥

अहरिति । विटे कामुके रताय आवयोः सम्भोग कर्त्तुं अहर्निशा वेति उष्णकरघर्मार्पणवित्तं दिन वा शीतांशुकरशैत्योपलक्षिता रात्रिर्वा समय इति क्रमेणोष्णशीतयोरंशयोरुपरि करार्पणादेव चेष्टितात् कामपि पृच्छति सति विदग्धा चतुरा तदभिप्रायज्ञा ह्रियोपलक्षिता अनक्षरमिङ्गितेनैव तन्निषेधिनी तयोर्दिननिशयोर्निषेध कुर्वाणा सन्ध्यावन्मधुरे रमणीयेऽधरे स्वोष्ठे अङ्गुलीं न्यधत्तान्वापयत् । अनभिमततयैव निषेधस्य. स्त्रियो नाम किमथं वाच्यमित्याद्यभिधायाधरे ऽङ्गुली स्थापयतीति जातिः । किम अभिहं । लोकस्य चैवमेव प्रतीति-

मोहमूहिरे । तथा विदग्धैः परिकर्म्मनिर्म्मितं
विचित्रमेते परिहस्य भोजिताः ॥ ८१ ॥

यथेति । वारयात्रिका यथा येन प्रकारेणामिषे मांसे अनामिषस्या- मिषाद्यन्नस्य भ्रमं जग्मुः, यथा येन प्रकारेण निरामिषे मांसलेशव- र्जितेऽपि तेमनादौ रूपस्वादादिभिः आमिषमोहं मांसभ्रमं ऊहिरे तर्कितवन्तः तथा तेन प्रकारेण विदग्धैर्नितरां कुशलैः सूपकारैः कर्तृ- भिः एते वारयात्रिकाः परिकर्म्मभिः साधनद्रव्यैर्निर्म्मितं विचित्रमन्नं प- रिहस्य पूर्वोक्तभ्रमनिमित्तं परिहासं भोजिताः ॥ ८१ ॥

नखेन कृत्वाधरसन्निभां निभाद् युवा मृदुव्यञ्ज-
नमांसफालिका । ददंश दन्तैः प्रशशंस तद्रसं
विहस्य पश्यन् परिवेषिकाधरं ॥ ८२ ॥

नखेनेति । कश्चिद् युवा मृदुं व्यञ्जनमांसस्य फालिकां खण्डं न- खेन कृत्वा निभात् व्याजात् अधरसन्निभां ओष्ठाकारां द्विधा कृत्वा पूर्वमधरसदृशीमपि नखेन द्विधा कृत्वा, मध्ये नखेन रेखाकरणाङ्कि- तां मध्यस्थितरेखाधरसदृशीं वा कृत्वा दन्तैर्ददंश परिवेषिकाधरं मां- सव्यञ्जनदायिन्याः अधरं पश्यन् विहस्यैतादृशी स्वादुतरा मांसफालि- का कदापि नोपभुक्तेत्यादिप्रकारैस्तस्याः फालिकायाः सुस्वादुतां प्र- शशंस स्तावीच्च । स्वादुतरं त्वदीयाधरमेव दशामीति इत्थमस्मिन्मां- सखण्डे तदधरतामारोपयन् स्वाशयं तामज्ञापयदिति भावः ॥ ८२ ॥

अनेकसंयोजनया तथा कृतैर्निकृत्य निष्पिष्य
च तादृगर्जनात् । अमी कृताकालिकवस्तुवि-
स्मयं जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८३ ॥

अनेकेति । अमी जना वारयात्रिका बहु मूलकन्दपुष्पपत्रफलादि- रूपं शाकादिव्यञ्जनमभ्यवाहरन् बुभुजिरे । किं विधं । अनेकेषां मा-

मा।विषमरीच्यादिद्रव्याणां संयोजनया सम्बन्धेन तथा कृते वास्त्वन्तर-स्येव गन्धरसादिकरणात् सादृश्यादिनिर्म्माणात् मद्यं निष्पत्त्य नितरां कर्त्तितस्था निष्पिष्य चूर्णीकृत्य चाकारसाम्यादिना सादृश्यकरणात् यस्य न्तरमादृश्यस्य सम्पादनात् रूपान्तरेण गन्धादिकारणाद्धेतोः कृत आ-कालिकेऽसमयप्रभवे वस्तुनि विस्मय आश्चर्यं येन इति क्रियाविशेष-णं वा। तथा आकृते आकारादिति वा। फलादि कर्त्तितस्य राजि-काद्यपादिसंयोगाद्द्रव्यान्तरोत्पत्तिस्तथा रूपान्तरापत्तिश्च। गोधूमादि-पिष्टं शर्करासम्बन्धाद्रसान्तरोत्पत्तिरित्यादिवैदग्ध्याद् भोक्तॄणां विस्मयो-ऽभिवासनविशेषाच्चाकालिकत्वमपि युक्तं ॥ ८३ ॥

पिपासुरस्मीति विबोधिता मुखं निरीक्ष्य बाला सुहितेन वारिणा। पुनः करे कर्त्तुमना गलन्ति-कां हसात् सखीनां सहसा न्यवर्त्तत ॥ ८४ ॥

पिपासुरिति। वारिणा अम्बुना सुहितेन तृप्तेन विटेन मुखं नि-रीक्ष्याह पिपासुः पातुमिच्छुरसि इति विबोधिता विज्ञापिता बाला ऽस्पृष्टवक्रोक्त्याद्यभिप्रायविशेषा अप्रौढा पुनरपि करे गलन्तिकां पात्र सुवर्णभाजनं कर्त्तुमना सती तदाशयज्ञानातिचतुराणां सखीनां ह-साद्धास्याद्धेतोः सहसा झटिति सुप्तप्रबुद्ध इव जलपायनारम्भसम्भ्रमा-न्न्यवर्त्तत परावृत्ता। सहसा सस्मिता सतीति वा। कर्म्मान्तरपरित्या-गेन सामान्येन पिपासुरस्मीति यद्वचनमेतदीयाधर पिपासुरस्तीत्येवं-विधाशयमिव न जानातीति सखीभिः कृताद्धास्यादियमपि तदाशयं ज्ञा-त्वा गलन्तिका पश्चान्नीत्वापपदिति भावः। पूरणगुणेत्यादिना ( पा० २।२।११) सुहितार्थयोगे षष्ठीसमासनिषेधादेव वारिणेति तृतीया ॥ ८४

युवा समादित्सुरमत्रगं पुनः विलोक्य तत्रैणदृ-शोऽनुबिम्बनम्। चकार तन्नीविनिवेशितं करं बभूव तच्च स्फुटकण्टकोत्करम् ॥ ८५ ॥

युवेति । अमत्रग पात्रस्य घृतं समादित्सुर्ग्रहीतुकामः कश्चित् युवा तत्र घृते एणदृशः परस्याया मृगाक्ष्या परिवेशिकाया अनु बिम्बन प्रतिबिम्ब विलोक्य कर स्वहस्त तस्य बिम्बस्य नीविषु भङ्गीनिग्रहना- भिचुम्बितवस्त्रविच्छित्तिषु निवेशनशीला चकार तत्रास्थापयदित्यर्थं । तथ तस्या प्रतिबिम्ब स्फुटा कण्टकोत्करा यस्मिन सरोमाञ्चमभूदित्यर्थः । स्वप्रतिबिम्बनीविग्रन्थिमोचनार्थं नाभिनीविमर्दने स्पर्शकारि- णस्तस्करस्य चेष्टा दृष्ट्वा तस्य स्वसम्भोगवासनां ज्ञात्वा तदानीमेतस्मि- न्ननुरागाद्रोमाञ्चिताभून् तादृश्याश्च प्रतिबिम्बितत्वात् प्रतिबिम्बमपि रोमाञ्चितमभूदिति भाव । द्वयोरप्यनुरागस्तुल्यो जात इति भावः ॥८५॥

प्रलेहजस्नेहकृतानुबिम्बनां चुचुम्ब कोऽपि श्रि-
तभोजनस्थलः । मुहुः परिस्पृश्य कराङ्गुलीमु-
खैस्ततोऽनुरक्तैः स्वमवापितैर्मुखं ॥ ८६ ॥

प्रलेहेति । कोऽपि विट लिह्यत इति लेहः प्रकृष्टो लेहः प्रलेहः सूरणादिद्रव्ययुक्त आर्द्रकादिसंस्कृततक्रादिनिर्मितो द्रवद्रव्यविशेष तस्माज्जात स्नेहे तैलादौ कृतमनुबिम्बन यया कृत स्थिमनुबिम्बन यस्या वा एवंविधां परस्या सुन्दरीं, श्रित भोजनस्थलं येन एवंविध सन् प्रतिबिम्बितां तामेव कराङ्गुलीमुखैः कराङ्गुल्यग्रैर्मुहु परिस्पृश्य स्पृष्ट्वा चुचुम्ब । कीदृशैः । स्वमुख ममथापितैस्तथा रक्तैः स्वभावात् तथाप्य तस्य स्पर्शाद्वा ततोऽनु तस्मादनुरागात् किं । अङ्गुल्यग्रे रक्त- त्वादनुरागाचुम्बिना । किमुत्प्रेक्षा । रिक्तैरिति पाठे मुहुः परिस्पृश्य ततोऽनु तदनन्तरमेव रिक्तैः प्रलेहशून्यैरेव स्वमुखं प्रापितैः कराङ्गुली मुखैश्चुचुम्बेत्यर्थः । प्रलेहेति । वटकादिनिक्षेपात् तैलादिबिन्दवस्तर- न्ति तत्र जात प्रतिमुख प्रतिबिम्बमङ्गुल्या स्पृशति तत्र प्रलेहचलनात् प्रतिबिम्बभङ्गभयात् अङ्गुल्यग्रैर्लेहनव्याजात् परम्परया चुम्बितवानिति भाव । ता प्रति स्वानुरागमदर्शयदिति भाव ॥ ८६ ॥

अराधि यन्मीनमृगाजपक्षिजैः पलैर्मृदु स्वादु

सुगन्धि तेमनम् । अशाकि लोकैः कुत एव जेमितुं न तत्तु सङ्ख्यातुमपि स्म शक्यते ॥ ८७॥

अराधीति । मीनेभ्यः मत्स्येभ्यः पिच्छकादिमृगेभ्यः अजेभ्यः छागेभ्यः पत्रित्रिभिस्तित्तिरलावकादिभक्ष्यपक्षिभिश्च जातैः पक्षैर्मांसैर्मृदु स्वादु सुगन्धि पाकेन परिमलविशेषयुक्तञ्च यत्तेमनाख्यं व्यञ्जनं सूपकारैरराधि साधितं तद्बाहुल्याल्लोकैः सङ्ख्यातुमपि न शक्यते स्म । जेमितुं तु पुनः कुत एव अशाकि, अपितु भोक्तुं शक्यं नाभूदेव । जेमितु । जिमु अदने ॥ ८७ ॥

कृतार्थनश्चाटुभिरिङ्गितैः परा परास्त यः किञ्चनकुञ्चितभ्रुवा । क्षिपन्मुखे भोजनलीलयाङ्गुलीः पुनः प्रसन्नाननयाऽन्वकम्पि सः ॥ ८८ ॥

कृतेति । किञ्चन किञ्चित्कुञ्चिते वक्रीकृत्योत्क्षिप्ते भ्रुवौ यया, कयाचित्तदिङ्गितैरङ्गुलिवक्त्रादिचेष्टितैः चाटुभिः प्रियवचनैश्च कृताऽर्थनः सम्भोगप्रार्थना येन तथाविधो यो विटः पुरा पूर्वं परास्त निरस्तः प्रसन्नाननया स्मेरदृष्टिव्यञ्जितप्रसादमुख्या तया भोजनलीलया ग्रासमिषेण मुखेऽङ्गुलीः क्षिपन् अङ्गुलीस्पर्शेन सा प्रतिदीनत्वं सूचयन् स पुनरन्वकम्पि अनुगृहीत तद्दैन्यं दृष्ट्वा सम्भोगस्तयाऽनुमत इति भाव ८८

अकारि नीहारनिभं प्रभञ्जनाद्धूपि यच्चागरुसारदारुभिः । निपीय भृङ्गारकसङ्गि तच्च तैरवापि वारि प्रतिवारमीदृशम् ॥ ८९ ॥

अकारीति । यद्वारि प्रभञ्जनात् व्यजनादिवायुसङ्गाद्धेतोः नीहारनिभं तुषारतुल्यमकारि यच्च अगरुसारस्य कृष्णागुरोर्दारुभिरधूपि धूपितं तद्भृङ्गारके सुवर्णपानपात्रे सङ्गः स्थितिर्यस्यास्तीति तद्भृङ्गारि । तत्र भोजनावसरे भोजनगृहे वा निपीय नितरां पीत्वा तैर्जलं प्रतिवारं पुनः पुनरीदृशं अत्यन्तसाधुप्रकारेणावापि प्राप्तावि । प्रतिवारं निपीयेति वा । अगरुरित्येव पाठः । भृङ्गारः कनकालुकेत्यमरः । स्वल्पत्वे कन् ॥८९॥

त्वया विधातर्यदकारि चामृतं कृतञ्च यज्जीवनमम्बु साधु तत् । वृथेदमारम्भि तु सर्वतोमुखं तथाऽभितः कर्तुमिदंपिबस्तव ॥ ९० ॥

जलवस्तु नर्मेणाह । त्वयेति । हे विधातः त्वया च यदम्बु उदकं च यदमृतमकारि यच्च जीवनसंज्ञमकारि तद्द्वयमपि साधु उचितमेव कृतम् । 'अमृततुल्यरसत्वात्प्राणधारणहेतुत्वाच्चान्वर्थत्वाद्युक्तमेवैतत् तस्य संज्ञाद्वयमित्यर्थः । तु पुनरिदं सर्वतोमुखसंज्ञं वृथाऽऽरम्भि कृतं अन्वर्थत्वाभावान्निरर्थकमेतत् कृतं । यस्मादिदं जलं पिबति इदंपिबोऽस्मदादिपुरुषस्तथा सर्वतः सर्वदिक्षु मुखानि यस्यैवंविधस्तव कर्तुमुचितः अस्मदादेर्बहूनि मुखानि सर्वेष्वप्यवयवेषु स्युः चेदकरिष्यत् तर्हि अस्मदादिभिरिदमा तृप्तिं पातुमशक्यत् न त्वेकेन मुखेनेति । नितरां शैत्यमाधुर्यादिगुणयुक्तमेतदिति भावः । तौ तुल्ययोगस्यद्योतकौ । पयः कीलालममृतं जीवनं भुवनं वनम् । पुष्करं सर्वतोमुखमित्यमरः । इदंपिबः । पाघ्राध्मादिना (पा०३।१।१३७) शः ॥ ९० ॥

सरोजकोशाभिनयेन पाणिना स्थितेऽपि कूरे मुहुरेव याचते । सखि त्वमस्मै वितर त्वमित्युभे मिथो न वादाद्ददतुः किलौदनम् ॥ ९१ ॥

सरोजेति । उभे सख्यौ इति मिथो वादाद् द्वैमत्यात् किलौदनं न ददतुः किलेति व्याजे । इति किं । हे सखि त्वं पात्रमध्ये कूरे ओदने स्थितेऽपि सरोजकोशवदभिनय आकारो यस्य तेन वराङ्गप्रार्थनासूचकेन पाणिना कूरं याचतेऽस्मै कामुकाय कूरं वितर देहि । द्वितीया वदति त्वं वितरेति । विवदमाने कूरदानव्याजेन स्मरार्थिनस्तस्य वराङ्गदानेऽन्योन्यं प्रवर्तयन्त्योर्मध्ये ऽन्योन्य लज्जावशादेकतरा रिरंसुरपि नाङ्गीचकारेति भावः । अनुवादादिति पाठे उक्तरूपादनुवादादुभे ऽपि स्वस्वपार्श्वे ओदनं किल न ददतुरित्यर्थः । ओदनदानव्याजेन स्मरार्थिने दानमङ्गीचक्रुरिति भावः ॥ ९१ ॥

इयं कियच्चारुकुचेति पश्यते पयःप्रदाया हृदयं समावृतम् । ध्रुवं मनोज्ञा व्यतरद्यदुत्तरं मिषेण भृङ्गारधृतेः करद्वयी ॥ ९२ ॥

इयमिति । पयःप्रदायाः समावृत वस्त्राच्छन्नमपि हृदयं इति विचार्य पश्यते पृच्छते कामुकाय ध्रुवं निश्चितं मनोज्ञा श्रेष्ठ च पराङ्मुखैव तस्याः करद्वयी भृङ्गारस्य धृतेर्धारणस्य मिषेण यद्यस्मात्तदुत्तरं तदीयप्रश्नस्य प्रतिवचनं व्यतरत् ददौ । इति किं । इयं स्त्री कियन्तौ किम्प्रमाणौ चारू सुन्दरौ च कुचौ यस्याः सेति । सुवर्णकलशीपरिमाणौ सुवर्णवर्णौ चैतस्याः कुचाविति तं प्रत्यसूचयदिति भावः । उभावपि मिथोऽनुरागादन्योन्यविलोकनपरावेव तस्थतुरिति भावः । अन्योन्यमभिप्रायज्ञः केनचिन्मिषेण प्रश्नोत्तरं ददाति ॥ ९२ ॥

अमीभिराकण्ठमभोजि तद्गृहे तुषारधारामृदितेव शर्करा । इयं द्विषद्बष्कयणीपयःस्रुतं सुधाहृदात् पङ्कमिवोद्धृतं दधि ॥ ९३ ॥

अमीभिरिति । अमीभिर्जन्यजनैस्तद्गृहे भीमगृहे आकण्ठं आतितृप्तं यथा शर्कराभोजि भुक्ता । तुषारधारया हिमोदकेन मृदितेव मिश्रितेव । तथा इयं द्विषन्त्या अश्वघ्नेरिव्या महिष्या बष्कयिण्या चिरप्रसूताया पयो दुग्धं तस्मात् स्रुतं जातं दुग्धपरिणामभूतं दध्यप्यभोजि । सुधाहृदादमृतस्यागाधजलाशयादुद्धृतं पङ्कमिवेत्युत्प्रेक्षा । शर्कराऽतिसिता शुभ्रा च दध्यप्यमृतवत् स्वादु शुभ्रं घनं चेति भावः । तद्गृहेऽमीभिर्विशिष्टं दध्यभोजि । तुषारधारया मृदिता अल्पकरकत्वं प्रापिता शर्करेव सुधाहृदादुद्धृतं पङ्कमिवेति दधिविषयमेवोत्प्रेक्षाद्वयं वा । दध्नः शैत्यं शौक्ल्यं स्वादुत्वं घनत्वं च सूचितं । एतेन पय शृतमिति पाठे शर्करा अभोजि । शृतं पक्वं तप्तं महिषीपयश्चाभोजि दधि चाभोजि इति सम्बन्धः । चिरप्रसूता बष्कयिणीत्यमरः । महिष्या दधि स्वादुतरं भवति । द्विषःशतुर्वेति वचनात् इयं द्विषन्तीति द्वितीयया द्विती

श्रितेति (पा० २।१।२४) योगविभागात् समासः । द्विपञ्चकपिणी । पुंवत्कर्मधारयादिना (पा० ६।३।४२) पुंवद्भावः । श्रुत । श्रृत पाके (पा० ६।१।२७) इति साधु ॥ ८३ ॥

तदन्तरन्तः सुषिरस्य बिन्दुभिः करम्बितं कल्पयता जगत्कृता । इतस्ततः स्पष्टमचारि मायिना निरीक्ष्य तृष्णाचलजिह्वतां घृता ॥ ९४ ॥

तदन्तरिति । तद्दधि निरीक्ष्य सातिशयात् तृष्णाया ग्रासवासनया चला चञ्चला अधरप्रान्तलेहिनी गलज्जला जिह्वा यस्य तस्य भावस्तत्ता तां वृता बिभ्रता, तथा अन्तरन्तर्मध्ये मध्ये सुषिरस्य छिद्रस्य बिन्दुभि राहोः शिर इतिवद्भेदोपचाराच्च छिद्ररूपैर्बिन्दुभिः करम्बितं मिश्रितं व्याप्तं तद्दधि कल्पयता कुर्वता जगत्कृता इतस्ततः सर्वप्रदेशेभ्यस्तद्दधि स्पष्टमचारि प्रकटमपहृतं, स्पष्टं सम्भावनायां अपहृतमित्यर्थः । अपहृतं कथं न दृष्टमित्यत आह । यतो मायिना अदृश्यतयाऽपहृतमित्यर्थः । सफेनक्षारस्य दध्याकारेण परिणामे दधनि छिद्राणि दृश्यन्ते । ब्रह्मणा अदृश्यतया दधनि वर्तमानः सारो भोक्तुमिच्छया गृहीतः, अन्यथा छिद्राणि कथं दृश्यन्ते । अन्यथा ग्रहीतुं न शक्यते इति तत्रोत्प्रेक्षा । येन निर्मितं तस्य ब्रह्मणोऽपि जिह्वा चाञ्चल्यनिर्माणात् स्वादुतमं दधीति ध्वन्यते ॥ ८४ ॥

ददामि मे तन्न रुचेर्यदास्पदं न यत्र रागः सितयापि किं तया । इतीरिणे बिम्बफलं पलञ्चलाददायि बिम्बाधरयारुचञ्च तत् ॥ ९५ ॥

ददामीति । बिम्बफलतुल्योऽधरो यस्यास्तया सुन्दर्या पलञ्चालात् सामर्थ्याज्जातं बिम्बपक्वफलं परिवेषितं मांसलवत्सेव बिम्बाकारं कृत्वा इतीरिणेऽधरचुम्बनकामनया भाषमाणाय विटाय प्रदायि दत्तम् । तत् बिम्बाकारं फलं मम्मा धरमधु स्वादिमनित्यर्थः । मदभिप्रायः ज्ञात्वा लोकापुरतः पक्वरूपबिम्बव्याजाभिज्ञाधरदानमेव प्रति-

ज्ञातमिति सन्तुष्टो ऽभूदिति भाव । इति किं । हे बिम्बोष्ठि यद्रुचेः प्रीतरास्पदं यत्र वस्तुनि मम प्रीति तन्मे मह्यं त्वं न ददासि । यद्वा यद्रुचेरास्पदं न भवति तन्मह्यं न ददासि । तथा मम यस्मा राग प्रातिर्नास्ति तया सितयापि शर्करयापि किं अपि तु न किञ्चित् प्रयोजन । माधुर्य्यमर्य्यादयापि शर्करयापि प्रयोजनं नास्त्यभिलाषाभावात्। अन्येन नास्तीति किं वाच्यमित्यपिना सूच्यते । अथ च यत्र लौहित्य नास्ति तया श्वेतया प्रकरणाच्छर्करयापि किं । तस्मान्मे यत्रानुरागो रक्तिमकान्तिश्च तन्मह्यं देहीति । कृत तयेति पाठे तथा पूर्व्वता । फलञ्चनादिति पाठे फलदानप्रसङ्ग्याजात । बिम्बाकाराऽधरा यस्या इति सप्तम्युपमाने॰त्यादिना ( पा० २ । २ । २४ । वा० ५ ) नोत्तरपदलोपी समास । अञ्चत युपादिस्याद्यङ् ( पा० ३ । १ । ५५ ) द्युद्भ्यो लुङीति ( पा० १ । ३ । ९१ ) परस्मैपदम् । ८५ ॥

सम ययोरिङ्गितवान् वयस्ययोस्तयोर्विहायोप-
हृतप्रतीङ्गिता । अकारि नाकूतमवारि सा यया
विदग्धयाऽराञ्जि तयैव भाववित् ॥ ८६ ॥

सममिति । यो ययोर्वयस्ययो सख्योर्विषयं स्वाभिप्रायज्ञापनार्थं सम युगपत् इङ्गितवान् भ्रूक्षेपादिचेष्टितवान् अभूत् । तयोर्मध्ये उपहृत कृत प्रतीङ्गित तदभिलाषस्वीकारसूचकप्रतिचेष्टितं यया तामेका विहाय स्थित सन् तयैवाऽराञ्जि द्वितीययैव प्रत्यनुरञ्जित । तथा अन्या । यया चतुरया विदग्धया आकूत प्रतीङ्गितं नाकारि प्रतीङ्गितं कुर्वाणा सा सखी जनसमक्षमिङ्गितकरणमयुक्तमित्यवारि निषिद्धा । यतो भाववित् वैदग्ध्यस्य वेत्ता । द्वितीयया तदिङ्गितदर्शनात्स्वस्मिन्ननुरागाद्रञ्जित्वा प्रतीङ्गितं नाकरोत् जनसमक्षमेतदनुचितमिति व्याजेन मत्प्रियं प्रतीयमिङ्गितं किमिति करोतीति सापत्न्येर्ष्यया च ता वारितवतीति तस्या वैदग्ध्य । स च तदीयगुणभावज्ञानाद्भाववित् सहचरीसमक्षमिङ्गितं कुर्वाणा इयमपि चतुरा । द्वितीया इङ्गितं नाकरोताञ्च न्यवारयदिति इयमेव चतुरा मय्यनुरक्ता चेति स चतुरो द्वि

एषटकमध्यस्थाद् व्यञ्जनान्तर रेजे इत्यर्थः । विशिष्टया श्रियोपलक्षिते क्षीरवटैरलङ्कृत सत् रेजे इति वा । किमिव अश्नतां भुञ्जानानां तेषां भुजिक्रियाविधेः भोजनविधेः समाप्ति । वटकदर्शनमात्रेणान्यत्र तस्य त्यागाद् व्यञ्जनान्तरविरतेः सम्बन्धिन्या लिप्या समाप्तिसूचिकया छकाररूपपुष्पिकारूपया आलयीकृत आश्रयीकृत दलोदर अन्नपात्रादिपत्र मध्यमिथेत्युपमोत्प्रेक्षा वा । वर्त्तुलया वृत्तया समाप्तिलिप्या श्रित । पाकेन बालकेनार्पितया गैरिकश्रियाङ्कनं दलोदरमिति वा योज्यं । पोत पाकोऽर्भक इत्यमरः । ग्रन्थलेखनसमाप्तिपत्रे समाप्तिसूचक छकारादिवर्त्तुलाक्षर दाक्षिणात्यैः क्रियते गैरिकचिह्नञ्च क्रियते, अत्र त्वाजनसमाप्तिसूचक क्षीरवटकादि इति ॥ ९८ ॥

चुचुम्ब नोर्वीवलयोर्वशीं परः पुरोऽधिपात्रि-
प्रतिबिम्बितां विटः । पुनः पुनः पानकपानकै-
तवाच्चकार तच्चुम्बनचाटुकृतान्यपि ॥ ९९ ॥

चुचुम्बेति । कश्चिद्विटः पुरोऽग्रे अधिपात्रि पानकसम्पूर्णे सुवर्णादिपानपात्रे प्रतिबिम्बितां उर्वीवलय उर्वशीमिवातिसुन्दरीं काञ्चित्पर केवलं चुचुम्बेति न किन्तु पुनः पानकस्य द्राक्षादिनातिमधुरद्रवप्रधानपेयद्रव्यरूपस्य पानं तस्य कैतवात् प्रतिबिम्बितायाः तस्याः चुम्बनस्य सम्बन्धीनि चाटुकृतानि चुम्बितानि पानकानुकरणशब्दस्तस्य करणान्युच्चारणानि तान्यपि चकार । चुम्बनादिना तस्यां स्वानुराग प्रकटीचकारेति भाव । कल्लोलीयवरी पात्री पानपात्रकमुच्यत इति स्वामी । सप्तम्यर्थेऽव्ययीभाव । चाटुकृतानि नपुंसके भावे क्तः ॥ ९९ ॥

घनैरमीषां परिवेषकैर्जनैरवापि वर्षोपलगोल-
कावली । चलद्भुजाभूषणरत्नरोचिषा सुरेन्द्र-
चापैः श्रितचान्द्रसौरभा ॥ १०० ॥

घनैरिति । घनैर्बहुभि परिवेषकैर्भोज्यव्यञ्जनदायिभिर्जनैरत्र चै तैरे, व घनैर्मेघैरमीषां भुञ्जानानां राज्ञां कृते वर्षोपला. करकास्तत्तुल्यानां

मेलाकर्पूरशर्करालवङ्गतण्डुलपिष्टरचितानां गोलकानामतिवृत्तानां लड्डुकाविशेषाणामथ च करकारूपाणां गोलकानामावलीपङ्क्तिरवर्षि वितीर्णा वृष्टा च । कीदृशैः । परिवेषणकर्मवशाच्चलन्त्यो या भुजास्तासां भूषणेषु रत्नानि तेषां रोचिषा कान्त्या कृत्वा धृतमिन्द्रचापं यैर्नानाप्रकारकान्तिभिरित्यर्थः । अथ च तदैवेन्द्रचापो येषु । कीदृशी । श्रितं चान्द्रं कर्पूरसम्बन्धि सौरभं सौगन्ध्यं यया । अथ च चन्द्र एव चान्द्रः सूर एव सौरस्तयोर्भा श्रिता चान्द्रसौरभा यया । सा शीतलदीप्तत्वाभ्यां चन्द्रसूर्यसदृशीत्यर्थः । रात्रिदिनयोर्जायमानत्वाद्वा क्रमेण तत्कान्तिसदृशी । चन्द्रसम्बन्धिनश्चान्द्राश्चन्द्रकान्ताः एवं सौराः सूर्यकान्तास्तेषां भा श्रिता यया वा । चन्द्रसम्बन्धिमनोज्ञत्व सादृश्यं श्रितं ययेति वा । विश्वप्रकाशे । सुरभिशब्दो मनोज्ञवाची ॥ १०० ॥

किय‍द्बहु व्यञ्जनमेतदर्प्यते ममेति तैर्म्रैर्वदतां पुनः पुनः । अमूनि सङ्ख्यातुमसावढौकि तैः छलेन तेषां कठिनीव भूयसी ॥ १०१ ॥

कियदिति । एतत्तेनतादिव्यञ्जनं मम कथय किंपरिमाणं बहु अर्प्यते ऽपितु त्वया ययमिति नार्पणीयमिति वृत्तैस्तैः पुनः पुनर्वदतां तेषां जन्यानां कियत्सङ्ख्यस्य यद्बहुव्यञ्जनमर्प्यते इत्येतद्वचस्त्वसङ्ख्यं यस्माभवद्भिः पृच्छ्यते किमिति छलेनामूनि व्यञ्जनानि सङ्ख्यातुं गणयितुमसौ गोलकावली भूयसी बहुतरा कठिनी खटिकेव तैः परिवेषकैरढौकि अर्पिता । भवद्भिर्व्यञ्जनसङ्ख्या पृष्टा तद्गणनया कठिन्या सतानि गणयतेति कठिनी वार्पितेत्युत्प्रेक्षा । इति वदताममूनि सङ्ख्यातुमिव व्याजेनासौ बहुतरा कठिन्यर्पितेति वा योज्यं । कठिन्या च सङ्ख्यायते एतद्व्यञ्जनममूनीति ममेति वदतामिति चैकवचनबहुवचनानि जातिविवक्षया विज्ञातव्यानि ॥ १०१ ॥

श्रिताङ्ग्यसाक्षिङ्गितगुप्तचातुरीप्रवल्हिकोदपाटनपाटवे हृदः । निजस्य टीकां प्रथबन्ध काकुभिः स्फुटाभिराकूतभवैस्तदीपिता ॥ १०२ ॥

विदग्धेति । कश्चित्कामुको विदग्धायाश्चतुराया बालाया मुग्धाया इङ्गितगुप्तौ चेष्टितगोपनविषये चातुरी यत्कौशलमेव दुर्ज्ञेयत्वात् प्रवह्लिका गूढाभिप्रायप्रबन्धविशेषः तस्या उत्पादने भेदने ज्ञानविषये च त्पाटव सामर्थ्यं प्रावीण्यं तत्र विषये तदौचितीं विदग्धबालेङ्गितानामानुगुण्यं स्पृशद्भिः गतैस्तदनुरूपैराकूलगतैर्बहुभिरिङ्गितैः कृत्वा निजस्य हृदः स्वीयाभिप्रायस्य टीकां विवरणं प्रबन्धप्रकर्षेण कृतवान् । गुप्तान्यपि मदिङ्गितानि ज्ञातवानिति चतुरोऽयमनुरक्तश्चेति तदनुगुणैः स्वीयचेष्टितैस्तां स्वाशयं बोधितवानिति भावः । बालाया अपि विदग्धमखीशिक्षया वैदग्ध्यादिङ्गितकरणे सहजमौग्ध्यात सलज्जतया तद्गोपनञ्च युक्तं । विदग्धः कश्चन युवा बाला च काचन तयोरिङ्गितगुप्तिषौ । यद्वा विदग्धसंङ्गित बालायाश्चार्यादिङ्गितस्यैव तयोर्विषये या चातुरी तत्प्रवह्लिकोत्पादनपाटवे विषये तयोरौचितीं स्पृशद्भिः । अत्र द्वयोरपि भवतोराशयो मया ज्ञात इतीङ्गितैस्तज्ज्ञापनद्वारा अतिचतुरोऽहमेव त्वया भजनीय इति बाला प्रति स्वाशय ज्ञापितवानिति भावः । अन्योऽपि विदग्धो ऽतिगहनायाः प्रवह्लिकाया भेदने विषयेऽनेकैराशयैर्व्याख्यां करोति ॥ १०२ ॥

घृतप्लुते भोजनभाजने पुरःस्फुरत्पुरन्ध्रिप्रति-
बिम्बिताकृतेः । युवा निधायोरसि लड्डुकद्वयं
नखैर्लिलेखाथ ममर्द निर्दयं ॥ १०३ ॥

घृतेति । कश्चिद्युवा घृतप्लुते आज्यपूर्णे प्रसन्नपते वा भोजनभाजने पुरः स्फुरन्त्या विलसन्त्या पुरन्ध्र्याः प्रतिबिम्बिता या आकृतिस्तस्या उरसि लड्डुकद्वय मोदकयुग्म निधाय नखैर्लिलेख, अथ पश्चान्निर्दय ममर्द यदाऽऽवयोः संयोगो भावी तदैव तव कुचावुपचरिष्यामीति त्वत्कुचनखक्षतविमर्दं कुर्मीति वा स्वाशयं बोधितवानिति भावः । घृतेन प्लुत घृतप्लुत यस्मिन्निति वा । आहिताग्न्यादित्वात् परनिपात (पा० २ । २ । ३७) ॥ १०३ ॥

विलोकिते रागितरेण सस्मितं ह्रियाऽथ वैमु

स्यमिते सखीजने । तदालिरानीय कुतोऽपि शा-
र्करीं करे ददौ तस्य विटस्य पुत्रिकाम् ॥ १०४ ॥

विलोकिते इति । रागितरेण केनचित् कामुकेन सखीरूपे जने सस्मितं विलोकिते सति अथ विलोकनानन्तरं ह्रिया वैमुख्यं पराङ्मुखत्वं इते गते सति तस्य सखीजनस्यालिः सखी कुतोऽपि कस्मादपि स्थानात् शार्करीं शर्करया रचितां पुत्रिकाम् आनीय विटस्य वैमुख्यात् सन्दिहानस्य करे ददौ । अधरादिचुम्बनायाहमपि शर्करातुल्यरसामेनाम् अहमेव दास्यामि स्वहस्तस्थितामेनां जानीहीति सङ्केतं चकारेति भावः । सखीसमूहे वैमुख्यमिते सति तासां सखीनां काचित् सखी तद्दत्तवैमिन्न्यस्या या शार्करी पुत्रिका ददौ । शर्करा पुत्रिका परिवेषणेन निवेदिताहं त्वां भजामीति स्वदानसङ्केतमकरोदिति भावः इति वा । शार्करीमिति ईकारप्रत्ययः । पुत्रिका । पुत्रात्कृत्रिम इति कन् ॥१०४॥

निरीक्ष्य रम्याः परिवेषिका ध्रुवं न भक्तमेभिरत्राप्ततृप्तिभिः । अशक्नुवद्भिर्बहुभुक्तवत्तया यदुज्झिता व्यञ्जनपुञ्जराजयः ॥ १०५ ॥

निरीक्ष्येति । बहुभुक्तवत्तया अत्याहारेणाशक्नुवद्भिर्भोक्तुमसमर्थैरेभिर्वरयात्रिकैर्यद्यस्माद्व्यञ्जनपुञ्जानां राजयः परम्परा उज्झितास्त्यक्तास्तस्माद्रम्याः परिवेषिका निरीक्ष्य अप्राप्ततृप्तिभिः गतबुभुक्षैरेतैर्भुक्तमेव न इति ध्रुवमहं मन्ये । यावत् क्षिप्तं तावत् तथैव दर्शनादियमुत्प्रेक्षा । यता निरीक्ष्याप्राप्ततृप्तिभिरेतैः ध्रुवं निश्चितं नैव भुक्तमिति वा । यथा लोको मन्यत इति शेषः । तथा व्यञ्जनपुञ्जपरम्परास्त्यक्ताः । यदेभिर्न भुक्तमिति लोको मन्यत इत्यर्थ इति वा ॥ १०५ ॥

पृथक् प्रकारेङ्गितशंसिताशयो युवा ययोदासि तयापि तापितः । ततो निराशः परिभावयन् परामपत्रपोऽनोपि सरोपयैव सः ॥ १०६ ॥

पयगिति । पृथक्प्रकारैर्नानाविधैरिङ्गितैश्चेष्टितैः कृत्वा ग्रसित कचित आशय अभिप्रायो येन स युवा यया क्रिया उदासि उदासीनीकृतः। प्रतीङ्गितेन सम्भावितयोद्दामोनतया तयापि तापितः व्यथितः । उदासीनाहि दुःखं न जनयति, अजनयापि तु तादृश्या अपि दुःखं जनितमिति विरोधार्थो ऽपिशब्दः । ततोऽनन्तरं यस्यां निराश. तस्या सक्तशाखिराशा निर्गताभिलाष सन् परां तदन्यां परिभावयन्निङ्गितेनानुकूलयन् सानुरागं पश्यन् स युवा सरागया तयैव पूर्वमुदासीनयैव परितापितो न तु द्वितीययत्ययः । सरागा हि दुःखं जनयति न तु सुखं तथापि तादृश्यापि सुखं जनितमिति विरोधाद्दार्थ्यं । जनमनक्षभिङ्गितकरणमयुक्तमिति तयेङ्गितं पूर्वं न कृतं स तु तदाशयमजानानोऽनुरागेणेव प्रतीङ्गितं नाकरोदिति बुद्ध्याऽन्यामपश्यत्, ततश्च सा च पश्चाद्बुद्ध्या सैर्ष्या जातेति मय्यनुरक्तैव पूर्वं तु गाम्भीर्यादिङ्गितं नाकरोत् सानुरागैव च सरागा भवतीति रोषादनुरागमनुमाय सन्तुष्ट इति भाव । उपेतयेति पाठे रोपात्पुदुपसारिणार्थात् समीपमागतयेत्यर्थः ॥ १०६ ॥

पयःस्मिता मण्डकमण्डलाम्बरा वटाननेन्दुः पृथुलड्डुकस्तनी । पदं रुचेर्भोज्यभुजां भुजिक्रिया प्रिया वभूवोज्ज्वलकूरहारिणी ॥१०७॥

पय इति । भुजिक्रिया भोजनक्रिया भोज्यभुजां भक्ष्य भुञ्जानानां तेषां प्रिया तृप्तिजननी अथ च स्त्री बभूव । किम्भूता । पयो दुग्धमेव स्मितं हासो यस्याः । तथा क्वचिन्मृदुसूक्ष्म क्वचिदत्यन्ताग्निसंयोगेन शीघ्रबिन्दवो मण्डका अपूपा एव पट्टसूत्रादिरचितरूपमण्डनयुक्तानि अलङ्कारभूतानि वा अम्बराणि वस्त्राणि यस्याः । तथा अतिघृतमाषसाधितवटकरूपकुङ्कुमोद्वर्तनरक्तभावेनाह्लादक आननेन्दुर्मुखचन्द्रो यस्याः । तथा पृथुलड्डुकस्तनौ स्थूलातिकठिनरूपौ मोदकरूपौ स्तनौ यस्याः सा । तथा उज्ज्वलकूरहारिणी विविक्तशुभ्रौदनरूपमौक्तिकमालावती । अथवोज्ज्वलकूरेण मनोहारिणी । यतो रुचेर्ग्रासाभिला-

पदस्य च कान्तेरनुरागस्य च पदं स्थानं । प्रियापि पूर्वोक्तगुणसहिता रुचे पदं भवति । यत प्रियेति वा । भोज्यभुजां । भोज्य भक्ष्य इति ( पा० ७ । ३ । ६९ ) साधुः ॥ १०७ ॥

**चिरं युवाकूतशतैः कृतार्थनश्चिरं सरोषेङ्गितया च निह्नुतः । सृजन् करक्षालनलीलयाञ्जलीन्यषेचि किञ्चिद्विधुताम्बुधारया ॥१०८**

चिरमिति । कयाचिद्वृत्या कश्चिद्युवा किञ्चिद्विधुतया वक्रचालितयाम्बुधारया कृत्वा असेचि सिक्तः । किम्भूतः । आकूतशतैरिङ्गितसहस्रैः कृतार्थनः कृतप्रार्थनः सन् चिरं सरोषं कोपव्यञ्जि इङ्गितं यस्यास्तस्या भावस्तत्ता तयैव वारम्वारं निह्नुतो निराकृतः सन्नपि तया करक्षालनस्य लीलया व्याजेन प्रसादप्रार्थनासूचकानञ्जलीन् करयुगसम्पुटान् सृजन् रचयन्, अञ्जलीनिति वचनेन वारम्वारमञ्जलिकरणं सूचितं । वारिधाराकम्पनेन त्वत्प्रार्थना मयाङ्गीकृता करयुगयोजनाद्विरमेति सूचितं । एवं स्वीकारचेष्टा करक्षालनसुजिक्रियासमाप्तिं द्योतयति ॥ १०८ ॥

**न षड्विधः खिङ्गजनस्य भोजने तथा यथा यौवतविभ्रमोद्भवः । अपारशृङ्गारमयः समुन्मिषन् भृशं रसस्तोपमधत्त सप्तमः ॥१०९॥**

नेति । षड्विधो मधुराम्ललवणतिक्तकटुकषायास्वादरूपषट्प्रकारो रसः खिङ्गजनस्य रसिककामुकसङ्घस्य भोजने विषये तथा तोषं न अधत्त उदपादयत् । यथा यौवतं स्त्रीसङ्घस्तस्य विभ्रमो विलासस्तस्मादुद्भवो यस्य स रसो भृशं समुन्मिषन् वर्द्धमानः अपारशृङ्गारमयः निर्मर्यादानेकविधविभावानुभावव्यभिचारिसंयोगजन्यशृङ्गाररूपः सप्तमो रसस्तोषमधत्त । सप्तमस्य मधुराद्यपेक्षया षष्ठेयं न स्वाद्यरसापेक्षया । षड्भ्यो रसेभ्योऽन्यस्याभावाद्भोजने सप्तमरसस्य सद्भावादाश्चर्यम् १०९

मुखे निधाय क्रमुकं नलानुगैरथोज्झि पर्णा-
लिरवेक्ष्य वृश्चिकम् । दमार्पितान्तर्मुखवास-
निर्मितं भयाविलैः स्वभ्रमहासिताखिलैः ॥ ११० ॥

मुख इति । अथ हस्तप्रक्षालनानन्तरं नलानुगैस्तैराजभिः क्रमुकं पूगफलं मुखे निधाय वृश्चिकमवेक्ष्य दमेनार्पिता दत्ता पर्णालिर्नागवल्लीदलपङ्क्तिरोज्झि त्यक्ता । किम्भूतं वृश्चिकं । अन्तर्मुखवासेन कर्पूरकस्तूरीखदिररसादिरूपेण मुखसौगन्ध्यकारिणा निर्मितं । किम्भूतैः । भयेन दृष्टनिभयाऽऽविलैर्व्याप्तैः । अत एव स्वभ्रमेणावृश्चिके वृश्चिकबुद्ध्या हासिता हासं प्रापिता अखिला द्रष्टारो यैः । दमेनार्पितः पर्णानां मध्ये वर्तमानो योऽन्तर्मुखे वासस्तेन निर्मितमिति वा ॥ ११० ॥

अमीषु तथ्यानृतरत्नजातयोर्विदर्भराट् चारु-
नितान्तचारुणोः । स्वयं गृहाणैकमिहेत्युदीर्य
तद् द्वयं ददौ शेषजिघृक्षवे हसन् ॥ १११ ॥

अमीष्विति । विदर्भस्य राजा दमो वा क्रमेण चारु सुन्दरं नितान्तं चारु अतिसुन्दरं च तयोरीदृशयोस्तथ्यानृतयोः सत्यासत्ययोः रत्नजातयोर्मध्ये एकं तव प्रियं रत्नजातं त्वं स्वयमेव गृहाणेति । अमीषु वरयात्रिकेषु विषये उदीर्य कृत्रिमत्वादतिरमणीयकान्तिविशिष्टं अलीकरत्नजातं जिघृक्षवे गृहीतुमिच्छवे वरयात्रिकाय हसंस्तद्ग्रहणहेतोः किञ्चिद्धास्यं कुर्वन् तयोः सत्यासत्ययोर्रत्नजातयोर्द्वयं युग्मं तद्रूपं वा द्वयं ददौ । अमीषु मध्ये शेषजिघृक्षवे इति वा । इह द्वयोर्मध्ये शेषजिघृक्षवे इति वा । शेषजिघृक्षवे । द्वितीयेति ( पा० २ । १ । २४ ) योगविभागात् समासः ॥ १११ ॥

इति द्विवारं शुचिमिष्टभोजिनां दिनानि तेषां
कतिचिन्मुदा ययुः । द्विरष्टसंवत्सरवारसुन्दरी-
परीष्टिभिस्तुष्टिमुपेयुषां निशि ॥ ११२ ॥

इतीति । इति पूर्वोक्तप्रकारेण द्वि कृत्वो द्विवारं दिवारात्रौ च शुचि अदोषं मिष्टं स्वादु च भोजिनां भुञ्जानानां तेषां वरयात्रिकाणां कतिचित् पञ्चषाणि दिनानि मुदा ययुः पञ्चषट् दिनानीति यावत् तत्रोषुरित्यर्थः । किम्भूतानां ? निशि द्विर्द्वौ वारा षष्टी द्विरष्टौ षोडश वत्सरा यासां ता वारस्य सङ्घस्य सुन्दर्यो वेश्या दास्यादयस्तासां परीष्टिभिः शुश्रूषनादिसेवाभिः तुष्टिं सन्तोषं उपेयुषां प्राप्तवतां । द्विरष्टेति ऋजुच कृत्वसुचो बाधकत्वाद् द्विरिति द्विमात्रेऽद्विःकृत्य इत्यत्रापवादविषये क्वचिदुत्सर्गस्यापि समावेश इति परिभाषया यथाकथञ्चित् परिहर्त्तव्यम् ॥ ११२ ॥

उवास वैदर्भगृहेषु पञ्चषा निशाः कृशाङ्गीं
परिणीय तां नलः । अथ प्रतस्थे निषधान्
सहानया रथेन वार्ष्णेयगृहीतरश्मिना ॥११३॥

उवासेति । नलः कृशाङ्गीं तां परिणीय वैदर्भगृहेषु पञ्च षड्वा प्रमाणमासां ता निशा उवास पञ्चषाणि दिनानि तत्र स्थितवानित्यर्थः । अथ सप्तमे दिने अनया भैम्या सह रथेन निषधान् प्रतस्थे । किम्भूतेन । वार्ष्णेयनाम्ना सारथिना गृहीता रश्मयो यस्य । पञ्चषाः । सङ्ख्ययाव्ययेति ( पा० २ । २ । २५ ) समासे बहुव्रीहौ सङ्ख्येये इत्यादिना ( पा० ५ । ४ । ७३) डचि टिलोपः । निशाः । अत्यन्तसंयोगे च ( पा० २ । १ । २९) इति द्वितीया ॥ ११३ ॥

परस्य न स्प्रष्टुमिमामधिक्रिया प्रिया शिशुः
प्रांशुरसाविति ब्रुवन् । रथे स भैमीं स्वयम-
ध्यरूरुहत् तत् किलाश्लिष्टदिमां जनेङ्गितः॥११४

परस्येति । इति ब्रुवन् स नलो भैमीं स्वयमात्मनैव रथे अध्यरूरुहदध्यारोपयत् । इति किं । इमां पतिव्रतां भैमीं स्प्रष्टुं स्पर्शनेन्द्रियविषयीकर्त्तुं परस्य मदन्यस्य नाधिक्रिया अधिकारः । प्रिया भैमी शिशुरल्पप्रमाणा असौ रथश्च प्रांशुरुन्नत इति स्वयमारोढुमसमर्थेति, त-

मस्माद्वेता जनैः स्तनौ लोकैर्वीक्षित सन्निमा भैमी नालिलिङ्ग किलेति व्याजे तज्जनस्तु जनसमक्षमालिलिङ्गेव । किन्त्वेवं ब्रुवन् धार्ष्ट्यं परिजहारेति भावः । कर्मत्वस्याविवक्षितत्वाद्रूप इत्यधिकरणसप्तमी । न्यध्यरुरुहत् । णौ चङि (पा०७।४।१) इत्युपधाह्रस्वत्वे दीर्घो लघोः (पा० ७।४।९४) इत्यभ्यासदीर्घं । अश्लिक्षत । श्लिष आलिङ्गन इति धातुः । कपयोगे क्स । अश्लिष्यदिति पाठे लुङ् ॥ ११४ ॥

इति स्मरः शीघ्रमतिश्चकार तं वधूं च रोमाञ्चभरेण कर्कशौ । स्खलिष्यति स्विन्नतनुः प्रियादियं मृदीयसी पीडनभीरुदायुगान् ॥११५॥

इतीति । इति हेतोः शीघ्रमतिः त्वरितबुद्धिः शीघ्रमुचितापायस्फुरणशीलः तयोरन्योन्यविषयः स्मरः तं नलं वधूं भैमीं च उभौ रोमाञ्चानां भरेण बाहुल्येन कर्कशत्वचौ चकार अन्यान्यसंस्पर्शादुत्पन्नसात्त्विकरोमाञ्चौ जातावित्यर्थः । इति किं । मृदीयसी स्विन्नतनुः कामेन सस्नेहाङ्गी च इयं भैमी अस्य प्रियात् नलात् सकाशात् स्खलिष्यति निःसरिष्यति यतः पीडने निबिडधारणे भीरुः दोर्युगं बाहुयुगं यस्य तस्मात् शिथिलधारिण इति । इतीव शीघ्रमतिः स्मरः ॥ ११५ ॥

तया क्रमाज्जन्मनिजाङ्कवर्तिना प्रहित्य पुत्रीं पितरौ विषेदतुः । विसृज्य तौ तं दुहितुः पतिं यथा विनीततोल्लङ्घितभव्यसद्गुणम् ॥ ११६ ॥

तयेति । तौ पितरौ तं दुहितुः पतिं जामातरं नलं विसृज्य सम्प्रेष्य यथा विषेदतुः विषण्णौ तथा आजन्मजन्मनि निजाङ्कयोः स्वास्यात्सङ्गयोर्वर्तिता वृद्धिं प्रापिता पुत्रीं प्रहित्य प्रस्थाप्य विषेदतुः किमपि तु नेति वैधर्म्योपमा । किम्भूतं । विनीततया सविनयत्वेन लङ्घितगुणीभवन्तः शौर्यादयो गुणा यस्य तं । सुतावियोगादपि सद्गुणजामातृवियोगो नितरां तयोर्दुःसहो जात इत्यर्थः । प्रहित्य । हि

गतौ, ल्यपि तुक्। विपेदतुः। सदेरेत्वाभ्यासलोपौ। सदिरप्रतेरिति (पा०८।३।६६) षत्वं ॥ ११६ ॥

निजादनुव्रज्य स मण्डलावधेर्नलं निवृत्तौ चटु-
लापतां गतः। तडागकल्लोल इवानिलं तटाद्गु-
तानतिर्व्यावृते विदर्भराट् ॥ ११७ ॥

निजादिति। स विदर्भराड् भीमो नलमनुव्रज्यानुगम्य निजान्मण्डलावधेः सकाशान्निवृत्तौ परावृत्तिसमये चाटु प्रियवचनं लपति भाषत इति चटुलापस्तद्भावं गतः प्राप्तः प्रियभाषणः धृताञ्जलिकृतानतिर्नमस्कारो येन स एवम्भूतः सन् व्यावृते निजगृहान् प्रति परावृत्त। क इव तडागकल्लोल इव। यथाऽनिलं वायुमनुव्रज्य तटान्निवृत्तौ चटुला आपो यस्य तद्भाव गतः सन् तीरात् सकाशात् तडागतरङ्गो व्यावर्तत इत्युपमा। चटुलाप इत्यत्र कर्मण्यण्। (पा०३।२।१) पत्रेऽऋगादिना (पा०५।४।७४) समासान्तः। स तु तत्पुरुष एवेति कश्चित् तदुपेक्ष्यम् ॥ ११७ ॥

पिताऽऽत्मनः पुण्यमनापदः क्षमा धनं मनस्तु-
ष्टिरथाखिलं नलः। अतः परं पुत्रि न कोऽपि
तेऽहमित्युदश्रुरेष व्यसृजन्निजौरसीं ॥ ११८ ॥

पितेति। इत्युक्त्वा उद्गतान्यश्रूणि यस्य स एष भीमो निजामौरसीं स्वीयक्षेत्रबीजाभ्यामुत्पादितां भैमीं व्यसृजत् प्राहिणोत्। इति किं। हे पुत्रि आत्मनस्तव पुण्य धर्म एव पिता हितकारित्वादहितनिवारकत्वाच्च तथा तव क्षमाः सहनशक्तय अनापदः न विद्यन्त आपदो याभ्यस्ता आपन्नाशिका इत्यर्थः, तव मनस्तुष्टिः सन्तोषः सन्तुष्टत्वमेव धनं। अथानन्तरं अखिलमेव सर्वं नल एव, किं बहुना तदतिरिक्तसकलाभीष्टदत्वात् सर्वं नलएवेति भाव। अतः परं अद्यतनदिनप्रभृति अहं भीमस्ते कोऽपि सम्बन्धी बान्धवो न भवामीति ॥ ११८ ॥

प्रियः प्रियैकाचरणाच्चिरेण तां पितुः स्मरन्ती-
मचिकित्सदाधिषु । शशाम तन्मातृवियोगजा-
ऽज्वरो न तु प्रियप्रेममहाम्बुधावपि ॥ ११९ ॥

प्रिय इति । प्रीणाति इयं जनयति प्रियो नल पितुः स्मरन्तीं तां भैमीं प्रियस्य मनोविंतस्यैकस्य वस्तुन आचरणात् करणात् मनोविंतस्य यदेक मुख्य केवलं वा करण तस्माद्वा आधिषु पितृवियोगजमानसपीडासु सत्सु चिरेण बहुनः कालेनाचिकित्सत् उपचचार । कस्यचिदिष्टस्य मेलनात् पितृवियोगदुःख विरेमात्याजयदित्यर्थः । चिरकाल पितुः स्मरन्तीमिति वा । स सर्वजनप्रसिद्धस्तस्या मातृवियोग एवमत्यतरत्वाद्धाहदो वडवानल तु पुनः प्रियस्य नलस्य प्रेमा निरुपाधिक स्नेहस्तद्रूपे महाम्बुधौ सत्यपि तथा अप्रच्युतप्राग्रूप एव तस्थिवान् तस्मिन्नतिप्रियं कुर्वत्यपि स शोकमपि न शान्त इत्यर्थः । पितृवियोगदुःखान्मातृवियोगस्य गौरव सूचित विशेषतश्च कन्यानां । अपिरौचित्ये । जलानलयोर्विरोधेऽपि वाडवस्याम्बुधावेव स्थितिरुक्तेत्यर्थः । शशामेति न तु प्रियेत्यपि च समुच्चयार्थः । पितुः । अधीगर्थेत्यादिना (पा०२।३।५२) षष्ठी । अचिकित्सत् । कित निवासे रोगापनयने चेत्यस्माद् गुप्तिज्किद्भ्य इति (पा०३।१।५) स्वार्थे सन् । कितधातोरात्मनेपदित्वादपि परस्मैपदमेव न स्यात्मनेपदमिति सिद्धान्त ॥ ११९ ॥

असौ महीभृद्बहुधा तु मण्डितस्तया निजोपस्कयैश्च कामपि । भुवा कुरङ्गेक्षणदन्तिचारयोर्वभार शोभां कृतपादसेवया ॥ १२० ॥

असाविति । असौ महीभृन्नलः तु पुनर्बहुधा अनेकप्रकार मण्डितो नानारत्नादिभिरलङ्कृतस्तया भैम्या कामप्यनिर्वचनीयां शोभां बभार । किम्भूतया । कुरङ्गवद्हरिणवदीक्षणं विलोकन दन्तिवद्हस्तिवच्चारो

कृत्वा आश्रिता अङ्गीकृता उद्ग्रीविका ऊर्ध्वीकृतकण्ठतया विलोकनं यथा स्यादेवं पश्यामिव । विलोकिकामिव नवगन्तव्याद्दूरत एव दृष्ट- यानित्यर्थ । पश्यामिति पाठे मार्गोत्था पश्यामिव । अन्यापि ना- यिका प्रोषिते नायके प्रसाधितालङ्कारा सती उद्ग्रीविकया प्रिया- गमनमार्गान् पश्यति । समारागा नीलस्याद्गलकत्व । पश्यामिति कर्तृकर्मणोरिति (पा०२।३ ६५) कर्मणि षष्ठी ॥ १२२ ॥

पुरीं निरीक्ष्यान्यमना मनागिति प्रियाय भैम्या
निभृतं विसर्जितः । ययौ कटाक्षः सहसा नि-
वर्तिना तदीक्षणेनार्द्धपथे समागमम् ॥ १२३ ॥

पुरीमिति । अथ नलप्रियो मनाक् ईषत् पुरीं निरीक्ष्य अन्यमना दृश्यत इतिहेतोः अस्मिन्नवसरेऽयं सम्यक् निरीक्षितुं शक्यत इति बुद्ध्या भैम्या प्रियाय प्रियं वीक्षितुं निभृतं गुप्तं यथा तथा विसर्जितः प्रेषितो निजकटाक्षः सकलां पुरीमनवलोक्यैव किञ्चिन्निरीक्ष्य भैम्यनु- रागवशात् तुल्यात् सहसाऽसमय एव पुरीनिरीक्षणान्निवर्तिना शीघ्रं प- रावृत्तेन तदीक्षणेन नलकटाक्षेण सहार्द्धपथ एव समागमं सम्बन्धं ययौ । उभावपि परस्परानुरागेण क्षणमात्रमप्यवलोकनान्तरायं न स- हेते स्मेति भावः । नितरामनुरागः सूचितः । पुरीनिरीक्षेति पाठे पुरीनिरीक्षणेऽन्यमना किमिति यद्वा प्रेषितः । रहस्यं ज्ञातुं दूतोऽपि गुप्तः प्रेष्यते । प्रियाय । क्रियार्थोपपदस्येति (पा०२।३।१४) चतुर्थी ॥ १२३ ॥

अथ नगरधृतैरमात्यरत्नैः पथि समियाय स
जायया ऽभिरामः । मधुरिव कुसुमश्रिया सनाथः
क्रममिलितैरलिभिः कुतूहलार्तैः ॥ १२४ ॥

अथेति । अथ पुरीसमीपप्राप्त्यनन्तरं जायया कृत्वाभिरामः स नलो नगरे धृतैः स्थापितैरमात्यरत्नैः सह पथि समियाय मेलनं प्राप । किम्भूतैः । कुतूहलैः भैमीसहितनलदर्शनकौतुके विषये तैः उत्कण्ठि-

ते । तेन वा उद्दूर्ध्वं कं शिरो येषां ऊर्ध्वीकृतशिरोभिः । क कैरिव । कुसुमश्रिया चम्पकादिपुष्पशोभया सनाथो रमणीयो मधुर्वसन्त क्रमेण वसन्तागमपरिपाट्या मिलितैर्मध्वास्वादकौतुकेनोत्कण्ठितैरलिभिरिव । यथा संयुज्यते तथेत्युपमा ॥ १२४ ॥

क्रियदपि कथयन् स्ववृत्तजातं श्रवणकुतूहलच-
ञ्चलेषु तेषु । क्रियदपि निजदेशवृत्तमेभ्यः
श्रवणपथं स नयन् पुरीं विवेश ॥ १२५ ॥

क्रियदिति । स नलः पुरीं विवेश । किं कुर्वन् । स्वयंवरवृत्तान्तश्रवणकुतूहलचञ्चलेषु तेषु मन्त्रिप्रवरेषु कियत् स्वसम्बन्धवृत्तजातं स्वदौत्येन्द्रादिमायाप्रकृतिरूपं मद्वृत्तं वृत्तान्तं सङ्क्षेपेण कथयन् । तथा कियदपि निजदेशवृत्तं स्वराष्ट्रजातमेभ्योऽमात्येभ्यः सकाशात् श्रवणपथं नयन्नाकर्णयन् । ग्रामगतजातिः । अमुत्रेति पाठे अदः परस्मिन्नत्रापीति वचनादमुत्रेत्यनेन व्यवहितोऽपि स्वयम्वरः परामृश्यते ॥ १२५ ॥

अथ पथि पथि लाजैरात्मनो बाहुवल्लीमुकुल-
कुलसकुल्यैः पूजयन्त्यो जयेति । क्षितिपतिमु-
पनेमुस्तन्दधाना जनानाममृतजलमृणालीसौ-
कुमार्यं कुमार्यः ॥ १२६ ॥

जयेति । अथ पुरप्रवेशानन्तरं जनानां कुमार्योऽकृतविवाहाः कन्यास्तं क्षितिपतिं उपनेमुः समीपमागत्य ननम्रुः । किम्भूताः । पथि पथि प्रतिमार्गं आत्मनो बाहुवल्लीनां भुजरूपलतानां मुकुलकुलेन कलिकावृन्देन सकुल्यैस्तत्तुल्यैर्लाजैर्मङ्गलद्रव्यतया शकुनद्रव्येण जय सर्वोत्कर्षेण वर्तस्वेति शब्दपूर्वं पूजयन्त्यः । तथा अमृतजलेजातायाः मृणाल्या बिसस्येव सौकुमार्यं मार्दवं दधानाः । पुरप्रवेशे शकुनार्थं कुमार्य इत्युक्तं । सकुल्यैः । दिगादित्वाद्यत् (पा०४।३।५४) ॥ १२६ ॥

अभिनवदमयन्तीकान्तिजालावलोकप्रवणपुरपु
रन्ध्रीवक्त्रचन्द्रान्वयेन । निखिलनगरसौधा
ट्टावलीचन्द्रशालाः क्षणमिव निजसञ्ज्ञां सा
न्वयामन्वभूवन् ॥ १२७ ॥

अभीति । निखिलानां नगरसम्बन्धिनां सौधानां सुधाधवलितगृहाणामट्टावल्य उपरितनगृहविशेषपङ्क्तयस्तासामप्युपरि चन्द्रशालास्तृतीयशिरोगृहा अट्टावलीनां गवाक्षविवराणि वातायनाख्याः, अभिनवा नवोढा दमयन्ती तस्याः कान्तिजालस्यादृष्टपूर्वस्यावलोके प्रवणानामुत्सुकानां पुरन्ध्रीणां वक्त्रचन्द्रस्यान्वयेन सम्बन्धेन कृत्वा क्षणमिव क्षणमात्रं यावत्तत्पुरन्ध्रीसम्बन्धस्तावत्पर्यन्तं निजसञ्ज्ञां स्वीयं नाम मुखचन्द्रसम्बन्धित्वया सान्वया चन्द्रयुक्ताः शाला गृहाणि चन्द्रशाला चन्द्राणां वा सम्बन्धिन्यः शाला इति योगसहितामन्वभूवन् । सान्वयामिवेति योत्प्रेक्षा । सर्वा अपि पुरनार्यो गवाक्षविवरैर्भैमीमपश्यन् । तानि च तन्मुखसम्बन्धेन यौगिकत्वेन कविनोत्प्रेक्षितानि ॥ १२७ ॥

निषधनृपमुखेन्दुश्रीसुधां सौधवातायनविवर
रश्मिश्रेणिनालोपनीताम् । पपुरसमपिपासा
पांशुलत्वोत्पराणान्यखिलपुरपुरन्ध्रीनेत्रनीलो
त्पलानि ॥ १२८ ॥

निषधेति । अखिलानां सकलानां पुरपुरन्ध्रीणां नेत्राण्येव नीलोत्पलानि निषधनृपस्य मुखेन्दुश्रीस्तल्लक्ष्मीं सुधामृतं पपुः सादरमालोकितवन्ति । किम्भूता सुधा । सौधवातायनानां विवरेभ्यश्छिद्रेभ्यो गच्छन्त्यो बहिर्निर्गच्छन्त्यो रश्मिश्रेणयो नयनकिरणपङ्क्तयस्तद्रूपा ये नाला बिसयुक्तत्वाद्रसपजलपानसाधनभूताः कमलनालदण्डास्तैरुपनीतां नेत्रसमीपं प्रापिता । किम्भूतानि नीलोत्पलानि । असमयाऽतुल्ययाऽतिभूयस्या पिपासया पानेच्छया पांशुलत्वं शुष्कत्वम् लोकचठतरत्वञ्च तेनैव उत्कृष्टा उद्गच्छन्तो वा परागाः कौसुमरजांसि येषु

तानि । गवाक्षविवरे कृत्वा नलमुखशोभां सर्वा अपि सादरं ददृशुरि-
त्यर्थः । कुमार्याः समीपगत्या पौरस्त्रीणां गवाक्षान्तर्गत्या कौतुक-
मात्रेण दृष्टेरार्जवेन कनीनिकानीलरश्मीनां नानारूपाणामुचिततरत्व-
मुक्तं । अन्योऽपि पिपासात्यन्तशुष्ककण्ठो दूरस्थ कूपाद्युदकं मञ्जिष्ठकम-
लनालादिना पिबति न त्वेकवारमेव बहु पिबत्यन्तर्दयवोक्ताभिया ॥१२८॥

अवनिपतिपथे हम्र्त्त्रैणपाणिप्रवालस्खलितसुर-
भिलाजव्याजभाजः प्रतीच्छन् । उपरि कुसु-
मवृष्टीरप वैमानिकानामभिनवकृतभैमीसौधभू-
मिं विवेश ॥ १२९ ॥

अवनीति । स नलोऽभिनवकृतस्य नूतननिर्मितस्य भैमीसम्बन्धि-
नः सौधस्य शान्तिहोमाद्यलङ्कृतां भूमिं चत्वरितमौ वा भूमिं विवेश ।
किं कुर्वन् । कौतुकविलोकनार्थं गगने स्थितानां वैमानिकानां देवा-
नां कुसुमवृष्टीः उपरि शिरस्यादरेण प्रतीच्छन् स्वीकुर्वन् । किंभूता
वृष्टीः । अवनिपतिपथे राजमार्गे अट्टेषु विपणिस्थेषु हम्र्यकेषु वर्तमा-
नानां स्त्रैणानां स्त्रीवृन्दानां पाणिप्रवालेभ्यः स्खलिता सुरभय पाक-
जपरिमलविशिष्टाः लाजास्तेषां व्याजं मिष भजन्ति ताः । अक्रुद्धार्थं
कीर्यमाणानां लाजानां शुभत्वाद्दूर्द्धदेशात् स्खलनाच्च पुष्पवृष्टित्वम् ।
ता अपि पद्मेभ्यो निर्गच्छन्ति । वैमानिकाः । चरत्यर्थे ठञ् ॥ १२९ ॥

इति परिणयमित्थं यानमेकत्र याने दरचकित
घटाक्रमेक्षिन चानयोस्तत् । दिवि दिविषद
भीगा. कौतुकेनावलोक्य प्रणिदधुरिव गन्तुं ना
क्रमानन्दमान्द्याः ॥ १३० ॥

इतीति । दिविषदां देवानामधाजा देवा इन्द्राद्ययात्वारो देवा ना
च स्वर्गं प्रतिगन्तुं प्रणिदधुरिव गन्तुमचिन्तयन्निव अथवतस्त विवाय
गन्तुं यावदा मास्यपेतीत्यर्थ सूचयति । किंभूता । अनयोर्भैमी-
नलयोः इति पूर्वोक्तप्रकारं परिणयं विवाह इत्युपकारीत्या च एकत्र

एकस्मिन् याने रथे यान स्थित्यागमन तथा दरचकित ईषत् सभय सलज्ज यत्कटाक्षैरन्योन्यविलोकन तद्वैतत्सर्वं दिवि आकाशे स्थित्वा कौतुकेनायमोद्यानन्दन परमहर्षेण मान्द्रा पृष्टा । अथवेति पाठे तत्प्रयोगं ह्यप्रवेशानन्तरमित्यर्थः । स्वयम्वरानन्तरमेव देवा विनिर्गता इति चतुर्दशे सर्गे यद्यप्युक्तं तथापि भूमेर्निर्गत्य नलपुरप्रवेशपर्यन्तं नलभैमीकौतुकविलोकनार्थं गगने स्थिता इति दिविपदेन सूचितम् इदानीं पुनः स्वर्गं प्रति निर्गता इत्युक्तेर्न कोऽपि विरोधः । किं वा अनन्तरसर्गसङ्गत्यै कलिनलद्वेषारम्भस्याप्रस्तुततां परिहर्तुं नल पुरं प्रविष्टे देवाश्च स्वर्गं जग्मुः । गन्धर्वाश्च तेषां मध्ये कार्यं कलेरुत्तरप्रत्युत्तरदानादिना प्रसक्तानुप्रसक्तावसराय युक्तमुक्तम् ॥ १३० ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महाकाव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोडशः ॥ १३१ ॥

श्रीहर्षमिति । पूर्वार्धं पूर्ववत् । किम्भूते काव्ये चतुर्दशतयीं विद्यां विदद्भिः जानद्भिः सरस्वतीशापदधिष्ठानकाश्मीरदेशोद्भवैरपि विद्वद्भिः परीक्षापूर्वं महिते पूजिते दोषलेशेनापि रहिते सर्वगुणपूर्णे । तथा तद्भुवि तस्माच्छ्रीहर्षाद्भवतीति तद्भूः तस्मादुत्पन्नेऽस्मिन्नेवविधे वा । नैषधेशेति पाठे नैषधस्वामाधीशस्येति व्याख्येयम् । काश्मीरैरिति पूजार्थे मतिबुद्धीति (पा० ३।२।१८८) इति क्तः क्तस्य च वर्तमाने इति (पा० २।३।६७) षष्ठ्याश्रिय मात् तृतीया चिन्त्या । पूजिता ये सूरिभिरित्यादिशिष्टप्रयोगदर्शनाद्वर्तमानार्थे विहितस्य क्तस्य योगे षष्ठी भवति चकारात् प्रयोजनानुरोधेनान्याऽपि सूत्रार्थो निबन्ध । चतुर्थ्यर्थे बहुलं छन्दसीत्यत्र बहुलग्रहणं वानुवर्त्य काश्मीरैः करणभूतैरेव पूजा सञ्जाताऽस्येति महित इति । तारकादेराकृतिगणत्वात् इतजन्तत्वाभावे वा सम्पाद्य कान्तत्वेऽपि करणमात्रा महित इत्यादिभट्टिप्रयोगे

समासदर्शनात्. मतिबुद्धिपूजार्थेभ्यश्चेति चकाराद्भूतेऽपि शिष्टप्रयोगानुसारेण क्तप्रत्ययमङ्गीकृत्य क्तस्य च वर्तमाने इति षष्ठीप्राप्त्यभावात् कर्तरि तृतीयैवेति वा. यथा कथञ्चित् समर्थनीयं । चतुर्दशतयी । संख्याया अवयवे इति (पा०५।२।४२) तयप् । टिड्ढाणञिति (पा०४।१।१५) ङीप् । विद्यां विद्भिः । न लोकेति षष्ठीनिषेधः । तद्भुवि । भावितपुंस्कत्वम् नुमभावः । षोडशः पूर्ववत् ॥ १३१ ॥

इति श्रीवेदरकरोपनामश्रीनृसिंहपण्डितात्मजे नारायणकृते नैषधीयप्रकाशे षोडशः सर्गः ॥ १६ ॥

# उत्तर नैषध चरिते ।

## सप्तदश सर्ग ।

### श्रीलक्ष्मी नृसिंहौ जयत: ।

अथारभ्य वृथाप्राय धरित्रीधावनश्रम । सुरा:
सरस्वदुल्लोललीला जग्मुर्यथागतम् ॥ १ ॥

अथेति ॥ सर्गमङ्गलिकमिय । अथ स्वर्गगमनचिन्तनानन्तर धरित्री प्रति धावनेन जनित प्रयास वृथैव वृथाप्राय व्यभिचारम्य विधाय अगाधत्वेनानुपलक्षितद्रुपविपादतया अथ च तटभूमि प्रति निष्प्र-याजनमागमनेन सत पुनर्यथागत व्यावर्तनेन च सरस्वन समुद्रस्य उल्लोलास्तरङ्गास्तद्वल्लीला यया तत्तुल्या सुरा आगमनमतिक्रम्य यथागत स्वर्ग जग्मु । भैमीमप्राप्यैव जग्मुरित्यर्थ । नैष्फल्याभात् श्रमस्य वैयर्थ्य । नलभैमीवरदानद्वारात्मगौरवरक्षणात प्राय शब्द प्रायोजित न तु वृथैवेत्युक्तम् । वृथा वृथात्वम प्राप्यते प्राप्नोति वा वृथाप्रायम् । यथागत अव्ययीभाव । यथागत तथा जग्मुरिति वा ॥ १ ॥

भैमीमपत्ये भुवस्तस्मै चिर चित्ते धृतामपि ।
विद्यामिव विनीताय न विषेदु: प्रदाय त ॥ २ ॥

तदेवाह । भैमीमिति । ते देवाश्चिर चित्ते धृतामपि भैमीं तस्मै भुव पत्ये नलाय प्रदाय दत्त्वा न विषेदु पश्चात्ताप न प्राप्ता इत्यर्थ । कस्मै कामिव । विनीताय शिष्याय चिर चित्ते धृता अभ्यस्ता विद्यामिव । दत्तापि विद्या चित्ताद्यथा नोपरमते तथा तस्मै दत्तापि सा सगुणतया तेषा चित्तान्नापररामेति ॥ २ ॥

कान्तिमन्ति विमानानि भेजिरे भासुराः सुराः।
स्फाटिकाद्रेस्तटानीव प्रतिबिम्बा विवस्वतः ॥ ३ ॥

कान्तीति। भासुरास्तेजोरूपाः सुराः कान्तिमन्ति रत्नदीप्राणि विमानानि यदृच्छया गामिनो रथान् भेजिरे आरुरुहुः। के कानिव। विवस्वतः सूर्य्यस्य भासुराः प्रतिबिम्बाः स्फाटिकाद्रेः कैलासस्य तटानीव। प्रतितटं प्रतिफलितत्वात् प्रतिबिम्बानां बहुत्वम्। भासुराः। भञ्जभासेति (पा०३।२।१६१) घुरच् ॥ ३ ॥

जवाज्जातेन वातेन बलाकृष्टैर्बलाहकैः। श्वसनात् स्वस्य शीघ्रत्वं रथैरेषामिवाकथि ॥ ४ ॥

जवादिति। जवात् निजवेगात् जातेन वातेन कृत्वा बलात् आकृष्टाः सहचरीकृता मेघा ये एषां देवानां रथैः श्वसनात् वायोः सकाशात् स्वस्य स्वेन शीघ्रगामित्वं दूरगामत्वं स्वकथीव कथितमिव। आकृष्यताऽऽकस्य वायोः पश्चाद्गामित्वात् पुरश्चलितानां रथानां शीघ्रत्वमित्यर्थः। शीघ्रशब्दोऽत्र धर्म्मिवचनः। वेगजेन वातेन गमनमिति वा। वाधातोर्जीवे क्तः। श्वसनात्। पञ्चमीविभक्ते (पा०२।३।४२) इति पञ्चमी ॥ ४ ॥

क्रमाद् दवीयसां तेषां तदानीं समदृश्यत। स्पष्टमष्टगुणैश्वर्य्यात् पर्य्यस्यन्निवाणिमा ॥ ५ ॥

क्रमादिति। क्रमाद्गमनाद् दवीयसां दूरतराणां तेषां तदानीं अणिमा अणुत्वम् स्पष्टं प्रकटं समदृश्यत। किम्भूत इव। अष्टानां गुणानां अणिमादीनामैश्वर्य्यात् आधिपत्यात् पर्य्यस्यन्निव पृथग्भूत इव। सर्व्वेभ्यो महिमादिभ्यो गुणेभ्यः पृथग्भूतत्वादिव स्पष्टं दृष्ट इत्यर्थः। स्थूलमपि वस्तु दूरत्वात् सूक्ष्मं दृश्यते। तथाष्टौ गुणा वर्त्तन्ते तन्मध्ये अणिमैव तस्मिन् समये स्पष्टं दृष्टो नत्वन्य इत्यर्थः। तस्मिन् काले पर्य्यस्यन् स्फुटीभवन्निति वा स्पष्टमुत्प्रेक्ष्यते। तेषां देवानामिति वा। देवानामष्टगुणैश्वर्य्यात् तत्सम्बन्धाद्वैश्वर्य्यमणिमागमनम् इति व्याख्येयम्। दवीयसां। अतिशयेन दूराणां ईयसुनि, स्थूल-

मध्ये तुरवन् स्पृशन् सन् त सूर्यमेव सावर्णिमनोर्यशो जातानां महीभुजां राज्ञां कुलछत्र कुलप्रधु अथ च कुलक्रमीय त राजचिन्ह छत्र स्फुटमिव चक्रे । स्वय वृत्तत्वाद्धा दण्डमध्यस्थाच्छत्रमिवेत्युत्प्रेक्षते । सूर्यमण्डल प्राप्त इति भाव । उदयेऽस्तमये च समानो वर्णो यस्य स सवर्णः सूर्यस्तस्यापत्यम सावर्णिः । अत इञ् (पा०४।१।९५) इती ञ्। यस्य । दिगादित्वाद्यत् ॥ ९ ॥

नलभीमभुवोः प्रेम्णि विस्मिताया दधौ दिवः ।
पाशिपाशः शिरःकम्पस्रस्तभूपश्रवःश्रियम्
॥ १० ॥

नलेति । पाशिपाशो वरुणपाशो नलभीमभुवोरनन्यतुल्ये प्रेम्णि विषये विस्मिताया दिवो विस्मयवशादेव शिर कम्पेन स्रस्ता भूपा नृपण यस्मादवधिभूतस्य श्रवस. कर्णस्य श्रिय लक्ष्मीं दधौ । तस्मात्ाटङ्करहित. कर्ण इव शुशुभ इत्यर्थ. । अनेन दिवो नायिकात्वं व्यज्यते॥१०॥

पवनस्कन्धमारुह्य नृत्यत्तरकरः शिखी । अने
न प्रापि भैमीति स्मरमत्रक्रे नभःसदाम् ॥ ११ ॥

पवनेति । पवनस्य चन्द्रसूर्याद्याधारेषु आवहादिषु सप्तसु स्कन्धेषु मध्ये ताराचक्राधारभूत स्कन्धमारुह्य नृत्यत्तरा चञ्चलन्त करा. किरणा ज्वालारूपा यस्य स शिखी वह्निः अनेनाग्निना भैमी प्रापि इति नभःसदां देवानां भ्रम चक्रे । भैमीप्राप्तिहर्षादयं नृत्यति किमिति सर्वेषां देवानां भ्रान्तिर्जातेत्यर्थ. । अन्योऽपि नवयधूलाभे कस्यचिन्मित्रस्य स्कन्धमारुह्य नृत्यत्करा भवति ॥ ११ ॥

तारकर्णे भारती द्रूनौ विरहाद्भीमजागिराम् ।
अध्वनि ध्वनिनिर्णीतैरनुकल्पैर्व्यनोदयत् ॥ १२ ॥

तारकर्णाविति । भारती वाणी भीमजागिरां भैमीवाणीनां विरहाद् द्रूनौ सन्तप्तौ तवा देवानां कर्णौ अध्वनि मार्गेऽनुकल्पै. भैमीवाण्या. प्रकाशानन्तरमे. योग्यै. योग्यासन्निधिभिर्ध्वनिभि. व्यनोदयत् सुखिनौ

चकार । मुख्याभावे अनुकल्पोऽपि काम्यार्थमङ्गीक्रियते । स्तनादीनां द्वित्वनिष्ठा जातिः प्रायश इष्यत इति वचनात् कर्णाविति प्रतिनियतापक्ष द्विवचन ॥ १२ ॥

अथायान्तमवैक्षन्त ते जनौघमसित्विषम् ।
तेषां प्रत्युद्गमप्रीत्या मिलद्व्योमेव मूर्त्तिमत् ॥ १३ ॥

अथेति । अथ वार्त्तायोपाक्रमणानन्तरं ते देवा असित्विषं कृष्णकान्तिं आयान्तं सम्मुखमागच्छन्तं जनौघमवैक्षन्त अपश्यन् । उत्प्रेक्षते । तथा देवानां प्रत्युद्गमनस्य प्रीत्या वाञ्छया निगच्छत्पनानं मूर्तिमच्छरीरं व्योमाकाशमिव । यतः सशरीरस्य क्रियावत्त्वं युक्तम् । जनौघं मषीत्विषमित्यपि पाठः ॥ १३ ॥

अद्राक्षुराजिहानं ते स्मरमग्रेसरं सुराः । अक्षाधिनयशिक्षार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥

अद्राक्षुरिति । ते सुरा अग्रेसरं पुरःसरमाजिहानमागच्छन्तं स्मरं अद्राक्षुः । उत्प्रेक्षते । तज्जनौघस्वामिना कलिना अक्षाणामिन्द्रियाणां अथ च द्यूतपाशकानां सम्बन्धिनोऽधिनयस्य अविनीतत्वस्य शिक्षार्थं पुरस्कृतमिव अग्रेकृतमिव अथ च पूजितमिव । स्मरो हीन्द्रियवैकल्यं कर्तुं जानाति इति इन्द्रियाणां अक्षशब्दत्वेन द्यूतपाशकेषु विषये न शक्नुयात् शिक्षयितुं पाशकानामपि तद्द्वारा तन्निग्रहीतुं कलिना पूजितः पुरः प्रेषितश्च । प्रायेणोत्प्रेक्षा ॥ १४ ॥

अगम्यार्थं तृणप्राणाः पृष्ठस्थीकृतभीह्रियः । श्मशानीभुक्तसर्वस्वा जना यत्पारिपार्श्वकाः ॥ १५ ॥

अगम्येति । यत्पारिपार्श्वकाः यस्य कामस्य परितः पार्श्वयोश्चरन्तीति पारिपार्श्विका वयस्या इत्यर्थ सेवका वा । किम्भूताः । अगम्यगम्यानामनर्हाणाञ्च राजादीनां मात्रादीनाञ्च सम्भोगार्थं तृणमिव तुच्छाः प्राणा येषां ते । अत एव पृष्ठस्थीकृते पश्चात्कृते परित्यक्ते

भीह्रियौ येस्ते यथभयं पापभय लोकलज्जा चेत्येतद्द्वयं येरत्यज्यते ता दृशा निर्भया निर्लज्जाश्चेत्यर्थः । तथाऽप्राप्याभेद्याभिरभेद्यगकृतप्रतिज्ञाभि शम्भलीभि कुट्टिनीभिर्भुक्त मद्यंस्व येषा ते । सन्तीति शेष । पारिपार्श्विका पूर्ववत् ॥ १५ ॥

बिभर्त्ति लोकजिन्नाम्नं बुद्धस्य स्पर्द्धयेव यः । य
स्येशानुलयवात्र कर्तृत्वमशरीरिणः ॥ १६ ॥

बिभर्त्तीति । य स्मरो लोकान जयतीति लोकजित् तस्य भाव स्तं जनविजयिना बिभर्ति । उत्प्रेक्षते । बुद्धस्य स्पर्द्धयेव । जिनो हि मारजित इतिस्वशत्रुस्पर्द्धयेव मारजिल्लोकजिज्जिन इत्यभिधानात् लोकजित्पदव्याप्त्य बिभर्ति इत्यर्थ । तथा यस्याशरीरिण शरीररहितस्य दग्धदेहत्वादनङ्गस्यात्र लोके कामिनीमनोविकार इति मैथुनद्वारा मद्यंजनान् प्रति या कर्तृत्व स्रष्टृत्व । अत्राप्युत्प्रेक्षते । विश्वकर्तुरीशस्य मतयेव स्पर्द्धयेव । ईश्वरो हि स्मरहरत्वात् स्मरस्य शत्रु तस्मात् स्पर्द्धयेव तस्याशरीरकर्तृत्व स्वयमविनये नाङ्गीकृतमित्यर्थ । यथाऽशरीरिण सर्वेश्वरस्य कर्तृत्वमिति न्यायविद । तथाऽयमप्यनङ्ग एव सन् कार्यकारीत्यर्थ । जिनमहेशाभ्या जितोऽपि लोकजित्वेनाशरीरकर्तृत्वेन च य पुनस्ताभ्या सम एवविधोऽतिबलवानिति भाव ।।१६।

ईश्वरस्य जगत्कृत्स्न सृष्टिमाकुलयन्निमाम् । आ
स्ते योऽस्त्रीकृतस्त्रीकस्तस्य वैरमनुस्मरन् ॥ १७ ॥

ईश्वरस्येति । अस्त्रीकृता शस्त्रीकृता स्त्रियो येन एव विधो य काम ईश्वरस्येमा सृष्टि ईश्वरेण निर्मित कृत्स्न जगदाकुलयन्नस्त्रपाणि चैत स्त्रयश दुर्ग न आयथ पीडयन्नास्ते । उत्प्रेक्षते । तस्येश्वरस्य देहदाहजनित वैर स्मरन्चिन्तयन्निव । देहदाहो मम ऽनेन कृत स्तस्मादेतेन रचितमेतदीय जगत्पीडयिष्यामीति बुद्धा ईश्वरस्य किञ्चिदपकर्तुमसमर्थ तदीय जगत् स्त्रीरूपेण शस्त्रेण पीडयस्तेन सहस्पर्द्धत इत्यर्थ । अत्यन्तीकारे आयुधाकिकृतो ऽस्त्री येनेति स्त्रिया अस्त्रीत्वकारणे विरोधाभासश्च । अथ वा या ईश्वरेणापि त्रिपुरवधे मोहिनी स्त्री

उद्गत. कम्पो यस्य तं उत्कम्पं । तथा उत्थायुक्त उत्थानशील । तथा घ-रुण रक्तं । तथा आक्रोश।क्रोशघोषया आक्रोशः शापगालिप्रदानादिपर वराङ्गनघोषा यस्य त । क्रुद्धोऽप्येवविधो भवति । स्मरदर्शनानन्तर यत्किञ्चित्क्षोटपाषाणादि परप्रहारार्थं मुञ्चन्त नितरांउद्गाङ्गकम्पिनज-नैर्योग्यं शाखानपि आवेशातिशयात् केशाकेशि योद्धुं पीन पूर्वेनाक्षिप्त-न्त लोहितीभूतसर्वाङ्ग क्रोश मध्यांगीकृत्याभिव्याप्य या परनिन्दा वाक्य-स्तोत्रैर्युष्टं यस्य । अतिदूर श्रवणाणपरुषभाषिणमिति यावत । एवम्भू-त सशरीर क्रोध तत्र जनौघे ते देवा बुबुधिरे । एतैश्चिन्हैः क्रोधोऽ-यमिति ज्ञातवन्त इत्यर्थः । क्रोधाक्रान्तस्य जातिरिय । आक्रोशभूषणमि-ति पाठे आक्रोशो भूषणं यस्य त्यर्थः । उत्थायुक्तमिति उक्तम ॥ १९ ॥

यमुपासन्त दन्तोष्ठक्षतासृक्स्राव्यचक्षुषः । भ्रुकुटीफणिनीनादनिर्गन्निश्वासफूत्कृतः ॥ २० ॥

यमिति । एवंविधा जना यं क्रोध उपासन्त सिषेविरे । किंविधाः दन्तै· कृत यदोष्ठक्षत तस्य तस्मिन् असृक रुधिर तस्य स्राव्यभूतं चक्षुः येषांते दन्तोष्ठक्षतासृक्स्राव्यचक्षुषः । किम्भूत क्रोध । भ्रुवोराभिवः सङ्कोचो भ्रुकुटा सैव फणिनी तस्या नाद· फूत्कारस्ततुल्यास्तान्निभा नि श्वासा निर्गच्छन्तोऽनायनया ना फूत्कारो यासांयस्मात् ना जना य उपवन्ते त बुबुधिर इति पूर्वेण सम्बन्ध । क्रोधवशाद् दन्तैरोष्ठो दश्यते नेत्रे र-क्तं जायेते निश्वासफूत्काराश्च निर्गच्छन्ति । यस्य सेवका एवंविधा इ-त्यर्थ· ॥ २० ॥

दुर्गं कामाशुगेनापि दुर्लङ्घ्यमवलम्ब्य यः । दुर्वासोहृदयं लोकान् सेन्द्रानपि दिधक्षति ॥ २१ ॥

दुर्गमिति । यः क्रोधो मदनस्य बाणेनापि लङ्घितुमशक्यमन्य एव दुर्गमं गिर्यादिविषमदुर्गरूपमवलम्ब्य स रुद्ररूपस्य दुर्वाससः मुनेर्हृदयं मानसमा श्रित्य शक्रादिसहितान सर्वानपि लोकान् शापाग्निना दग्धुमिच्छति । अन्योऽपि दुष्टो बाणैरप्राप्यमतिविषमगिर्यादिदुर्गमाश्रित्य सर्वानपि पीडयति । रूपक समासोक्तिश्च ॥ २१ ॥

वैराग्यं यः करोत्युच्चै रञ्जनं जनयन्नपि । सू-
ते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः ॥ २२ ॥

वैराग्यमिति । यः क्रोधोऽतितरां मुखादिलौहित्यं कुर्वन् यावत् वैराग्यं करोति तावद्दूरगमपि जनयति । यश्च नितरां प्रदीप्तोऽति वृद्धोऽभिभवंश्चक्षुरादीनि सर्वाणि बाह्याभ्यन्तरेन्द्रियाणि आच्छादयत्यं धंतमसमपि उत्पादयति । प्रसिद्धं तम आलोकाभावाच्चक्षुरिन्द्रियमेवाच्छादयति रूपग्रहणात् । ननु रसनादीनि समस्तान्यपि रसगन्धादीनां ग्रहणस्य सद्भावादिति चेत्, इह तु क्रोधवशात्मनोऽनवस्थानात् सहकारिसन्निधानाभावाच्चक्षुरादीनां रूपादिस्वविषयग्रहणासामर्थ्यं जननात् सर्वेन्द्रियाच्छादि प्रथमावर्ण्यं जनकं तमश्च यः सूते इत्यर्थः । यश्च यः पूर्वोक्तप्रकारेण वैराग्यफलभूतं जनयितुं रञ्जनं करोति प्रज्वलिनश्च तमः यथा कथञ्चिद्धेतौ शत्रुः आश्चर्यं । अथ वा अपिर्विरोधार्थः । यो लौहित्यं जनयति यश्च प्रीतिमुत्पादयति स एव अप्रीतिमिति कथं । यश्च प्रकर्षेण दीप्तस्तेजोरूपः सोऽन्धकारं तमश्च इव कथं सूते । तत्रापि सर्वेन्द्रियाच्छादनमिति विरोधाभासः । वैराग्यशब्दस्य लौहित्याभावात् प्रीत्यभावार्थस्यापि तमःशब्दस्य बाधकार्थत्वेऽपात् । परिहारस्तूक्तप्रकारेण ॥ २२ ॥

पञ्चेषुविजयासक्तौ भवस्य क्रुध्यतो जयात् । ये-
नान्यविगृहीतारिजयकालनयः श्रितः ॥ २३ ॥

पञ्चेष्विति । पञ्चेषुविजयासक्तौ कामजयविषये अभिनिवेशे सति क्रुध्यतो भवस्य क्रुध्यतो महेश्वरस्य जयात् स्ववशीकरणाद्धेतोः येन क्रोधेन अन्यविगृहीतारिजयकालनयः परेण प्रारब्धविग्रहे शत्रौ कृतजयस्य समयस्तावदवसरस्तस्य नयः स इत्येवरूपो नीत्युपदेशः श्रितोऽङ्गीकृतः । अन्यदा यो जेतुमशक्यः सोऽन्येन विगृहीतो यदा जयति तदा जयो भवतीति नीत्युपदेशोऽन्यदा जेतुमशक्यस्य भवः स्मरेण सह विग्रहसमये जितत्वात् जिन इवोपदेष्टा । महेश्वरोऽपि येन स्ववशीकृतस्तस्य क्रोधस्य माहात्म्यमशक्यवर्णनमिति भावः । विगृहीतारिजयं

देशादे किं भविष्यति इत्यादिप्रकारेण पुत्रादियोगक्षेमपरा शिश्नोदरपरायणाः सन्तः श्वः परेद्युर्वा मृतिसन्निहिता इति यावत् जातस्य हि ध्रुवो मृत्युरित्यादिवचनप्रामाण्यादरात् अपि सन्निहिते प्राणगमने ज्ञाते सति सन्निपातादिना आतुरत्वेऽपि वा श्वः प्राणप्रयाणे निश्चिते सत्यपि संसारसमुद्रतारकं स्मरहरं न ध्यायन्ति किन्तूक्तप्रकारेण मरणसमयेऽपि कुटुम्बचिन्तामेव कुर्वन्तीत्यर्थः । इदमपि गूढश्लेषेण । यान्ये निमग्नाऽन्याऽपि किमपि न स्मरति । श्वः श्व इति पाठे वीप्सा वा द्विः श्वः । स्वप्राणेति पाठे स्वस्य प्राणानामित्यर्थः । द्विपमिति कर्मत्वविवक्षया द्वितीया । स्मरद्विप इति अधीगर्थेति (पा०२।३।५२) षष्ठी ॥ ३० ॥

पुंसामलब्धनिर्वाणज्ञानदीपमयात्मनाम् । अन्त-
र्म्लापयति व्यक्तं यः कज्जलवदुज्ज्वलम् ॥ ३१ ॥

पुंसामिति । यो मोहः, न लब्धं निर्वाणं विनाशो येन स ज्ञानरूपो दीपस्तन्मयस्तत्प्रचुर आत्मा मनो येषां ज्ञानिनां वसिष्ठादीनां उज्ज्वलमप्यन्तर्निर्मलमप्यन्तःकरणं तथा व्यक्तं प्रकटं म्लापयति मलसहितं करोति । मोहमोहिता कामाधीनाः सन्तो ज्ञानिनोऽपि विश्वामित्रादयः स्वमनो मेनकादिदेवाङ्गनाप्रणयव्यक्तं । पूर्वं सुउज्ज्वलस्यापि मनसो मोहेन मालिन्यं कृतं । ज्ञानिनामपि चेतांसीत्यादिमार्कण्डेयवचनं प्रमाणं । न लब्धं नाशः कृतो निर्वाणोपयोगी मोक्षोपयोगी ज्ञानदीपरूपः स्वप्रकाशज्ञानरूप आत्मा यैस्तेषां अद्वैतज्ञानरहितानामिति वा । किमिव । कज्जलवत् । यथा मध्यस्थापितस्य दीपस्य कज्जलं सुधाधवलितानां घटादीनां मध्यं मलिनयति ॥ ३१ ॥

ब्रह्मचारिव्रतस्थाश्च यतयो गृहिणं यथा । त्रयो
यमुपजीवन्ति क्रोधलोभमनोभवाः ॥ ३२ ॥

ब्रह्मेति । ब्रह्मचारी व्रतस्थायी वानप्रस्थः यतिः संन्यासी एते त्रयोऽप्याश्रमिणो गृहिणं गृहस्थं यथा अशनाच्छादनार्थं उपजीवन्ति सेवन्ते, यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन पान्थहम् ।

कुलक । चिन्हिता इति । अमी कामाद्य कतिचित् कतिपयैर्देवैरिन्द्रादिभि प्राच पृष्ठजातात् परिचयात् पटुतरात् मर्मणोस् चिन्हिता चिन्हैर्निश्चिता । देवानामपि कामाद्यायत्तत्वात् प्राचीन परिचय । अन्ये तदुपजीविना योद्धादय केचन विशेषेण न ज्ञाता यत आचूड शिरोऽभिव्याप्य मर्यादीकृत्य वा एनसा पापरूपेण कञ्चुकेन मेचका श्यामवर्णा । यो हि नीलवस्त्रादिना आवृतदेह स विशेषतो न लक्ष्यते श्यामत्वात् युद्ध इत्यर्थ ॥ ३५ ॥

तत्रोद्गूर्णे इवार्णोधौ सैन्येऽभ्यर्णमुपेयुपि । कस्या
प्याकर्णयामासुस्ते वर्णान् कर्णकर्कशान् ॥ ३६ ॥

तत्रेति । उद्गूर्णे त्यक्तमर्यादे अर्णोधौ समुद्र इवातिगम्भीरे तत्र तस्मिन् काले सैन्ये अभ्यर्णं उपेयुपि सामीप्य गते सति ते देवा कस्याप्यनुपलक्षिताकारस्य चार्वाकस्य कर्णकर्कशान् वर्णानाकर्णयामासु । अभ्यर्णं । अभ्येर्णाविदूरं इति (पा०७।२।२५) मेद् । गूर्णे उद्यमे मर्यादाधारणे च । उद्यमत्यागिनीत्यर्थ ॥ ३६ ॥

ग्रावोन्मज्जनवद्यज्ञफलेऽपि श्रुतिसत्यता । का
श्रद्धा तत्र धीवृद्धाः कामान्धा यत्खिलीकृतः॥ ३७॥

तानेव वर्णानाह । ग्रावेति । ग्रावाण्मज्जनवद्ग्रावाण प्लवन्तीति प्रतिपादितपाषाणतरणवत् ज्योतिष्टोमादियज्ञाना साध्ये स्वर्गादौ फलेऽपि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिश्रुतीना सत्यता यथार्थता ग्रावोन्मज्जनवाक्यस्य प्रत्यक्षबाधितत्वाद्यागानन्तरमेव स्वर्गादेरदृष्टत्वात् ज्योतिष्टोमादियागप्रतिपादिका श्रुतिरपि प्रत्यक्षबाधिता । तथा च यागश्रुतिरप्रमाणा प्रत्यक्षविरुद्धत्वात् ग्रावोन्मज्जनश्रुतिवदिति प्रयोगात् यागश्रुतेरपि स्वर्गादावसत्यतेति च व्याख्येय । अत्र विरुद्धलक्षणया सत्यत्वेऽप्यसत्यत्वेत्यर्थ । एवमन्यपामपि वेदवाक्याना श्रुतित्वाविशेषादप्रमाणत्वं हे धीवृद्धा बुद्धिमत्ता दयालव पक्षे श्रुतौ वा युष्माक का श्रद्धा कथमास्तिक्य प्रापि त्वप्रामाणिकेऽर्थे श्रद्धा न कार्या । यत् येन कारणेन यद्वशाद्वेदोक्तविध्यतिक्रमभिया कामान्धा यदृच्छाचारमा-

ण खिलीकृतो बद्धस्त्यक्त इत्यर्थः । श्रुतिमात्रस्याप्रमाणत्वाद्यद्य यज-
मानस्त्विंशा कतिचिद्दानानि यद्ब्रह्मचर्यं तदप्यप्रमाणिकत्वात् त्यजतेति
भावः । धीवृद्धा इत्युपहासः । धृतिमूर्खा भवन्त इत्यर्थः ॥ ३७ ॥

केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना । य
द्वेदमर्मभेदाय जगदे जगदस्थिरम् ॥ ३८ ॥

केनेति । केनाप्यज्ञातनाम्ना बोधिसत्त्वेनातिप्राचीनेन जिनभट्टारकेण वेदस्य मर्मभेदाय जातमुत्पन्नम् । वेदमर्मभेदं कर्तुमारब्ध इति यावत् । कथमत आह । यद्यस्मात् सत्त्वेन हेतुना सत्त्वरूपेण लिङ्गेन, यत् सत् तत् क्षणिकं यथा घट इत्यादिरूपेण जगदस्थिरं क्षणिकं जगदे । प्रत्ययादिसत्त्वलिङ्गेन विश्वस्य क्षणिकत्वसिद्धावनुगतलोकानुगत स्थिरमेककर्तारमधिकारिणमाश्रित्य वेदैर्विहितानां विधिनिषेधानां निराश्रयतया वेदस्याप्रामाण्यप्रतिपादनाद्वेदमर्मभेदः कृत इत्यर्थः । बौद्धसिद्धान्तस्तु ग्रन्थान्तराद्बोद्धव्यो विस्तरभयादत्र नोक्तः । अथ वक्ता पूर्वं स्वाङ्गीकृतचार्वाकमतं वा स्वमतं वेदाप्रामाण्यं बौद्धमतवादेन द्रढयति । केनेति । सत्त्वेन हेतुना यस्माज्जगदस्थिरं जगदे तस्मात् केनापि लोकोत्तरप्रज्ञेन तेनैव चार्वाकेण वेदमर्मभेदाय बौद्धेन जातं । तदीयमताङ्गीकरणात् तद्रूपेणैव जातमित्यर्थः । जगादेति पाठे यद्बोधिसत्त्व जगदस्थिरं जगादेति व्याख्येयम् । क्षणिकत्वे सिद्धे येन पापं कृतं स नष्टः ततः किमिति पापाद्भयमित्यादि प्रकरणाज्ज्ञेयम् ॥ ३८ ॥

अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् । प्र
ज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका ॥ ३९ ॥

अग्नीति । नित्यं काम्यञ्च सायम्प्रातश्चानुष्ठेयमग्निहोत्राख्यं कर्म, त्रयी च ऋग्यजुःसामानि वेदत्रयमस्य तन्त्रं वा प्रबन्धः यदुविहितोऽन्योऽपि कर्मकलापः, तथा त्रयो दण्डा यत्र तत्त्रिदण्डं सन्न्यासव्रतं तथा भस्मना पुण्ड्रं तिलकं चैवंविधं श्रौतादिप्रसिद्धमेतत् सर्वं, प्रज्ञया बुद्ध्या पौरुषेण सामर्थ्येन चोत्साहेन प्रज्ञया च निःस्वानां हीनानां प्रज्ञया पौरुषेण च वा हीनानां, धनेन धर्मेण च यथाक्रमं प्रज्ञापौरुषयोर्हीनानां पुरुषा-

र्थां जीविका जीवनोपायः । तद्रूपधारणधर्मेण द्रव्यमर्जितुमेव न तु वास्तविको धर्मः । परलोकसाधनमिव वेदप्रामाण्यवादिना भवति इति चार्वाको बृहस्पतिर्जल्पति वदति । वाक्यार्थः कर्म । तदुक्तम् तेनैव ।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

भस्मगुण्ठनमिति वा चतुर्थे पाठः । तस्मादग्निहोत्राद्यमप्रामाण्यमेवेति भावः । जीविकेति । धात्वर्थनिर्देशो णमुल् ॥ ३९ ॥

शुद्धिर्वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः । तद नन्तकुलदोषा जातिरस्ति का ॥ ४० ॥

इदानीं ब्राह्मणत्वादिजातिधर्मानसहमानो जातिं दूषयति । शुद्धिरिति । विशुद्धमातापितृजन्म हि ब्राह्मण्यादेर्लक्षणम् । सा शुद्धिर्दुर्ज्ञेया । यद्यस्मात् पित्रोर्मातापित्रोर्यौ पितरौ मातामहपितामहौ मातामहीपितामह्यौ च तयोरेकशः प्रत्येकं वंशद्वयीशुद्धौ सत्यां, एव तयोरपि पितामहादिमातृपितामहादिमातृपितामह्यादिमातामहमातृपितामहादिमातामहीन तु पितामह्यादिशुद्धौ सत्यां एव ब्राह्मण्ये यावत् प्रत्येकं शुद्धौ सत्यां शुद्धिः परीक्षणीया । तत्तस्मादनन्तकुलात्मकपरिमितवंशभेदात् । अत एव दोषा दुर्विज्ञेयाः । शुद्धमत्तानस्त्रीपुंसयोः पारम्पर्यतया शुद्धेः सन्देह त । इन्द्रादीनामहल्यादीनाञ्च पुराणप्रामाण्येन व्यभिचारदर्शनादशुद्धेर्निश्चयाच्च जातिसङ्कररूपाद्दोषात् का जातिरदोषास्ति अपितु न कापि । यदाहुः ।

अव्यक्तपङ्क्त्या नाश्नीयात् सम्यक् स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेदिति ॥

तथा । अनादाविह संसारे दुर्वारे मकरध्वजे ।
कुले च कामिनीमूले का जातिः परिकल्पितेति ॥ तस्मात् सङ्कीर्णत्वात् सर्वा अपि जातयो दुष्टा एवेति जातिधर्मान् विहाय स्वेच्छाचारं कुरुतेति भावः । यद्वा तस्माद्ब्राह्मणमनन्तानां कुलानामदोषाभावाद्व्यभिचारादिदोषरहिता जातिः काप्यस्ति अपितु न कापि । एवं पूर्वं पित्रादिव्यभिचारादिदोषात् सर्वापि जातिर्दुष्टैवेति व्याख्या-

ता । यदा सदेति च पाठः सम्यक् । तयोः पित्रोरनलङ्कृतानां दोषा-
भावेन कृत्वाऽदोषाजातिरस्ति अपि तु महति कुलेऽस्य चिह्नापनम्भवा
त् सर्वोपि जातिदुष्टैवेति व्याख्या । यच्छब्दसामर्थ्यात्तच्छब्दाध्याहार ।
एकश. । सङ्ख्यैकवचनाद्विति (पा०५।४।४३)शस् ॥ ४८ ॥

कामिनीवर्गसंसर्गैर्न कः सङ्क्रान्तपातकः ॥ ना
श्नाति स्नाति हा मोहात् कामक्षाममिदं जग
त् ॥ ५१ ॥

अन्यदप्याह । कामिनीति ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ १ ॥

इति वचनात् पुरुषापेक्षया अष्टगुणकामानां कामिनीनां स्त्रीणां
नाना जातीयानां वर्गं समूहस्तस्य संसर्गैर्योनिसम्बन्धैः कृत्वा कः
पुरुषः सङ्क्रान्तं प्रविष्टं पातकं यत्र एवं विधो न अपि तु । संवत्स
रेण पतति पतितेन सहाचरन् । इति शास्त्रात् कृतपातकस्त्री-
संसर्गात् सर्वोऽपि प्राणी सङ्क्रान्तपातक एव । तस्मात् काम्यत इति
कामः फलं तेन कामरहितं एकादश्युपवासादिव्रतं नियमो यस्य । म-
दनेन कृत्वा क्षीणं निष्फलं व्रतं यस्य वा तज्जगत् सर्वोऽपि लोकः मोहा
द्विचाराज्ञानाद्वृथैव यथावत् नाश्नाति न भुङ्क्ते एकादश्यादौ वृथै
व च स्नाति तीर्थादौ हा कष्टम् । स्वयं शुचित्वेऽपि स्त्रीव्यभिचारादि-
दोषसंसर्गात् स्त्रीणां शुचित्वेऽपि दुष्टसंसर्गात् सर्वथा पातकित्वादुप-
वासादि वृथैव करोति । केवलं प्रयास एव तस्य भवतीत्यर्थः । तस्मा
त् स्वेच्छाचार एव कार्य इति भावः । चार्वाकमते विधिनिषेधाभावा
न्नैव दोष इत्यर्थः । तेषां सदाचारत्वाज्जातिरपि सर्वा सदोषैवेत्युक्त
भवति । अभिलाषेण कृत्वा नष्टं व्रतं यस्य । एकादश्यां भोजनाभिलाषे
सत्यपि न भुङ्क्ते, अभिलाषे सत्य यात्रादौ स्त्रीभिर्दर्शितं स्नाति
च तीर्थादौ,नामैव वृथैव । कामोपहतत्वाद्वहिः शाचयमनादुदेति-
त्यर्थः । क्षामः । क्षायो मः इति (पा०८।२।५३) मः ॥ ५१ ॥

ईर्ष्यया रक्षतो नारीर्धिक् कुलस्थितिदाम्भिका-
न् । स्मरान्धत्वाविशेषेऽपि तथा नरमरक्षतः ॥ ४२ ॥

ईर्ष्येति । ईर्ष्यया असहनत्वमात्रेण हेतुना नारीः रक्षतस्तासां परपुरुषदर्शनमपि कर्तुं अप्रयच्छतः कुलस्थितिर्योऽस्मद्वंशे स्त्रीणां मर्यादा तद्रूपेण दम्भेन चरन्ति ये तान् पुरुषान् स्त्रीरक्षणमेव कुलस्थितिं मन्यमानान् धिक् ते निन्द्याः । निन्द्यत्वे दाम्भिकप्रयुक्तत्वमेव हेतुः । किम्भूतान् । स्त्रियः पुरुषाश्च विवेकशून्या यतोऽतः स्मरान्धत्वस्याविशेषे साधारणे सत्यपि तथा नारीवन्नियमेन नरमरक्षतः परदारसंसर्गादनिवारयतः । न हि जातिसङ्करो नारीणामेव व्यभिचारेण प्रयुक्तो यतस्ता एव रक्षणीयाः किन्तु पुरुषाणामपि व्यभिचारेणापि यदि रक्षणीयं तर्हि द्वयमपि । नचैवं क्रियते । तस्मादन्यतरस्यैव रक्षणं जातिसङ्करस्यैव तादवस्थ्यात् कुलस्थित्यभावान्नारीमात्ररक्षणं तेषां दम्भ एवेत्यर्थः । तस्मादीर्ष्यां त्यक्त्वा नरस्य वेश्यादाविव स्त्रीणामपि नरान्तरे प्रवृत्तिप्रतिषेधो नाकृत्यमिति भावः । ईर्ष्ययेत्यनेनेर्ष्यैवात्र हेतुर्न तु धर्म इति सूचितं । अपि च स्मरान्धत्वाविशेषेऽपि नारीरक्षतोऽनेकपतिभ्यः स्त्रियं क्लमेव तस्याः कुर्वतः । नरं तु रक्षोवद्रक्षतः । स्त्रिया यथा एक एव पतिस्तथा नरस्यैकैव स्त्रीति न किन्तु ते बह्वीः कुर्वन्ति तस्मादपि निन्द्यास्ते अत्रापि ईर्ष्यैव हेतुः ॥४२॥

परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः । अहल्या
केलिलोलेन दम्भो दम्भोलिपाणिना ॥ ४३ ॥

परेति । परदारेभ्यो या निवृत्तिः ताः सादरं न द्रष्टव्याः किंपुनः स्प्रष्टव्या इत्यतदर्थप्रतिपादकं शास्त्रं सोऽयं परवञ्चनरूपो दम्भः अहल्यया गौतमस्त्रिया सह केलिः कामक्रीडा तत्र लोलेन तत्परेण दम्भोलिपाणिनेन्द्रेण स्वयमात्मनैवानादृत उपेक्षितः । परदारागमनप्रायश्चित्तविभागोऽप्यनेन दूषितः । अन्यं प्रति तन्न कार्यमिति उपदिशन्ति स्वयं तु तदेव कुर्वन्तीत्युपहासोऽपि सूचितः । अहल्यासम्भोगलम्पट इन्द्र एव दाम्भिकोऽन्ये परदारपराङ्मुखाः सर्वेऽपि दाम्भिका एवेति भा-

। वज्रहस्तत्वात् परदारमर्षणं कृतवान् तस्मादयं शास्त्रीयो निषेधो न भवति किन्त्वशक्तत्वाद्दम्भ एवेति ॥ ४३ ॥

गुरुतल्पगतौ पापकल्पना त्यजत द्विजाः ॥ ये पात्र' पत्युरत्रुधैर्गुरुदारग्रहे ग्रहः ॥ ४४ ॥

अन्यस्त्वाह । गुर्विति । भो द्विजा यूयं गुरुतल्पगतौ पित्रादिभार्या सम्भोगे विषयं पापकल्पनां,

ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पग
महापातकिनस्त्वेते तथा विश्वासघातिन ॥

इत्यादिवचनानुरोधेन महापातकसम्भावनां त्यजत । यस्माद्येषां वो युष्माकं पत्यु स्वामिना द्विजराजस्य चन्द्रस्य देवानां गुरोर्वेदादिपाठयितुर्बृहस्पतेर्दारा तयाऽङ्कुष्टे सम्भोगे अत्युच्चैरतितरां ग्रहेऽभिनिवेश अभूत इति शाप । वेदादिपाठनात् बृहस्पतेर्देवगुरुत्वं । तस्मात् तद्भार्यागमने चन्द्रस्य दोषलेशोऽपि न तत्सेवका यूयमपि गुरुतल्पगमनं काम कुरुतेति भाव । यथोक्तं ।

राज्ञि धर्मिणि धर्मिष्ठा पापे पापा समे समा
राजानमनुवर्तन्ते यथा राजा तथा प्रजा इति ॥

अयमप्युपहास । गुरुशब्दमलनैवमुक्त । मङ्क इति पाठे हरसव ॥ अथ च तेन समृद्धा गुरुतल्पगमनेऽपि प्रत्यहमुदेत्येव न तु पतित इत्यर्थं । इन्द्रादिनिकटे वाल्मीकिप्रमुखा द्विजास्तिष्ठन्ति तेषां सम्बोधन । बृहस्पतेर्भार्यायां गर्भमुत्पाद्य तत्सुतस्वीकारार्थं सोद्यमानिन्द्रादीन् प्रति चन्द्रेण महारणारम्भरभसोऽत्र तेन प्रकटित । अनन्तरं ब्रह्मणा गुरुभार्यां त्याजितोऽपि स गर्भजपुत्रं गृहीतवानिति पौराणिकी कथा । तन्नष्टु गमनीये स्वात्मप एव मन्त्रकमप्रचारिति विद्व ॥ ४४ ॥

पापात्पापा मुदः पुण्यात् परासोः स्युरिति श्रुतिः ॥ वैपरीत्य द्रुत साक्षात्तदाख्यात यलाय ते ॥ ४५ ॥

पुण्यो वै पुण्येन कर्मणा पाप पापेनेत्यादिश्रुति दूषयति । पापा

दिति । परा गता प्रमवो यस्य मृतस्येत्यर्थः तस्य प्राणिन इह कृता-त्रिविहाचरणजात पापात्तापा दुःखानि पुण्यादिह कृताद्विहिताचरणा-ज्जाद्धर्मान्मुद सुखानि स्पृशन्ति इति श्रुतिराह । साक्षात्प्रत्यक्षं तु तं गोघ्नं वैपरीत्यं दृश्यत इति शेषः । प्रयागादौ प्रातर्माघस्नान कुर्वतो भवदभिमतसुकृतकारिणः पुरुषस्य तदानीमेव दुःख भवति । भवदनभिमतपरदारसङ्गमादिपापकारिणस्तदानीमेव सुख भवतीति वैपरीत्यमनुभूयते । अथ चेय श्रुतिः श्रवणमात्र न तु तत्र किञ्चित्प्रमाण । किन्त्वमृतस्य किंवा भविष्यतीति को वेद जीवतः तावद्वै परीत्यमनुभूयते तत्तस्मात् श्रुतिप्रत्यक्षयोर्विषये एव बलाबले स्वयमेव प्राज्ञ्यात कथयत भवन्त एव विचारयन्त्वित्यर्थः । प्रमाणयोः परस्परविरोधे प्रबलत्वेन दुर्बलत्वेन च व्यवस्था क्रियते । ततश्च यथा प्रत्यक्षानुमानविरोधे प्रत्यक्ष बलीय । तथा श्रुतिप्रत्यक्षविरोधे प्रत्यक्षमेव बलीय इति निश्चित्य पापात् सुखमनुभूयत इति पाप सर्वैः कार्यमिति भाव । प्रबलदुर्बलत्वव्यवस्थापकस्य न्यायस्याप्ययमुपन्यास. ॥ ४५ ॥

सन्देहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजिनं यदि । त्यज्यत श्रोत्रियाः सत्रं हिंसादूषणसंशयात् ॥ ४६ ॥

सन्दिग्धेऽपि परलोके त्याज्यमेवाशुभ बुधैरित्यादिप्रतिबाधादुदूषयति । सन्देहइति । तत्र तत्र व्यभिचरितत्वाच्छ्रुतिप्रामाण्यानिश्चयात् पापं न कार्यं जन्मान्तरे निरयादिदुःखभयादित्येक वदन्ति, अन्यैश्च येन कृत स तु दग्धोऽन्यदेहप्राप्तिस्तस्य स्यादित्यत्र का प्रत्याशेति चार्वाकादिविप्रतिपत्तेश्चान्यदेहाप्ते सन्देहे सत्यपि पारत्रिकोऽपि दोष परिहर्तव्य इति न्यायेन यदि देहान्तर स्यात् तर्हि पापफलं दुःखमनुभूयेतेति शङ्कया यदि वृजिन पाप विवर्ज्यं सर्वथा न कार्यं तर्हि हे श्रोत्रियाश्छान्दोग्यायिनो यज्ञिकादयो युय सत्र अनेककर्तृक याग त्यज्यत नैवं कुरुत। कुतः । पशुहिंसायाः सम्बन्धिनो दोषस्य संशयात् सन्देहात् । मा हिंस्यात् सर्वाभूतानि, अहिंसा परमो धर्म, इत्यादि श्रुतिस्मृतिवशाद्यागेऽपि हिंसा न कार्येत्येके । विधिबलादशङ्कितपापोत्पत्ति सा कार्यैवेत्यन्ये इति सन्देहे यागीयपशुहिंसा चेत् पापहेतु स्यात्तदा नेष्टमा-

स्तिः किन्त्वनिष्टमेव स्यादिति पातकोऽपि दोषः परिहरणीय इत्यनेनैव न्यायेन यागमपि त्यजत न चेदेव पापमपि कुरुतेति भावः । अन्यथा-दिति पाठे सम्यगित्यर्थः । कलुषं वृजिनेत्यमरः ॥ ५६ ॥

यस्त्रिवेदीविदां वंद्यः स व्यासोऽपि जजल्प वः ।
रामाया जातकामायाः प्रशस्ता हस्तधारणा ॥ ५७ ॥

व्याप्त्यमेवाशुभं बुधैरित्यपि सव्यभिचारमाह । य इति । त्रिवेदीविदां वेदत्रयवेदिनां वो युष्माकं वन्द्यो नमस्कार्यः स व्यासोऽपि इति भारतादौ जजल्पोक्तवान् । इति किं । जातकामायाः कामार्ताया स्त्रियो रामाया अज्ञातकुलशीलाया अपि रमणाय हस्तधारणा पाणिग्रहणं अङ्गीकरणञ्च प्रशस्ता युक्तैव । न केवलं वाल्मीकिः किन्तु व्यासोऽपीत्यपिशब्दार्थः तद्वचनं भवद्भिः पूज्यत्वादङ्गीकर्तव्यमित्यपि सूच्यते ।

स्मरार्तां विह्वलां दीनां यो न कामयते स्त्रियम् ।
ब्रह्महा स तु विज्ञेयो व्यासो वचनमब्रवीत् ॥

इत्याद्यर्जुनतीर्थयात्राविषये कचदेवयान्यादिप्रसङ्गे च भारतादौ रामायणे च शूर्पणखाद्युक्तौ प्रसिद्धम् । ततश्च पापमप्यकार्यमित्ययुक्तम् । तद्भयादपि दोष इति भावः । वेदविदामिति कृत्यानामिति (पा॰२।३।७१) षष्ठी ॥ ५७ ॥

सुकृते वः कथं श्रद्धा सुरते च कथं न सा ।
तत्कर्म पुरुषः कुर्याद्येनान्ते सुखमेधते ॥ ५८ ॥

युक्त्यन्तरेण पूर्वोक्तमेवाह । सुकृत इति । सुकृते चान्द्रायणादौ वो युष्माकं कथं केन हेतुना श्रद्धा आस्तिकता अपि त्वनुचितमेतत् । सा च श्रद्धा सुरते कामिनीविषये न कथमिति । तया तत्र भवितुं युक्तम् । यस्मात् पुरुषस्तत्कर्म व्यापारं कुर्यात् येन कर्मणा कृत्वाऽन्ते कर्मावसान एव सुखमेधते वर्धतेऽनुभूयते पुरुषेणेत्यर्थः । जन्मान्तरे यज्ञादिजन्यं सुखं सन्दिग्धं सुरतजन्यं तु अत्रैव स्वानुभवसिद्धम् । तस्माच्चान्द्रायणादि सुकृतं त्यक्त्वा सुरतमेवाङ्गीकर्तव्यमिति भावः । ए

तेन मार्भैरिष्टजिह्वा च पूर्णेन वयमायुषा । प्राक्तनकर्म कुर्वन्ति ये-
नान्ते सुखमेधत इत्यादि विडम्बितं । दुरितं चेति पाठे परदारगमना-
दार्थित्यर्थः । यतः परदारगमनानन्तरमेव सुखं दृश्यते ॥ ४८ ॥

बलात् कुरुत पापानि सन्तु तान्यकृतानि वः ।
सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥ ४९ ॥

बलादिति । भो द्विजा यूयं पापानि परस्त्रीगमनादीनि बलादनु-मतायामन्यामपि कुरुत तानि पापानि वः युष्माकं कृतान्यप्यकृतानि सन्तु फलद यानि मा भवन्त्वित्यर्थः । यतो मनुर्बलेन कृतान् सर्वानर्था-न् व्यापारान् अकृतानेवाब्रवीत् । मनुवचनप्रामाण्यात् बलाद् पाप कु-रुतेत्यर्थः । बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चाभिलेखितं यदित्यस्यार्थमपि मनुवचनं यज्ञार्थान्तरपरिकल्पनया प्रकृते निदर्शयन् प्रतिपत्तीं वि-डम्बयति ॥ ४९ ॥

स्वागमार्थेऽपि मा स्मास्मिंस्तीर्थिका विचिकित्सथ । तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ ॥ ५० ॥

स्वागमेति । भोस्तीर्थिकाः सम्प्रदायागतविद्याः यूयमस्मिन् पूर्वो-क्तमनुवचनरूपस्वागमप्रतिपाद्येऽर्थेऽप्यमेव आत्माराम स्यादिति वा-र्थे विषये विचिकित्सथ संशयाना मा स्थ भवथ इदं कार्यं न वेति संशयं परित्यज्य इत्यर्थः । ननु ता श्रुत्या वा इदं कथं प्रतिपादितमि-त्युभयत्राप्यनादरपरा वा मा जयत । तर्हि किं कार्यमित्यत आह । यूयमानन्दं परदारगमनादि यं यं इच्छथ तं तं स्वच्छन्दं स्वेच्छया नि-संशयमादरेणाचरत आत्माराम स्यादिति श्रुतिप्रामाण्यात्, पूर्वोक्त-स्मृतिप्रामाण्याच्च संशयं परित्यज्य आदरेण यदृच्छया सुखमुपलभध्व-मिति भावः । अस्मदागम यद्यपि निन्दापरास्तथापि स्वागमं निन्दा न युक्तेत्यपि सूचितम् । मा निरनुबन्धकस्ततो न लुङ् । तीर्थेनागमेन चरति ठक् । सदुपाध्यायस्य तीर्थं तस्मादन्यार्थे ठन् ॥ ५० ॥

दोऽपि श्रुतिस्मृती ममैवाज्ञेति श्रीभगवद्वचनाद्दैवकीया आज्ञा । अत-स्तत्र वेदरूपाया देवाज्ञायां कामाज्ञातोऽधिकार्हता पूज्या मान्या काऽपि तु देवत्वाविशेषाद्वेदाज्ञैव कार्य्या कामाज्ञापि माननीयैवेत्यर्थः । आज्ञाद्वयमपि समान । तस्मात् कामदेवाज्ञामपि कुरुष्व न त्वेकत्र पक्षपात. कार्य्य इति भाव॰ । यद्वा तत्र द्वयो राज्ञयोर्मध्ये अधिकम-र्हता यस्याः सा काज्ञा अपितु पूर्ववदविशेषाद् द्वयमपि सममेवेत्यर्थ । द्वयोर्मध्येऽधिकार्हता केति यूयमेव कथयतेति । ब्रह्मादिभिरप्यङ्गीकृतत्वाच्छिष्टपरिगृहीतलक्षणप्रामाण्यात् प्रत्यक्षलक्षणसुखहेतुत्वाच्च का-मदेवाज्ञैवाधिकार्हता योग्या । वेदा हि ब्रह्मादीनामेवाज्ञा ब्रह्मादय-श्च कामदेवाज्ञाकारिण॰ । ततश्च यदीयाऽज्ञा भवद्भिरनुष्ठीयते तैरपि अनुष्ठीयते या सा भवता सुतरामनुष्ठेयैवेति तात्र इति वा । पक्ष-पातात तारतम्याज्ञानाच्च मूर्खत्व । वेदो हीति च पाठ. । कामदेवा-ज्ञामेव कुरुष्व यस्माद्वेदोऽपि देवाज्ञा । तत्र वेदेऽधिका का पूजा अपि तु कामदेवाज्ञैवानुष्ठेया । ब्रह्मादिभिरपि अनुष्ठितत्वादिति वा । का विगर्हणेति पाठे तत्र कामाज्ञाया का निन्दा कोऽनादर इ-त्यर्थं । दैवकीया । गहादिषु जनपदयोः कुक्चेत्यत्र देवस्येति वक्त-व्यत्वात् (पा०४।२।१३८) कुक् छ ॥ ५९ ॥

प्रलापमपि वेदस्य त्वागं मन्यध्वमेन चेत् ॥ केना
भाग्येन दुःखान्त विधीनपि तथेच्छथ ॥ ६० ॥

श्लोकत्रयेण मीमांसकान् परिहसति । प्रलापमिति । महता प्रया-सेन यस्य प्रामाण्यमुपपादित तस्य वेदस्यैव कञ्चन भागमश्व सो-ऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्व इत्याद्यर्थवादमन्त्रनामधेयानर्थं प्रलापमिवानर्थकवचो रूप चेत्मन्यध्वे अङ्गीकुरुध्व । आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्यादिना पूर्वपक्षसूत्रेण प्रतिपादितस्यानर्थक्यस्य, विधिना त्वेकवाक्यत्वादित्यादिना सिद्धान्तसूत्रेण स्तुत्यर्थवादादेरुपयोगेऽभिहितेऽपि अतिसार्थक्याज्ञावादातिरूतत्वादर्थवा-दादि वेदभागसमर्थकवचनप्राय चेत्मन्यध्वे तर्हि बहुधनव्ययायासमा-ध्यत्वाद्दु खजनकान् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादीन् विधिभा-

को हि वेदास्त्यमुष्मिन् वा लोक इत्याह या श्रुतिः ॥ तत्प्रामाण्यादमुं लोकं लोकः प्रत्येतु वा कथं ॥ ६२ ॥

को हीति । को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा भवेति दिग्वली काश्यान करानीत्यादि या श्रुतिरमुष्मिन लोके परलोके विषये सुखादि कमस्ति वा नास्तीति वा हि निश्चतको वेद अपि तु न कोऽपि आह ब्रवीति, तस्याः श्रुतेः प्रामाण्यात् अमुं लोकं परलोकं लोकः परीक्षकोऽस्मदादिः कथं वा कथमिव प्रत्येतु विश्वासेन निश्चिनोतु ब्रूहि, अपि तु न कोऽपि । यदीय स्तित्वनास्तित्वयोः श्रुतेरेव सन्देहस्तत्प्रामाण्यात् पामरो भवादृश एव परलोकं मन्यते न तु प्रामाणिकः कश्चिदिति भावः ॥ ६२ ॥

धर्म्माधर्म्मौ मनुर्जल्पन्नशक्यार्जनवर्जनौ । व्याजान्मण्डलदण्डाशी श्रद्दधाति मुधा बुधैः ॥ ६३ ॥

स्मृतिप्रामाण्यमपि दूषयति । धर्म्मेति । बहुधनव्ययायाससाध्यत्वाच्छीतभयाद्यत्नानाद्यशक्त्वम् अमी परधनसन्तापनादिरूपतया तत्तदिन्द्रियवर्गस्य परिहर्तुमशक्यत्वात् सुखानुभवमूलत्वाच्च क्रमेणाशक्य अर्जनं वर्जनं च ययोस्तौ धर्म्माधर्म्मौ बुद्धिपूर्वं जल्पन् बहुधा प्रतिपादयन् मन्वन्तराधिपतिरादिराजो मनुर्मेस्मृतिकर्त्ता ब्रह्मपुत्र स्वायम्भुवो व्याजाद्धर्म्माधर्म्मोपदेशकस्मृतिग्रथनमिषेण विधिनिषेधातिक्रमनिमित्तप्रायश्चित्तद्वारा मण्डलस्य राष्ट्रस्य लोकस्यापराधनिमित्तीकृत्य दण्डं यद्द्रव्यमभिलाषुकः यतस्तस्य तु बुधैः पण्डितम्मन्यैः मुधा वृथैव श्रद्दधायि आदृतं । अधर्म्माचरणं सुकरमित्यधर्म्ममेव सर्वं करोति । ततश्च यन केनाप्युपायेन ग्राम्योपायोपाय एव दण्डं मनुनाभिहिता न धर्म इत्यर्थः । अबुधैरिति वा । मनुवचनमूलत्वात् । स्मृतिमात्रस्याप्रामाण्यमुक्तम् ॥ ६३ ॥

व्यासस्यैव गिरा तस्मिन् श्रद्धेत्यद्धा स्य तान्ति

काः । मत्स्यस्याप्युपदेश्यान् वः को मत्स्यानपि भाषताम् ॥ ६४ ॥

पुराणप्रामाण्यं दूषयति । व्यासस्येति । दासदारिकाव्यभिचारजातस्य भ्रातृजायाया पुत्रोत्पादनशीलस्य व्यासस्यैव कवित्वरूपया गिरा तस्मिन् धर्मे परलोके व्यास एव वा श्रद्धा भावना आस्तिक्यबुद्धिरित्येतत् तस्माद्धेतोरद्धा निश्चितं यूयं तान्त्रिकाः युक्तिज्ञा वाक्यविचारचतुराः स्थ भवथ । विरुद्धलक्षणया एवंविगीतेन व्यासेन प्रतिपादिते धर्मे परलोके तस्मिन् वा येषामास्तिक्यबुद्धिस्ते यूयं सुविज्ञतमा इति भावः । अथ च तान्त्रिकाः कुविन्दतुल्या मूर्खा इत्यर्थः । व्यासस्येत्यं कथयनेनैव कारेण विगीतत्वं सूचितं । मूलापरिशुद्ध्या भारतादीनां पुराणानाञ्चोपहासः कृतः । मत्स्यपुराणं तु मत्स्यरूपधारिणा विष्णुना मनवे प्रोक्तमिति पृथगुपहसति । मत्स्यस्योपदेश्यान् वो युष्मान् मनुप्रभृतीन् को भाषतां युष्माभिः सह संवादं कः करोतु । यतो मत्स्यानपि को भाषतां । मत्स्या अपि संवादार्हा न भवन्ति तदुपदेशोपजीविनस्तच्छिष्या भवन्तस्तु दूरे इति । को भाषतां युष्मान् मन्वादीन् मत्स्यान् को वदतु अपि तु न कोऽपि । यतो मत्स्यस्योपदेश्यान् जलस्थलचारिभ्यो ये हीना मत्स्यशिष्यास्तन्निर्देशकारिणः तदुपदेशकापेक्षयोपदेश्यस्य हीनत्वान्मात्स्यशब्देनापि नाभिधेया इति भावः । एवं कूर्मपुराणादीनामुपहासः । अथ च मनुसम्बन्धित्वेन सर्वेऽपि मानवशब्दवाच्या यथा तथा मत्स्यसम्बन्धिना मात्स्यशब्दाभिधेयत्वं युक्तं न तु मत्स्यशब्दाभिधेयत्वमिति को मत्स्यानपि भाषतामिति युक्तमुक्तमिति ध्वन्यं च । तान्त्रिका इति तन्त्रमधीयते वेद वेत्यर्थे वसन्तादेराकृतिगणत्वात् (पा०४।२।६३) ठक् । मत्स्यस्येति । कृत्यानामिति ( पा०२।३।७१ ) कर्तरि षष्ठी ॥ ६४ ॥

पण्डितः पाण्डवानां न व्यासश्चाटुपटुः कथम् ॥
निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवान्न किम् ॥ ६५ ॥

पूर्वोक्तमेव व्यासस्याप्रमाणत्वं श्लोकद्वयेनाह । पण्डित इति । पण्डिता बुद्धिमान् अत एव कविरीतिमैतिकसार्थस्य वर्णकः तथा पाण्डवाना युधिष्ठिरादीनां चाटुनि प्रियवचने पटुः एवम्भूतः स भवद्भिराप्तत्वेनाङ्गीकृतो व्यासस्तेषु दुर्योधनादीन् निन्दत्सु न निनिन्द किं ? तथा तेषु श्रीकृष्णादीन् स्तुवत्सु सत्सु न स्तुतवान् किं ? तेषु निन्दत्सु स्वयमपि निनिन्द तेषु स्तुवत्सु स्वयमपि तुष्टावेति । पूर्वविशेषणयुक्तस्यापि व्यासस्य पराधीनत्वात् तत्प्रणीत भारताद्यप्रमाणमेवेति भावः । अन्योऽपि पण्डितः प्रभुचित्तानुगुणमेव व्यवहरति तद्वदयमपीत्यर्थः ॥ ६५ ॥

न न्यायं किल देव्या स व्यासः कामान् समासृजत् ।
दासीरतस्तदासीत्तज्जन्मा तत्राप्यदेशि किम् ॥ ६६ ॥

नेति । स भवदीयो व्यासः न्यायं शास्त्रानुकूलं वृत्तमत्र देव्या महिष्या कामात् स्मरपरवशत्वादनुरागात्न समासृजत व्यवहरति स्म ? किलेति उपहासे श्रुतौ च । अस्मद्बुद्ध्या तावत् कामादेव सङ्गत । पौराणिकास्तु देवरात् सुतोत्पत्तेर्धर्मत्वात्तया सुतोत्पादनार्थं मात्राऽऽज्ञप्तस्तथा सक्त इति वदन्ति । तस्मात्तथा तथाऽस्त्विति । तदा पुत्रोत्पादनापलक्षिते काले दास्या रत आसादिति यत प्रसिद्ध तत्र दासीरतेऽपि मात्रा सत्यवत्याऽदेशि आदिष्ट किं । कथयतेति प्रश्नः । काकुरूपहासार्थं । अपि तु तत्र तावन्नादिष्टः । तस्मादुभयत्रापि स्मरपरवशत्वादेव प्रवृत्त । एवंविधस्यानाप्तत्वात तद्वचनमप्रमाणमिति भाव । समासृजत । दशमञ्जेति (पा-६।४।२५) नलोप ॥ ६६ ॥

देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ । गाः
नतैः किं न तैर्व्यक्तं ततोऽप्यात्माऽपवित्रीकृतः । ६७ ॥

इदानीं देवद्विजगोभजनं दूषयति । देवैरिति । देवैर्ब्रह्मादिभिः द्विजैर्याज्ञवल्क्यादिभिश्च कृता ग्रन्थाः पुराणानि स्मृतयश्च त एव येषां भवादृशानां वैदिकानां तदादृतौ तेषां देवानां द्विजानाञ्चादृतौ आदरे विषये पन्थाः । देवा ब्राह्मणाश्चावश्य भजनीया इत्युपदेशपरा

प्रमाणमिति यावत् । स्व पूजायमेव तैग्रन्था निर्मिता । तद्वचनग्रन्थ प्रामाण्यात देवादीनाद्रियन्त एवम्भूता मूर्खा ये तैर्युष्माभिस्तद्ग्रन्थप्रामाण्याद्देव गा पशुरूपा सुरभि नते मद्भिस्तत पशोर्गोरपि सकाशात् आत्मा स्वरूप व्यक्त स्पष्टं नाधरीकृत. किन्तिन्नोऽथ च हीनो न कृत किन्त्वपि तु कृत यथ । नमस्कार्यापेक्षया नमस्कर्तुर्हीनत्वात् पशोरपि सकाशाद्भवन्तो मूर्खतमा इत्यथ । व्यक्तं मन्ये इति यावदिति वा । स्वार्थपरवचनस्याप्रामाण्यत्वाद्देवब्राह्मणगुरुजिवन्दनं निर्मूलत्वात्त्याज्य मेवेति भावः । दवैर्द्विजै कृता ये ग्रन्था येषा वः पन्था प्रमाण तैर्नवञ्चितस्य पश सेषा देवादीना वा ग्रन्थादीना वा आदरणनिमित्त गा मते ततोऽप्याधमेति पूर्ववत् ॥ ६७ ॥

साधु कामुकतामुक्ता शान्तस्वान्तैर्मखोन्मुखै ।
सारङ्गलोचनासारां दिव प्रेत्यापि लिप्सुभिः ॥६८॥

इदानीं परलोकनङ्गीकृत्यापि यज्वना ब्रह्मचर्यादि परिहसति । साध्विति । शान्तविषयभागपराङ्मुखं स्वान्त चित्त येषा तैर्मखोन्मुखैर्दीक्षादीक्षैरपि यज्ञेपु भोरसाह प्रवृत्तैर्याज्ञिकै कामुकता सम्भोगलोभिता यदमुक्ता न त्यक्ता तत् साधु युक्त । यद्वा साध्वी सुखकारिणी सा चासौ कामुकता सा न मुक्ता । शान्तस्वान्तैर्यज्वभि कामुकता साधु मुक्ता त्यक्ता । साध्विति काक्वा विरुद्धलक्षणया नैव मुक्ता किन्तु सम्भोगैकनिष्ठा एव ते इति व्याख्येय । मखे ऽपि हेतुगर्भविशेषणमाह । किम्भूतै सारङ्गलोचनाभि सुन्दरीभि सारा श्रेष्ठा तां एव. सार श्रेष्ठ पदार्थ यस्या तादृशीं वा दिव प्रेत्यापि मृत्वापि लिप्सुभि रम्भादिकाम्यैव बहुधनव्ययायासमसाध्यान् यज्ञ नेव कुर्वन्ति । तै कामुकतैव त्यक्ता । अन्यथा तु यावज्जीवमेव कामुकस्य यज्वना स्त्र सम्भोग-स्मरणपीति प्रेत्यापीत्यनेन सूचित । तस्माद्दीक्षासमयेऽपि ब्रह्मचर्याङ्गीकारेणानेना न वञ्चनीय इति भाव , दिव । न लोकेति (पा०२।३।६९।) षष्ठी ॥ ६८ ॥

कः शमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः ।
भस्मीभूतस्य भूतस्य पुनरागमन भ्रमः ॥ ६९ ॥

—एतदेवोपजीव्याह । क इति । हे प्राज्ञा: प्रकर्षेणाज्ञा भीमुरुराः तस्माच्छमः शान्तिः क अपि तु नक्कोऽपि । शमाङ्गीकारेण परलोकसाधनेऽपि काम्यमानकमनीयकामिनीसम्भोगफलत्वाद्दुरूपमेव शान्तिस्तस्मान्न कार्येत्यर्थः । तर्हि किं कार्यमित्यत आह । प्रियायास्तरुणरमणीयरमण्याः प्रीतौ प्रेम्णि सत्याः सुखोत्पादने विषये परिश्रमो भूयान् प्रयासः क्रियतां कर्तव्यः । शान्तिः का अपि तु नकापि । हे प्राज्ञा बुद्धिमन्तस्तारतम्यविचारचतुराः प्रियाप्रीतौ प्रयास कार्यः । यद्वा सत्वरंतुत्वादिति वा । परत्रगमने लोकान्तरे निरयादि भविष्यतीत्याशङ्क्याह भस्मीभूतस्य मृतस्य देहस्य भूतस्य जातस्य देहिनो वा पुनरागमनं लोकान्तरे क्रियादिदेहप्राप्तिरिति यद् भूमः, परलोकस्यैवाप्रामाण्यात्, तत्सद्भावेऽपि च देहस्यैवास्तस्याक्षरय च भस्मीभूतत्वात् कर्म नरकादि भुज्यते । तस्माद्यावज्जीव यथेच्छ सुखं भोक्तव्यमिति भावः । प्रियाप्राप्ताविति च पाठः ॥ ६९ ॥

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतम् ॥ अप
वर्गे तृतीयेति भणतः पाणिनेरपि ॥ ७० ॥

मोक्षाधिकाराभावात् ब्रह्मचर्यादिपरित्यागेन काम एव सेवनीय इति शब्दछलेन वृद्धसम्मत्या स्वीय मतं दृढयति । उभयीति । अपवर्गे तृतीयेति भणतः पाणिनेरपि मुनेः उभयी प्रकृतिः स्त्रीपु सलक्षणा द्वयीव्यक्तिः कामलक्षणे पुरुषार्थे मैथुने धर्मे सज्जेत् आसक्ता भवेदिति मत मन्तःकरणाभिप्रायो लक्ष्यत इति शेष । अयमाशयः । अपवर्गे तृतीयेति वदतः पाणिनेः मैथुनधर्मे ह्यशक्तेन नपुंसकेन तीर्थयात्रा ब्रह्मचर्यादिद्वारा मोक्षं प्रयतितव्य स्त्रीपुंसलक्षणा व्यक्तिर्मैथुने शक्तत्वात् कामभोगे अधिकारिणी न तु तीर्थयात्राद्वारा मोक्ष इति । तस्मात् कामा एव कार्यैत्यर्थः । न केवलमस्मदाचार्यस्यैव सम्मतं किन्तु नवदीयस्य पाणिनेरपीत्ययमेवार्थः । अथ चैव वदतः पाणिनेरप्ययमाशयः । धर्मार्थलक्षणा द्वयी व्यक्तिः, अथ च पूर्वं प्रयोक्तव्यत्वात् प्रकृतिः कामे सम्बद्धा भवेत् । धर्मार्थकाममोक्षाः स्युरित्यादौ कामाव्यवहितपूर्वत्वेन तस्या उक्तत्वात् । तृतीया तु कामलक्षणा व्यक्तिरथ च पूर्वं प्रयो-

त्यप्रकृतिरपवर्गे सम्यङ्महो । अपवर्गादिव्यवस्थितपूर्वत्वेन तस्या उक्तत्वात् । तस्मादपवर्गे निमित्ते कामाख्या तृतीयैव व्यक्तियुक्ता इत्युक्तत्वात् । मोक्षं प्रति कामस्यैव हेतुत्वात् प्राप्तिरेव सुतरां कार्य्येति भावः । अपवर्गः फलप्राप्तिरिति सूत्रार्थं शब्दच्छलेन अन्यथाप्रतिपाद्य स्वमतसमर्थनार्थं दर्शिता । प्रकृतौ प्रकृतिः पदस्थ इत्यमरः । उभयीत्यत्र स्थानिवत्त्वादयप्रत्ययान्तत्वात् ङीप् । सज्जीत् । अर्थे लिङ् ॥७०॥

विभ्रत्युपरि यानाय जना जनितमज्जनाः ॥ विग्रहायाग्रतः पश्चाद्गत्वरीरभ्रविभ्रमम् ॥ ७१ ॥

गङ्गास्नायिनो दूषयति । उपरियानाय स्वर्गं गन्तुं । अथ चोर्द्ध्वदेशं गन्तुं जनितमज्जनाः कृतगङ्गास्नानाः, अथ च कृताधोगमना जना अग्रतो मुखाय पश्चाद्गत्वरं पश्चाद्गमनशीलं वरस्त्रा मेषदासस्य विभ्रमं सादृश्यं बिभ्रति धारयन्ति । मज्जनादूर्द्ध्वगमनं विरुद्धमिति विपरीतायकारित्वान्मेषवन्मूर्खा एवेति गङ्गास्नानेन स्वर्गो भवति इति भ्रान्तिरेवेति भावः । विग्रहस्येति पाठे उपरि यानाय कृतगङ्गास्नाना स्वर्गं गच्छतो मेषस्य भ्रान्तिं सादृश्यं धारयन्ति । शीतबाधया नीचग्रीवतया गमनात् शरीरस्याग्रतः शिरोदेशो पश्चात् कटिदेशे च हस्तयोर्धारणात् कृतगङ्गास्नानानां गङ्गास्नानसमयेऽपि मेषतुल्यत्वम् । यथा जलमध्येऽवगाहनेन हस्तिकरेण समाननायत्वेन पृष्ठस्थितबाहुर्भवति, तदा नीचग्रीवतया वरस्त्रसादृश्यं पश्चात्स्थितहस्तस्य च पुच्छसादृश्यमिति मेषतुल्यास्ते जनाः । उर्द्ध्वगमनियोर्मीबेर्भावस्य विरुद्धस्य करणादुपहास इति व्याख्येयं । यानाय विग्रहायेति । तुमर्थेति (पा०२।३।१५) चतुर्थी ॥७१॥

एनसानेन तिर्य्यक् स्यादित्यादिः का विभीषिका । राजिलोऽपि हि राजत्र स्वैः सुखी सुखहेतुभिः ॥ ७२ ॥

परलोकसद्भावेऽपि देहान्तरप्राप्तावपि च न किञ्चिदनिष्टमित्याह । एनसेति । अनेन लोके क्रियमाणेन ब्रह्महत्याद्येनसा पातकेन तिर्य्यक् क्रिमिपक्ष्यादिः स्यात्कुयद्ध रत्यादिरित्येवंप्रकारा का विभीषिका

का भयोपदर्शनं किं? अपि त्वनिष्टहेतुत्वाभावान्न किञ्चिदेतत् हि यस्मा-द्राजिलोऽपि हीनः सर्पविशेषो जन्यास्तोऽपि स्वे स्वीये सुखहेतु-भिर्नैकभक्षणगमनाहारसमालोपतरुणीसम्भोगादिभिः सुखकारणै रा-जेव सुखी । स्वजात्यनुगुणाहारविहारसम्भोगादीनि विचित्राण्येव सर्वेषां सुखसाधनानि । तत स्वपापफलभूते तिर्यग्योनित्वे जातेऽपि सुखसद्भावान्न किञ्चिदनिष्टमित्यर्थः । समौ राजिलडुण्डुभावित्यमरः । विभीषिका भाव्यर्थनिर्देशो ण्वुल्तृचाविति (पा०३।१।१३३) ण्वुलि भियो हेतुभये षुगिति (पा०७।३।४०) षुगागमे प्रत्ययस्थादित् । (पा०७।३।४४) इतीत्वम् ॥ ७२ ॥

हताश्चेद्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे । त
त्रापि तेन युद्ध्यन्तां हता अपि तथैव ते ॥ ७३ ॥

युद्धे हतानां स्वर्गप्राप्तिरित्यादि भारतवचनं दूषयति । हता इति । सङ्ग्रामे हताः सम्मुखं पतिता दिवि दीव्यन्ति क्रीडन्ति इति चेद्यदि तर्हि दैत्यारिणा विष्णुना रणे हताः हिरण्यकशिपुप्रभृतयो दैत्यास्तत्रापि स्वर्गेऽपि तेन सह युध्यन्तां युद्धं कुर्वन्तु । यस्माद्धना मारिता अ-पि दैत्या भवदीयमते तथैव रणे सम्मुखपतनात् स्वर्गे जीवन्त एव । ततश्च यं यं वापि स्मरन् भावमित्यादिवचनप्रामाण्यान्मरणसमयेऽपि दैत्यैर्दैत्यारिणा सह विरोधस्य चित्ते धृतत्वात् स्वर्गप्राप्तावप्यसुरत्वाधस्य तथैव वर्तमानत्वात् तत्रापि तेन सह योद्धव्यमेव । तत्रापि युध्यन्त एवेति कुत्रचित् पुराणादौ नाकर्ण्यते । तस्माद्रणे पतितानां मरणाद-धिकं किञ्चिदपि नास्ति । रणादपलायनात् स्वर्ग इत्यादि शास्त्रधर्म-प्रतिपादकवाक्यजातमप्रमाणमेवेति भावः । हता अपीत्यत्र हेतौ अपी-ति पदेन हतौ हिंसायां कृतायामपि मरणे प्राप्तेऽपि । अन्यत् पूर्व-वत् । हतावपीति वा पाठः ॥ ७३ ॥

स्वश्च ब्रह्म च संसारे मुक्तौ तु ब्रह्मकेवलम् ॥ इति
स्वोच्छित्तिमुक्त्युक्तिर्वैदग्धी वेदवादिनाम् ॥७४॥

इदानीं मायावेदान्तसिद्धान्तं दूषयति । स्वमिति । संसारे संसरणे

वसरे स्व जीवात्मरूपः प्रपञ्चः तथा अनाद्यविद्याविलासवासनावि-द्यमानभेद ब्रह्म चेति द्वयमप्यस्ति । तौ समप्राधान्यबोधनार्थौ । मुक्तौ तु मोक्षे सञ्जाते पुनराविद्यकजीवव्यवहारनिवृत्तेः केवल स्वप्रपञ्चर-हित ब्रह्मैव वर्त्तते । घटोपाधिनिवृत्तेर्घटाकाशनिवृत्तावाकाशमात्र-स्यावस्थानवत् संसारोपाधिनिवृत्तेः स्वनिवृत्तौ एकमेवाद्वितीय ब्र-ह्मेति ब्रह्मात्मना सम्पत्तिर्भवतीत्यर्थः । तथापि प्रपञ्चस्य शुक्तिरजत-वन्मिथ्यादृश्यत्वादित्येव स्वस्योच्छित्तिरेव मुक्तिस्तस्या उक्तिर्वचन त-त्र वैदग्धी नानारूपोक्तिनिरूपणकौशलं वेदवादिनां वेदान्तमतानुसा-रिणां आत्मार्थं सर्वं तस्योच्छेदः प्रतिपादित इति महत् कौशलमिति मायावेदान्तमतोपहासः । वेदवादिनामित्यनेन च्छान्दसास्ते किञ्चि-दपि न जानन्तीति सूचितम् । अपि च संसारे द्वय मुक्तौ त्वेक, तत-श्च द्वयं परित्यज्यात्मोच्छेदपुर सरमेकं मूर्खादन्यः कोऽपि नेहते । तस्मान्मूर्खा एव त इति भाव. । वेदयेदिनामिति च पाठ । वेदवेदि-तेति पाठे स्वोच्छित्तिमुक्त्युक्तौ वैदग्धीरूपा वेदार्थज्ञातता आत्मविना-शो मुक्तिर्वेदार्थपरिज्ञानं नामेत्युपहास. ॥ ७४ ॥

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः ॥ ७५ ॥

न्यायवैशेषिकसिद्धान्ताभिमता मुक्तिं दूषयति । मुक्तय इति । य. सचेतसा चैतन्यवतां सुखदुःखाद्यनुभवाभावात् शिलात्वाय पाषाणाव-स्थारूपायै मुक्तये मुक्तिं प्रतिपादयितु शास्त्रमूचे न्यायदर्शनं निर्ममे तदत्यन्तविमोक्षोऽपवर्ग इत्यनेन सकलविशेषगुणोच्छेदनात् मुक्तिरि-ति मुक्तस्य शिलातुल्यत्व प्रत्यपादयत् यूयं त स्वयमेवावेत्य विचार्यैव गोतम एतन्नामानं मुनिं यथा वित्थ जानीथ स एव तथा नान्य इ-त्यर्थ. । स गोतम इति यथा युष्माकं सम्मतस्तथा ममापीत्यर्थः । वै-शेषिकास्तु तदीयमतानुसारिण इति भावः । अथवा नाय परं नाम्ना गोतम. किन्तु प्रकृष्टो गौर्गोतम. पशुरेव । सचेतसां शिलारूपमुक्ति प्रतिपादनादित्यर्थतोऽपि गोतम एवेति भाव. । आत्यन्तिकी दु ख-निवृत्तिर्मोक्षः इति सुखमपि दु खानुषक्तत्वाद्धेयमिति वदता, सर्वा

र यावसन्तं प्रियाप्रिये न स्पृशत इति च तत्र प्रमाणमुदाहरतां वैशेषिकाणामपीयमेव युक्तिः सम्मतेति न्यायवैशेषिकसिद्धान्तोपहासोऽनेन कृत इति ॥ ७५ ॥

दारा हरिहरादीनां तन्मग्नमनसो भृशम् । किं न
मुक्ताः पुनः सन्ति कारागारे मनोभुवः ॥ ७६ ॥

हरिहरादिध्यानान्मुक्तिरिति वचनानि दूषयति । दारा इति । हरिहरादीनां लक्ष्म्याद्या दाराः स्त्रियो भृशं निरन्तरं तेष्वेव मग्नं ध्याननिश्चलं मनो यासां एवंविधा अपि किं कस्माद्धेतोर्मनोभुवः कारागारे सन्ति ? सदैव कामपरवशास्तिष्ठन्तीत्यर्थः । तस्मान्न पुनर्मुक्ता इति एतेन

सकृदुच्चारितं येन शिव इत्यक्षरद्वयं तथा
मध्यर्पितमनाबुद्धिः स नाशेति पातकम् ॥

इत्यादिवचनैरीश्वरादिध्यानमात्रं मोक्षकारणमिति प्रतिपादयतः शैवादिशास्त्रस्य मुक्त्यभावेन व्यभिचारित्वादप्रामाण्यम् ॥ ७६ ॥

देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यवाक् ।
तत्किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थि-
नः ॥ ७७ ॥

ईश्वरवादिनो नैयायिकादीन् दूषयति । देव इति । भूम्यादि सकर्तृकं कार्यत्वाद् घटादिवदित्यादिना विचित्रस्य कार्यजातस्यास्मदादिविलक्षणेन कर्त्रा भवितव्यमिति सर्वस्य परमकारुणिकस्य सत्यवचनस्य सर्वकर्तुः परमेश्वरस्य साधितत्वात् सर्वं च कालत्रयवस्तु विजानातीति तथा करुणाभाक् कृपावान् तथा अवन्ध्या सत्या वेदरूपा वाक् यस्य, नैयायिकादिमते ईश्वरप्रणीतत्वादाप्तवचनत्वाद् वेदानां प्रामाण्यात् स्वतः प्रामाण्यस्य दूषितत्वादित्यर्थः । अथ च सफला यथोक्तार्थसाधिका वाग् यस्य स सत्यवाक् । भवत्सिद्धान्तेन देवश्चेदस्ति तर्हि अर्थिनो भुक्तिमुक्त्याद्यभिलाषिणो नोऽस्मान्, भवन्तु अभिमतार्था इति वाग्व्ययमात्राद् वाग्विसर्गमात्ररूपेण व्ययेन किं कस्मान्न कृतार्थयति । तस्मान्नास्तीति भावः । अनेनाप्युपहासः सूचितः ॥ ७७ ॥

भविना भावयन् दुःखं स्वकर्मजमपीश्वरः ।
स्यादकारणवैरी नः कारणाद्वैरिणोऽपरे ॥ ७८ ॥

इदानीं कर्ममीमांसकमतावलम्बिनायोग्यापालम्भनमाह । भवि नामिति । भविना संसारिणा स्वकर्मजं स्वकृतपापजातं पापफलभूतं दुःखं भावयन् कुर्वन्, स्वयं जनदपि भावयन् पुनः स्वयं प्रवर्तयन् ईश्वरो नोऽस्माकमकारणवैरी दयालुत्वादिहेतुं विनैव शत्रुः स्यात् । अपरेऽन्ये परेऽन्ये पुनः कारणाद्द्वारलेशाद्यपहारयन्तु यथादेव वैरहता वैरकारिणो भवन्ति । भविना न इति वा सम्बन्धः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा । कर्मफलदात्रेश्वरेण चेत् कर्मानुगुणं फलं भवेत् तर्हि ईश्वरेण कर्तव्यं न किञ्चिदस्ति । तादृशात् कर्मण एव दुःखोत्पत्तिः । एवमपि स चेदनुभावयति तर्हि तस्मादादीनां द्वेष एव तेन कृतः स्यात् । तस्मात्तस्य दयालुत्वादयो गुणा गताः । तस्मात् कर्मण एव प्राधान्यादीश्वरो नास्त्येवेति भावः । पञ्चमी भयेन (पा० २।१।३७) इत्यत्र पञ्चमीति योगविभागात् कारणाद्वैरीति समासं कृत्वा पश्चान्नञ्समासः ॥ ७८ ॥

तर्काप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम् ।
नाप्रामाण्यं मतानां स्यात् केषां सत्प्रतिपक्षवत् ॥ ७९ ॥

अन्यदप्याह । तर्केति । प्रमाणानुग्राहकयुक्तिमद्रूपस्य तर्कस्याप्रतिष्ठा तया पर्यवसानेन कृत्वा यत् साम्यं तुल्यत्वं तस्मात् तुल्यत्वाद्धेतोः सुन्दोपसुन्दन्यायेन विनिमयेन अन्योऽन्यं परस्परं व्यतिघ्नतां दूषयतां केषां मतानां प्रमाणत्वेन सम्मतानामनुमानादीनां अथ च मतानां मतानि रम्यमाणान्यमश्वरस्यानीश्वरत्वादि प्रतिपादयतां दर्शनानामप्रामाण्यं न स्यादपि तु सर्वेषामपि तुल्यबलत्वेन परस्परविरोधादप्रामाण्यमेव स्यात् । किंवत् सत्प्रतिपक्षवत् विरुद्धसाध्यसाधकौ हेतू यस्य तदनुमानं सत्प्रतिपक्षं तद्वत् । तस्येवाप्रामाण्यं स्यादिति सम्बन्धः । वैशेषिकादयो यथा एतत्कार्यात्घटवदनित्यः शब्द इति वदन्ति । मीमांसका नित्य-

पकत्वादात्मवन्नित्यं शब्दं वदन्ति । तत्रान्तरेण पूर्वप्रदर्शिते दोषविशेषे पूर्वस्य यथा ऽप्रामाण्यं तथेत्यर्थः । सत्प्रतिपक्षानुमाने यथा ऽप्रामाण्यं द्वयोरप्यन्यथं, समम्यर्थे बलिः, तस्यांने निश्चीयतेऽर्थो यैस्ते तर्का अनुमानानि तथामप्रतिष्ठया समबलद्वितीयसद्भावेनानिश्चितस्वरूपमित्यर्थ इति च व्याख्येयम् । गगनं नित्यममूर्तद्रव्यत्वादात्मवत् । गगनमनित्यमस्मदादिबाह्येन्द्रियग्राह्यगुणाधारभूतत्वाद्घटवदिति इति सत्प्रतिपक्षानुमानयोरिवेत्यर्थः ॥ ७९ ॥

अक्रोधं शिक्षयन्त्यन्यैः क्रोधना ये तपोधनाः ॥
निर्धनास्ते धनायैव धातुवादोपदेशिनः ॥ ८० ॥

अन्यच्चाह । अक्रोधमिति । क्रोधना अकारणरोषणा ये तपोधनास्तप महत्त्वाँ दुर्वासःप्रभृतयो ये ते क्रोधो बहुनर्थकारित्वात् सर्वथा त्याज्य इति अक्रोधं क्रोधाभावमन्यैः प्रयोज्यैः शिक्षयन्ति अन्यं क्रोधाभावं शिक्षन्ते तान् क्रोधो न कार्य्यं इति प्रयोजयन्ति उपदिशन्तीति यावत् । स्वयन्तु क्रुद्धा यत् किञ्चिदाचरन्ति अन्यांस्त्वेवमुपदिशन्तीत्युपहासः । तथा ये ऽतिनिर्धनास्ते धनायैव स्वस्य धनप्राप्त्यर्थमेव लोहादिधातुना सम्बन्धिनं वादं स्पृष्ट्वा अनेन अन्यान्यरिपुमित्राभावपालनेन धातूनां संयोगात् स्वर्णरूप्यादि मया कर्तुं शक्यते मदुपदेशात् त्वमपि कुरु इत्येवं रूपं धातुवादं उपदिशन्तीत्येव शीला भवन्ति । परन्तु स्वस्मै किञ्चित्तन्न दानव्य इत्येव परमतारणाबुद्धि व न तु तत्त्वत । यत स्वयं निर्धना इति हेतु । तादृक्सामर्थ्यसद्भावे तेषामधनत्वं न युज्यते । ततश्च स्वयमतीर्णः स कथं परांस्तारयति । अनेन धातुवादिनामप्युपहासः । अन्यैः प्रयोज्यकर्तुरनभिहितत्वात् कर्तरि तृतीया । क्रोधनाः । क्रुधमण्डार्थेभ्यश्चेति ( पा० ३।२।१५१ ) युच् ॥ ८० ॥

किं वित्तं दत्थ तुष्टेयमदातरि हरिप्रिया । दत्त्वा
सर्वं धनं मुग्धा बन्धनं लब्धवान् बलिः ॥ ८१ ॥

इदानीं दानधर्मं दूषयति । किमिति । भो जना यूयं वित्तं स्वर्णादि यज्ञादौ दक्षिणात्वेन पात्रेभ्यः किमिति दत्थ अपि तु कस्मैचिदपि न

देय यस्मादियं हरिप्रिया विष्णो प्रेयसी सम्पद्रूपा लक्ष्मी ऽदातरि कृतदानोपभोगे कृपणे तुष्टा प्रीतिं प्राप्नोति तस्मैव यमतीत्यर्थः । दानेबाधकमाह । यस्मान्मुग्धा मूर्खो दानव्यसनपर तदोदर्कविचारशून्य स्मृतिपुराणादौ श्रद्धायाश्च बलिः सर्वं धनं श्रीवामनाय दत्त्वा बन्धनं लब्धवान् , बाक् पाताल वह मत पातालप्रवेशरूप बन्धनं प्राप्तवान इति पुराणकथा । दानं कर्तव्यमित्यत्र स्मृत्यादिकमेव प्रमाणं बलिप्रभृतीनां दानमशुभोदर्कं जातमित्यत्रापि तदेव प्रमाणम् । तथा च कर्तृद्रव्यपात्रशुद्ध्यादियुक्तेऽपि दानविधौ सति विरुद्धफलदर्शनाददातरि च लक्ष्म्याः स्थैर्यदर्शनादन्वयव्यतिरेकाभ्यां दानधर्मं सर्वथा त्याज्य एवेत्युक्तमिति भावः । हरिप्रियेत्यनेन श्रीहरिणापि याचकत्याङ्गीकारात् लक्ष्मीप्रीत्यर्थमदातृत्वमेवाङ्गीकृतमिति च सूचितं ॥ ८१ ॥

दोग्धा द्रोग्धा च सर्वोऽयं धनिनश्चेतसा जनः ।
विसृज्य लोभसङ्क्षोभमेकद्वा यद्युदासते ॥ ८२ ॥

पात्राभावाद्दानं न कर्तव्यमित्याह । दोग्धेति । अयं प्रत्यक्षदृश्यमानोऽयं सर्वोऽपि जनो धनिनः स्वाढ्यान् नरान् दोग्धा दोहनशीलः स्वाभिमतदानादिविध्युपदेशादिना येन केनाप्युपायेन धनिकेभ्यो धनमाकर्षतीत्यर्थः । तथा द्रोग्धा मनसा तद्विषये द्रोहकरणशीलश्च कथमेनं हन्यामेतस्य धनादि च कथं गृह्णीयामित्यादिप्रकारेण तद्विषये द्रोहमेव चिन्तयतीत्यर्थः । सर्वोऽप्ययमिति कथमुच्यत इत्यत आह । लोभसङ्क्षोभं द्रव्याद्यभिलाषजनितं मनसो नितरां क्षोभं कम्पमथवा परस्वग्रहणाद्यधिकारं अभिलाषातिरेकं वा विसृज्य यदि उदासते उदासीना भवन्ति परस्वाकर्षणादुपरता भवन्ति तर्ह्येका द्वौ वा न तु तृतीयस्तादृशस्य गणनीयास्तस्माद्दुर्लभमेवोक्तमित्यर्थः । तस्मात् परप्रतारणप्रयोजनक एव दानार्थो धर्माद्युपदेश इति भावः । परप्रतारकत्वात् पात्रस्याभावाद्दानं कस्मैचिदपि न कर्तव्यमित्यर्थः । विपद्येति पाठे लोभातिरेकं यथा स्यात्तथेत्यर्थः । दोग्धा, द्रोग्धा ताच्छील्ये तृन् । तद्योगेन न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद्धनिन इति द्वितीया । एको द्वौ वा एकद्वाः । सङ्ख्ययाव्ययासन्नादिना (पा०२।२।२५) समासे एते बहुव्रीही,

न पाकासुरमर्द्दिनि मयि त्रयीमेवा प्रसिद्धयज्ञयागादिगोचरीकर-णसमर्थयदत्रयरूपनेत्रा यदविहिताचरणवेदनिषिद्धाचरणकारिणी लोकत्रयी धर्म्मस्थापनपूर्वं शासति परिपालयति सति क इत्यमेव सकलधर्म्मदूषणप्रकारेण भाषते । किम्भूते । वज्रशौर्य्येण स्फुरन् प्रकाशमानः करो यस्य तस्मिन् । वज्रेत्यादिना वेदादिनिन्दकस्य कण्ठच्छेदसामर्थ्यं स्वस्य सूचितम् । मयीति करणं हृदयस्पर्शनपूर्वं क्रोधाहङ्काराद्यभिनयः । वज्रहस्तः पुरन्दर इत्यादिवाक्यप्रतिपाद्ये मयि प्रत्यक्षदृश्ये सति श्रुतिप्रामाण्यं को वान्यथा कर्तुं समर्थ इति । वज्रवीर्य्येत्यनेन विग्रहवत्त्वं सूचितं । यावान्मज्जनयतः, अग्निहोत्रं त्रयीत्यादि वेदाप्रामाण्यप्रतिपादनं चार्वाकवाक्यं दूषितमिति भावः । शासति मयि शासत्त मामनादृत्य ये यन्नदरे महसी वा ॥ ८५ ॥

> वर्णसङ्कीर्णतायां वा जात्यलोपेऽन्यथापि वा । ब्रह्म-
> हत्यादेः परीक्षासु भङ्गमङ्ग प्रमाणय ॥ ८६ ॥

श्लोकद्वयेन शुद्धिर्वंशद्वयीत्यादि यज्जातिदूषणं कृतं तत्परिहरति । वर्णेति । अङ्ग रे चार्वाक ब्राह्मणादिवर्णानामसङ्कीर्णतायां सत्यां अन्योन्यव्यभिसङ्कराभावे सति योजात्यलोपा ब्राह्मणत्वादिजातेर्लोपाभावस्तद्यथाचारविषयत्वं तस्मिन् वा विषयेऽन्यथापि वर्णसङ्कराज्जात्यभावे वा विषये परीक्षासु शुद्धत्वादिज्ञापकेषु सत्याद्युक्तेषु जलादिदिव्येषु विषये ब्रह्महत्यादेर्ब्राह्मणवधाग्निदाहादिपापकारिणोऽभियोक्तस्य भङ्गं पराजयं प्रमाणय सन्दिग्धस्याप्यस्य कोट्यन्तरनिरासेन निश्चायकं कुरु । यदि ब्राह्मणत्वादिशुद्धिर्न स्यात्तर्हि ब्रह्मवधादौ कृतेऽपि ब्रह्महा नास्मीति प्रतिज्ञामयदिव्यभूमौ भङ्गो न स्यात् । भवति च तापतस्याङ्गेनैव व्यभिचारस्य तत्पित्रादिपरम्परायाश्च सङ्कीर्णत्वाद् ब्राह्मणत्वादिजातेरस्तित्व कथितं । यत्र च सङ्कराज्जातिशुद्धिर्नास्ति तस्य वधादौ कृतेऽपि ब्रह्महत्यादिप्रतिज्ञादतो भङ्गो ना स्त्येवेति । वर्णसङ्कराज्जातिलोपे व्यतिरेकगुणेन भङ्ग एव प्रमाणं धूम इव वह्न्यभावेऽपीत्यर्थः । अङ्गेति प्रीति कृत्यज्ञापि सम्बोधनं । मिथ्याभियोगपरीक्षायामभियोक्तुर्भङ्गेऽपि जात्यातिशुद्धि पातित्याभावः । अभियोक्तृभङ्गे तु हन्यमानादेर्जातिशुद्धि

मत्यामपि प्रसिद्धायामस्यैव सङ्कराज्जातित्व पातित्यमिति निश्चयमिदं भङ्ग मेव प्रमाणयेत्यर्थ इति व्याख्येय । यथा मति व्याख्या ज्ञातव्या ॥ ८६ ॥

ब्राह्मण्यादिप्रसिद्धायां गन्ता यन्न कुरुते जयम् । त
द्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८७ ॥

पूर्वोक्तमेव द्रढयति । ब्राह्मण्यति । ब्राह्मण्यमादिर्यस्य क्षत्रिया-दिजातिविशेषस्य तेन प्रसिद्धायां यद्वा ब्राह्मणी आदिर्यस्याः क्षत्रियादिस्त्रियाः सा ब्राह्मण्यादि सा चासौ प्रसिद्धा च तस्यां इयमुत्तमा ब्राह्मणीत्यादिप्रकारेण रूढायां स्त्रियं गन्ता कामुकस्तां सम्भुञ्जानो नरो दिव्ये जयं न कुरुते पश्यतीति यत् न प्राप्नोतीत्यर्थ । तज्जातीयानामेव कृत्स्नस्याशेषस्य वर्णवंशस्य ब्राह्मणादिवर्णसङ्घस्य मातापित्रादिपरम्परायां विशुद्धिं निर्दोषत्वं शंसति कथयति । ब्राह्मणी व्यभिचारा मया ब्राह्मणाऽहं ब्राह्मणो नागममिति प्रतिज्ञाय यदा दिव्य करोति तदा स पराजयत एवेति तावत्प्रत्यक्ष । तथा च गम्याया गन्तुश्च पारदार्यादिदोषदूषितत्वेऽपि तन्मातापित्रादि परम्परायां ब्राह्मण्यादिविशुद्धि तत्पराजयेन स्पष्टं कथिता । यदि जात शुद्धिर्नाभविष्यत तर्ह्येव प्रतिज्ञायां कृतायामपि तयोर्ब्राह्मणत्वाभावाद्भङ्गो नाभविष्यत । स तु दृश्यत इति भङ्ग स्वान्यथानुपपत्त्या जातिशुद्धौ प्रमाणमित्यर्थ । ब्राह्मण्यादिप्रसिद्धायां गन्ता यः पुरुषो यद्जयं जङ्गमीयते तद्भङ्गकरणमिति वा व्याख्या ॥ गन्तेति तृच । अन्यथा । न लोकेति (पा॰२।३।६९) षष्ठ्यभाव स्यात । प्रसिद्धायामिति पाठे विषयसप्तमी । अन्या व्याख्या क्लिष्टत्वादुपेक्ष्या ॥ ८७ ॥

जलानलपरीक्षादौ संवादो वेदवेदिते । गलह
स्तितनास्तिक्यां धियं धिक् कुरुते न ते ॥ ८८ ॥

इदानीं संवादादपि वेदस्य प्रामाण्यमित्याह । जलेति । हे चार्वाक वेदेन वदिते बाधिते यद्मूलजलानलयोस्ताभ्यां या या परीक्षा शुद्धत्वनिश्चय स आदिर्यस्य तुलादिव्यादस्तादृशोऽर्थे संवादो यथोक्तज्ञानरूप स ते तव धियं बुद्धिं गलहस्तित बलान्निरासित नास्तिक्य

धस्य मे सधिर्गोष्ठिकथामधिकृत्य वाचो यस्ते कण्ठोऽहं कुण्ठयामि यु-
क्त्यापतिहतत्वाद्दृक् मसमर्थं करोमि । मन्त्रं मपि भवच्छास्त्रं दूषयिष्या
मीत्यर्थः । वाग्व्यापारं प्रतिकण्ठोष्ठस्यैव दण्डो युक्त । अयमपि का-
धाहङ्कारविकारे । तिष्ठतिष्ठेति क्रोधातिशयद्योतनार्थं पुनरुक्ति । क
ण्ठोष्ठं प्राण्यङ्गत्वादेकवद्भाव. । कुण्ठयामि वर्तमानसामीप्ये भविष्यति
लट् ॥ ९६ ॥

वेदैस्तद्वेदिभिस्तद्वत् स्थिरं मन्वादिभिः कृतम् । परं
कस्तं परं वाचा लोकं लोकायत त्यजेत् ॥ ९७ ॥

इदानीं श्लोकत्रयेण परलोकं धर्मञ्च साधयन् कर्हि वद तर्को
प्रतिष्ठयेत्येवमादेकस्योत्तरमाह । वेदैरिति । चतुर्भिः ऋग्वेदादिभिर्वेदैर्य-
थास्थिरीकृतं तद्वत्तस्य वेदस्य व्यवस्थाया तद्युक्ते तदर्थापजीविभि
र्वेदानुसारिभिर्मन्वादिभि स्मृतिपुराणादिभि वादिप्रतिवादिभर्वेदे-
र्मीमांसादिशास्त्रैश्च स्थिरीकृतं निर्णयेन व्यवस्थापितं परं श्रेष्ठं अन्यञ्च
स्वर्गादिलक्षणं लोकं हे लोकायत नास्तिकाधम परं केवलं ते वाचः नि
र्युक्तिकेन वचनमात्रेण कोऽपि विद्वान् त्यजेत् अपि तु न । किन्तु स
र्वैरपि तद्युक्तिभिः परलोकः स्वीकृत एवेत्यर्थः । तदस्तित्वे सन्देहा-
पादिनो को हि वेदस्यादिश्रुतिरस्त्यन्यपरास्ति तत्र ॥ ९७ ॥

समज्ञानाऽपभूयिष्ठपान्थैमत्यमेत्य यम् । लोके
प्रयासि पन्थानं परलोके न तं कुत. ॥ ९८ ॥

समेति । एकस्मिन् गोदं वर्गे समज्ञाना तुल्यमतयोऽल्पं ऽपमह्त्या
भूयिष्ठा बहुनरसङ्घाश्च पान्थास्तैर्वा विमत्य मार्गान्यत्वविरोधमेत्य प्र प्य
ज्ञात्वा वा इहलोके य पन्थानं त्वमेव प्रयासि परलोकेऽपि विषये त्व
मेव तादृशमेव मार्गं कुतो हेतोर्नगच्छसीति प्रश्नः । अपि तु तमेतमेव
गच्छेरयुपदेशो वा । यथा केनचिद्विद्वांसो दक्षिणो वा काशीमार्गं इति मा
र्गं पथिकेषु पृष्टेषु पञ्चर्षैर्वामिमार्गं कथिते सति पञ्चाशद्भिर्दक्षिणमार्गे
कथितेद्विधे "बहूनां वचनं ग्राह्यं" इत्यादि न्यायात् कुशलेन पञ्चाशदुक्त-
मार्गेणैव गम्यते एव परलोकेऽप्यल्पविमतिं निरस्य बहुनुगत एव मा

गः किमिति नाश्रियत इत्यर्थः । परलोकमार्गश्च न स्यात्तथा धर्मस्तं कथं न मन्यसे अपि तु तमेवाङ्गीकुरु । परलोकसत्तानिश्चयमपि गन्तव्यग्रामवत् कुर्य्यादितिभावः । तर्काप्रतिष्ठयेत्यस्याप्ययं तदुत्तरं ज्ञेयम् ॥ ९८ ॥

स्वकन्यामन्यसात्कर्तुं विश्वानुमतिदर्शनः । लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः ॥ ९९ ॥

बहुसम्मतिमेव दर्शयति । स्वकन्यामिति । स्वकन्यामात्मपुत्रीमन्यसात्कर्तुमन्यस्मै वराय अधीनां देयां कर्तुं विश्वेषां सर्वेषां श्रुतिस्मृतिपुराणादीनां लोकानां चानुमतिं सम्मतिं दृष्टवतोऽनुभवतः तथा कुर्वतश्च कस्य जनस्य, परत्रलोके स्वर्गादौ मनो दृढं निःसन्देहं निश्चलं न स्यादपि तु सर्वस्यापि स्यादेव । न केवलमन्यस्यैव किन्तु चार्वाकस्य तवापीत्यर्थः । सर्वोऽपि परलोकबाधभिया स्वकन्यामन्यस्मै ददाति । यदि परलोको नाभविष्यत्तर्हि स्वपुत्रीमन्यस्मै कथमदास्यत् । अयं चाचारः सर्वेषां सम्मतः । स च त्वयाप्यन्यस्मै पुत्रीदानादङ्गीकृत एव । अन्यथा स्वपुत्र्या स्वेनैव ग्रहणमापद्येत । तस्मादन्येषामनुमतिं गृहीत्वैव यथा कन्याऽन्यस्मै दीयते तथा बहुसम्मतिदर्शनात् परलोकमप्यङ्गीकुर्य्यादिति भावः । अन्यसात् । देये त्रा चेति ( पा० ५।४।५५ ) साति. । विश्वेति पूर्ववत् ॥ ९९ ॥

कस्मिन्नपि मते सत्ये हताः सर्वमतत्यजः । तद्दृष्ट्या व्यर्थनामात्रमनर्थस्तु न धर्मजः ॥ १०० ॥

श्लोकद्वयेन श्रुतिस्मृत्यर्थबोधेषु, तर्काप्रतिष्ठयेत्यादेरुत्तरमाह । कस्मिन्निति । धर्मपरलोकादिप्रतिपादनपराणां बहूनां मतानां मध्ये कस्मिंश्चित्कस्मिन्नपि मते सत्ये सत्यत्वेनाङ्गीकृते सति सर्वमतत्यजः सर्वमतत्यागिनः परस्परविरोधात् सर्वमतासत्यवादिनो नास्तिका यूयं हता नाशिताः । तथाहि मल्लि. । मतानामसत्यत्ववादिभिः किञ्चिन्मतं सत्यमङ्गीक्रियते न वा, चेदङ्गीक्रियते तर्हि कस्यापि कन्यादानादिप्रतिपादकस्य स्मार्तमतस्यैव वा सत्यत्वाङ्गीकारात् सर्वमप्रमाणमिति सर्वासत्यत्ववादिनो व्याघाताय सिद्धान्तात्सा दूषिता सर्वेति वैदिक-

सिद्धान्तो निर्दोष इत्यायात । न चेत्यपि पक्षे नास्तिकमतस्याप्यसत्य-त्वादसत्यभूतस्य दूषकत्वाभावान्निर्दोषो वैदिक पक्षः सिद्धएवैरपि नास्तिका दूषिता । निर्दोषत्वेऽपि वैदिकपक्षानङ्गीकारे स्वपक्षाऽपि तेनाङ्गीकार्य इत्यादि ज्ञेयम् । एवञ्च नास्तिकस्य मतस्य दृष्ट्या सत्यताज्ञाने तेनाभयवादिसिद्धतया पुत्रेष्ट्यादौ पुत्रजन्मादिफलसिद्धौ सत्यां यत्र क्वचि न फलव्यभिचारस्तत्र कर्माङ्गो वैकल्याद् व्यर्थनाऽत्र फलसाधनत्वरा-हित्यनात्र तु पुन अधर्म. प्राचीनपुत्रवियोगादिर्नरर्थक. । दु स्तरा पि धर्मजो न, पुत्रेष्ट्यादिधर्मजन्यो न भवति विपरीत तु धर्मेण न जन्यते, किन्तु प्राचीनदुष्कर्मनिमित्तमेव । चायल तु काकतालीय-न्यायेन तस्य पुत्रेष्ट्याद्यनन्तरभावित्व । न च तावतैव नरकाद्यं स्यादिति व्याप्तिरित्यथ इत्यादि ज्ञातव्यम् । कस्मिन्नपि मातृगमनादिनिषेधे स्व कन्यादानादौ विधये च वैदिके मते सत्ये सति तस्मिन्न सत्यत्वेऽङ्गीकृते सति सर्वजनसमङ्गमिति वदन्तो नास्तिका हता । मातृगमन निषेधादेरशस्य भवद्भिरपि परिपालनादित्यर्थ । तथा च सदृष्ट्या कन्यादानमातृगमननिषेधादिरूप या सत्यामां विधिनिषेधाशया दृष्टान्तेनान्यत्राङ्गं व्यवहारस्त्र वचनमात्रेण व्यर्थमित्युच्यते न तु धर्मतो वास्तवोऽनर्थ. प्रयोजनाभाव । तद्दृष्टान्तेन व्यर्थतामात्रमन्यत्राव्यर्थ तैवति चरणगतिप्रकङ्गन ॥ १०० ॥

क्वापि सर्वैरवैमत्यात् पातित्यादन्यथा क्वचि
त् ॥ स्थातव्य श्रौत एव स्याद्धर्मे शेषेऽपि त
त्कृते ॥ १०१ ॥

उपसंहरति । क्वापीति । सर्वैर्नास्तिकैरपि क्वापि कस्मिन्नपि अहिंसा कन्यादानादौ श्रौते वेदोक्त एव धर्मे स्यातव्य कुत अवैमत्यात् सर्वेषामित्यर्थ शेष श्रौताना बौद्धाना माध्यमिकानामपि सम्प्रतिपत्ते अहिंसादेस्तैरप्यनिषिद्धत्वादङ्गीकृतत्वाच्चेत्यर्थः स्यातव्यमेवेति वा । तथा क्वचिद्वर्णाश्रमाधिकार विहिते अन्यथा करणे निषिद्धाचरणे च पाति-त्यदोषाद्विहिताकरणनिषिद्धाचरणप्रत्यवायभयादपि श्रौत एव धर्मे

स्यातव्यं अन्यथा वैमत्येऽपि श्रौत एव क्वचित् कस्मिंश्चिद्धर्मे स्यातव्यं । कुत पातित्यात् । यत्तु श्रौते धर्मे तेषां विप्रतिपत्तिसादनङ्गीकारेऽपि प्रत्यवाय स्यादित्यङ्गीकार्यं एवेत्यर्थ इति वा । एव ज्ञापेऽपि नित्यनैमित्तिकाभ्यामतिरिक्ते काम्ये ज्योतिष्टोमादावपि स्यातव्य । कुत । तत्कृते तस्य वेदस्य कृते कारणाद्वेदविहितत्वाविशेषादित्यर्थ । यद्वा तत्कृते वेदमूलत्वात्कृपे स्मार्तेऽपि धर्मे स्यातव्य, सदाचारानुमितस्मृत्या श्रुतेरनुमानात् । स्मार्तधर्मा अपि वेदमूला इति तेऽप्यङ्गीकर्तव्या इत्यर्थ । एतेन यस्मिन्नास्तीति जनेन जानतेति एकस्य विप्रापंनेति खल्व प्रहरचेत्यादेः सर्वस्याप्युत्तर दत्तम् । धातुवादादिविकप्रामाणिकमेव । आसिद्धिस्तु साधनवैगुण्यादिति सर्वमपि समर्पितमिति ज्ञेयम् । तत्कृतमिति पाठे हेतुगर्भविशेषणम् । तस्मान्न मतानां प्रामाण्य श्रुतिस्मृत्यायैकमत्यमप्यविरुद्धमिति श्लोकद्वयतात्पर्यार्थं श्रुतिमादयः स्मृत्युक्ता मद्यसाधारणधर्मास्तेषु क्वापि श्रौतेऽपि धर्मे स्यातव्य । पातित्यादित्युभयत्रापि हेतु. । सर्वेषामनुमतं विहिते वेदस्योपेत वर्हे विहितस्याननुष्ठानादिति स्मृतेः पातित्यमित्यर्थं तथा, च विहितानां केषाञ्चिद्रूपवद्भिरनुष्ठानान्निषिद्धानां केषाञ्चिद्रूपवद्भिरपि वर्जनात् सर्वथा विमते निषिद्धेऽपि त् स्थीयते तथा निन्दितस्य सेवनादिस्मृतौ पातित्यमित्यर्थं । तथा वेदद्वयान्ते नान्यत्राऽपि विधिनिषेधांशेषु तत्कृते, श्रौतत्वाविशेषादेव हेताः स्यातव्य । तेऽपि प्रामाणिकत्वे स्वीकार्या इति वा व्याख्या इत्यादि ज्ञातव्यम् ॥ १०१ ॥

बभाण वरुणः क्रोधादरुणः करुणोज्झितम् ।
किं न प्रचण्डान् पाषण्डपाश पाशाद्बिभेषि
नः ॥ १०२ ॥

बभाणेति । क्रोधादरुणो रक्तकायकान्तिः वरुणः करुणया उज्झितं यथा तथा परुषं यथा तथा बभाण । हे पाषण्डपाश नास्तिकाधम त्वं नोऽस्माकं प्रचण्डात् महापाशात् किं न बिभेषि । कुत्सायाम्, याप्ये पाशप् इति ( पा० ५।३।४७ ) पाशप् प्रत्ययः ॥ १०२ ॥

मानवाशक्यनिर्म्माणा कूर्म्माद्यङ्कविला शिला ।
न श्रद्धापयते मुग्धास्तीर्थिकाध्वनि वः कथ ॥१०३॥

मानवेति । मानवैर्मनुष्यैरशक्यं निर्म्माणं यस्याः तथा कूर्मवराह नरसिंहादयोऽङ्काश्चिह्नानि येषामेवंविधं बिलञ्छिद्रं यस्याः सा च शिला गण्डकाख्या तीर्थविशेषसम्भवा शालग्रामशिला भो मुग्धा मूर्खा तीर्थिकाध्वनि ईश्वरमार्गे वैदिकाध्वनि वा वो युष्माकं कथं न श्रद्धापयते आस्तिक्यं न प्रापयति । चित्रमेतद्भवतां मूर्खतरत्वमित्यर्थः । मनुष्यैरशक्यरचनं सावयवत्वेन कार्य्यं शिलादिस्वनिर्म्माणशक्तमिच्छामात्रेण कर्त्तारं मनुष्यादिभिन्नमीश्वरमाक्षिपति । विमतं सकर्तृकं कार्य्यत्वात् घटवत् । अनुमानापक्षधर्मतायत्नादिभिन्नतया कर्त्तरीश्वरे सिद्धेऽपि कथमनाश्वासि इत्याशय । एतेन देवदत्तः अस्ति मन्त्रं त इत्यादिकत्तर दत्तमिति ज्ञेयम् ॥ १०३ ॥

शतक्रतुरजाद्याख्य विख्यातिर्नास्तिकाः कथम् ।
श्रुतिवृत्तान्तसंवादैर्नश्चमच्चीकरत् ॥ १०४ ॥

शतेति । भो नास्तिकाः शतक्रतुः श्रीविष्णोरूरुभ्यां अजायत इत्युरुजो वैश्यः न आदिराद्या येषां ते ब्राह्मणादिपर्याया तेषामाख्या शतक्रतुरुरुजपादुज इत्यादीनि नामानि तेषां विख्याति ख्यातिर्याः श्रुतिवृत्तान्तसंवादैः वेदोक्तेतिहासैः करणैः वो युष्मान् कथं न चमच्चीकरत् चमत्कारं नाकारयदपितु आश्चर्यं भवतां तयोत्पाद्यं । चमदित्यव्ययमाश्चर्यं । शताश्वमेधकर्तृकारीन्द्रो भवति । इन्द्रस्यैव शतक्रतुत्वं वेदेनोक्तम् लोकेनापीन्द्र एव शतक्रतुत्वेन व्यवह्रियते न तु वरुणादिरिति । तथा च ब्राह्मणोऽस्य मुखमासीदित्यादिना श्रुत्या ब्राह्मणक्षत्रियादीनां मुखजत्वबाहुजत्वाद्युक्तं । लोकेनापि ब्राह्मणादय एव मुखजत्वबाहुजत्वादिभिर्व्यवह्रियते न तु विपर्ययेणेति यदुक्तेन सह लोकस्यानुभूयमानत्वात् । संवादादपि वेदे यथोक्तं तथैव लोको व्यवहरत्याद्यप्येतत् । आश्चर्यं पूर्वं वेदप्रामाण्य कथं न विश्वसिथेत्यपि तु विश्वसनीय तमत्याशय । ऊरुजपद वृत्तानुरोधात् प्रायोगि । त

सरम्भैरिति । अथ येद्वचनानन्तरं सम्भ्रमैत्र शक्र आदिर्येषु इन्द्रा नलादाना सरम्भैर्भ्रूभङ्गाद्याकारविकारैर्भीतेन कलिना पुरश्चलितु स्तभ्यमानात्रिविधमानात । इन्द्रादिसरम्भान् दृष्ट्वा भयात तत्सम्मुख पद मपि चलितुमशक्ताद्धूलात कलिसैन्यात् बलात पृथग्भवन् किञ्चिद्वाष्प्य- मवलम्ब्य द्विराणि पदानि सम्मुखमागच्छन् दानन्तप्रातमपर सर श- क्रादिनमस्कारार्थे बद्धाञ्जलि कश्चिद्ज्ञातनामा पापकृपत्यनाज्ञातना- माचार्वाक इवानं एव वक्ष्यमाणप्रकारेण जगद ॥ १०७ ॥

नापराधी पराधीनो जनोऽयं नाकनायकाः । का
लस्याहं कलेर्वन्दी तच्चाटुचटुलाननः ॥ १०८ ॥

नेति । हे नाकनायका इन्द्रादयः अयं मल्लक्षणो जनो ऽपराधी न यत पराधीन । तदेवाह । कले कलिनाम्न कालस्याहं वन्दी स्तुति पाठक अत एव तस्य चाटुनि प्रियवचने विषय चटुल प्रियवादि वा यद्वक्त वा आननं यस्यैवम्भूत अयं च कालस्य कृतान्तरूपस्य वन्दि ना हि यमाश्रयन्ति तत्प्रिय वदन्ति न च दुष्टाः । तस्मात्तत्प्रिय वैदिकादिदूषणं मया कृतं यदि न करोमि तदयं दण्डयिष्यतीति प- रवशत्वादपराधात्र दण्ड्य श्रीमद्भिरिति ॥ १०८ ॥

इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम् ।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः ॥ १०९ ॥

इतीति । देवास्तस्मिंश्चार्वाके इति पूर्वोक्तप्रकारेण वदत्येव भाषमा- णे सत्येव स्यन्दनमन्दिरं रथ कलिं अपरं द्वितीयं द्वापरञ्च पुरोऽग्रे आकलयाञ्चक्रुर्ददृशुः ॥ १०९ ॥

सन्दर्शोन्नमद्ग्रीवं श्रीबहुत्वकृताद्भुतान् ।
तन्नरपापपरीतस्तान्लोकीयान्नारकीव स ॥ ११० ॥

समिति । तैस्तैः प्रसिद्धैः ब्रह्महत्यादिभिर्मूर्त्तैः पापैस्तत्कर्तृभि पुरुषैर्वा परीतं समन्ताद्व्याप्तं तथा तद्दर्शनाय मुच्चग्रीवा, यस्यैव भूतं सकलि श्रीबहुत्वेन कायकान्तिबाहुल्येन भूषणादिसम्पद्बाहुल्येन

वशात् । कः कानिव । मत्तो निर्मलो मदिराक्षो वा जगन्मयद्दालो द्विजानिव । किम्भूतान् मन चपहालं दुष्टमप्यनर्हान् । चपहालमान्मातङ्गदीयाकीर्तिमनङ्गमा इत्यमरः । गमश्चेति (वा॰३।२।४७) खच् । खिस्वाकुम् ॥ ११२ ॥

स्वस्ति वास्तोष्पते तुभ्यं शिखिन्नसि न खिन्नता । सखे काल सुखेनासि पाशहस्त मुदस्तव ॥ ११३ ॥

स्वस्तीति । हे वास्तोष्पते इन्द्र ते तुभ्यं स्वस्ति क्षेममस्ति कच्चित् । तथा हे शिखिन्नग्ने ते तव खिन्नता चित्तक्लेशो नास्ति कच्चित् । हे सखे काल यम सुखेनासि कि ? हे पाशहस्त वरुण तव मुदः सन्ति कच्चित् । गृहमात्रस्याधिपत्यादक्षामर्ष्य कृषेव ज्वालाजटिलत्व कुटिलत्वमायुधधारणमेवम्ब मम्युक्तिभिः सूचित । अन्येषां कुशलप्रश्नैः सह साम्यतेभ्योऽधिकत्व सूचयति । इन्द्राय स्वस्तिप्रयोगः स्वाशिभाव ब्राह्मणय वा कलेर्द्योतयति । वर्णमात्रेण यमे सखिशब्दप्रयोगः । धनमेव गर्वोऽसत्ता चेति शेष । स्वस्त्याशीः क्षेमपुण्यादिष्वमरः । वास्तोष्पतिर्गृहमेधाच्चेति लिङ्गात् साधु तुभ्यमिति । मन स्वस्तीति (पा॰२।३।१६) चतुर्थी । इतरत्र तव सम्बन्धमात्रम् ॥११३॥

स्वयम्वरमहे भैमीवरणाय त्वरामहे । तदस्मान नुमन्यध्वमध्वने तत्र धाविने ॥ ११४ ॥

स्वयमिति । हे देवा वय स्वयंवरक्षणे महे उत्सवे भैमीवरणाय वस्मात् त्वरामहे सवेगाः स्मः तस्मात् तत्र धाविने स्वयम्वरस्थानं प्रति प्रजुगामिनेऽध्वनेऽस्माननुमन्यध्वमाज्ञापयत त्वराऽऽज्ञादन्या गोष्ठी न क्रियते । आज्ञैव दीयतामित्यर्थः । अध्वने । तादर्थ्ये चतुर्थी ॥ ११४ ॥

तेऽवज्ञाय तमस्योच्चैरहङ्कारमकारणम् । ऊचिरे ऽति चिरेणैनं स्मित्वा दृष्टमुखा मिथः ॥ ११५ ॥

त इति । ते देवाः पूर्वोक्तमकारणं निर्हेतुक उच्चैरतिशयित प्र-

स्य कर्णहरद्वारं दर्पमनन्ताय मिथो ऽन्योन्य दृष्टमुखाः सन्तः मूर्खं स्व यम्वरार्थं कि करोमीति स्मित्वा हास्यं कृत्वाऽतिचिरेण पापीयसा ऽनेन सह कथं वक्तव्यमिति बुद्ध्या भूयांस कालं विलम्ब्यैनं कलिं प्रत्यूचिरे वक्ष्यमाणं वक्ष्यमाणं वचो॥दिदे ॥ ११५ ॥

पुनर्वक्ष्यसि मामेव कथमुद्वक्ष्यसे नु सः । दृष्टवान् परमेष्ठी य नैष्ठिकब्रह्मचारिणम् ॥ ११६ ॥

पुनरिति । हे कले त्वं स्वयम्वरार्थं गमिष्यामीति एकवारमस्मान् उक्त तद्विदमत. पर पुनर्मा एवं वक्ष्यसि मा मावोच. । यस्मात् परमेष्ठी य त्वा आमरणं गुरुकुलनिवासिनं नैष्ठिकब्रह्मचर्यव्रतधारिणं दृष्टवान् (ननु पुनस्त्वं कथमुद्वक्ष्यसे परिणेष्यसि कलयुगादयो निष्फलाश्च यत्र सृष्टाः) तस्मात्तव स्वयम्वरयात्राऽनुचिताऽकर्तव्येत्यापात् । तस्मादेव पुनर्मा स्म वाच इत्यर्थः । पापरूप प्रत्युपहासवचनमेतत् । मा च स्य निरनुबन्धकत्वाद्वक्ष्यसीति यचेलृट् । मा मेति निषेधविषयार्थं वीप्सायां द्विरुक्ति । परमे स्थाने तिष्ठति इति इनि च कित् । अत आलापः, अम्बाम्बे ति (पा०८।३।९७) सूत्रेण षत्व । तत्रैव, परमेष्ठीति निपातनादेदलत्व ।

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पुत्र्यां वैश्वानरेऽपि च । इति स्मृतिः ॥ ११६ ॥

द्रौहिणं द्रुहिणो वेत्तु त्वामाकर्ण्य विकीर्णिनम् । त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम् ॥ ११७ ॥

द्रौहिणमिति । द्रुहिणो ब्रह्मा त्वा पुत्र अवकीर्णिनं क्षतव्रतं आकर्ण्य निशम्यानन्तरं द्रौहिणं गुरुद्रोहकारिणं वेत्तु । एवं त्वया कृते ब्रह्मैव ज्ञास्यतीति भावः । अथ वा तेन ज्ञातेऽपि तव किं भविष्यतीति भावप्रश्नमाह । त्वज्जनैस्त्वदनुजीविभिः कामक्रोधादिभिरपि धातुः ब्रह्मणः सेतुः मर्यादा धर्मभर्यादा लङ्घ्य. त्वया पुनः किम लङ्घ्यः । त्वदाश्रया सेवका अपि ब्रह्मणो मर्यादा लङ्घयन्ति त्वं लङ्घयसीति किमु

सर्थ्यमित्यर्थः । यद्वा त्यक्तजैरपि सेतुर्नलङ्घ्यस्त्वया न लङ्घ्य इति किं साध्यं । त्वदाज्ञालङ्घनमनौचित्यान्न कार्य्यमित्यर्थ इति काक्वा । धाताऽऽत्मयानिर्दुंघिण इत्यमरः । टुक्षत्यमुरेभ्य औणादिकः किन् ॥ ११७ ॥

अतिवृत्तः स वृत्तान्तस्त्रिजगद्युवगर्वनुत् । आ-
गन्तुनामपादानं स स्वयम्वर एव नः ॥ ११८ ॥

स्वयम्वरं प्रत्यागमनं हेत्वन्तरमपि ब्रूते । अतीति । एकं विना सर्वं परित्यागात्त्रिजगत्सु वर्त्तमानानां यूनां तत्रगानां सौन्दर्य्यविषयं गर्वं नुदतीति नुत् नाशकः स वृत्तान्तो भैमीस्वयम्वरोऽतिवृत्तोऽतिक्रान्त सञ्जात इत्यर्थः । भवद्भिः कथं ज्ञातमित्यत आहुः । स स्वयम्वर एव । आगच्छतां नोऽस्माकमपादानं नियमाऽवधिभूतोऽथ इत्यर्थः । वयमपि तत्र गतास्तत एव आगच्छाम इति सर्व्वोऽपि वृत्तान्तोऽस्माभिर्ज्ञायत इति । अतोऽपि त्वया तत्र न गन्तव्यमिति भावः । विश्लेषे चञ्चलं स्थिरं वा यदुदासीनं तदपादानमिति वैयाकरणाः ॥ ११८ ॥

नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च । भू-
मिपालं नलं भैमी वरं सावरयद्वरम् ॥ ११९ ॥

कथं यूनां गर्वनाशः को वा तया वृत इत्याशङ्कायामाहुः । नागेष्विति । नागेषु वासुकिप्रभृतिषु सानुरागेषु दिविषत्सु अस्मदादिषु कौतुकवशादेव पश्यत्सु तान् सर्वाननादृत्य सा भैमी नागाद्यपेक्षया वरं सर्व्वगुणाश्रयत्वाच्छ्रेष्ठं भूपालं मानुषं भीमं नलं नृवरं वरं परिणेतारमवरयत् वरयामास । सर्वानादरेण नलवरणात् सर्व्वेषां सौन्दर्य्यगर्व्वो गत इत्यर्थः । पश्यत्सु दिविषत्सु इत्यनेनास्माभिः कौतुकार्थं वरदानार्थमेव च गतं न तु तद्वरणार्थमिति च व्याख्यान्तरेण सूचितमिति ध्येयम् । नागेष्वित्यादौ, षष्ठी चानादरे इति (पा०२।३।३८) सप्तमी । अवरयत् । वर ईप्सायामिति चुरादावदन्तपाठात् स्वार्थणिजन्ताद्वरयतेर्याग्लोपित्वात् सन्वद्भावादित्वदीर्घत्वाभावः ॥ ११९ ॥

भुजगेशानसद्वेषान् वानरानितरान् नरान् ।
आमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलं

लम् ॥ २० ॥

किमिति ते परित्यक्ता इत्याशङ्कायां कारणमाह । भुजगेशानिति । भैमी भुजगेशान् वासुकिप्रमुखान् फणागणजिह्वालालनादिवैरूप्यादसद्वैपानमनोहरान् वेद जानाति । तथा इतरान नलादन्यान् नरान् मनुजाधीशान् चापल्यनिर्गुणत्वाभ्या वानरान् वेद । तथा अमरान् प्रचतुरस्वात् पामरान्नीचान् वेद । केवलं नलमेव गुणोज्ज्वलं अतवीर्यौदार्यसौन्दर्यादिभि प्रकाशमानं वेद । सर्वगुणाकरत्वान्नल एव तया वृतोऽन्ये तु परित्यक्ता इत्यर्थ । विवर्णं पामरो नीच इत्यमर । वेदेति इदानीमपि तथैव प्रतीते भवत्वाद्वर्तमानता । विभक्तिप्रतिरूपको निपातो वा । तथाऽज्ञासीदित्यर्थ ॥ १२० ॥

इति श्रुत्वा स रोपान्ध. परमस्मरं युगम् ।
जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानद· ॥ १२१ ॥

इतीति । परममन्त्य युग स कलि इतीन्द्रादिवचन श्रुत्वा परमोऽत्युत्कृष्टो रोपान्ध, रोपान्नितरा निर्विचारतया पुरस्थमपि वस्त्वजानन् अत एव जगन्नाशसम्बन्धिनी निशा, यस्या निशि जगन्नाशो भवतीति यावत्, तत्सम्बन्धी प्रलयकाले सकलभूतग्रामसंहारसम्बन्धी रुद्रसदृग्मुद्रा आकारो यस्य स । क्रोधवशान्नितरामाविष्कृताकार इति यावत् । एवभूत सस्तान् सुरानदा वक्ष्यमाणमुक्तवान् ॥ १२१ ॥

कयापि क्रीडतु ब्रह्मा दिव्याः क्रीड्यत स्वयम् ।
कलिस्तु वरतु ब्रह्म भैतु चातिप्रियाय च: ॥ १२२ ॥

पुनर्यत्यमि नाभिर्मानित्यादेरुत्तरमाह । कयेति । हे देवा ब्रह्मा कयाऽप्यनिर्वचनीयया गायत्र्यादिपदवाच्ययाऽनालनामजातिगोत्रया वाऽथ चामरत्वाद् यस्या नामकथनेऽप्यस्माक लज्जा भवति तया सुतया सह सुखेन क्रीडतु । तथा यूय स्वयमात्मना दिव्या स्वर्गभवा रम्भादी स्त्री अहल्यामुख्या वा रमणीर्दीव्यत स्वेच्छया ताभि सह सुरत क्रीडा कुरुत । प्रजापति स्वा दुहितरमभ्यधावदिति श्रुत्वा ब्रह्मण स्वाकन्यागृहता पुनरां स्वाच्छन्द्यमिति स्वपनित्यमेवोक्तम् । कलिस्तु

पुनर्ब्रह्मचर्य्याख्यं व्रतं यावज्जीवं चरतु वा ऽथवा जीवन् कलिरस्मा नुपहसिष्यतीति अनेन न जीवितव्यमिति वो युष्माकमतिप्रियाय नितरां तुष्टये प्रैतु म्रियतां । स्वयं सर्व्वैः स्वेच्छाचारः क्रियते मया तु स्वेच्छाचारो न कर्त्तव्यो मर्त्तव्यमेवेति कीदृशीयं जगतां परमद्भुतरीतिरिति लोकरीत्युपहासः । अथ च यूयं ब्रह्मादयः सर्व्वेऽपि स्वेच्छाचारिणः स्वाच्छन्द्यं कुरुत नाम कलिस्तु न तादृगिति ब्रह्मैव चरतु युष्माकमत्यन्तप्रियाय नैमीलक्षणाय वस्तुने म्रियतां । भवद्वत्स्वेच्छाचारं न करोमि किन्तु भैमीप्राप्तये प्रवृत्तस्य मम मरणमेवेत् स्वाह्लादमस्त्विति भावः । अत्राप्युपहास एव तात्पर्य्यं क्रीडा चेति । दिव.कर्म्म चेति (पा०१।४। ४३) करणस्यापि कर्म्मत्वात् स्त्रीभिरित्यर्थे स्त्रीरिति द्वितीया ॥१२२॥

चर्य्यैव कृतमेवं वः परस्मै धर्म्मदेशिनाम् । स्वयं
तत्र वृत्तां सर्व्वं श्रोतुं यद्विजितः श्रुती ॥१२३॥

उपहासमेव प्रकटयति । चर्य्येति । हे देवाः परस्मै अन्यस्मै जनाय स्वसुतादिगमनं न कार्य्यमिति धर्म्मदेशिनां धर्म्ममुपदिशतां स्वयं तद्ब्रह्महत्यास्वसुतादिगमनं सर्व्वं निषिद्धं कर्म्म कुर्वतां वो युष्माकमियं कतमैव कैव चर्य्या आचाररीतिरपि तु न कार्य्येत्याक्षेपः । अचेतनं अपि श्रुती कर्णौ यद्भवदीयमहल्यादिगमनं कर्म्म श्रोतुं विजितः त्रस्यतः । स्वेच्छाचारिणां भवतां परपीडायामेव तात्पर्य्यमिति भावः । चर्य्या । गदमदेति पा०३।१।१००) भावे यत् ॥ १२३ ॥

तत्र स्वयम्वरे लम्भि भुवः श्रीर्नैषधेन सा । ज
गतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव वः ॥१२४॥

तत्रेति । तत्र स्वयम्वरे नैषधेन भुवः श्रीः सौन्दर्य्याद्भूलक्ष्मीः सा भैमी अलम्भि प्राप्ता । युष्माभिस्तु पुनर्जगतो ह्रीस्त्रैलोक्ये यावती वर्त्तते सा लज्जा जगतः सकाशाद्वा, भैम्याऽनादृतत्वात् या लज्जा साऽलम्भीति वो नलस्य युष्माकञ्च लाभोऽपूर्व्ववस्तुप्राप्तिस्तुल्याभ एवाभासते । तुल्याभ एव । शकारहकारमात्र वैरूप्यं, इतरत्तुल्यमेव । भवद्भिर्लज्जैव लब्धा न तु भैमीति रूपस्य दर्पो वृथैवेति भावः । अपद्य यू-

स्य तरलः चञ्चलस्वभावः अनिश्चितबुद्धिः नलः कथङ्कारं कथमिव स्वीच-कार अहो आश्चर्यम् । महान्तं कामयमानाया देवपरित्यागेन मनुष्य-वरणान्महच्चित्रमित्यर्थः । अयं च या महापरिमाणं वाञ्छति सा वि-शालान् दृढान् देवान् परित्यज्य लघुस्वभावमानवमपि चञ्चलं तृणवच्च नलाख्यं तृणमङ्गीकरोतीति चित्रमेव । एतत् यथ सा किं न जयद्भि-र्दग्धेति भावः । अभिलाषुका । लषपत० (पा० ३।२।१५४) इत्युकञ् । म-हान्तं इति, नलोकेति (पा० २।३।६९) षष्ठीनिषेधाद् द्वितीया । कथङ्कारं पूर्ववत् ॥ १२७ ॥

भवादृशीर्दिशामीशैर्मृग्यमाणां मृगेक्षणाम् । स्त्री-

कुर्वाणः कथं सोढः कृतघ्नस्तृणवन्नलः ॥ १२८ ॥

इदानीं नलः कथं सोढ इत्याह । भवादृशीरिति । भा देवाः दिशा-मीशैर्महासमृद्धिभिर्भवादृशैर्मृग्यमाणा काम्यमाना मृगेक्षणा भैमीं स्वी-कुर्वाणः समुद्वहन् अत एव भवत्सु कृतघ्नः कृतापराधः तृणतुल्योऽति-निःसारः, अथ च नलस्तृणवाच्यत्वात् तृणरूपः स नलो जयद्भिः कथं केन प्रकारेण सोढः क्षान्तः । सा जयद्भिरभिलषिता तया तु भवन्तो नादृता इत्युपहासः । मृगेक्षणा । न लोकेति (पा० २।३।६९) षष्ठीनिषे-धाद्द्वितीया । सोढ । सोढपरेति (पा० ८।३।७८) इत्यविवक्षणात् षत्व-विभाषेति (पा० १।२।१५) निष्ठा या नेट् ॥ १२८ ॥

दारुणः कूटमाश्रित्य शिखी साक्षी भवन्नपि ।

नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम् ॥१२९॥

दारुण इति । अयं शिखी वह्निर्दारुणं कूटं काष्ठराशिं आश्रित्या-ग्निसाक्षिके विवाहे साक्षी भवन्नपि साक्षाद्द्रष्टा भवन्नपि सम्प्रका-शमानोऽपि तयोर्भैमीनलयोस्तस्य तस्या वा उद्वाहे विवाहे विषये कूटसाक्षिणोऽलीकसाक्षिणः क्रिया सत्यापलापलक्षणा किन्नावहत् अ-पि त्वेतदप्यनुचितं कृतम् । कूटसाक्षी हि परकीयं वस्त्वन्यस्मै दापय-ति । तदनेन मायशस्तत्र न स्थितमित्यग्निसाक्षिको विवाह एव न भवतीति भैमी नलेन वोढेति भैमी नलादन्यस्मै जयद्भ्य मध्ये क-

स्मैचित् किमिति न दापितेत्यर्थः । अथ च दारुणः पापकारित्वाद-तिक्रूरः पुरुषः कपटमाश्रित्य व्यवहारे साक्षी भवन्नपि तस्य चित्ते धृत स कार्य्यस्योद्घाटे कूटसाक्षित्वं धत्ते अत्र तु नेत्याद्यर्थ्यं ॥ १२९ ॥

अहो महःसहायानां सम्भूता भवतामपि । क्षमैवास्मै कलङ्काय देवस्येवामृतद्युतेः ॥ १३० ॥

अहो इति । हे देवा महःसहायानां तेजस्विनां दिव्यमूर्त्तीनां भवतामपि क्षमैवास्मै कलङ्काय, इन्द्रादिषु सत्स्वपि भैमी नलं वृतवतीति अपयशसे, अथ च नलकृतानादररूपाय, अथ च लज्जाधृष्टाद्न्यवनयीक्षणाशक्तिमुखमालिन्यरूपाय कलङ्काय सम्भूता । अहो महदाश्चर्य्यं गुणभूतापि क्षमा दोषाय जातेत्यर्थः । महः सहायस्य तेजस्विनो देवस्य दीप्यमानस्यामृतद्युतेश्चन्द्रस्येव । यथा चन्द्रस्य क्षमा भूमिः कलङ्काय जाता भवतामपीत्यपिशब्दं न यत्र कलङ्कशङ्कापि नास्तीति सूचितम् । भूच्छाया चन्द्रे कलङ्क इति ज्योतिर्विदः । महः सहायानामपीति वा चन्द्रस्य यथा तथा भवतामपीति समुच्चयार्थो वा । क्षमां परित्यज्य भवद्भिरन्यतरस्य चेद् दण्डो नाकरिष्यत् तदयमपयशो नाभविष्यदिति भावः ॥१३०॥

सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् । ब्रूतागःसद्म नस्तस्माच्छद्मनाद्याच्छिनद्मि ताम् ॥ १३१ ॥

सेति । हे देवाः भैमी यं वव्रे तं नलमुत्सृज्य यूयं स्थ मह्यं कलये किमिति ईर्ष्याजुषः अक्षान्तिपराः स्थ भवथ अपराधिनस्तस्यापकर्तुमशक्ताः मत्तोऽनपराधाय मह्यं किमिति ईर्ष्यायुक्ताः स्थेत्युपहासः । तस्माद्यूयं ब्रूत कथयत । अहं तस्मान्नलात् सकाशाच्छद्मना कपटेन नमनपि वञ्चयित्वा अद्यैव तामाच्छिनद्मि आहरामि । यत् आगमां न यदनादरणापराधस्य सद्माश्रयभूतस्तस्मात् । अविलम्बेनैव तामाहरामि गच्छति मामनुमन्यध्वमित्यर्थः । अन्येनापराधे कृतेऽन्यस्मै क्रुध्यत इति युक्तमिति लोकरीत्युपहासः । ब्रूत भोः युष्माकमस्माकमागःसद्म अनादरकरणात् अपराधिनीं तां नलादानयामीति वा । मह्यं । क्रु

चतुर्थेति (पा०१।४।३१) चतुर्थी । आच्छिनत्ति । वर्त्तमानसमीप्ये लट् १३१॥

यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव । सा
पि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥१३२॥

यतध्वमिति । यूयं मां सहकर्त्तुं सहकारिणं कर्त्तुं यतध्वं यत्नं कुरुत । भैमीमानेतुमहं गच्छामि यूयं मम सहायाय मा गच्छतेत्यर्थः । तत्र साहाय्येऽस्माकं किं फलमित्यत आह । अस्माभिरिन्द्राग्नियमवरुणैर्मया सह पञ्चभिः सा भैम्यपि संविभज्य भागक्रमेण समानभागमेव कृत्वैवोपभुज्यताम् । तथा च भवतामपि फलमस्तीति भावः । कैः केव । पञ्चभिः पाण्डवैः पाञ्चाली द्रौपदीव ॥ पाञ्चालीदृष्टान्तेनैकस्याः पतिव्रताया बहुभिरुपभोगेन दूषणं इत्यलौकिकत्वं परिहृतम् । पाण्डवानामप्रभावित्वात् तदानीं दृष्टान्तत्वेन कलेर्योगित्वात् भविष्यदर्थज्ञानसामर्थ्याद्वचनं युक्तम् । जगत्प्रवाहानादित्वात् पाण्डवपाञ्चालीवृत्तान्तमतीतमवेत्य तदुदाहरणीकृत्य तदुक्तमिति । पाञ्चाली । जनपदवाचिनः क्षत्रियवाचिनः पञ्चालशब्दात् जनपदशब्दात् क्षत्रियादञिति (पा०४।१।१६८) अपत्येऽञ् ॥ १३२ ॥

अथाऽपरिवृढः सोढुं मूर्खतां मुखरस्य ताम् । च
क्रे गिरा शराघातं भारती भारतीव्रया ॥१३३॥

अथेति । अथ पूर्वोक्तकलिवचनाकर्णनानन्तरं तामुक्तप्रकारां मुखरस्यानुचितभाषणशीलस्य कलेर्मूर्खतां सोढुं क्षन्तुमपरिवृढोऽसमर्था भारती सरस्वती अर्थगाम्भीर्यात् भारया श्रेष्ठया परुषत्वाच्च तीव्रया दुःसहया गिरा कलौ शराघातं बाणाघातमिव चक्रे बाणवत् पीडाकरं परुषवचनमूचे इत्यर्थः । भारतीव्रयेति पाठे अर्थगाम्भीर्येण दुःसहया १३३॥

कीर्त्तिं भैमी वराश्चास्मै दानुमेत्रागमत्समी । न
लीढं धीरवैदर्भ्यां धीरगम्भीरगाहिनी ॥ १३४ ॥

कीर्त्तिमिति । हे कले अमी देवा अस्मै नलाय भैमीं दातुमेव, तथा भैमीं कामयमानोऽपि इन्द्राद्यर्थं भैम्याः स्वयं दूत्यं कृतवानेवंविधोऽतिधीरः कोऽपि नास्तीति कीर्त्तिं यशः, तथा भैमीञ्च प्रत्यक्षल-

त्या, तथोक्तप्रकारान् वरांश्चास्मै नलाय दातुमेवागमन् । स्वयम्वरकृतयत्ना न तु भैमीं वरीतुमिति त्वं नो वेत्सीत्यर्थः । देवा,हि केनापि प्रकारेण परीत्य परितुष्टाः सन्तो वरं ददते । कुतोऽहं न वेद्मीत्यत आह । यस्मादगम्भीरस्य तलस्पर्शस्य गाहिनी स्पर्शिनी गम्भीरार्थग्राहिणी न भवतीत्यर्थं, एवम्भूता मूढानां बुद्धिर्धीराणां महाशयानां वैदग्धी चातुरीं न लीढे न वेत्तीत्यर्थः । त्वं तु मूर्खत्वादेतेषां अभिप्रायमज्ञात्वोपहसितवानिति भावः । अधीरेत्यकारप्रश्लेषेण सम्बोध्य, अगम्भीरगाहिनी ते धीर्वैदग्धीमर्यादेतेषां न लीढ इति वा । हे अधीबुद्धिरहित मन्दबुद्धे कले अगम्भीरगाहिनी ते धीरवैदग्धीमधातुर्य्यं नास्वादयत्यपि तु प्राप्नोत्येवेति काका वा व्याख्येयं । लीढे । लिहः स्वरितत्वात्तङ् । क्वचिल्लं ढीति पाठ ॥ १३४ ॥

वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान् । ली-
लावहेलितां कृत्वा दैवानेवावदत् कलिः ॥ १३५ ॥

वाग्मिनीमिति । कलिः वाग्मिनीं वाचो युक्तिपरम्परा चतुरां तां देवीं प्रतिवक्तुं प्रत्युत्तरं दातुं अशक्तिमान् असमर्थो यतः प्रत्युत्तरास्फुरणो जडजिह्वः कुण्ठितवदनशक्तिः अत एव तां लीलया विलासव्याजेनावहेलितां कृत्वाऽप्रिय त्वां प्रति वक्तुमयुक्तमित्येवमप्रकारं परिहास्य देवानेवावदत् ॥ १३५ ॥

प्रौढिं वाञ्छितमस्माभिरपि तां प्रति सम्प्रति ।
तस्मिन्नले न लेशोऽपि कारुण्यस्यास्ति नः पु-
नः ॥ १३६ ॥

प्रौढीति । हे देवाः सम्प्रति अस्माभिरपि तां भैमीं प्रति वाञ्छितं अभिलाषः प्रौढि परिमार्जितः त्यक्तमित्यर्थः । नोऽस्माकं पुनः कारुण्यस्य लेशोऽपि तस्मिन्नले नास्ति नलमपकर्तुं प्रयतामहे इत्यर्थः । प्रौढि । नपुंसकं भावे प्राप्त् कर्मणि क्विप् ॥ १३६ ॥

दृते कर्म्माणि धर्म्मः किं तदा नाभूत तन्नयत् । का-
र्याचितमिदानीं नः शृणुतालोचितं सुराः ॥ १३७ ॥

वृत इति । हे देवाः स्वयम्वरलक्षणे कर्म्मणि वृत्ते जाते सति किं कार्यं कुर्म्मोऽपि तु किञ्चिदिदानीं कर्तुं न शक्यं । पश्चात्तापमात्रं भवति न तु तज्ज्ञानं परदारत्वाद्गतशोका न कर्त्तव्य इति च । तस्मात्प्रति वाञ्छितं त्यक्तमित्यर्थः । यद्वयस्मात्तदा स्वयम्वरमध्ये यय तत्र नागम स्थिता । तदानीं चेत्तत्र भविष्यामस्तर्हि तथैवाकरिष्यामस्तत्र भूदित्यर्थः । हे देवा यूयं इदानीं पुनर्भैम्या नले वृते सत्यपि कालोचित समयोचित कोऽस्माकमालोचित विचारं शृणुत आकर्णयत । नले कृपालेशोऽपि नास्ति इति मयोक्तं तत्प्रकारमाकर्णयतेत्यर्थः । न असत्दोद्वपायेति (पा०१।२।५९) बहुत्वं । आलोचित भावे क्त ॥१३७॥

प्रतिज्ञा यं नलं विज्ञाः कलेर्विज्ञायतां मम । तेन
भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् १३८ ॥

तदेवाह । प्रतिज्ञेति । हे विज्ञाः कलममेयं प्रतिज्ञा नले विषये विज्ञायतां भवद्भिरिति शेषः । इयमिति किं । अहं तेन नलेन प्रधानेन भैमीञ्च भूमिञ्च त्याजयामि शीघ्रं नाशयामि अनु एव तं जयामि इति प्रतिज्ञा मम चेतस्येव वतत इति भवद्भिर्ज्ञायत एव तथापि स्पष्टं मया कथ्यते, तदाकर्ण्यतामित्यर्थः । कलेर्ममेत्यहङ्कारः सूचितः । तेन । अनुक्ते कर्त्तरि तृतीया । त्याजयामि जयामीति वर्त्तमानसामीप्ये भविष्यति लट् ॥ १३८ ॥

नैषधेन विरोधं मे चण्डतामाप्ततौजसम् । जग
न्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३९ ॥

नैषधमिति । चण्डतया भूभैमीपरित्याजनद्वाराऽतिपीडाकारित्वाविद्धं यत्वेन मवितौजसोऽलद्भुतेजसा मे मम नैषधेन सह विरोधं जगतीत्रयेऽपि लोका गायन्तु कीर्त्तयन्तु । कस्य किमिव । चण्डतामवितौजसा रवेः सूर्यस्य कैरवैः कुमुदैः सह वैरवत विरोधमिव । हन्त खेदे । अयोग्येन हीनतेजसा नलेन सह विरोधारम्भात् त्रैलोक्ये यद्यप्ययशो भविष्यति तथापि किं कुर्म इति रे वद. अथवा समुदयेऽपि सूर्येण कैरववैरवत् मयापि नलवैरं करिष्यत एवेति भावः ।

एतेन दर्पः सूचितः ॥ १३९ ॥

द्वापरः साधुकारेण तद्विकारमदीदिपत् । प्रणीय
श्रवणे पाणिमथोचन्नमुचे रिपुः ॥ १४० ॥

द्वापर इति ॥ द्वापरस्तृतीययुगरूपः सहचरः तस्य कलेर्विकारं नलेन सह विरोधरूपं साधुकारेण साध्विति शब्दोच्चारणेन अदीदिपत् साधूचितमेव त्वया विचारितमित्युद्दीपयामास तस्य प्रोत्साहनं चकारेत्यर्थः । अथ नमुचेर्दैत्यस्य रिपुरिन्द्रो युष्माभिः साहाय्य कर्तव्यमिति कलिनोक्तस्य वचनं उत्तरत्वेनैतद्व्यापारमध्येऽस्माभिर्न स्थीयत इति लौकिकाजिनयध्यनुभवगाच्छ्रवणे पाणिं प्रणीय यत् त्वया विचारितं तदस्माभिः श्रोतुमप्यनर्हमिति वा पाणिभ्यां कर्णौ पिधाय कलिमवोचत् । अदीदिपत् दीपेर्ण्यन्ताल्लुङि 'भ्राजभासभाषदीप' (पा०७।४।३) इत्यादिनोपधाह्रस्वविकल्पः ॥ १४० ॥

विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे । यद्द
त्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने ॥ १४१ ॥

विस्मेयेति । हे कले त्वं विस्मेयाश्चर्यहेतुर्मतिर्यस्यैवंविधोऽसि, यस्मात्त्वमस्मासु वर्तमानं वैलक्ष्यं सलज्जत्वं साधु सम्यक् प्रकारेण ईक्षसे जानासि । पराशयवेदितया तव तीक्ष्णबुद्धित्वादहं विस्मित इत्युपहासः । साधूचितं यद्वैलक्ष्यं तदस्माकं दीक्षसे इति वा । कथं मदस्तु वैलक्ष्यमुचितमित्याशङ्क्य समर्थयते । पुरुषोऽनल्पाय महते पुरुषायाल्पं अतितुच्छं वस्तु दत्ते इति यत् स पुरुषस्तदल्पवस्तुदानं कर्म आत्मने स्वस्मै ह्रियमेव दत्ते । महते यत् अल्पं दीयते तदल्पदानमेव कर्तृ दात्रे पुरुषाय लज्जामेव दत्ते तेन तस्य लज्जैव भवतीत्यर्थः इति वा । तथा च महते नलाय अस्माभिरल्पमेव दत्तमिति विषादादस्माकं लज्जा युक्तैवेति भावः । अतितरां नलमाहात्म्यं सूचितं । एतेन दूतस्यः प्रत्युक्तिरिति मन्योत्तर । यद्यदि तथैति वा योज्यं । यद्वा अनल्पाय न विद्यतेऽल्पो यस्मादिति दीनायेत्यर्थः । यद्गमादादिरन्यकर्मोऽपि धर्मार्थमपि हन्तमीत्याद्युपाख्यवचनं दत्तं करोति तत्

स्वस्मै ह्रियमेव दत्ते । अधमस्य महोपालम्भयोग्यस्य तयाऽप्य एवोपालम्भः कृत इति विषादादस्माकं वैलक्ष्यं युक्तमेवेति व्याख्येयम् । अधमायाऽल्पमपि उपालम्भादिप्रवृत्ते तत् स्वस्मै ह्रियं दत्ते । अधमेन सह सम्भाषणनिषेधात् तस्योपालम्भोऽपि न कार्यं स त्वस्माभिः कृत । तथा च पापरूपेण भवता सह सम्भाषणमस्माभिरनुचितं कृतमिति विषादादस्माकं वैलक्ष्यं युक्तमेवेति वा । इयमपि वक्रोक्तिः ॥१४१॥

फलसीमा चतुर्वर्गं यच्छतांऽशोऽपि यच्छति । न

तस्यास्मदुपज्ञा सा भक्तिर्मूलाग्रकेशिनी ॥१४२॥

दानात्स्वस्यनलमहत्त्वप्रकटनपूर्वं वैलक्ष्यमस्यैवेति समर्थयते फलेति । यस्या नलभक्तेः शतांशोऽपि शततमो भागः फलस्य सीमा सर्वादोभूता निरतिशयफलरूपं चतुर्वर्गं धर्मार्थकाममोक्षरूपं यच्छति नलाय दातुं शक्नोति स स्मदुपज्ञाऽस्मदाश्रयासंहितया नलस्य भक्तिरेव केशिनी फलभूता जाता । यस्या भक्तेः शततमेनांशेन अशक्तैरस्माभिः सन्तुष्य फलरूपत्वेन चतुर्वर्गोऽपि नलाय दातुं शक्यते तस्या निरतिशयायाः परिपूर्णायाश्चतुर्वर्गाद्धिकतरस्य फलस्याभावादस्माकं दातुमसामर्थ्यात सा निष्फलैव जातेत्यर्थः । निरतिशयभक्तियुक्तस्यास्मै नलाय चतुर्वर्गोऽप्यल्पतरफलत्वाद्दातुमयुक्तः । तादृशाय भैमीलक्षणाल्पतमफलदाने कृतेऽस्माकं लज्जा युक्तैवेति भावः । यच्छततमांशवशीकृतैरस्माभिरल्पसामर्थ्यैः नलोऽप्यन्यस्मै जनाय फलावधि चतुर्वर्गं दातुं शक्नोतीति यावत् सा भक्तिरपूर्णा निष्फला जातेति वा व्याख्येयम् । साऽपीति पाठे चतुर्वर्गं ददतामस्माकं स नलोऽपि क्रियमाणधर्मफलमर्यादा ब्रह्मार्पणं ददाति । तस्याः पुनः प्रत्यर्पणात् अस्माकञ्च सामर्थ्यमेव । किन्तु नलस्यास्मद्विषया निरतिशया दास्यमानस्यापि ब्रह्मणे चार्पणात् फलाभिसन्धानरहिता भक्तिर्वन्ध्या जाता । तादृशस्य भक्तिफलादानेऽस्माकमसामर्थ्यात् तथा च वैलक्ष्यं युक्तमस्तीति व्याख्येयम् । यच्छता । सम्बन्धे षष्ठी । शतस्यांशः शतांश इति विगृह्य तद्धितया शततमोऽश इति । उपज्ञा आश्रय इति साधु ॥ १४२ ॥

भव्यो न व्यवसायस्ते नले साधुमती कले। लोकपालविशालोऽसौ निषधानां सुधाकरः ॥१४३॥

नलो वैराही न भवतीत्याह। भव्य इति। हे कले रागद्वेषादिराहित्येन साध्वी निर्मला मतिर्यस्य नस्मिन्नले विषये ते व्यवसायो वैरकरणोद्यमो भव्यः शुभोदर्को न। किन्तु निषधदेशानामाह्लादकत्वात् सुधाकरश्चन्द्रोऽयं नलः, लोकपालाः दिक्पालास्तद्वद्विशेषेण शालते शोभते स्वाभाविकेन शौर्यादिना इन्द्रत्वाद्वा लोकपालत्वमप्याशयः। अनस्तेन सह वैरं तव शुभोदर्कं न भवतीति न तत् कार्यमित्यर्थः। मते इति पाठे असाध्वी मतिर्यस्येति अकारप्रश्लेषेण कलेर्विशेषणम्। मनः कलरिति पाठे असाध्वोपरादेरनुमत इति व्यवसायविशेषणम्॥१४३॥

न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति। निचिताखिलधर्मे च द्वापरस्योदयं वयम् ॥१४४॥

एतदेव स्फुटयति। नेति। वय तस्मिन् क्षमाभृति राज्ञि नले कलेस्त्वद्युगस्य तवावकाशं प्रवेशावसरं न पश्यामः सम्भावयामः। तथा भवन्मित्रस्य द्वापरस्य च उदयं नलपराभवसामर्थ्यं न सम्भावयामः यतो नितरां चिता अर्जिता अखिला धर्मा यत्र श्रौतस्मार्तधर्मानुष्ठानरतिकभवत्र हेतुः। तस्य धर्ममयत्वादुभयोः पापरूपत्वात्त्वयावकाशलेशोऽपि न सम्भाव्यत इत्यर्थः। यद्यपि देवा नलपराभवस्य भविष्यतां जानन्ति तथाप्युत्साहभङ्गद्वारा कलिनिषेध एव तात्पर्यात् अवकाशं न पश्याम इत्यूचुः। यद्वा पश्याम इति वर्तमानसामीप्ये भविष्यति लट्प्रयोगात् प्रस्तुतोऽवकाशो नास्ति विलम्बेन भविष्यतीति सूचितमिति शेषम्। अथ च यथा सह्येन तितिक्षाशीले पुरुषे कलहावकाशो न निचिता सकलधर्मा रत्नम्ये च सन्देहस्योदयः प्रभवतीति युक्तम्॥१४४॥

मा विनीततमा भैमी व्यर्थानर्थग्रहैरहो। कथं भवद्विधैर्ग्राह्या मुनिर्निर्विभ्रमैरिव ॥ १४५ ॥

भैम्यपि न याच्येत्याह। मेति। पातिव्रत्यादिधर्मनिष्ठत्वाद्विनीततमा सा भैमी व्यर्थो निर्हेतुका वैराचरणलक्षणोऽनर्थस्तत्र ग्रहोऽभि

या चित्ते धृतेऽनुदिते चेद्विविधपातकमेव भवति न तु त पराभवितुं शक्नोपीति । यद्यपि त पराभवितुं शक्यसे तथापि नलाय दृष्टादृष्टसामग्र्येव तत्र प्रयोजिका न तु त्वमिति । मयैव करिष्ये मयैव कृतमित्यादिरूपा प्रतिज्ञा प्रति त्वमात्रस्य कारणत्वाभावाद् दृष्टादृष्टकारणैर्गुण्येन प्रतिज्ञाभङ्गस्यापि शङ्कितत्वादिन्द्रोऽपि कर्तुमशक्तस्त्वं तु को नाम वराक इति च भाव । यद्वा दृष्टादृष्टरूपा हेतवः । दृष्टसामग्री यथा कथञ्चित् यद्यपि सम्पादयितुं शक्यते तथाप्यदृष्टसामग्री त्वया न शक्यते । तथा च नलन यदि परमो धर्म्मः कृतस्तर्हि स त्वया पराभवितुमशक्य । अथाधर्म्मः कृतस्तर्ह्यधर्म्मवशादेव तस्य तादृशीदशा भविष्यति त्वया किं क्रियते इत्युभयथापि दोषात्, मयैव क्रियते करिष्यसे, कृतमित्यादिवल्गना न कार्य्येति भाव. । इत्युक्तेति पाठे अवश्यंवश्यं प्रा करिष्ये इत्युक्त्याऽकारप्रश्लेषेणाकरिष्यन्नपि दुष्यसि । वाङ्मात्रेणापि पापसिद्धेः किं पुनः करिष्यन्निति । अन्यत् पूर्ववत् । कार्य्यीया । मा खेदमित्यर्थ. । तस्मै हितमित्यर्थं इति वा ॥ १४७ ॥

द्रोह मोहेन यस्तस्मिन्नाचरेदचिरेण सः । तन्पापसम्भवन्तापमाप्नुयादनयान्नतः ॥ १४८ ॥

द्रोहमिति ॥ यः पुरुषो मोहेनाज्ञानेनापि तस्मिन् पुण्यश्लोके अनपकारिणि द्रोहमपकारमाचरेत् स पुरुषस्ततस्तस्मात् अनयादन्यायाद्धेतोरचिरेण तस्मात्तादृशापकरणजातात् पापात् सम्भवो यस्य त पापदु ख प्राप्नुयात्, बुद्धिपूर्वकारी लभत इति किं वाच्यमित्यर्थ । नलद्रोहस्तस्मात् त्वया सर्वथा त्याज्य इति भाव । अनेन शापोऽपि दत्त इति ज्ञेयम् । मोहेनेत्यत्राथोदिशब्दो योज्य । मोहस्येन स्वामिन् अज्ञानाश्रय मूर्खतर इति वा सम्बोधन ॥ १४८ ॥

युगशेष तव द्वेषस्तस्मिन्नेष न साम्प्रत । मयिता न हितायैतद्वैर त वैरसेनिना ॥ १४९ ॥

युगेति । हे युगाना सत्यादीनां शेष कले तस्मिन्नले तवैष द्वेषो न साम्प्रतमयुक्त यस्माद्वैरसेनिना नलेन सह एतत् मारब्ध वैर ते तुभ्य

हिताय न भविता शुभोदर्कं न भविष्यति । युगेषु ह्रोप इति निहार पो सप्तमीसमास । साम्प्रतमव्ययम् । हितयागे तुभ्य मिति चतुर्थी ॥१४९॥

तत्र यामीत्यसज्ज्ञान राजस सद्दिहास्यताम् । इ
ति तत्र गतो मा गा राजसभद्दि हास्यताम् ॥१५०॥

तत्रेति । हे कले तत्र नलसमीपे पराभवार्थं यामि गच्छामीति ए वम्भूत राजस ज्ञान रजोगुणसहित विचारासक्त अन एवासद्योजन सद्भूतमान इहास्मिन काले देशे वास्यता त्यज्यता इति, सद्भूतमिति वा, इति विचार्य्येति यावत् । इति कि । तत्र राजससदि तस्या नल सभाया गत सन् हास्यता परिहासास्पदत्व मा गा । एव विचार्य्य त त्र गत सभ्यैरुपहास्य एव भविष्यसि । न तु नल पराभवितु शक्ष्यसी त्येवविधो विचार परित्याज्य एवेत्यर्थ । असत्सदिति विरोधाभास । तत्र यामीति ज्ञानमसत अयुक्त यतो राजस । तर्हि कि कर्तव्य तत्रा ह । इहास्मिन्नेव देशे आस्यता स्थीयता इत्त यथ पराभव नीयमि त्यर्थ । इति असदीय ज्ञान सद्भूतमितीतिशब्दमावृत्य व्याख्येयम् । विपक्षे बाधकमाह तत्राहेन । तत्र स्वयम्वरे गतो राजसभाया स्वय म्वरे वृत्ते किमयमागत इति हास्यतामेव गमिष्यसि ॥ १५० ॥

गत्वान्तरा नल भैमी नाकस्मात्त्वत्र प्रवेक्ष्यसि ।
पश्चाद्व्यक्रमसयुक्त पठ्यमान हकारवत् ॥ १५१ ॥

गत्वेति । हे कले निषधदेशान् गत्वा प्राप्य नल भैमीमन्तरा नल भैम्योर्मध्ये अकस्माच्छीघ्र दुरितलक्षणाकारणमन्तरेण वा त्व न प्रवे क्ष्यसि प्रवेश कर्तु न शक्ष्यसि । नलस्य पुण्यश्लोकत्वाद्भैम्याश्च पाति व्रत्यादिधर्मयुक्तत्वात् तौ पराभवितु न शक्नोषीत्यर्थ । क इव । प मयुक्त पूर्व सन्धितया पृथक्कृतप्रकृतिप्रत्ययविभाग पश्चात् पठ्यमान सहितया प्रयागादिमुदाहरणादामिति यावत्, एवम्भूत पश्चाच्छक पश्चा मिति शब्दरूपस्य वर्णवृन्दमध्यतरा मध्ये हकारवत् हकारो वर्णो यथा ऽकस्मात्द्विधिमन्तरेण न प्रविशतीति साधर्म्योपमा । षट्शब्दात् षष्ठी बहुवचने षट्चतुर्भ्यश्चेति (पा०७।१।५५) नुटि तस्मिन्हिते आमि, स्वादि

प्रसङ्ग नामस्थान इति (पा०१।४।१७) पूर्वपदस्य पदत्वात् झला जशो-ऽन्ते इति (पा०८।२।३९) जश्त्वेन टकारस्य डकारे न पदान्तादिति (पा० ८।४।४२) निषेधस्य स्तोः ष्टुना ष्टुरिति (पा०८।४।४१) सूत्रेण णत्वादेशे यरो-ऽनुनासिकेऽनुनासिको वा इति (पा०८।४।४५) डकारस्यापि अनुनासिकस्य व्यवस्थितवि कल्पत्वादनुनासिकस्यात्र नित्यत्वेन णकारे जाते सत्यपि न स्वं रू पेण षण्णामिति पदमध्ये डकारो यथा प्रवेशं लभते तथा तथार्णव्यस व मपीत्याशयः । अन्यथा विकल्पत्वात् षड् षण्णामिति स्यात् तस्मादुदि त्यत्र व्यवस्थितविभाषाऽङ्गीकरणीया । एतच्चैवमत्र णकारः पूर्वपद-स्य भैमी चेति वाच्यः । तथा च क्रमेण पर्य्यायेण संयुक्तः षण्णामिति वक्ष्यमाणकरणमनत्र डकारो यथा न प्रविशति संयुक्तावस्था-यां यद्यपि स्वं न रूपकावस्थानं वर्त्तते तथापि संयुक्तावस्थायां नास्ती त्यर्थः इति वा । षण्णामित्यत्र प्रकृतिप्रत्ययद्वयाया एकस्मादागतत्वाद्यप्र रूपतया डकारो यथा प्रविशति तथा त्वं प्रवेक्ष्यसीति वैधर्म्योपमया व्याख्येयं । टकारवदिति पाठे वावसाने (८।४।५६) इत्यवसाने एव च र्त्वविकल्पात् खरभावात् षट्स्वित्यादिवत् षण्णामित्यत्र खरवसान-भावाभावात् टकारो यथा न प्रविशतीति साधर्म्योपमैव । रूपकाऽप-म् । नल भैमी । अन्तरान्तरेणेति (पा०२।३।४) द्वितीया ॥ १५१ ॥

अपरेऽपि दिशामीशा वाचमेनां शचीपतेः । अ

न्वमन्यन्त किन्त्वेना नाद्रन्त युगयोयुगं ॥१५२॥

अपर इति । अपरे दिशामीशाः वह्न्यादयः शचीपतेरेनां पूर्वोक्ता वाचं अन्वमन्यत इन्द्रो युक्तमाज्ञापयतीत्येवमभ्यमन्दन् किन्तु पुनर्मू-र्तं युगयोः कलिद्वापरयोर्युगं एनामिन्द्रगिरं नाद्रत नाङ्गीचक्रे । दिशा मानागपि सम्मतायां वाचि तयोरसम्मते किन्तुशब्देन सूक्ततरस्वमाप्र-च्छित्व चाक्त । एना । अन्वादेशे एनादेशः । आद्रत । अनाप्तयिष्ट्र-यत्वाद्रङ् ॥ १५२ ॥

कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः ।

सोपहासं समैत्रर्येरिरथ व्यरचयन्मिथः ॥ १५३ ॥

यमः कलिमाह । पत्याविति । हे कले त्वं यदर्थं यस्या निमित्तेन गतवान् गमनयुक्तोऽसि यां वरीतुमेव गच्छसि तया पूर्वमेवान्यस्मिन् पत्यौ वृते स्वभर्तृत्वेनाङ्गीकृते सति भवतः कोपस्य रोधा निवारणं तावद्भवतु । यतोऽसमञ्जसमर्थस्यात एव वृथा रुष्ट कोपो निष्फलस्तस्मात्कोपो निवार्य इत्यर्थ इति वा ॥ कलिरेतदेव यममाह । हे यम यां वरीतुं गतवानसि तया नलं पत्यौ वृते भवतः सकाशादन्योऽधस्तादपरो हीनो न कोऽपि, अपि तु त्वमेव । त्वत्सकाशादन्योऽधो हीनः स्तादपि तु त्वमेव हीन इति वा । अपरोऽर्थोऽत्वदन्यो भवत उपस्थितस्त्वधुपक्षय प्रापयतीति भावः । निरयंकजन्माऽतएवाधो हीनः स्तादपि तु त्वमेव हीन इति वा । समुद्युक्त वानिरयंकजन्मेत्यर्थः । अधमस्य नूरपशोरधिकस्य देवस्य रुषो वृथा । अस्माद्दृशानामेव रोषाः सफला न तु भवादृशानामित्यर्थ इति वा । अधम असत्त्वसमर्थं यम वृथा निष्कारणमस्मान् प्रति रुषः कोपान् त्वं मा कुर्वित्यर्थं इति वा । यस्मै यदर्थं चतुर्थी तदर्थेति (पा०२।१।३६) समासः । गतवान् क्तवतुः । पत्यौ वृते क्तवत । भवतः । षष्ठी पञ्चमी च दिग्योगे । पद्यं प्रथमा । आतो धातोरिति (पा०६।४।१४०) प्रतिषेधात्, अत्वसन्तस्य चाधातोः (पा०६।४।१४) इति असन्तत्वेऽपि न दीर्घः । अधस्तादिति दिक्शब्देभ्यो अपरशब्दाद् अस्ताति चेति (पा०५।३।४०) अस्तातिः, पूर्वाधरा (पा०५।३।३९) इत्यधरादेशश्च । रुषेति पाऽन्तकर्मणि ॥१५६॥

यासि स्मरं जयन् कान्त्या योजनौघं महार्वता ।
स मूढस्त्वं वृतेऽन्यस्मिन् किल ह्रीस्तेऽत्र पामर ॥ १५७ ॥

यमः कलिमाह । यासीति । हे कले कायकान्त्या स्मरं जयन् विष्णुरूपतयाऽतिक्रम्य त्वं, महान्तोऽर्वन्तोऽश्वा यस्मिन् रथे, तेन रथेन योजनौघं चतुःक्रोशकयोजनसमूहमतिदूरमिदानीमपि यासि स च त्वं मूढो मूर्खः । यस्मात् हे पामर नीच भैम्यान्यस्मिन्नले वृते सति एतावन्मार्गं गतं गमनस्य ते तव ह्रीः किं न अपि तु भविष्यत्येव । पामिनी

ध्रुवं या नलः पीडनीय इति मत्वेऽनिष्टत्वापकारत्वाज्ञं मत्वा दिवि विप दधुः । युगद्वयमसङ्कुचन न शृणोति अतः परं यत्किञ्चिद्भवतु किम- स्माकमिति विचार्य्य स्वर्गे गन्तुमोपुरित्यर्थः । नार्तीयीकः पूर्ववत् । तोयादीकक् (पा०४।२।८। वा०३) तृतीय । चतुरश्चयता चाद्यक्षरलोप- श्चेति (पा०५।२।५१ वा०१) यत् ॥ १५७ ॥

द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः । नलनि
ग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५९ ॥

द्वापरेति । कामादिसैन्यं परावृत्य द्वापर एवैकमद्वितीयं यस्य तथा मात्सर्येण नलगुणद्वेषेण मूर्च्छितो विमूढ इत्यतिमात्सर्येण प्रवृद्धो वा । तथा ग्रहिला निवारणस्यानाकर्णनादाग्रहवत् कलिः अवश्य नल निग्राह्योऽयमित्येवंरूपा नलनिग्राहिणीं यात्रा जग्राह निषधान् प्रस्थ इत्यर्थः । किल यस्माद्ग्रहिलस्तस्मात् प्रतस्थे उपहासे वा । एकः परी- वारो यस्येति विगृह्य द्वापरैकपरीवार इति समासः । परीवार उपसर्गस्य घञीति (पा०६।३।१२२) दीर्घस्य । निग्राहिणीं आवश्यके णिनिः ॥ १५८ ॥

नलेष्टापूर्त्तसम्पूर्त्तैर्दुर्गानमुं प्रति । निषेधन्ति
पथान् गन्तु विघ्नः सञ्जघटे घनः ॥ १६० ॥

नलेति । नलस्य इष्टापूर्तानां यागतडागादिधर्म्माणां सम्पूर्तैः स- म्पूर्णत्वाद्धेतोः नितरां धर्म्मबाहुल्यात पापरूप प्रस्थितममुं प्रति अनु दूरं नितरां दुर्गान् दुर्गमत्वेन प्रवेष्टुमशक्यत्वात् निषधान् गन्तु गम- नाय निषेधन् वारयन् घनो महान् निरन्तरश्च विघ्नो वक्ष्यमाणप्रकारे- ण मञ्जघटे सञ्जातः । धर्म्मबाहुल्यं दृष्ट्वा सहसा तान् प्रवेष्टुं शङ्कित इत्यर्थः । अथ च घनो मेघो जलपूर्त्तैः दुर्गमदेशं गन्तुं विघ्नरूपो भव- न्निषेधति इष्टञ्च पूर्त्तञ्चेति द्वन्द्वे अन्येषामपि दृश्यत इति (पा०६।३। १३७) दीर्घः ॥ १६० ॥

मण्डलं निषधेन्द्रस्य चन्द्रस्येवामलं कलिः । प्राप
म्लापयितुं पापः स्वर्भानुरिव सग्रहः ॥ १६१ ॥

मण्डलमिति । पापः कलिः पापग्रहमध्ये गणितत्वात् पापः स्वर्भानु रिवामलं निष्पापं निषधेन्द्रस्य मण्डलं राष्ट्रं अमल परिपूर्णप्रकाशं च न्द्रस्य मण्डलं बिम्बमिव मग्रहः सम्यगाग्रहात् हठाद्ग्रहणयोगवशाच्च स्वापयितुं विनाशयितुं ग्रसितुञ्च प्राप ॥ १६१ ॥

कियताऽपि च कालेन कालः कलिरुपेयिवान् ।

भैमीभर्तुरहंमानी राजधानीं महीभुजः ॥१६२॥

कियतेति । कालो युगलक्षणः समयरूपोऽपि च पापरूपत्वात्कृष्णवर्णोऽपि च दारुणत्वात् कृतान्ततुल्यः तथाऽहंमानी नलपीडनेऽहङ्कारवान् कलिः कियताऽपि भूयसा कालेन भैमीभर्तुर्महीभुजो नलस्य राजधानीमुपेयिवान् प्राप्तवान् । पूर्वं देशं प्राविशदिदानीन्तु राजधानीमिति चार्थः । अत्र भैमीत्याख्याने कलेरभिनिवेशोऽतिशयो विशेषणद्वयेन सूच्यते । कियताऽल्पीयसेति वा । अहमिति मननमहंमानः सोऽस्यास्तीति सर्वं कार्यमहमेवेति मन्यते तच्छील इति वा ॥ १६२ ॥

वेदानुद्धरतां तत्र मुखादाकर्ण्य यत् पदम् । न प्र

सारयितुं कालः कलिः पदमपारयत् ॥ १६३ ॥

इदानीं पुरप्रवेशविधानमाह । वेदानिति । तत्र पुरे वेदान् ऋगादीनुद्धरतां गुणनिकां कुर्वतां श्रोत्रियाणां मुखात् पदं पदकारकल्पितविच्छित्तिविभागरूपं पदसञ्ज्ञं आकर्ण्य शृण्वन् कालः समयरूपोऽपि च पापरूपः कलिः पदमेकमपि चरणन्यासं प्रसारयितुं नापारयत् पापरूपत्वादित्यर्थः । एतेन नलपुरस्य धर्मपूर्णत्वमुक्तम् । वेदान् । षा-सूयोगे, नलोकेति (पा०२।३।६९) षष्ठीनिषेधः ॥ १६३ ॥

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् । क्रमः

सङ्कुचितस्तस्य पुरे दूरमवर्तत ॥ १६४ ॥

श्रुतीति । तत्र पुरे श्रुतिपाठका वेदाध्यापयितारस्तेषां वक्त्रेभ्यः सकाशात् क्रमं पूर्वपदपरित्यागेनोत्तरपदग्रहणादिकक्रमसंज्ञं ग्रन्थं आकर्णयतः शृण्वतोऽस्य कलेः क्रमश्चरणो गतिर्वा दूरं नितरां सङ्कुचितः क्रमाकर्णनाद्भयेन पापः पदमपि पुरश्चलितुमशक्तस्ततो देशाद् दूरं नि

पवित्रमङ्गलं प्रवेष्टुं नाशकदित्यर्थः। अन्योऽपि पिच्छिले देशे पतति ॥१६७॥

पुटपाकमिव प्राप क्रतुशुष्ममहोष्मभिः । तत्प्र
त्यङ्गमिवाकर्षि पूर्त्तामिव्यजनानिलैः ॥ १६८ ॥

पुटेति । असौ कलिः क्रतुशुष्मा यागसम्बन्धी वह्निस्तस्य महोष्म-
भिः प्रकृष्टतापैः कृत्वा पुटाभ्यां पुटयोर्वा पाकं उभयपार्श्वयोर्यात्राहे-
शान्तरमग्निसंयोगमिव प्राप प्रतिगृहं यागबाहुल्यात् वामदक्षिणपार्श्व
योर्वह्निसन्तापैर्नितरां पीडामन्वभूदित्यर्थः । तथा पूर्त्तानां धार्मिकनि-
र्मितवापीकूपतडागादीनां कर्म यस्तद्रूपाणि व्यजनानि तेषामनिलै
र्वायुभिः तस्य प्रत्यङ्गं सर्वाङ्गं अकर्तीव छिन्नमिवाभूत् इत्युत्प्रेक्षा । प्र
त्यवयवकर्तनेन च पीडातिशयाद् वाप्यादितडागादिसम्बन्धिवायुस्पर्शमात्रेण नि-
तरां व्यथितोऽभूदित्यर्थः । बर्हिः शुष्मा कृष्णवर्त्मेत्यमरः ॥ १६८ ॥

पितॄणां तर्पणे यस्मैः कौशाद्विश्मनि वेश्मनि ।
कालादिव तिलात् कालाद् दूरमत्रसदत्र सः॥१६९॥

पितृणामिति । अत्र पुरे वेश्मनि वेश्मनि प्रतिगृहं ब्राह्मणादिच-
तुर्वर्णैः पितॄणां तर्पणे जलसमर्पणे विषये कौशात् छिद्रात् पितृप्रिया
त् कालात् कृष्णवर्णात् तिलात् सकाशात् स कलिः कालादिव कृता-
न्तादिव दूरं नितरां अत्रसत् भयमाप । तर्पणैरिति पाठे तर्पयन्तीति
तर्पणैरिति वस्तु विशेषणं । तिलात् । इति जातावेकवचनम् ॥ १६९ ॥

स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः । कृ
पाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥ १७० ॥

स्नातॄणामिति । स कलिः स्नातॄणां स्नानं कुर्वतां वैदिकानां तै-
स्तादृशैर्गोपीचन्दनादिरचितैर्ललाटस्थानादिस्थैरूर्ध्वाकारैस्तिलकैः कृपा
णीभूय खड्गतामङ्गीकृत्य तस्य कलेः हृदयं विदार्य तैः प्रविष्टैरिव स्वं
स्वकीयं अन्तः शरीरमध्यं दीर्णमेव शकलीभूतमेव मेने । कृपाणैर्हि
विदारणं भवतीति युक्तम् । खड्गाकारांस्तिलकान् दृष्ट्वा विव्यथ इ-
त्यर्थः ॥ १७० ॥

पुमांसं मुमुदे तत्र विदन् मिथ्यावदावदं । स्त्रियं
प्रति तथा वीक्ष्य तमथ म्लानवानयं ॥ १३१ ॥

पुमांसमिति । तत्र पुरे अयं पुमांसं मिथ्यावदावदं मृषाभाषिण वि दन् जानन् स्वमित्रलाभान्मुमुदे । अथ पश्चात्तदनन्तरं स्वस्त्रियं प्रत्युद्दिश्य तं तथालोकजाधिण वीक्ष्य ज्ञात्वा मित्रनाशादिव दुःखवशात् म्लानवान् म्लानतां गतः । पत्नीं प्रति क्रीडायाममदिति दोषाज्ञाघ्रितोऽभूदित्यर्थः । न नर्मयुक्तं वचनं हिनस्ति स्त्रीपुंसयोरिति भारतादौ । विदन् । विदेः शतुर्वसुः (पा०७।१।३६) इत्यत्र विकल्पानुवृत्तेर्वसुनाय । एव चतुर्द्दशसयोविद्याविद्धिरित्यत्रापि ज्ञेयम् । वदावद । चरिचलीत्यादिना (पा०६।१।१२वा०८) द्वित्वमभ्यासस्यात्वञ्च । म्लानवान् क्तवतोस्तकारस्य संयोगादेरात इति (पा०८।२।४३) नः ॥ १३१ ॥

यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलां । जनै
र्धर्मधनैः कीर्णां व्यालक्रोडीकृताञ्च तां ॥१३२॥

यज्ञेति । स. यज्ञयूपैः खादिरोदुम्बरपशुबन्धस्तम्भैः घना नितरा व्याप्ता तां पुरं शङ्कुभिर्लोहनाराचकीलैः सङ्कुलां व्याप्तामिव जज्ञौ मेने । तथा धर्मधनैर्जनैः कीर्णां तां पुरं व्यालैः सर्पैः दुष्टश्वापदैर्वा दुष्टगजैर्वा क्रोडीकृता सर्वत्र पूर्णा व्यालाः क्रोडे मध्ये यस्यास्तामेतादृशीं कृतामिव मेने । कीलसर्पादिभिर्व्याप्तं स्थानं यथा प्रवेष्टुमशक्यं तथा सा पुरी तस्य प्रवेष्टुमशक्या जातेत्यर्थः । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः । रेफान्तो पूःशब्दस्त्रीलिङ्गः । चः समुच्चयार्थं इवार्थो वा ॥ १३२ ॥

स पार्श्वमत्राक्रन्तुं न वराकः पराकिणां । मा
सोपवासिनां छाया लङ्घने घनमस्खलत् ॥१३३॥

स इति । वराक क्वचिदपि स्थानालाभाद्दीनः स कलिः पराकिणां द्वादशरात्रोपवासकृत्पराकाख्यकृच्छ्रविशेषव्रतधारिणां पार्श्वं गन्तुं नाशकत् । तथा मासोपवासिनां कायप्रतिच्छायाया छवि लङ्घनेऽपि तस्मै ... पि तस्या अपि समीपे गन्तुं घनं निरन्तरं अस्खलत् त्रस्तपदोऽभूत् ।

तच्छायामपि द्रष्टुं नाशकदित्यर्थः । वराकः । जल्पभिक्षेति (पा०३।२।१५५) कन् ॥ १७३ ॥

आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् । स
सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥१७४॥

आवाहितामिति । तत्र पुरे स द्विजैर्वर्णिकैरागच्छ वरदेत्यादिमन्त्रैरावाहितामर्कमण्डलाद्भिया अतिशयसामर्थ्यात् सूर्यबिम्बान्निर्गत्य दिव्यरूपेण सन्निदधतीं तत्समीपमागच्छन्तीं प्रातःसन्ध्याधिदेवतां गायत्रीं पश्यन् गायत्र्याः सकाशाद्भयेन गायत्रीवादी दृष्टः पश्चात्तदानीमेव नष्टोऽदृश्योऽभवत् । सन्ध्यावन्दनं कुर्वतो द्विजान् दृष्ट्वा गायत्री मां विनाशयिष्यतीति तत्स्थानात् पलाय्य गत इत्यर्थः । गायत्री सूर्यं बिम्बस्था इति ध्यानम् । अर्कमण्डलादाहितामिति वा । दृष्टनष्ट । पूर्वकालैकेति (पा०२।१।४९) समासः ॥ १७४ ॥

स गृहे गृहिणां पूर्णे वने वैखानसैर्वृते । यत्या-
धारेऽमरागारे क्वापि न स्थानमानशे ॥ १७५ ॥

स इति । स कलिर्गृहिणां गृहस्थैः पूर्णे गृहे तथा वैखानसैर्वानप्रस्थैर्वृते व्याप्ते वने तथा यतीनां परमहंसानां सन्न्यासिनामाधारे आश्रमभूते तैर्व्याप्ते अमरागारे देवालये स्थानं नानश आश्रयं न प्राप । क्वापि कस्मिन्नपीति सर्वत्र योज्यम् । गृहिभिर्गृहे पूर्णे सतीति सप्तमी वा सर्वत्र ॥ १७५ ॥

क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिम् ॥१७६॥

क्वापीति । असौ कलिस्तत्र पुरे आत्मनः प्रियां इष्टां निषिद्धां हिंसां प्राणिवधं च अन्विष्यन् न क्वापि कस्मिन्नपि देशे नापश्यत्, तथा कलहप्रियस्य तस्य स्वस्य मित्रं कलिं कलहं मूर्खाणामपि मुखे सम्भावितस्थले न प्राप । मूर्खा अपि तत्र न कलहायन्ते । हिंसाकलहयोरभावात्तत्र स्थितिं न लेभ इत्यर्थः । अन्योऽपि यत्र मित्रस्य स्त्र्याद्यभावस्तत्र क्षणमपि न तिष्ठतीत्युक्तिः ॥ १७६ ॥

हिंसागर्वीं मखे वीक्ष्य रिरंसुर्धावति स्म सः । सा
तु सौम्यवृषासक्ता खरं दूरान्निरास तं ॥१७७॥

हिंसेति । मखे गोमेधाख्ये यज्ञे हिंसागर्वीं हिंसासम्बन्धिनीं गवीं वीक्ष्य रिरंसुर्हर्षितः स कलिः निषिद्धगोहिंसा मत्प्रियेति धावति स्म । सा तु हन्यमाना गौः पुनः सौम्ये सोमदेवताकद्रव्यसाध्ये वृषे धर्मे आसक्ता तत्सम्बन्धिनी तत्साधिका सती अभिचारादिदुष्टकर्मराहित्यात् सौम्यो रमणीयः पारलौकिको धर्मस्तत्साधिका सा खरं पापरूपत्वाद्दुष्टं सह रलयोरभेदात् खलं वा पापरूपं दूरादेव निरास निराचकार । अधर्मसाधनं गोहिंसादि दृष्ट्वा प्रवृत्तः पश्चाद्धर्मसाधनमग्नीषोमीयवैदिकपशुहिंसादि दृष्ट्वा मत्प्रिया हिंसा न भवतीति दूरात् परावृत्त इत्यन्वयः । मुखे इति पाठे हिंसाप्रतिपादिका गौः वाणीं यद्वा मुखे वीक्ष्य त्वमसि पायत्, रिरंसुरधावत् । सा तु वाणी सौम्यप्रतिपादिका सती तं खरम् अग्नीषोमीयं पशुमित्यादिवाक्यकथनमात्रेण दुःखप्राप्तिस्तेजस्कं दूरान्निरासेति वा । अथ च कामातुरः सुरतेच्छुः खरो गर्दभः गां वीक्ष्य यद्यपि धावति तथापि सा रमणीयवृषभानुरक्ता सती विजातीयत्वाद्रासभं दूरान्निराकरोति । मखे यज्ञप्रारम्भ इति वा । अथ च गौर्यथा सौम्यं वृषजमनुसरति क्रूरं वृषभं त्यजति । सुकृते वृषभ वृष इत्यमरः । हिंसागवीति गोरतद्धितेति (पा०५।४।९२) टच् ॥ १७७ ॥

मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः । व
न्द्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदाहतं ॥ १७८ ॥

मौनेनेति । स कलिः मौनव्रतनिष्ठानां वाग्यमव्रतिनां सन्ध्यादिजपशीलिनां वा मौनेन वाङ्नियमेन कृत्वा स्वस्यात्मन आक्रोशं गालीप्रदानमेव मन्यते स्म । तथा वन्द्येषु नमस्कारार्हेषु गुर्वादिषु वन्दारुभिः नमस्कुर्वद्भिर्नरैः स्वशिरश्च पदाहतं चरणताडितमिव जज्ञौ ज्ञातवानासीत् । च इवार्थो वा । वन्दारुभिः । शृवन्द्योरारुरित्यारुः (पा०३।२।१७३) । वन्द्यानिति पाठे, तद्योगे, न लोकेति (पा०२।३।६९) षष्ठीनि

येषाद्वितीया ॥ १७८ ॥

ऋषीणां स वृसीः पाणौ पश्यन्नाचामतामपः ।
मेने घनै रमी हन्तुं शप्तुं मामद्भिरुद्यताः ॥ १७९ ॥

ऋषीणामिति । स कलिः ऋषीणां पाणौ हस्ते वृसीः कुशासनानि पश्यन् अमी ऋषयः घनैर्लोहमुद्गरैर्मां हन्तुमुद्यता इति मेने । तथा आचामतां तेषामेव हस्ते आचमनार्थं गृहीता अपः पश्यन् अमी मामद्भिरेव भस्मसात्कुर्वेति शप्तुमिच्छन्तीति प्रमीयमाणोऽमंस्त । सकुशानिति पाठे कुशानपि पश्यन्नित्यर्थः । अत्र दैर्घ्यात् कुशा एव घनतुल्याः । आचामतां । ष्ठिवुक्लमुचमामिति (पा० ७।३।७५) दीर्घः ॥ १७९ ॥

मौञ्जीधृतो धृताषाढानाशङ्के स वर्णिनः । र
ज्ज्वामी बद्धमायान्ति हन्तुं दण्डेन मां ततः ॥१८०॥

मौञ्जीति । स कलिः मौञ्जीधृतो मुञ्जतृणमेखलाधारिणः तथा धृताषाढान् पालाशदण्डधारिणो वर्णिनो ब्रह्मचारिणः एवम्भूतानाशङ्के मेने, अमी मुञ्जरज्ज्वा मां बद्ध्वा ततो बन्धनानन्तरं दण्डेन मां हन्तुमायान्तीति । मौञ्जीधृतो धृताषाढा एते ब्रह्मचारिणो न भवन्ति किन्तु मां रज्ज्वा बद्ध्वा दण्डेन हन्तुमायान्तीत्याशशङ्के इति वा । धृताषाढानिति पाठे एवम्भूतान् ब्रह्मचारिण इति नाशशङ्के किन्त्वित्युत्तरार्द्धं । पालाशो दण्ड आषाढः । वर्णिनो ब्रह्मचारिणः इत्यमरः । मौञ्जी । विकारेऽण् । वर्णोऽस्त्येषां ब्रह्मचारिणामिति वर्णिनः ॥ १८० ॥

दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः । मन्वा
नः फणिनीस्तत्र स मुमोचाशु च स्रुचः ॥ १८१ ॥

दृष्ट्वेति । स तत्र पुरोऽग्रेऽश्वमखमात्र पुरोडाशं अष्टादशकपालादिसंस्कृतपशुशरीरावयवं दृष्ट्वा उत्त्रासेनातिभयेन दुर्मना दुःखित आसीत् । तथा स्रुचः सर्पफणाकारपुरोभागा वैकङ्कतादिजाः फणिनीः सर्पिणीर्मन्वानोऽमूः मुमोच दशनक्रियां करोदित्यर्थः । पुरोडाशोऽकारान्तः । पुरोडाशभुजामिष्टमिति माघः ॥ १८१ ॥

मुमुदे मदिरादानं विन्दन्नेप द्विजन्मनः । दृष्ट्वा
सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १८२ ॥

मुमुद इति । एष द्विजन्मनो ब्राह्मणस्य मदिरादानं मदिरास्वीकारं विन्दन् जानन् पश्यन् अयं महापातकीति बुद्ध्या मुमुदे । अनन्तरं च सौत्रामणीमिष्टिं इन्द्रदेवताकं यागं कुर्वन्तं द्विजं दृष्ट्वाऽदूयत । सौत्रामण्यां सोमग्रहान् सुराग्रहांश्च गृह्णातीति श्रुतेर्मदिरादानस्य वैधत्वाद्ब्रह्मण्यायपविनाशादिव खिन्नः इत्यर्थः । सौत्रामणीति देवतार्थे च स्वन्धनाम्ने चाऽपि उत्रिति (पा०६।४।१६७) प्रकृतिभाव० ॥ १८२ ॥

अपश्यद्यावतो वेदविदां ब्रह्म उज्जलीनता । उद
डीयन्त तावन्तस्तस्याञ्जाऽञ्जलयो हृदः ॥१८३॥

अपश्यदिति । असौ वेदविदां यावतो यावत्सङ्ख्याकान् बहून् ब्रह्माञ्जलीन् ब्रह्मपाठसमये क्रियमाणान् हस्तस्वरकल्पनार्थं संयोजितान् करपुटान् वा सूर्योपस्थायिनां गायत्रीमन्त्रजपाञ्जलीन्,

.. ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥

इति मनूक्तलक्षणान करसंपुटानपश्यत् तावन्तस्तस्य कले - हृद उक्तात् दुःखाञ्जलयोरक्तपूर्णा अञ्जलयः उदडीयन्त आपतिता निर्गताः । तद्दर्शनमात्रेण नितरां विदीर्णं हृदयोऽभूदित्यर्थः । तदस्तेति वा पाठ उत्प्रेक्ष्यः ॥ १८३ ॥

स्नातकं घातकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।
याचंयमस्य दृष्ट्यैव यमस्येव बिभाय सः ॥१८४॥

स्नातकमिति । स विद्याव्रतस्नातकं उभयस्नातकं वा स्वस्य घातकं विद्यानपायितं जज्ञे मन्ये । तथा दान्तं तपःक्लेशसहं जितेन्द्रियं नरं कृतान्तवत् यममिव भयहेतुं जज्ञौ ज्ञातवान् । तथा वाचंयमस्य मौनिनो दृष्ट्यैव दर्शनमात्रेण मौनिकर्तृकस्वकर्मकमौनिकर्मकदर्शनेनैव वा बिभाय । कर्मणः यमस्येव ः यमकर्तृकस्वकर्मकस्वकर्तृकयमकर्मकदर्शनेन वा । यमेन दृष्टेन यथा भयं तथा मौनिना इत्यर्थः । स्नातक-

म्भितजपमालिकासु वर्तमानानां पद्माक्षादिबीजानां जपगणनार्थमाकर्षणं तस्य दर्शनाद्धेतोर्जीवानां प्राणानामाकर्षिराकर्षणं तथा जातानि कष्टानि दुःखानि अन्वभूत् । यस्माद्विपरीतदृक् विरुद्धदर्शी । सर्वं हितधर्मसहितत्वेन जानानस्ताद्रूपधर्मं दर्शनमात्रेण महद्दुःखमन्वभूदित्यर्थः । अथ च विपरीतदर्शनशीलत्वाद्धोजेत्यत्र व्यञ्जनमात्रव्यत्ययेन जपयो. सायणार्थेन च जीवेति भवतीति जीवाकर्षिकष्टानुभवन युक्तं ॥१९०॥

त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणं । व रमैच्छद् दृशोरेव निजयोरपकर्षणं ॥ १९१ ॥

त्रिसन्ध्यमिति । स तत्र त्रिसन्ध्यं प्रातर्मध्याह्नसायाह्नरूप सन्ध्यात्रयमभिव्याप्य विप्राणां ऋतञ्चेत्यघमर्षणं ऋग्भिर्नासास्पर्शाभिमन्त्रितचुलुकोदकं तृणदीपशोदकं वा पश्यन् निजयोर्दृशोरपकर्षणं तन्मूलनमेव परं श्रेष्ठमिति ऐच्छत् । मदीयनेत्रे यदि कोऽप्युद्मूलयिष्यन् तर्ह्येतद्दुःखमूल नाद्रक्ष्यतां । तस्मान्नेत्रोन्मूलनमेव वरमिति मेन इत्यर्थः । तदपि दृष्ट्वा दुःखितोऽभूदिति भावः । अघमर्षणदर्शनव्यथा नेत्रापकर्षणव्यथातुल्या । त्रिसन्ध्यं । अत्यन्तसंयोगे द्वितीया ॥ १९१ ॥

अद्राक्षीत् तत्र कश्चिन्न कलिः परिचितं क्वचित् । भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन् ॥१९२॥

अद्राक्षीदिति । भैमीनलयोर्व्यलीकस्यानृतस्याणु दोषलेशमपि प्रष्टकामः प्रष्टुं वाञ्छन् अत एव तत्र पुरे कपकत्वनिश्चयवेषणार्थं परिभ्रमन् परितो विचरन् स कलिः क्वचिदपि स्थाने कञ्चिदपि स्वस्य परिचितं जितजपकादिमित्र नाद्राक्षीत् । नलेन भैम्या वा तत्त्वेन जनेन वा कृतेषु क्वचिदपि केषुचिदपि महापातकेषु मध्ये किञ्चिदपि परिचित पातकं नाद्राक्षीत् । त्वया जैमी नलोऽन्यत्र लोकैर्वा दृष्टः किमिति कलिः पृच्छति । तदेकमपि पापं नास्त्येवेति भाव इति वा ॥१९२॥

तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः । स्व विदुषां श्रियं तस्मिन् पश्यन्नुपततताप सः ॥१९३॥

तप इति । पञ्चाग्निसाधनादि तपः, वेदपाठरूपः स्वाध्यायः, देवतोद्देशेन द्रव्यत्यागो यागो यज्ञः, एषां स्वस्य पापरूपत्वाद् विद्विषां वैरिणां तस्मिन् पुरे श्रियं समृद्धिं बाहुल्यं पश्यन् अकाण्डं निष्कारणमेव द्विष्टस्तापसो येन स कलिः उपततापः अतिदाहमापातिदुःखितोऽभूदित्यर्थः । अन्योऽपि स्ववैरिलक्ष्मीं पश्यन् सन्तप्यते । यज्ञातपसा स्वाध्यायस्य अभ्यर्हितत्वात् पूर्वनिपातः ॥ १९३ ॥

कम्रं तत्रोपनम्राया विभ्रस्या वीक्ष्य तुष्टवान् ।
स मन्त्री तं विनाख्याय वामदेव्यास्युपासकं॥ १९४॥

कम्रमिति । स तत्र मुनेः उपनम्रायाः उपासकस्य समीपमागत्य स्थितायाः स्वजायाया विजातीयाया गम्याया अगम्याया वा विस्रसाः स्त्रियः कम्रं कामुकं संभुञ्जानं कञ्चन नरं वीक्ष्यायं महापातकी ममाश्रयो भविष्यतीति बुद्ध्या तुष्टवान् । अथ पश्चाद्विचारणीयां क्रियमाणायां तं कम्रं वामदेवेन मुनिना दृष्टं प्रस्तसाम कपानचित्रमित्यादि वामदेव्यं नाम साम तस्य ब्रह्मविद्याया अभ्युपासकं विभाव्य मत्वा स कली दुःखितोऽभूत् । वामदेव्योपासने सर्वाः स्त्रिय उपसीदन्तीति श्रुतिः दृष्टं सामेत्यर्थे, वामदेवाड्ड्यड्ड्याविति (पा०४।२।९) ड्यः ॥ १९४ ॥

वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि । न
वेदध्वनिरालम्बमम्बरे वितताय च ॥ १९५ ॥

वैरिणीति । शुचिता लोकानां बाह्याभ्यन्तरशुचिता मनः शुद्धिः गोमयगन्धानुलेपनजनिता च शुचिता भुवि प्रवेशं तस्मै न ददौ । यस्माद शुचेस्तस्य वैरिणी । नगरमध्ये सर्वेषां जनानां भूमेव शुचित्वात् स्थातुं नाशकदित्यर्थः । तथा वेदध्वनिरम्बरे शब्दाश्रये नगरसम्बन्धिपरितनाकाशदेशे आलम्बमाश्रयं न वितताय । अम्बरस्य वेदध्वन्याप्तत्वात् तत्रापि स्थातुं नाशकदित्यर्थः । चः समुच्चये । अन्योऽपि वैरिणे स्थानं न ददाति ॥ १९५ ॥

दर्शस्य दर्शनात् कष्टमग्निष्टोमस्य चानशे । जु
घूर्णं पौर्णमासेष्टी सोमं सोऽमन्यतान्तकं ॥ १९६॥

दर्शस्येति । दर्शस्यामावास्यायागस्य अग्निष्टोमयागस्य च दर्शनात् कष्टं महद्दुःखमानशे प्राप । तथा पौर्णमासं यागमीक्षते एवयोल्लसन् शुशूर्णे बभ्राम । तद्दर्शनेन मुमूर्च्छेत्यर्थः । सोमयागं तु अन्तकमेवामन्यत । तद्दर्शनान्मरणमेवाभ्यभूदित्यर्थः । अन्यस्यापि ज्वरादिपीडा पश्चान्मूर्च्छा अनन्तरं मरणं भवति ॥ १९६ ॥

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः । ना
पश्यत् सोऽग्निनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥१९७॥

तेनेति । तेन कलिना वीरान् शूरान् घ्नन्तीति यज्ञधर्मजीविना धार्मिका अदृश्यन्त । वीरान् अग्नीनाधानाभावेन घ्नन्तीति वीरहणो जिना न दृष्टाः । शूरा एव येऽहंन्यन्ते न तु सदाचारा तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः । यद्वा वीरयते शूरो भवति तेजस्वी वह्निस्तं प्रत्युपेक्षया नाशयन्तीति वीरहणो नष्टाग्नयस्ते पुनर्न दृष्टाः । सर्वोऽपि गृहस्थः साग्निक एव तत्रेत्यर्थः । तथा स अग्निनिर्मुक्तान् येषु सुप्तेषु सूर्योऽस्तमेति तादृशान् सूर्यास्तसमयसमये निद्रितान् अनाचारास्तत्र नापश्यत् । किन्तु जीवन्तश्च ते मुक्ताश्च तान् विषयपरित्यागिनो ब्रह्मज्ञानिनोऽवैक्षत । वीरघ्ना वीरहननयोग्या दृष्टा न तु ये वीरान् हतवन्तस्ते दृष्टाः । वीरमारणमपि तत्र राष्ट्रे न क्रियते इत्यर्थः इति वा ।

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथाक्रमम् ॥

इत्यमरः । वीरघ्नाः । मूलविभुजादित्वात् कः ॥ १९७ ॥

स तुतोषाग्निनो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
होमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान् ॥१९८॥

स इति । स विप्रान् स्पृष्टं परस्परं यैस्तानन्योन्यस्पर्शिनो ऽश्नतो भुञ्जानान् दृष्ट्वा तुतोष । उच्छिष्टानां मिथः स्पर्शनिषेधात्सदतिक्रमकारिणः स्वाभ्यर्थ्यवन समभाव्य हृष्ट इत्यर्थः । अनन्तरं होमशेषीभवत् सोमभुजः होमावशिष्टं सोमस्तं भुञ्जते सोममतान् ... वीक्ष्य विषाद्य दूनवान् व्यथितोऽभूत् । न सोमेनोच्छिष्टा भवतीति श्रुतेः ।

दर्शसेति । दर्शस्यामावास्यायागस्य अग्निष्टोमयागस्य च दर्शनात् कष्टं महद्दुःखमानशे प्राप । तथा पौर्णमासं यागमीक्षते एवंशील. सन् घुघूर्ण चचाम । तद्दर्शनेन मुमूर्छेत्यर्थः । सोमयागं तु अन्तकर्मे यामन्यत । तद्दर्शनान्मरणमेवाप्त्वभूदित्यर्थः । अन्यस्यापि ज्वरादिपीडा पश्चान्मूर्छा अनन्तरं मरणं भवति ॥ १९६ ॥

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः । ना
पश्यत् सोऽभिनिर्मुक्तान् जीवन्मुक्तानवेक्षत ॥१९७॥

तेनेति । तेन कलिना वीरान् शूरान् घ्नन्तीति क्षत्रधर्मजीविनो धार्मिका अदृश्यन्त । वीरान् श्रेष्ठानाचारवतो घ्नन्तीति वीरहणो जिना न दृष्टाः । शूरा एव वैर्हन्यन्ते न तु सदाचाराः तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः । यद्वा वीरयते शूरो भवति तेजस्वी वह्निस्तं प्रत्युपेक्षया नाशयन्तीति वीरहणो नष्टाग्नयस्ते पुनर्न दृष्टाः । सर्वोऽपि गृहस्थ आग्निक एव तत्रेत्यर्थः । तथा स अभिनिर्मुक्तान् येषु सुप्तेषु सूर्योऽस्तमेति तादृशान् सूर्यास्तमयसमये निद्रितान् अनाचारांस्तत्र नापश्यत् । किन्तु जीवन्तश्च ते मुक्ताश्च तान् विषयपरित्यागिनो ब्रह्मज्ञानिनोऽपश्यत । वीरघ्ना वीरहननयोग्या दृष्टा न तु ये वीरान् हतवन्तस्ते दृष्टाः । वीरमारणमपि तत्र राष्ट्रे न क्रियते इत्यर्थ इति वा

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथा क्रमम् ॥

इत्यमरः । वीरघ्ना । मूलविभुजादित्वात् कः ॥ १९७ ॥

स तुतोषाग्नो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
होमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान् ॥१९८॥

स इति । स विप्रान् स्पृष्टं परस्परं यैस्तानन्योन्यस्पर्शिनोऽश्नतो भुञ्जानान् दृष्ट्वा तुतोष । उच्छिष्टाना मिथः स्पर्शनिषेधात्तदतिक्रमकारित्वं स्वाश्रयत्वेन सम्भाव्य हृष्ट इत्यर्थः । अनन्तरं होमशेषीभवत् सोमभुजः होमावशिष्टः सोमस्तं भुञ्जते सोमलताचूर्णं भुञ्जानास्तान् वीक्ष्य विषाद्य दूनवान् व्यथितोऽभूत् । न सोमेनोच्छिष्टा भवन्तीति श्रुतेः ।

इत्युदयते तिले सोमे नोच्छिष्ट मनुरब्रवीत् इति स्मृतेश्च। सोमभक्षणेऽनुच्छिष्टत्वादन्योन्यस्पर्शेऽपि पापाभावाद् दु खिताऽभूदित्यर्थ ॥१९८॥

श्रुत्वा जन रजोदुष्ट तुष्टि प्राप्नोत् झटित्यसौ।
त पश्यन् पावनस्नानावस्थ दुस्थस्ततोऽभवत् ॥१९९॥

श्रुत्वेति। असौ कश्चन जन रजोदुष्ट धूलिन श्रुत्वा निषिद्धक्षीर स्पर्शबुद्ध्या खरादिनिषिद्धरज स्पर्शबुद्ध्या दृष्ट्वा वा स्वाश्रयाशया झटिति शीघ्र तुष्टि प्राप्नोत् प्राप्त। ततोऽनन्तर विचारावसरे पवनसम्बन्धि पवित्रश्च यद्धोरण स्नान तत्र तेन वा ऽवस्था स्थितिर्यस्य तत्र यावत्तिष्ठते त पश्यन् दुस्था दूनाऽभवत्।

वारुणन्तु जलस्नानमापोहिष्ठेति मन्त्रत।
वायव्य गोरजस्नानमाग्नेय भस्मनोदित॥
यत्तु सातपवर्षेण दिव्य तदिति पञ्चधा।

इति मनु॥ पावनस्नानस्य धर्मत्वात् दूनोऽभूदित्यर्थ। प्राप्नोत्। राहू। प्राप्त इति वा पाठ॥ १९९॥

अथावत् क्वापि गा वीक्ष्य हन्यमानामयं मुदा।
अतिथिभ्यस्तु ता बद्ध्वा मन्द मन्दो न्यवर्तत ॥२००॥

अथावदिति। अथ क्वापि यज्ञशालाया गृहे वा हन्यमाना गा वीक्ष्य स्वाश्रयाशया मुदा सन्तोषेणाधावत्। अनन्तर तु पुनस्ता गा अतिथिभ्योऽभ्यागमनार्थं हन्यमाना बुद्ध्वा मन्दो मूर्खोऽसौ दु खयाऽक्रन्द मन्दिर्यवर्तत परावृत्त। तथापि तत्रत्यानुगमाशक्त सन् मन्द शीघ्र परावृत्त इति वा। महोक्ष वा महाज वा श्रोत्रियायोपकल्पयदिति स्मृते॥ २००॥

दृष्टवान् स द्विज दृष्ट्वा नित्यनैमित्तिकत्यज। प
जमान निरूप्यैन दूर दीनमुखो ऽद्रवत् ॥२०१॥

दृष्टवानिति। स द्विज नित्यानि सन्ध्यास्नानादीनि, नैमित्तिकानि ग्रहणस्नानादीनि त्यजन्ति तथाभूतान् दृष्ट्वा दृष्टवान् स्वाश्रयाशया ह र्षं। अनन्तरमेव यजमान पापे रतदोष निरूप्य निश्चित्य निराशत्वा

हीनमुख सन् अद्रवत् तस्मात् प्रदेशाद्दूर पलायाञ्चक्रे । दीक्षितो न ददाति न जुहोतीत्यादिश्रुते । नित्यनैमित्तिककर्म्मत्यागस्य वैधत्या-द्दोषाभावात् ततोऽपि पलायित इत्यर्थः । नैमित्तिक । आगतार्थे भ-वार्थे वा ठक् ॥ २०१ ॥

आननन्द निरीक्ष्याथ पुरे तत्रात्मघातिनं । सर्वं
स्वारस्य यज्वानमेन दृष्ट्वाऽथ विव्यथे ॥२०२॥

आननन्देति । अथ तत्र पुरे आत्मघातिनं कञ्चन निरीक्ष्याननन्द । सर्वं त एवास्मान गोपायेदिति विप्रतिक्रमात् पापकार्य्यं समाश्रय स्यादिति बुद्ध्या जहर्षेत्यर्थः । अथ विचारणया सत्या एनमात्मघा तिनं नाम्ना सर्वंस्वारस्य यज्ञस्य यज्वानं यजमानं दृष्ट्वा ज्ञात्वा विव्य थे । आसन्नमरणो ह्यचिकित्स्यरोगार्त्तस्तत्राधिकारी । सोऽन्त्येष्टौ सर्वं-स्वाराख्ये यज्ञे आत्मानमेव पशुमन्त्रैः संस्कृत्य पातयित्वा यज्ञभागमर्प-यतीति श्रुतिः । वैधत्वादात्मघातदोषाभावात् व्यथित इत्यर्थः । आ-त्मघातिनं । ताच्छील्ये णिनि ॥ २०२ ॥

क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतं । जज्ञे
यज्ञक्रियामज्ञः भण्डाकायदतामिव ॥२०३॥

क्रताविति । स महाव्रताख्ये क्रतौ ब्रह्मचारी इत्वरी च तयोरत मैथुनं पश्यन् यज्ञक्रियां भण्डानामसभ्यभाषणादिव्यापारशीलानामका यहतायदयमसमयाहृतनृत्यमिव जज्ञे मेने । यतोऽसौ मूढः । भण्डा यथा बहुजनसमक्ष गुह्यादि प्रकाशयन्ति तथा द्विवेव बहुजनसमक्षम-श्लीलव्यापारकरणात् यागकर्म भण्डव्यापारतुल्यमिति । यज्वानं सर्वं-ऽप्यसभ्या इति मेने इत्यर्थः । महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवाद इ त्युपनिषत् । एति तच्छीलेत्वरी स्वैरिणी, इणनशेति (पा०३।२।१६३) क्वरपि तुकि च टिड्ढाणञिति (पा०४।१।१५) ङीप् ॥ २०३ ॥

यज्वभार्य्याश्वमेधाश्वलिङ्गालिङ्गवराहता । दृष्ट्वा
चष्ट स कश्मीर श्रुतेर्भयदमपाण्डितः ॥ २०४ ॥

यज्वेति । स यज्वना यजमानस्य भार्य्याया अश्वमेधाख्यस्य यज्ञस्य

श्चस्तस्य लिङ्गमालिङ्गन्त्येवंशीलं परां गुह्यं यस्यास्तस्या भावस्तत्ता तां दृष्ट्वा श्रुतेर्वेदस्य कर्तारं जगत्तमाचष्ट अकथयत् द्वापरस्याग्र इत्यर्थः । उन्मत्तत्वादात्मानं मत्येव वा । यतोऽपचित्त शास्त्रानुसारिपवित्रबुद्धिरहित ।

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभि ॥

इति राजाज्ञायमित्यंचार वेदार्थोऽनुष्ठेय । अश्वमेधप्रकरणेऽश्वस्य शिश्नं महिष्या उपस्थे निधत्ते इत्यादि श्रुते कर्ता जगत इति श्रुतिकर्तुर्भण्डत्वाभिधानान्मूर्ख ॥ २०४ ॥

अथ भीमजया जुष्टं व्यलोकत कलिर्नलं । दुष्ट
दृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभुं ॥ २०५ ॥

अथेति । अथैव पुरपरिभ्रमणादनन्तरं कलिर्भीमजया भैम्या जुष्टं प्रीत्या सेवितं नलं व्यलोकत । कमिव प्रभया सन्ध्यादेव्या ऽप्ययाधिष्ठितं जुष्टं प्रभाप्रभुं सूर्यमिव । किम्भूतमुभयं । दुष्टा मत्सरादिदोषापहता दृग्बुद्धिर्येषां तैः पापलोकैर्दुरालोकं । पुण्यश्लोकत्वात् पतिव्रतया तया च युक्तत्वात् कलिप्रभृतिभिः सुखेन द्रष्टुमशक्यं, काचकामलादिदोषदुष्टदृग्भिर्दुर्दर्शञ्च । प्रकृष्टा भा कायकान्तिर्यस्या इति भैमीविशेषणञ्च प्रकृष्टया कायकान्त्या चाक्षिभिर्दुरालोकं खलु, तद्योगे च न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद् दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे । स
मंच्छेदमिवानर्च्छं स तन्नर्मोक्तिभिर्मिथः ॥२०६॥

तयोरिति । स तयोर्भैमीनलयोः सौहार्दसान्द्रत्वमन्योन्यानुरागोत्कर्षं पश्यन् शल्यमिव हृदि नाराचव्यथामिवानशे प्राप । तत्तुल्यदुःखोऽभूदित्यर्थः । तथा मिथोऽन्योन्यं तयोः नर्मोक्तिभिः क्रीडाकल्लोलैः मोत्पादितालिङ्गनचुम्बनादिभिरनुभावैः कृत्वा मर्मच्छेदमिव प्राणहरणशरीरावयवकर्तनमिव आनर्च्छ प्राप । सौहार्दसान्द्रत्वस्य कारणत्वादालिङ्गनादिमर्मच्छेदकार्यत्वाच्च पौनरुक्त्याभावः । सौहार्दं । युवादित्वादणि च

णि. सूत्रम (पा०७।३।१९) इत्युत्तरपदवृद्धिः ॥ २०६ ॥

अमर्षादात्मनो दोषात्तयोस्तेजस्वितागुणात् ।
स्प्रष्टुं दृष्ट्वाप्यनीशस्तौ तस्मादप्यचलत् कलिः
॥ २०७ ॥

अमर्षादिति । कलिः अमर्षात् भैमीनलप्रीतिमर्षासहनशीलत्वरूपाद्दोषात्, तथा आत्मनो महापातकादिरूपाद्दोषाद्धार्मिकाश्रयणाशक्तेः, । तथा तयोर्भैमीनलयोस्तेजस्वितागुणात् सौन्दर्य्यातिशयात् वा प्रतेजस-साधर्म्यायीत्वरूपाद्गुणादित्येवं हेतुत्रयात् तौ भैमीनलौ न परं मनसा किं दृष्ट्वापि न पुनरङ्गेनापि स्प्रष्टुमनीशोऽसमर्थः किं पुनर्हस्तादिना । एवम्भूतौ यतोऽतस्तस्माज्जलावासात् प्रासादादपि सकाशात् कलिर्निर्गतः । एवंविधौ तौ दृष्ट्वा तत्रापि प्रवेष्टुमशक्तस्ततोऽपि प्रस्थित इत्यर्थः । अन्योऽपि मलिनस्तेजस्विनं दृष्ट्वा वीक्षितुमशक्तस्ततः पलायते ॥२०७॥

अगच्छदाश्रयान्वेषी नलद्वेषी स निश्वसन् । अ
भिरामं गृहारामं तस्य रामसमश्रियः ॥ २०८ ॥

अगच्छदिति । नलद्वेषी नलद्वेषपरः अत एव तत्पराभवार्थं आश्रयान्वेषी निवासं मृगयमाणः कुत्रचिदपि तदलाभाद्दुःखाद्भयेन च निश्वसन् स कलिः रामेण श्रीरामेण समा तुल्या श्रीः शोभा सम्पद् यस्य तस्य नलस्याभिरामं वृक्षादिसमृद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्त्तिक्रीडावनम् अगच्छत् गतवान् । समीपे स्थितौ क्रियमाणायां नलदोषविचारः सुकर इति गृहाराम प्राप्तवानित्यर्थः । श्रीरामसाम्ये नलस्य पावित्र्यं सौन्दर्य्यं सम्पदाधिक्य ज्ञाविराज्यपरित्यागश्चेति सूचितं । तदानीं रामस्य भावित्वे कल्पभेदपा भूतत्वात् प्रवाहस्यानादित्वपा वा भूतत्वादुपमा युक्तैवेति ज्ञेयं ॥ २०८ ॥

रक्षिलक्षावृतत्वेन बाधनं न तपोधनैः । मेने मा
नी मनाक् तत्र स्वानुकूलं कलिः किल ॥२०९॥

रक्षीति । कलिः तत्र पुरे रक्षिणां लक्षं बहुस्तेन यद्वृतत्वं परिवेष्टि-

घ्नस्तस्य लिङ्गमालिङ्गत्येवंशीलं वराङ्गं गुह्यं यस्यास्तस्या भावस्तत्ता ता दृष्ट्वा श्रुतेर्वेदस्य कर्तारं जगद्धमाचष्ट अकथयत् द्वापरस्याग्र इत्यर्थः । तन्मतत्वादात्मानं प्रत्येव वा । यतोऽपविद्धः शास्त्रानुसारिपण्डितबुद्धिरहितः ।

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

इति राजाज्ञावदविचारं वेदार्थोऽनुष्ठेयः । अश्वमेधप्रकरणेऽश्वस्य शिश्नं महिष्या उपस्थे निधत्ते इत्यादि श्रुतेः कर्ता जगद्ध इति श्रुतिकर्तुर्भण्डत्वाभिधानान्मूर्खः ॥ २०४ ॥

**अथ भीमजया जुष्टं व्यलोकत कलिर्नलं । दुष्ट**
**दृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभुं ॥ २०५ ॥**

अथेति । अथैवं पुरवर्णनवशादनन्तरं कलिर्भीमजया भैम्या जुष्टं प्रीत्या सेवितं नलं व्यलोकत । कमिव प्रभया सवित्र्या ऽपयासहितं कोऽजुष्टं प्रभाप्रभुं सूर्यमिव । किम्भूतमुभयं । दुष्टा मत्सरादिदोषोपहता दृग्बुद्धिर्येषां तैः पापलोकैर्दुरालोकं । पुण्यश्लोकत्वात् पतिव्रतया तया च युक्तत्वात् कलिप्रभृतिभिः सुखेन द्रष्टुमशक्यं, काचकामलादिदोषदुष्टदृग्भिर्दुर्दर्शं च । प्रकृष्टा भा कान्तिर्यस्या इति भैमीविशेषणञ्च प्रकृष्टया कान्त्या पापिभिर्दुरालोकं खलु, तद्योगे च न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद् दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

**तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे । स म**
**र्मच्छेदमिवानर्च्छ स तन्नर्मोक्तिभिर्मिथः ॥२०६॥**

तयोरिति । स तयोर्भैमीनलयोः सौहार्दसान्द्रत्वं अन्योन्यानुरागोत्कर्षं पश्यन् शल्यमिव हृदि नाराचप्रायमिवानशे प्राप । तत्तुल्यदुःखोऽभूदित्यर्थः । तथा मिथोऽन्योन्यं तयोः नर्मोक्तिभिः क्रीडाकल्लोलैः प्रीत्यालिङ्गनचुम्बनादिभिरनुभावैः कृत्वा मर्मच्छेदमिव प्राणहरणशरीरावयवकर्तनमिव आनर्च्छ प्राप । सौहार्दसान्द्रत्वस्य कारणत्वादालिङ्गनादिनर्मसचिवकार्यत्वाच्च पौनरुक्त्याभावः । सौहार्दं । सुखादित्वाद्भावे ष

णि, ह्रस्व (पा०७।३।९८) इत्युत्तरपदवृद्धिः ॥ २०६ ॥

अमर्यादात्मनो दोषाद्द्वयोस्तेजस्विताग़ुणात् ।
स्प्रष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत् कलिः
॥ २०७ ॥

अमर्यादिति । कलिः अमर्यात् भैमीनलयोरतिमर्यादोल्लङ्घनशीलस्वरूपा द्दोषात्, तथा आत्मनो महापातकादिरूपाद्दोषाद्वाऽनेकाश्रयणासक्तेः, । तथा तयोर्भैमीनलयोस्तेजस्विताग़ुणात् सौन्दर्यातिशयात् क्षात्रतेजस्त्वाधर्षणीयस्वरूपाद्गुणादित्येवं हेतुत्रयात् तौ भैमीनलौ न परं मनसा किं दृशापि न पुनरङ्गेनापि स्प्रष्टुमनीशोऽसमर्थः किं पुनर्हन्तुमित्यादिना । एवम्भूतौ यतोऽतस्तस्मान्नलावासात् प्रासादादपि सकाशात् कलिर्निर्गतः । एवंविधौ तौ दृष्ट्वा तत्रापि स्थातुमशक्तस्ततोऽपि प्रस्थित इत्यर्थः । अन्योऽपि मलिनस्तेजस्विनं दृष्ट्वा स्थातुमशक्तस्ततः पलायते ॥२०७॥

अगच्छदाश्रयान्वेषी नलद्वेषी स निश्वसन् । अभिरामं गृहारामं तस्य रामसमश्रियः ॥ २०८ ॥

अगच्छदिति । नलद्वेषी नलद्वेषपरः अत एव तत्पराभवार्थं आश्रयान्वेषी निवासं मृगयमाणः कुत्रचिदपि तदलाभाद्दुःखादनर्थेन च निश्वसन् स कलिः रामेण श्रीरामेण समा तुल्या श्रीः शोभा सम्पद् यस्य तस्य नलस्याभिरामं वृक्षादिसमृद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्तिक्रीडावनं अगच्छत् गतवान् । समीपे स्थितौ क्रियमाणायां नलदोषविचारः सुकर इति गृहारामं प्राप्तवानित्यर्थः । श्रीरामसाम्ये नलस्य पावित्र्यं सौन्दर्यं सम्पदाधिक्यं भ्रातृविरोधराज्यपरित्यागश्चेति सूचितं । तदानीं रामस्य भाविजन्मापेक्षया भूतत्वात् प्रवाहस्यानादितया वा भूतत्वादुपमा युक्तैवेति ज्ञेयं ॥ २०८ ॥

रक्षिलक्षतत्त्वेन बाधनं न तपोधनैः । मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥२०९॥

रक्षीति । कलिः तत्र पुरे रक्षिणां लक्षं तद्युक्तेन यद्भूतत्वं परिवेष्टि-

तत्वं तेन हेतुना प्रवेष्टुमशक्यत्वात्तपोधनैः कृत्वा न बाधयतीति न बाधनमेवमुक्तं मेने विशेषणबलाद्विशेष्याक्षेपात् तमारामं स्वहितं मेन इत्यर्थः । यतो मानी अभिमानवान् । नम्रपराभवार्थं तत्रैव निवास याञ्चामद्द्यदित्यर्थः । किल प्रसिद्धौ । रक्षितत्वकृतत्वेनैव बाधकं न पु नस्तपोधनैर्बाधकमतस्तत्र पुरे तमाराममेव मनाक् स्वहितं मेने इत्यर्थः । रक्षकबाधे सत्यपि अदृश्यतयापि स्वस्य प्रवेष्टुं शक्यत्वान्न तु तपोधन इति मनागित्युक्तं । एव मद्दुष्टं किमिति न्यवात्सीदित्यत आह । यतो मानी । अभिमानवान् साधनोपेऽर्थे सङ्कटमपि मानिनः सहन्त इत्यर्थं इति वा । रक्षकत्वेन मुनिकर्तृकं बाधनं मनागपि तत्रारामे नास्तीति तं स्वानुकूलं तामसानां तत्र प्रवेशाभावात् तापसमिषितस्वबाधारहितं प्र त एव मनागीषत् स्वानुकूलं स्वस्मै हितमेवंविध मेने इति वा ॥ २०९ ॥

दलपुष्पफलैर्देवद्विजपूजाभिसन्धिना । स नले
नार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥२१०॥

दलेति । स कलिः तत्रोद्याने वनें दलैः पत्रैः पुष्पैः फलैश्च कृत्वा देवानां अतिथीनाञ्च पूजा तद्विषयेणाभिसन्धिनाऽऽशयेन कृत्वा देव-द्विजपूजैवाभिसन्धिराशयो यस्यैवंविधेन वा, दलादिभिर्देवपूजां कर्तुकामेन नलेनार्जितानारोपितानाम्रादिद्रुमान् आक्रमितुं आरोढुमाश्रयितु ञ्च न प्राप । तेषां धर्मोपयोगित्वात् स्वस्य च पापरूपत्वात् तानाश्रयि तुं नाशकदित्यर्थः ॥ २१० ॥

अथ सप्तर्षीद्विरासप्तिपूरणाय स रोपितं । वि
भीतकं ददर्शैकं कुटं धर्मेऽप्यकर्मठं ॥ २११ ॥

अथेति । अथ स कलिः धर्मे धर्मकार्ये विषयेऽकर्मठमकार्मण्य मपि विप्रादीनां देवाद्यनुपयोगाद्धर्मकार्यानर्हमपि सर्वपादपुद्भिदां वृ-क्षाणां गणानां सप्तिपूरणाय वृक्षलतागुल्मादिजातिगणत्रास्तीति कोऽपि पूर्णेनास्त्यत्र तथोद्याने नलेन आरोपितमेकं सद्यं वृक्षागतिपूरण-योग्यमेव एतत्स्वादेकमेवं विभीतकं कुटं वृक्षं ददर्श । अनोकहः कुटः शाल इत्यमरः । कर्मठः । कर्मणि घटत इति कर्मणि घटोऽठच्

(पा०५।२।३५) कर्म्मशूरस्तु कर्म्मठ । उद्भिदस्तरुगुल्माद्या इत्यमरः ॥२११॥

स तं नैषधनौधस्य निष्कुटं निष्कुटध्वजं । बहु मेने निजं तस्मिन् कलिरालम्बनं वने ॥२१२॥

स इति ॥ तस्मिन् वने नैषधसौधस्य निकटं समीपवर्त्तिनं निष्कुटस्य गृहारामस्य ध्वजं लाञ्छनभूतं ग्रथ चातिस्थूलत्वात् ध्वजमिव तद् घस्थित्वा नलदर्शनवशात्तदीयदोषविचारोपायभूतं विभीतकं निजं स्वीयमालम्बनमाधारं बहु मेने । गृहारामास्तु निष्कुटा इत्यमरः ॥ २१२॥

निष्पदस्य कलेस्तत्र स्थानदानाद्विभीतकः । कलिद्रुमः परं नासीदासीत् कल्पद्रुमोऽपि सः॥२१३॥

निष्पदस्येति । तत्र पुरे वने च निष्पदस्याश्रयरहितस्य कलेः स्थानदानात् स्वेनैव तदाधारभूतत्वात् स विभीतकः केवलं निवासभूतत्वात् कलिद्रुमः कलिसम्बन्धी द्रुमः परं केवलमासीदिति न किन्तु कलिमत्यभिलाषपूरणात् कल्पद्रुमोऽप्यासीत् । अन्योऽपि निराश्रयस्याश्रयदानात् कल्पद्रुमत्वेन व्यपदिश्यते । भूतावासः कलिद्रुम इत्यमरः ॥२१३॥

ददौ पदेन धर्म्मस्य स्थानमेकेन यत् कलिः । एकः सोऽपि तदा तस्य पदं मन्येऽमिलन्नतः ॥ २१४॥

पापिना कलिना विभीतकं स्थानं प्राप्तमित्यत्र हेतुमुत्प्रेक्षते । ददाविति । यद् यस्माद्धेतोः कलिः प्रवाहानादितयाऽतीते कलियुगसमये धर्म्मस्यैकेन पदेन चतुर्थांशेन पदं स्थानं ददौ तस्मात् तदा नलराज्यसमये कृतयुगे स विभीतकोऽपि एक एव तस्य कलेः पदं चरणोऽथ च स्थानममिलत् सञ्जात इत्यहं मन्ये । कृतं कर्म्म युज्यते इति न्यायेन कालान्तरे यावत् दत्तं तावदेव तदानीं तेन लब्धमित्यहं मन्य इत्युत्प्रेक्षा । धर्म्मस्य सम्बन्धमात्रविवक्षया षष्ठी ॥ २१४ ॥

उद्भिद्भिरचितावासः कपोतादिव तत्र सः । राज्ञसाग्रे द्विजात्तस्मात् सन्तापमाप दीक्षितात् ॥२१५॥

उद्भिदिति । तत्रोद्याने उद्भिदि वृक्षे विभीतके विरचितः आवास

स्थितिर्येन स कलिः साग्नेरग्निहोत्रवतो द्विजात् क्षत्रियात् तथा दी- क्षितात् स्वीकृताग्निहोत्रादियागदीक्षादस्माद्राज्ञ अभिषेकादिगुणयु- क्तात् नलात् सकाशात् मन्यक्त्रासं महाशापनिग्रहं प्राप । राज्ञो द्विजा दित्येताभ्यां स्वाभाविकं निग्रहे सामर्थ्यं सूचितं । साग्नेर्दीक्षितादित्ये ताभ्यां तु तपोजनित शापे सामर्थ्यं सूचितं । एवंविधोऽयं समीपस्थि तं मां निश्चयेन ज्ञास्यति शापं दास्यतीत्यन्तमंहद्रूपं प्रापेत्यर्थः । अग्नि होत्रिणो नलस्य सम्बन्धिनः कृतयज्ञदीक्षात् तस्मादतिप्रसिद्धाद् द्वि- जात् ब्राह्मणाद् गौतमाख्यात् पुरोधसः सकाशाद् भयं प्राप । नलाग्नि होत्रादिपरिचर्यार्थं तत्र सन्निधानात् स्वयमग्निहोत्रादिदीक्षायुक्ताच्च गौतमात् पुरोधसः सकाशाद्भीत इत्यर्थं इति वा । कस्मादिव कपोता दिव । यथाऽग्निसहितादङ्गारभक्षिणः तथा दीक्षितात् कपोतनाम्नो द्वि- जात् पक्षिणः सकाशात् वृक्षे विरचितावासः काकादिः पक्षी पुरुषो वा वृक्षाकृदो वृक्षाधःस्थायी वा भयं प्राप्नोत् पूर्वं कदाचित्तर्पत्युपमा । स यथा प्राप्नोति तथेत्यर्थः । अग्निः कपोतजठरमन्तःप्रविष्टोऽतएव तद्र क्षिता पापाणकणिकापि जीर्यते इत्यैतिह्यं । साग्नेरङ्गारभक्षिणः । कपो तविशेषो ह्यङ्गारान् भक्षयति । वह्निदा तृणकाष्ठादिना निर्मितगृहः पुनर्वाऽभ्युद्गारिनेत्रात् स्वोपवेशनमात्रेण गृहदाहाद्यनिष्टसूचकात् गृहो परि विलोकनात् कपोतो ह्यनुकपक्षिणः सकाशाद्यथा भयं प्राप्नोति त थाऽस्मादपि प्राप्तकपोतो हि गृहं प्रविष्टोऽनिष्टसूचकः । एवमद्भुतक- र्मणोऽपि स्वर्गोपयुक्तादिरोहिणो दूरात् कपोतात्तद्वृक्षवासी पक्षी न रो वा स्वस्यापि भक्षणशङ्कया गृहोपहतशङ्कया वा यथा बिभेति तथे त्यर्थः । एवं यथागति व्याख्यातव्यं ॥ २१५ ॥

विभीतकमधिष्ठाय तथाभूतेन तिष्ठता । तेन भी

मभुवोऽप्यभीकः स राजर्षिरधर्षि न ॥ २१६ ॥

विभीतकमिति । विभीतकमधिष्ठायाश्रित्य तथाभूतेन तिष्ठता तस्य धर्मोपयोगात्त्रासाभयादित्येव स्थितवता अथ च तादृशतद्दर्शनात् पूर्वोक्तप्रकारेण बिभ्यता अत्यन्तास्थिरेण कलिना भीमभुवोऽभीकः भै- म्याः कामुकः स राजा नानाविध राजत्वेऽपि धर्मप्रधानत्वाद्गुणित्

त्यो नलो माधर्षि न पराभूत । अपराभवे राजर्षित्वमेव हेतुः । अथ च विभीतकतुल्यं तरुमाश्रित्य तिष्ठता तथाऽतिमहता भूतेन भूतत्व प्राप्तेन केनचित् प्रेतेन पिशाचेन भीमाया भयानकाया भूमे रणभूमेर्दु द्रभूमेर्वा हेतोरभीको भयरहितो राजर्षिर्धार्मिको न पराभूयत इत्युचितं । भीमा भूमिमनादृत्य निर्भय इत्यर्थं । अनादरे षष्ठी ॥ २१६ ॥

तमालम्बनमासाद्य वैदर्भीनिषधेन्द्रयोः । कलुष कलिरन्विष्यन्तत्रास्मीद्धत्सरान् बहून् ॥ २१७ ॥

तमिति । कलि स विभीतक आलम्बनमाश्रयमासाद्य प्राप्य वैदर्भीनिषधेन्द्रयोः कलुषं पापाचरणमन्विष्यन् गवेषयितुमित्यर्थः, बहून् वत्सरानवासीत् दोषसम्पर्कमन्तरेण विना तयो पराभवे ऽशक्तत्वाद्दोषपरीक्षार्थं बहुकालं तत्रैव स्थितवानित्यर्थं । अन्विष्यन् । हेतौ शता । अवात्सीत् । वसेर्लुङि सिचि, सदप्रजेति (पा०७।२।३) वृद्धौ, सस्यार्द्धधातुक इति (कौ० । अ०। पत्र १३० पङ्क्ति ८ । बा०) तत्वम् । वत्सरान् । अत्यन्तसंयोगे द्वितीया ॥ २१७ ॥

यथासीन् कानने तत्र विनिद्रकलिका लता । स था नलस्य जागर्त्तिविनिद्रकलिकालता ॥ २१८ ॥

यथेति । तत्र कानने तस्मिन्नुद्याने यथा येन प्रकारेण विनिद्रकलिका विकसितकोरका लता वल्ली आसीत् तथा तेन प्रकारेण नलस्य छले आसक्तिरभिनिवेशस्तद्वशाद्विगतनिद्रो जागरूक सावधान कलिलक्षण काल समयो यत्र तद्भावस्तता सापि तत्र वने आसीत् । यदा विकसितकोरकवल्लीमन्वभवत्स्योद्यानस्य यथाभूत् तथा यदा कलिसम्बन्धोऽप्यभूदित्यर्थं तावन्मात्रेण श्लेषमात्रेण चौपम्य । नलछलनार्थं नलदोषान्वेषणाय जागरूक स कलिस्तत्राव स्थोदित्यर्थं ॥ २१८ ॥

दोष नलस्य जिज्ञासुर्बभ्राम द्वापरः क्षितौ । न दोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥ २१९ ॥

अथ कलेरवस्थान निरूप्य द्वापरस्यावस्थानमाह । दोषमिति । लो कापवादरूप अभिशस्तिरूपं वा नलस्य दोष जिज्ञासुर्द्वापर इत्यघटना

नया दुराशया क्षिती बभ्राम । इति किं । लोकस्य मुखे अनया सोपा-
सदोषो दोषरहितः कोऽपि नरो नास्ति सर्वो जनो च निर्दोषमाह ता
दृश पुरुष एव नास्तीति नलस्यापि किञ्चिद्दोषं कोऽपि वदिष्यतीति ।
न दोष इति पाठे लोकोक्तावल्पोऽपि दोषो नास्ति अपि तु मायैव भ
विष्यतीति दुराशयेति काक्वा सम्भावनापरत्वेन व्याख्येयम् । दोष । न
लोकेति (पा०२।३।६९) षष्ठीनिषेधः ॥ २१९ ॥

अमुष्मिन्नारामे सततनिपतद्दोहदतया प्रसूनै-
रुन्निद्रैरनिशममृतांशुप्रतिभटे । असौ बद्धालम्बः
कलिरजनि कादम्बविहगच्छदच्छायाभ्यङ्गोचित
रुचितया लाञ्छनमृगः ॥ २२० ॥

अमुष्मिन्निति । असौ कलिः श्यामपक्षसजातीयाः कादम्बविहङ्-
गाः कलहंसाख्यपक्षिविशेषाः तेषां छदाः पक्षाः तेषां छायायाः कान्ते
रभ्यङ्गे रुचितो योग्यो तेनाभ्यङ्गेनेव स्वसंस्पर्शमात्रेण स्वैश्यामतिशयका
रिणी श्यामतरा रुचिः कान्तिर्यस्य तस्य भावस्तत्ता तया करणभूतया अंस
या वनचन्द्रे लाञ्छनमृगोऽजनि कलङ्कमृगोऽभूत् । किम्भूतः । सतत स
दा निपतन् निक्षिप्यमाणो धूमादिर्दोहदो यत्र तस्य भावस्तत्ता तया
अनिशं सदा उन्निद्रैर्विकसितैः प्रसूनमालत्यादिसितपुष्पैः कृत्वा च
न्द्रवदानन्ददायित्वाद्धामृतांशोश्चन्द्रस्य प्रतिभटे प्रतिस्पर्धिनि चन्द्रतुल्ये
ऽमुष्मिन् पूर्वोक्ते आरामे नलोद्याने बद्धः कृत आलम्बो धामो येन
सः । चन्द्रे हि कलङ्केन भवितव्यं तस्थाने कलिरेवाभूदिति । एतेन
निर्दोषे नलोद्याने कलिरेव दूषकोऽभूदित्युक्तम् । तत्र न्यवात्सीदित्य-
र्थः । पुष्पफलानामाकालिकसमुद्भवे वृक्षेषु वृक्षायुर्वेदोक्तो धूपादिदोह
द क्रियते, तथा चम्पके पिष्याकादिजलक्षेपः, बकुले सुन्दरीगण्डूषजल
मदिरासेकः, रक्ताशोके च तरुणीचरणप्रहणनमित्यादि ॥ २२० ॥

स्फारं तादृशि वीरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन् किलासीत्
कलेः । एतस्मिन् पुनरन्तरान्तरमिलानन्दः सभे

मीनलाशाराद्धु व्यधित स्मरः श्रुतिशिरावन्दा रुचूढं धनुः ॥ २२१ ॥

स्मार इति । स्मारे विशालनगरे तादृशि उक्तप्रकारेण धर्मबहुले स्मारत्वेऽपि सत्र धर्मपूर्णे वैरसेनिर्नलस्तस्य नगरे प्रजाना पुण्यैर्हेतुभिर्घन भूयास चिरं लब्धवतः प्राप्तवतः चिराश्रयस्य कलेस्तस्मिन् न लाद्याने चिराद् बहुकाल नलद्रोहगवेषणार्थं उपनतिरवस्थितिः किलाभूत् । किलेति पुराणादौ श्रूयत इत्यर्थः । प्रजाना पुण्यैः स्मारे व्याप्त इत्यर्थे हति वा हेतुगर्भविशेषणम् । एतस्मिन्नन्तरेऽवसरे पुनरन्योन्यवीग्यमेलनादन्तर्मनसि अमितानन्दं प्राप्तनि मीनद्वयं. स प्रसिद्धप्रभावः स्मरो भैमीनलौ आराद्धुं सेवितुं सुतरां पीडयितुं वा धनुः श्रुतिशिराकर्णोर्द्धदेशस्तं वन्दारु स्पर्शिना चूडा अग्रभागो यस्य एवंविधमाकर्णपूर्णं व्यधित चकार । भैमीनलौ नगरं प्राप्तौ सुरेषु स्वर्गतेषु कलौ च नगरमाश्रिते सति इतरेतरानुरागातिशयेन चिरविरहातिस्पृष्टौ स्मराराधनं चक्रतुरिति भावः । अनेनोत्तरसर्गे सम्भोगारम्भवर्णनात् सङ्गतिः सूचिता । कलिकर्तृकपराभवस्य भविष्यत्वात्तद्वर्णनीयत्वाच्च सनोक्त ॥ २२१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातः सप्तदश स्वसुः सुसदृशि छन्दःप्रशस्तेर्महाकाव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ २२२ ॥

श्रीहर्षमिति । पूर्वार्द्ध पूर्ववत् । एककर्तृकत्वात् स्वसुर्भगिन्याः छन्दस्य राजविशेषस्य प्रशस्तेर्वर्णनात् ग्रन्थस्य सुसदृशि तुल्ये तद्भुवि श्रीहर्षरचिते सप्तदशसंख्या पूरणो निसर्गोज्ज्वलः स्वभावसुन्दरः सर्गः समाप्तः । छन्दप्रशस्तिरपि ग्रन्थो मया कृत इति सूचितम् । सोदर्योश्च तुल्या भवन्ति । छन्दःप्रशस्तेरिति पाठे छन्दो बन्धकमस्वरूपनिरूपणापरस्य ग्रन्थस्येत्यर्थः । सप्तदश इति तस्य पूरण इति (पा०५।२।४८) डट् ।

तद्भुवि । भाविनपुस्कम् ॥ २२२ ॥

इति वेदरकरोपनामकनरसिंहपण्डितात्मजनारायणविरचिते नैषधीयप्रकाशे सप्तदश सर्ग ॥ १७ ॥

## समाप्त सप्तदश सर्गः ।

# उत्तरनैषधचरिते ।

## अष्टादश सर्गः

---

श्रीलक्ष्मीनृसिंहौ जयतः ।

सोऽयमित्थमथ भीमनन्दिनी दारसारमधिगम्य नैषध । ता तृतीयपुरुषार्थवारिधे पारलम्भन तरीमरीरमत् ॥ १ ॥

सोऽयमिति । सर्गमङ्गलिकैव । सोऽयमुक्तसौन्दर्यादिगुणप्रभावो नल, इत्युक्तप्रकारेण त्रैलोक्यनायकमनस्त दारसार स्त्रीरत्नभूता सामिन्द्रादिभिरप्यभिलष्यमाणा भीमनन्दिनीमधिगम्य तृतीयपुरुषार्थवारिधे कामरूपदुरवगाहजलधे सम्बन्धिनीं पारलम्भनतरीं परतीरप्रापणीकारूपा ता भैमीं अरीरमत् रमयामास । तादृश्या विना कामपुरुषार्थपार कामशास्त्रोक्तनानारतपार न प्राप्यत इत्यनेन सौन्दर्यानुरागातिशय सूचित । अन्यापि तरी वारिधे पार प्रापयति । तारणतरीमित्यपि पाठ । अरीरमत् । रमेर्ण्यन्ताल्लुङि चङि उपधाह्रस्वादि ॥ १ ॥

आरमयित् सह तया दिवानिशं भोगभागपि

न पापमाप सः । आत्मना हि विषयैकतानता
ज्ञानधौतमनसं न लिम्पति ॥ २ ॥

अनुरागातिशयादहोरात्रं तत्सम्भोगे दोषमाशङ्क्य परिहरति । आत्मविदिति ॥ स नलस्तया सह दिवानिशं भोगभाक् सन्नपि दिवामैथुननिषेधातिक्रमजनितं पापं नाप । यत आत्मवित् जीवब्रह्माभेदबुद्धिमान् । उक्तमर्थं युक्त्यन्तरेण द्रढयति । हि यस्मात् आत्मना कृत्रिमा विषयैकतानता स्रक्चन्दनादिविषयपरता ज्ञानेन परमात्मज्ञानेन धौतं क्षालितं कामक्रोधादिमलितं मनो यस्य तं पुरुषं न लिम्पति पापसंस्पर्शिनं न करोति । स्वाभाविकी हि विषयपरता पापसम्पर्ककारिणी, परमात्मज्ञानवतस्तु सा न भवति, किन्तु भोगात् पूर्वं कर्मक्षयार्थमेव सा विषयपरताङ्गीकार्या । अहार्या विषयपरता ब्रह्मज्ञानिनं पापिनं करोतीति आत्मवित् स पापं नाप्नोतीति युक्तमेवोक्तमित्यर्थः । विषयपरताया अहार्यत्वे दोषाभावाद्दिवारात्रं तया सह विक्रीडित्यर्थः । दिवानिशं । अत्यन्तसंयोगे द्वितीया ॥ २ ॥

न्यस्य मन्त्रिषु स राज्यमादरादारराध मदनं प्रियासखः । नैकवर्णमणिकोटिकुट्टिमे हेमभूमिभृति सौधभूधरे ॥ ३ ॥

दिवानिशं सम्भोगे राज्यरक्षणं कथमित्यत आह । न्यस्येति । स नलो मन्त्रिषु राज्यं न्यस्य नैकवर्णमणिकोटिकुट्टिमे नानावर्णरत्नसमूहबद्धभूमिके तथा हेमभूमिभृति सुवर्णभूमिधारिणि सौधभूधरे प्रासादरूपेऽत्युच्चे पर्वते प्रियासखः सन् मदनमादरादासक्त्या आरराध सिषेवे । प्रियासख इत्यालम्बनविभावः । कामस्य धर्मविषयत्वञ्च सूचितम् । अत एव तद्दूषणं न प्रसजति । नैकवर्णेत्यादिविशेषणसामर्थ्याद् भूधरो हेमाद्रिः सौधभुवं धरति नलप्रमादाकारेण परिणते ऽनेकवर्णमणिकुट्टिमे हेम- सुवर्णस्य भूमिभृति पर्वते हेमाद्रौ प्रासादसौन्दर्यमुच्चत्वं च सूचितम् । इत आरभ्य तत्र सौधेति यावन्महाकुलकम् ॥ ३ ॥

वीरसेनसुतकण्ठभूषणीभूतदिव्यमणिपङ्क्तिशक्ति

भिः । कामनापनमहार्घतागुणात् यस्तृणीकृत सुपर्वपर्वतः ॥ ४ ॥

वीरसेनेति । यः सौधभूधरो वीरसेनसुतस्य कण्ठभूषणीभूता दिव्या मणयस्तेषां पङ्क्तिर्यो सकलश्रोतमचिन्तामणिमाला तस्याः शक्तिभिरलौकिकसामर्थ्यैः कृत्वा कामनयाभिलाषमात्रेणोपनमन्त सन्निहितीभवन्तो नलेनान्येन वा लभ्यमाना दृष्टा अर्थाः पदार्था यत्र तद्भावस्तत्ता सैव गुणस्तस्माद्धेतोस्तृणीकृतः सुपर्वणां देवानां पर्वतो मेरुर्येन सः । सर्वार्थदायिचिन्तामणिरत्नस्य मेरावभावात् विद्यमानत्वाद्यो मेरुतुल्य इत्युपमा । अत्र बहूनां चिन्तामणीनां सद्भावात्ततोऽप्याधिक्यं वा ॥४॥

धूपितं यदुदराम्बरं चिरं मेचकैरगुरुसारदारुभिः । जालजालभृतचन्द्रचन्दनक्षोदमेदुरसमीरशीतलं ॥ ५ ॥

धूपितमिति । मेचकैः श्यामलैरगुरुसम्बन्धिभिः सारैः श्रेष्ठैर्दारुभिः काष्ठैश्चिरं यदुदराम्बरं यद्गोगो गर्भभागो धूपितं वासितं यदुदराम्बरं धूपार्थं दह्यमानैस्तैरर्पितपरिमलमित्यर्थः । तथा धूपजसन्तापत्याजनाय जालप्रकारेषु जालजालेषु सर्वेषु गवाक्षेषु जालानां वा जालेषु गवाक्षसमूहेषु भृतः स्थापितः चन्द्रचन्दनक्षोदः कर्पूरचन्दनचूर्णकल्पितेन मेदुरः पुष्टस्तत्परागैश्चाभिव्याप्तस्ततः परिमलबहुलश्च यः समीरो वायुस्तेन शीतलं शीततरं । सर्वेऽप्येते उद्दीपनविभावाः । जालजालं । प्रकारे द्विरुक्तिः, षष्ठीसमासो वा ॥ ५ ॥

क्वापि कामशरवृत्तवर्तयो यं महासुरभितैलदीपिकाः । तेनिरे तिमिरं स्मरस्फुरद्दोःप्रतापनिकराङ्कुरश्रियः ॥ ६ ॥

क्वापीति । महासुरभिचम्पकादिद्रव्यसुगन्धि तैलं यासु तथाविधा दीपिका यं सौधभूधरं क्वापि भित्तिमध्यान्तरदेशे वितेनिरे विस्तारयामासुः । तैर्निरे प्रकाशमानमकार्षुरित्यर्थः । किंभूताः । कामशरवृत्ताः कामशा-

यत्तुल्याः कामशरेण कर्पूरेण धूपविशेषेण वा युक्ता निष्पन्ना धूपकर्पूरगन्धा यस्यंवस्तन्तुमहुरचिता दोपाधारजूमा देशा यामान्ता । तथा स्मरस्य भैमीनलव्यपार्थे स्फुरन् दोः प्रतापनिकरस्तस्याङ्कुराणां प्रथमोद्भेदानामिव श्री शोभा यामान्ता । एतादशनायिकादुर्लभमात्रेण ता मोत्पत्तेस्तुल्यरूपस्यास्य दीपिकाः कामप्रतापाङ्कुरा इत्युत्प्रेक्षा-मिश्रा । राजनिकटस्था दीपा कर्पूरादियुक्तवर्तयः क्रियन्ते ।

पुरमध्यर्यभयात्मासा मत्ताऽस्मादिमटागदे ।
धमैः ममधुभिर्धूपो मम कामशराभिध ॥

इति कामशरो धूपः ॥ ६ ॥

कुङ्कुमेणमदपङ्कलेपिताः क्षालिताश्च हिमवालुकाम्बुभिः । रेजुरध्वतलशैलजस्रजा यस्य मुग्धमणिकुट्टिमा भुवः ॥ ७ ॥

कुङ्कुमेति । यस्य मुग्धानि रमणीयानि मणिकुट्टिमानि यासु ता भुवो रेजु । किम्भूता. । कुङ्कुमस्य मृगमद कस्तूरी च तयोः पङ्केन कर्दमेन लेपिता. । तथा जलमध्ये निक्षेपाद्द्रवीभूत हिमवालुकाम्बुभि. कर्पूरवासितोदकैः क्षालिताश्च । तथाऽध्वनि गमनागमनमार्गे तला विस्तारिता मृदुसुगन्धय· शैलजा हिमवत्प्रसूत्भूतमालत्यादिस्रजो माला यासु ताः । अतिशैत्यसौगन्ध्यार्थं पूर्वं कुङ्कुमकस्तूरीलेप· ततोऽनन्तरञ्च तत्पङ्कापनोदेभिया कर्पूरजलैः क्षालनं कृतं तेनाधिकसौगन्ध्यमात । अनन्तरञ्च भैमीनलचरणयोर्मृदुत्वान्मार्गे मणिवद्भूकाठिन्यपरिहारार्थं मृदुनरशैलजप्रक्षेप इति । पाठक्रमादर्थक्रमो बलीयानिति पूर्वं कर्पूरोदकैः क्षालिता, पश्चाद्गोमयस्थानीयकुङ्कुमकस्तूरीपङ्केन कृतोद्वर्तनाः, अनन्तरञ्च पुनःशैलेयमाला धृतसुन्दरमणिखचितभूपणाः सत्यः शुशुभिर इति वा । यत्रेत्यपि पाठ. । बालुकाम्बुभिरिति पाठे शु

त्रकर्पूरचूर्णैः वासिताश्छुरिताः कृतस्रङ्मालिका इत्यर्थः । अत्र शाब्द्य्यपि क्रमो घटते । लेपिता । स्वन्ताक्लिष्टा ॥ ७ ॥

नैषधाङ्गपरिमर्दमेदुरामोदमार्दवमनोज्ञवर्णया ।
यद्भुवि क्वचन सूनशय्यया भ्राजि भालतिलक
प्रगल्भता ॥ ८ ॥

नैषधेति । क्वचन नलनिद्रास्थानदेशे सूनशय्यया पुष्परचितास्तरणेन यस्य सौधस्य सम्बन्धिन्या भुवो भूमेर्भालस्य ललाटस्य तिलकस्य प्रगल्भता रमणीयता अभाजि धृता । पुष्पशय्या भूमेर्ललाटतिलक इव रेजे इत्यर्थः । कीदृश्या । नैषधाङ्गस्य नलाङ्गस्य परिमर्देन संमर्देन वरुणस्य धरद्दशमनामध्यान्मेदुरो नितरामधिकीभूत आमोदः सौरभ्यं मार्दवं मनोज्ञ मर्दवासानत्वात् सुन्दरो वर्णश्च यस्यास्तस्याः । तिलकोऽपि कस्तूर्यादिनिर्मितत्वात् सुगन्धि सुवर्णश्च भवति । अथ च यद्भूसम्बन्धिनि क्वचन देशे नलाङ्गसम्बन्धेनामोदादियुक्तया पुष्पशय्यानुरूपया ऽतिमृद्व्या भैम्या भालतिलकेन या प्रगल्भता प्रकाशमानतास्य अभाजि भञ्जिता । सम्भोगवशात्तिलकस्य मृष्टत्वादित्यर्थः इति वा । अभाजि । पक्षे, भञ्जेश्च चिणि (पा० ६।४।३३) इति नलोपः ॥ ८ ॥

क्वापि यन्निकटनिष्कुटस्फुटत्कोरकप्रकरसौरभो
र्मिभिः । सान्द्रमाद्रियत भीमनन्दिनीनासिकापुट
कुटीकुटुम्बिता ॥ ९ ॥

क्वापीति । क्वापि क्वचित् प्रदेशे यस्य सौधस्य निकटे निष्कुटे गृहारामे स्फुटन्तो विकसन्तः कोरकप्रकरा मल्लिकादिकलिकासमूहास्तेषां सौरभोर्मिभिः सौगन्ध्यपरम्पराभिः भीमनन्दिन्या नासिकापुटकुटी नासिकापुटरूपमल्पगृहं तस्य कुटुम्बिता पुत्रकलत्रादिमत्ता यस्याः विना सान्द्रं निरन्तरमाद्रियत स्वीकृता । अल्पगृहे बहुकुटुम्बी यथा म-

पूर्ववत् । अचेतनास्वलीकास्वपि प्रतिमासु चेतनत्वादिभ्रमोत्पादिनि स्वीयनैपुण्यादद्भुतभरकल्पितशिरा शिल्पिराडपि ब्रह्मा विश्वकर्मा किमयं जरदा निमित्तोद्भूतवाताधिक्यप्रचलितग्रीव इत्युत्प्रेक्षित इत्यर्थः । रमणीयतमोऽयमिति भावः । वातकी वातरोगी स्यादित्यमरः । वातकी । मत्वर्थे वातातीसाराभ्यां कुक् च (पा० । ५ । २ । १२९) । इति इनिः कुक् च ॥ १२ ॥

भित्तिगर्भगृहगोपितैर्जनैर्यः कृताद्भुतकथादिकौतुकः । सूत्रयन्त्रजविशिष्टचेष्टयाऽऽश्चर्यसञ्जि बहुशालभञ्जिकः ॥ १३ ॥

भित्तीति । य सौधः भित्तिगर्भे ये गृहा भित्तिभिराच्छादितानि अदृश्यमानविवराणि गर्भागाराणि तेषु तैर्वा गोपितैरदृश्यत्वेन स्थापितैर्जनैः कृत्वा कृतं अद्भुतकथादिकौतुकं आश्चर्यजनकरमणीयगोष्ठीगीतनृत्तवाद्यादिसम्बन्धिकौतूहलं येन सः । गर्भगृहस्थानामदृश्यमानत्वात् शिल्पय एव गोष्ठ्यादि कुर्वन्ति चित्रमेतदिति । बहिर्वर्तमानानां कौतूहलं यः करोतीत्यर्थः । तथा सूत्राणां तत्तत्प्रतिमादिमध्यान्तरितानां यन्त्राणि यन्त्राद् अनुगतोपस्थानरचनाविशेषात् सूत्ररूपाद्वा यन्त्राज्जाता या विशिष्टया सदृशा तया चेष्टया अन्योन्यचुम्बनालिङ्गनतालवृन्तवालव्यजनादिचालनक्रियया कृत्वा आश्चर्यं सञ्जिन्यो ऽतिचमत्कारकारिण्यो बह्व्यः शालभञ्जिकाः सुवर्णगजदन्तादिनिर्मिताः पुत्रिका यत्र सः । शालितं । चयत्ताविष्ट ॥ १३ ॥

तामसीष्वपि तमीषु भित्तिगैरत्नरश्मिभिरमन्दचन्द्रिकः । यस्तपेऽपि जलयन्त्रयानुकासारदुग्धततातपचन्द्रिकः ॥ १४ ॥

तामसीष्विति । यः सौधस्तामसीष्वपि तमीषु तमोबहुलकालपक्षरा-

त्रिपु भित्तिगैरंवरश्मिभिः कुट्टपखचितरत्नकिरणैः सुवर्णादिषु प्रतिफलितैर्मणिबद्धभूमिकिरणैर्वा अमन्दा भूयसी चन्द्रिका ज्योत्स्ना यत्र तमोलेशस्याप्यननुयायात् । तथा तपेऽपि उष्णबहुले ग्रीष्मर्तावपि जलधारामन्त्रारिमराट्पस्तम्भादिरचितजलयन्त्रस्यो यातकैर्निर्गममर्णालैरासारैर्धारासम्पातैर्दूरं नितरां पुनः निराकृता तापजनिता तन्द्रिका मूर्च्छा निःसहता येन सः । शीतत्वात् सुखकर इत्यर्थः । तामसी । कत्वर्थीयप्रकरणे, ज्योत्स्नादिभ्य उपसङ्ख्यानम् (वा०५।२।१८३।वा०८१) इत्यण ॥ तन्द्रिका । तन्द्रीशब्दात् स्वार्थे कनि, केण (पा०७।४।१३) इति ह्रस्वः । १४॥

यत्र पुष्पशरशास्त्रकारिका सारिकाध्युषितनागदन्तिका । भीमजानिषधसार्वभौमयोः प्रत्यवैक्षत रते कृताकृते ॥ १५ ॥

यत्रेति । यत्र सौधे, अध्युषितो अधिष्ठितो नागदन्तः शयनस्यान्ते गृहावयवभूतगजदन्तनिर्मितः पञ्जरो वा यया सा, तथा पुष्पशरस्य कामस्य यत्स्यायनादिप्रणीत शास्त्रं तस्य कारिका अभ्यासवाहुल्यात् कामशास्त्रनिर्माणसमर्थशब्दं करोति एवम्भूता सारिका पक्षिणी, भीमजानिषधनाथं भैमीनलयोरते विषये चुम्बनालिङ्गनादीनां प्रत्येक कृताकृते विहिताविहितं कर्मभूते प्रत्यवैक्षतानुकारेणानुसन्दधे, अनुवदति स्म, अनुचकारेत्यर्थः । आलिङ्गनादीनां बहवो भेदाः कामशास्त्रे निरूपिताः । तत्र किञ्चिदालिङ्गनं कृतं किञ्चिन्न कृतमित्यादापश्यदित्यर्थः । शास्त्रे श्लोकरूपा कारिका भवति । यद्वादौ प्रस्तादिः एनाक्सावितको भवति । नागदन्तिका । शेषाद्विभाषेति ( पा०५। ४।१५४) कपि, प्रत्ययस्थात् (पा०७।३।४४) इतीत्वं ॥ १५ ॥

यत्र मग्नकरणाङ्गभीकलाश्लोककोकिलपनाक्तिप्रस्तयोः । क्वापि दृष्टिभरयापि चाधिकोत्तंसह

समिथुनस्मरोत्सव ॥ १६ ॥

यत्रेति । यत्र सौधे मत्तै कलविङ्कैर्गृहचटकै र्शीलितानां मुहुर्मुहुः क्रियमाणानां चुम्बनादिरतिचिह्न्याज्जनमनः करणाच्च अशीलितानां याम्यायां केलीनां सुरतक्रीडानां पुनरुक्तं वसते यत्र तैर्या कृत्वा पुनरुक्तियुक्त यथा तथा क्वापि कस्मिन प्रदेशे वापिकायाः उत्पलमूलानि भूषणीभूतानि तत्र वर्तमानानि हंसमिथुनानि तेषां स्मरोत्सवः सुरतक्रीडा तया तयार्द्रीमीनलयाद्दृष्टिजितस्त्र्यापारैर्वा अथापि अलभ्भि अदर्शि स्थिथ । आदौ कलविङ्ककेलि दृष्ट्वा अनन्तरञ्च हंसकेलिरिति पुन सुरतदर्शनात पुनरुक्ति । रतान्ते भूषणीभूतगवाक्षा कामिना तिर्यगादिसम्भोगदर्शन पुन कामोद्दीपक जायतीति कामशास्त्रात तिर्यक्सम्भोग पश्यतिस्मेति भाव ॥ १६ ॥

यत्र वैणरववैणवस्वनै. कूजितैरुपवनीपिकालिना । कङ्कणालिकलहैश्च नृत्यता कुञ्चित सुरतकूजित तयो ॥ १७ ॥

यत्रेति । यत्र सौधे सम्भोग कुर्वतोस्तयोर्भैमीनलयो सुरतकूजितकण्ठमात्रस्थाव्यक्तमधुरस्वररूप वैणरवैर्वीणाशब्दै , तथा वैणवस्वनैर्वेणुस्वनिभिर्गीतै , तथा उपवनीपिकालिनामारामवर्तिना कोकिलषट्पदाना हुङ्कृते कूजिते सम्भुञ्जानाभ्या ताभ्या नृत्यन्तो यत्र दृश्यन्ते तौ न दृश्येते तादृशोद्देशे नृत्यता स्त्रीपुरुषाणा कङ्कणादीना केयूरनूपुरादिभूषणगणाना कलहैरन्योन्योपमर्द्दोदितशिञ्जितैश्च कुञ्चित मन्दीकृतमाच्छादितमित्यर्थ । नृत्यत्यश्च नृत्यन्तश्च पुमान स्त्रिया (पा० १ । २ । ६७) इत्येकशेष । कुञ्चित । तत्करोतीति (पा०३।१।२६।वा०१) इत्यन्तात्क्त ॥ १७ ॥

सीत्कृतान्यशृणुतां त्रिशङ्कयोर्यत्प्रनिष्ठिनरतिस्म

कृष्णसारमृगशृङ्गभङ्गुरा स्वादुरुज्ज्वलरसैकसार
णिः । नानिशं त्रुटति यत्पुरः पुरा किन्नरीवि
कटगीतिझङ्कृतिः ॥ १९ ॥

कृष्णेति । कृष्णो वर्णः सारः श्रेष्ठो यस्य तस्य मृगस्य शृङ्गवद्भङ्गुरा-
तिवक्रा बहुभङ्गीयुक्ता, तथा स्वादु श्रुतिमधुरा अत एवोज्ज्वलाः
प्रकाशमानाः शृङ्गारादयो रसाः तेषां उज्ज्वलस्यैव वा रसस्यैकाऽद्वि-
तीया मुख्या या सारणिः कृत्रिमनदी शृङ्गाररसपरिपूर्णेत्यर्थः । एव-
म्भूता गाननिपुणानां किन्नरीणां विकटा षड्जादिसप्तस्वराणामारोहा-
वरोहरीत्या विषमा गीतिर्गानं तस्य झङ्कृतिर्ध्वनिविशेषो यस्य सौ-
धस्य पुरोदेशे मुखेऽनिशं सर्वदा न त्रुटति पुरा कदाचिदपि विच्छि-
न्ना नाभूत् । भैम्याः सकाशाद्गानकलाशिक्षाहेतोरुद्यतस्य तस्य सु-
न्दरे द्वारि आगत्य गन्धर्वकन्या अपि यत्र सर्वदा जगुरिति भावः ।
सर्वं च तानमङ्गाद्यैर्मदा गायतीत्युत्प्रेक्षा सूच्यते । अथ च मृग-
शृङ्गवद्भङ्गगामिनी तथा स्वादूदका तथा किन्नरं इव किन्नरी त्वमर्यः
कमलजाहुत्योमानां श्रेष्ठा गुञ्जनझङ्कृतिर्यस्याः एवंविधा विकसत्कमलत्व
सरोमल्लगुञ्जनयुता निर्मलजला एका कुल्या यस्य सौधस्य पुरोभागे
कदाचिद्ग्रीष्मर्तावपि नात्रुटत्, बहुजलैव स्थितेत्यर्थः । एकवित्तेः सर्गे
तुङ्गप्रासादप्रासादित्यनेन कुल्याया अपि वर्णयिष्यमाणत्वात् प्रकृते
सौधवर्णनोपयोगित्वादयमर्थः कविना विवक्षित इति प्रतीयते । वि-
कट सुन्दरे प्रोक्तो विशालविकरालयोरिति विश्वः । त्रुटति । भूते,
पुरिलुङ्चास्म ( पा० ३ । २ । १२२ ) इति लट् ॥ १९ ॥

भित्तिचित्रलिखिताखिलक्रमा यत्र तस्थुरिनिहा
ससङ्ख्यः । पद्मसम्भवसुतारिरंसुतामन्दसाहसह
सन्मनोभुवः ॥ २० ॥

भित्तीति । यत्र सौधे पद्मसम्भवस्य ब्रह्मणः सुतायां सरस्वत्यां
रिरंसुता सम्भोगाभिलाषस्तद्रूपममन्दं महत् साहसं अविचार्यकारित्वं

प्रासादस्य कीर्तिं कान्तिं, दधानतां वहड्डीयमानाना कलरवाणां पारावतानामालि पङ्क्तिस्तस्याः कैतवाद्व्याजाज्जगदवदायति स्म शोधयति स्मोज्ज्वलं चकारेत्यर्थः । एते कलरवा न भवन्ति किन्तु शरच्चन्द्रचन्द्रिकातुल्या कीर्तिरेवैतस्येत्यर्थः । पारावत कलरव, इत्यमरः । दायति । दैप् शोधने इति भ्वादिरवपूर्वः सकर्मकः । लट् स्मे ( पा० ३ । २ । ११८ ) इति लट् । कार्त्तिकी । नक्षत्रेण युक्तः कालः ( पा० ४ । २ । ३ ) इत्यणि ङीप् । अत्र कृत्तिकायुक्तो दिवसः कार्त्तिक इति भावितपुंस्कत्वसम्भवेऽपि तिथ्योर्द्वयोरित्यभिधानात् पुंलिङ्गेन तिथिशब्देन समासे स्त्रीलिङ्गस्य समानाधिकरणस्योत्तरपदस्याभावात्, पुंवत्कर्मधारय ( पा० ६ । ३ । ४२) इति सूत्रेण न पुंवत् । ततः कार्त्तिकी चासौ तिथिश्चेति समासः ॥ २२ ॥

गौरभानुगुरुगेहिनीस्मरे दुर्नभावमिति वृत्तमाश्रिताः । रेजिरे यदजिरेऽभिनीतिभिर्नाटिका भरतभारतीसुधाः ॥ २३ ॥

गौरेति । गौरभानोश्चन्द्रस्य गुरुगेहिन्या बृहस्पतिभार्याया ताराया विषये स्मरजनितो य उद्भूतभावः, गुरुतल्पगामित्वाद्वाऽरत्यागित्व चन्द्रतारयार्विषये स्मरस्योद्भूतभाव कामजनितसामर्थ्यातिशयः, तल्लक्षणं वा इतिवृत्तं पुरावृत्तमाश्रिता प्रतिपादयन्त्यः, तथा भरतेन मुनिना प्रणीता भारती भरताख्यो नाट्यवेदस्तस्मिन् सुधा अमृतरूप्या भरताचार्यरीत्याभिनीयमानाः सत्यः सुधाप्राया इति यावत् । एवम्भूता नाटिका दशरूपकान्तर्गतचतुरङ्गरूपविशेषा यस्य सौधस्याजिरेऽङ्गणे अभिनीतिभिः आङ्गिकाङ्गिकवाचिकाद्याभेदभिन्नैश्चतुर्विधैर्नटाभिनीयमानैरभिनयैः कृत्वा रेजिरे । तयो स्मरोद्भूतभावस्य मिति सम्यक परिच्छित्ति चैव वृत्तं व्यापारोऽतीत वा यस्मिन् यत्रैवविधनाटकादिमन्यमाश्रिता इति वा ॥ २३ ॥

ज्यम्बुदारुचनमम्बुजाक्रियामाधवव्रजवधूविलास

योः । गुम्फितैरुशनसा सुधापितैर्यस्य हाटकविटङ्कमङ्कितम् ॥ २४ ॥

गुम्फितेति । यस्य सौधस्य हाटकविटङ्कं सुवर्णघटितकपोतपालिका शम्भोर्दारुवने मन्दरकन्दरायां देवदारुवने शम्भुविक्रिया गौर्या सह दिव्यसहस्रवर्षपर्यन्तं या सुरतक्रीडा, माधवस्य श्रीकृष्णस्य व्रजवधूभिर्गोपिकाभिः सह विलासो रासक्रीडादिस्तयोर्विषये उशनसा शुक्राचार्येण गुम्फितैः श्लोकरूपेण ग्रथितैः सुधापितैरतिचमत्कारकारित्वेनामृतवदाचरितैः कर्तृभिरङ्कितं चिह्नितम् । हरकृष्णकामविलासवर्णकं काव्यं रचितं काव्यश्लोकाः कामोद्दीपनार्थं मदीयहाटकविटङ्के टङ्केनाङ्किता इत्यर्थः । कपोतपालिकायां तु विटङ्कं पुंनपुंसकमित्यमरः । विशेषेण टङ्क्यते बध्यते इति विटङ्कं पक्षिविश्रामार्थं कुड्याद्बहिर्निर्गतं दारु ॥ २४ ॥

अह्नि भानुभुवि दासदारिकां यच्चरः परिचरन्तमुज्जगौ । कालदेशविषयासहस्मरादुत्सुकं शुकपितामहं शुकः ॥ २५ ॥

अह्नीति । यस्मिन् सौधे चरतीति चरः शुकः पक्षी शुकपितामहं पराशरमुज्जगौ तारस्वरं गायति स्म । किम्भूतम् । अह्नि दिने भानुभुवि सूर्यपुत्र्यां यमुनायां विषये दासदारिकां कैवर्तकुमारीं योजनगन्धां परिचरन्तं सम्भुञ्जानम्, अत एव यथाक्रमं कालस्य रात्र्यादेरनिषिद्धस्य ग्रहणस्य देशस्य तीर्थदेवस्थानादिव्यतिरिक्तस्यानिषिद्धस्य निजशयना- देर्विषयस्य परदारादिव्यतिरिक्तस्य स्वभार्यालक्षणस्यासहात् कालादीननपेक्षमाणात् अधैर्यजनकात् स्मरात् हेतोरुत्सुकं कामातिरेकं सोढुमसमर्थमित्यर्थः । पौराणिककथ्यमानपराशरादिवृत्तान्तश्रवणमात्रेण प्राप्तः शिक्षातिशयादतिसुचरो वाचालः कीरः, मादृशी भारताद्युक्तां चच पूर्वं स्मृत्वा गायतीति भावः । शुकोत्यादिना कामातुरस्य कालाद्यनवेक्षणं समर्थितं । अन्योऽपि चाटुवचनं स्वपितामहमपि निन्दति । कैवर्ते दाशधीवरावित्यमरः । चरः । अधिकरणे चरेः (पा० ३।२।१६) इति टः ॥ २५ ॥

नीतमेव करलभ्यपारतामप्रतीरं मुनयस्तपो-
म्बुधं । दुस्तरः कुचघटावलम्बनात् स्वायिनः
क्वचन यत्र चित्रगाः ॥ २६ ॥

नीतमिति । यत्र सौधे मुनयः परमात्मज्ञानचतुरा ऋषयो क्वचन कस्मिन्नपि भित्तिभागे चित्रगाश्चित्रे लिखिता वर्त्तन्ते । किम्भूता । करलभ्य पारं परतीरं यस्य तद्भावस्तां नीतमेव लक्षणया सन्निहि-तभावितत्वात् समाप्ति प्रापितप्रायमेव, अथ च सन्निहितपरतीरमपि तपोरूपदुस्तरमम्बुधं समुद्रमप्रतीरं यो परिसमाप्यानन्तोऽयं वा तपोविघ्ना-र्थं इन्द्रेण प्रेषितानामप्सरसां रम्भादीनामत्युच्चकठिनकुचलक्षणानां घ-टानामवलम्बनाद्धारणाद्धाराहेतौ स्वायिन स्यातु शक्ता । कुचम-र्दनादिसम्भोगकारिण इत्यर्थं । योऽपि प्रतीर्यमाण समुद्र नद्यादि वा तीरसन्निहितेऽपि श्रान्तित्वादुत्तरितुमशक्त स जलमध्य एव घटा-दिकमवलम्बनमासाद्य चित्रलिखित इव निश्चलस्तिष्ठति । कुट इति पाठे कुट कोटे घटे गेहे इति विश्व ॥ २६ ॥

स्वामिना च वहता च त मया स स्मरः सुरत
वर्जनोज्झितः । योऽयमीदृगिति नृत्यते स्म
यत् केकिना मुरजानि स्वनैर्घनैः ॥ २७ ॥

स्वामिनेति । यस्य सौधस्य सम्बन्धिना केकिना क्रीडामयूरेण इति हेतोर्घनैर्निबिडैर्मुरजानि स्वनैर्मृदङ्गध्वनिभिरथ च तैरेव मघैर्नृत्यते स्म । इति किं । योऽयमीदृगत्रस्मादिवशीकारकारी स महाप्रभावः स्मरः स्वामिना कार्त्तिकेयेन प्रभुणा च तदीयपत्रत्वेन त वहता पृष्ठेन धा-रयता मया मयूरेण च सुरतवर्जनोज्झित इति । चान्याऽन्यसमुच्चये । स्मरस्य नैष्ठिकब्रह्मचारित्वान्मयूराणाञ्च वपत्तु मत्ताना नेत्रोपान्तर-न्ध्रमार्गेण निर्गच्छताश्रुमयशुक्रबिन्दूना मयूरीमुखग्रहणमात्रेण गर्भस-म्भूतलिङ्गभगसङ्घर्षणरूपरतिपरित्यागो जयहेतुः । मयूराश्च मेघशब्द-भ्रान्त्या मृदङ्गशब्दैर्नृत्यन्ति ॥ २७ ॥

यत्र वीक्ष्य नलभीमसम्भवे मुह्यतोरतिरतीश योरपि । स्पर्द्धयेव जयतोर्ज्जयाय ते कामकाम रमणी बभूवतुः ॥ २८ ॥

यत्रेति । यत्र सौधे सम्भोगपरे नलभीमसम्भवे नलभैम्यौ वीक्ष्य मुह्यतोः सुरताभिलाषिणोरथ च भ्रान्तिं प्राप्नुवतोस्तथा जयतोः सर्वोत्कर्षेण वर्त्तमानयोरथ च नलभैम्यौ स्ववशे कुर्वतो रतिरतीशयोर्रतिकामयोः स्पर्द्धयेव ईर्ष्ययेव जयाय तौ पराभवितुं ते नलभैम्यौ कामकामरमणी बभूवतुः स्मररती अभूताम् । सम्भोगयुक्तौ स्त्रीपुंसौ दृष्ट्वाऽन्यावपि स्त्रीपुंसौ उद्दीप्तस्मरौ भवत इति तादृशौ भैमीनलौ दृष्ट्वा प्राप्तावसरावत्र कृतावासौ चेतनौ रतिकामौ मुग्धातसुरतेच्छौ जातौ । तथा सौन्दर्यातिशयाद्भैमीनलौ काम इति कामस्य च भैम्या रतिरिति सं ... भ्रमौ च जातौ । एवम्भूतावतिशयितान्योन्यरागजननाद्वशीकृतभैमीनलौ यत्र भूतौ रतिकामावेवाभूतामिति कामयोर्द्वन्द्वरूप जातमित्यर्थः । अयमेव तयोर्जयः । अथ च स्वसम्भोगदर्शनात्तयोरपि सम्भोगवाञ्छासम्पादनाज्जय । तज्जयार्थं बुद्धिपूर्वं व्यापाराभावात् स्पर्द्धयेवेत्युत्प्रेक्षा ... कारणमुक्तं । अथ च रतिकामसन्निधाने यथा स्त्रीपुंसयोः सम्भोगवाञ्छामुदयन्तथा तयोरपि रतिकामसन्निधानमेव प्रेमरसातिशयादन्योन्यसन्निधानमात्रेणैव कामसम्मोहः प्रादुरासीदिति भावः । नलभैम्यौ दृष्ट्वा मोहं प्राप्तावत एव नलभैमीभ्यामाभ्यां जितावित्यपि तं जेतव्यौ इति स्पर्द्धयेव जयतामिति यथायुक्तं तथा सम्बन्धः । तत्र सर्वप्राप्त्युपमत्वात् प्राय प्राप्तोऽपि पूर्वं निपातो रतेर्नलेकामत्वमेव ... रतिप्राप्तस्य, रतीशस्य च भैम्या रतित्वमादाय ... कामरमणीपदानां पश्चात् प्रयोगस्तौचित्यं सूचयतीति ज्ञेय । रतिरतीशयोरपि स्पर्द्धयेति केचित् । ते । प्रथमाद्विवचना ... न्त । कामकामरमणी बभूवतुरिति चित्र ॥ २८ ॥ कुलक ॥

तत्र सौधमरुभूधरे तयोराश्रितासुरथ कामकेलि

यः । ये महाकविभिरप्यवीक्षिताः पांशुलाभि-
रपि ये न शिक्षिताः ॥ २९ ॥

तत्रेति । अथ तत्रोक्तगुणे सौधरूपे सुरभूधरे मेरौ तयोस्ते कामके-
लय आविरासुः स्पष्टं दिदीपिरे । ते के । ये कामकेलयो महाकवि-
भिर्व्योमकालिदासादिभिर्निगूढज्ञातृदर्शिभिरपि अवीक्षिता न बुद्धिगो-
चरीकृताः । तेषामपि न स्फुरिता इति यावत् । तथाऽनेकनरसम्भोग-
चतुराभिः पांशुलाभिः स्वैरिणीभिरपि ये न शिक्षिता अभ्यस्ता नागर-
जातिशिक्षोपदेशादपि न ज्ञाताः । एतेनालौकिकाः कामविलासास्तयो-
र्विवृत्ता इति सूचितम् । द्रवकेलिपरीहासा इति केलिशब्दः पुंलिङ्गोऽपि ॥ २९ ॥

पौरुषं दधति योषिता नले स्वामिनि श्रितत-
दीयतावया । यूनि शैशवमतीतया कियत्
प्रापि भीमसुतया न साध्वसं ॥ ३० ॥

पौरुषमिति । एवम्भूतया भीमसुतया एवम्भूते नले विषये कियत्
किंपरिमाणं साध्वसं भयं न प्रापि अपि तु बहु भयं न प्राप्तं । अत्य-
ल्पं प्रापीत्यर्थः । किम्भूते नले । पौरुषं दधति बलिनि । किम्भू-
तया । स्वयं तु योषिताऽबलया । तथा स्वामिनि आत्मनः प्रभौ रा-
जनि च । स्वयं तु श्रितोऽङ्गीकृतस्तदीयस्वभावस्तदीयत्वं वा ययाऽस्तदा-
सीभूतया । तथा यूनि तरुणे । स्वयं तु शैशवं बाल्यमतीतया अनति-
क्रान्तया वयःसन्धौ वर्तमानया । बलिनः स्वामिनस्तरुणस्य स्वयं चा-
बलया दासीभूतया बालया भयं प्राप्यत इति युक्तमिति । अत्र प्रथम-
सम्भोगे किंचिद्भावीतीदृशनले ईदृश्या तया महद्भयं प्राप्नोति न्यायः ।
सर्वाण्यपि विशेषणानि हेतुगर्भाणि । अथ च श्रितो नलविषयो भावो
रत्यभिलाषो ययैतादृश्यापि स्वामिनि भर्तरि नले महद्भयं प्रापि ।
यतः पूर्वोक्तगुणविशिष्टे पूर्वोक्तगुणविशिष्टया चेति । एवम्भूतेऽपि
नले एवम्भूतयापि तया साध्वसं कियदल्पमेव प्राप्तं बहु साध्वसं
वर्तत एव तथापि किञ्चित् साध्वसं परित्यक्तं । यस्माच्छ्रितो नल-

विषयो रमणाभिलाषो ययेति वा । अथ च श्रितः परिशीलितो ह्रासो नलविषयो यया बालया मम कण्ठोपभोगं न करिष्यतीति विनिश्चितनलाभिप्राया भयं न प्रापेति भावः । श्रितोऽनुष्ठितो नलाशयो यया नलज्ञायानुकूलवर्त्तिन्या प्रथमसम्भोगे पौरुषमवलम्ब्य क्रीडाकौतुककारी भवति, कान्ता त्वनुवर्त्तनशीलैव किमत्र भयमिति मत्वा किञ्चिदप्यजानानाऽल्पं भयं विहाय प्रियभावानुकूल्यमाश्रयतीति । एतदनुभवसाक्षिकमिति भावः ॥ ३० ॥

दूत्यसङ्गतिगतं यदात्मना प्रागशिश्रवदियं प्रियं गिरः । तं विचिन्त्य विनयव्ययं ह्रिया न स्म वेद करवाणि कीदृशं ॥ ३१ ॥

इदानीं लज्जानुभावपूर्वं कामशास्त्रानुरोधेन प्रथमसम्भोगक्रममाह-दूत्येति ॥ इयं भैमी प्राक् विवाहात् पूर्वं दूत्येन देवदूतव्यापारेण सङ्गतिं गतं सम्बन्धं प्राप्तं साक्षाद्दृष्टं प्रियं नलं आत्मना विरहप्रकाशिनीर्नयमर्गोक्ता गिरो वाचोः अशिश्रवत् श्रावयामासेति यत तं प्रियस्य स्वयमनश्रावणलक्षणं विनयस्य व्ययं नाशं चापल्यं विचिन्त्य विशेषेण स्मृत्वा ह्रिया कृत्वा कीदृशं किङ्करवाणीति न वेद स्म नाज्ञासीत् । तदानीं तन्मया यदनुचितं कृतं तत्प्रतिक्रिया कीदृशी भवति चार्थं किं कार्यमिति विनयव्ययस्मरणाल्लज्जातया ह्रिया किंकर्त्तव्यतामूढाभूदित्यर्थः । उक्तमर्थं मूचितं । उत्तमा हि पूर्वानुचितस्मरणाल्लज्जन्ते । भैमी तत्स्मरणेनापि मनस्तापमभूत् प्रारब्धसम्भोगानुभयदशायामनुमतलज्जात्वं किं वाच्यमिति भावः । अशिश्रवत् । शृणोतेर्णौ चङि ह्रियंमने उपधाह्रस्वत्वे सन्वल्लघुनीति (पा०७।४।९३) सन्वद्भावे श्रयति शृणोमि (पा ०७।४।८१) इत्यभ्यासस्यवर्णत्वं । प्रियं । शृणोतेः शब्दकर्मत्वाद्णौ कर्मत्वं ॥३१॥

यत्तया गदित नैषधः स्वयं प्राग्वृतः सपदि वीतलज्जया । तन्निजं मनसि कृत्य चापलं सा शशाक न विलोकितुं नलं ॥ ३२ ॥

यदिति । तया सदसि मिलितलोकत्रयजनसमक्षं वीतलज्जया निर्लज्जया सत्या सपदि स्वयं परवर्तनाद्यभावेऽप्यात्मनैव वरणमालया कृत्वा यत् प्राक् नैषधो वृत इति तत् नलवरणलक्षणं निजं चापलं धाष्ट्र्यं मनसि कृत्य विचार्य्य, तदानीं लज्जा त्यक्ता मया महद्धाष्ट्र्यमवलम्बितमेतदनुचितमिति स्मृत्वा सा लज्जातिशयवशात्तदानीं नलं विलोकितुमपि न शशाक अत्राप्युत्प्रेक्षा सूचिता । तद्यापलं मनसि कृत्य विशेषेणेता प्राप्ता वामा लज्जा च तया कृत्वा नलं वीक्षितुं नाशकदिति वा । मनसि कृत्य पूर्ववत् ॥ ३२ ॥

आसने मणिमरीचिमांसले यां दिशं स परिरभ्य तस्थिवान् । तामसूयितवतीव मानिनी न व्यलोकयदियं मनागपि ॥ ३३ ॥

आसने इति । अनुरागातिशयादेकासने वर्तमानयोस्तयोर्मध्ये, स नलः मणिमरीचिभिः खचितोत्तमरत्नप्रभाविकिरणैः मांसले व्याप्ते आसने सिंहासने स नलः यां दिशं परिरभ्य च सिंहासनप्रदेशमाश्रित्य तस्थिवान् । इयं भैमी तां दिशं मनागपि न व्यलोकयत् । उत्प्रेक्षते । असूयितवतीव ईर्ष्यावतीव । दिशं स्त्रीत्वादियं मद्भर्त्रालिङ्गितेति सपत्नीबुद्ध्या असूयां कृतवतीव तां नापश्यदित्यर्थः । यतो मानिनी । लज्जाभयाभ्यां नापश्यत् तत्रेयमुत्प्रेक्षा । असूयितवती । कण्ड्वादियगन्तात्क्तवतु उगित्वात् ङीप् ॥ ३३ ॥

ह्रीसरित्सलिलमज्जनोचितं मौलिदूरनमनं दधानया । द्वारि चित्रयुवतिश्रिया तया भर्तृदृष्टिगतमप्रतीकृतं ॥ ३४ ॥

ह्रीति । निरन्तरप्रवाहरूपत्वात् ह्रीरूपाया सरिति निजस्यात्मनो निमज्जनमुचितं योग्यं यस्यैवम्भूतं मौलेः शिरसो दूरं नितरां नमनं नामनं नम्रीभावं दधानया तया द्वारि गृहद्वारदेशे चित्रलिखितयुवतिवत् श्रीः शोभा यस्यास्तया लज्जाभयाभ्यामनन्तः प्रवेष्टुमशक्तया अ-

तिनिश्चलया तत्रैव स्थितया भैम्या, भैम्यागच्छेति भर्तुर्नलस्य कृतीना-
माह्वानानां शत मश्रुतीकृतं श्रुतमप्यश्रुतीकृतं । श्रुतमपि लज्जाभया-
भ्यामनुत्तरादगमनाच्चाऽश्रुतमिव कृतमित्यर्थः । नवोढाजातिरियं॥३४॥

वेश्म पत्युरविशन्न साध्वसाद् वेशितापि श
यनं न साभजत् । भाजितापि सविधं न सा
स्वपत् स्वापितापि न च सम्मुखाभवत् ३५

वेश्मेति । सा किमहं भविष्यामीति साध्वसाद्भयात् पत्युर्वेश्म न
स्वयमविशत् । अनन्तरं सख्या नलेन वा वेशितापि गृहमध्यं प्रापि-
तापि शयनं नाभजत् । ततोऽपि सख्या नलेन वा शयनं भाजितापि
सा सविधं नलसमीपं यथातथा नास्वपत् किन्तु दूरत एव निद्राति
स्म । ततोऽपि सख्या नलेनैव वाक्चापल्यादिना सविधं समीपं स्वा-
पितापि न च सम्मुखाऽभवत् किन्तु शय्यापार्श्वपट्टिकावलम्बिनी परा-
ङ्मुख्येवाभूदित्यर्थः । प्रथमसम्भोगे मुग्धाया जातिरियं । साध्वसादिति
सर्वत्र । अस्वपत् । अङ्गार्वेति (पा०७।३।९९) अट् ॥ सम्मुखास्वाङ्गा-
च्चोपसर्जनाद् (पा०४।१।५४) इति विकल्पान्न ङीष् ॥ ३५ ॥

आत्मनापि हरहारसुन्दरी यत् किमप्यभिलला
ष चेष्टितं । स्वामिना यदि तदर्थमर्थिता मु
द्रितस्तदनया तदुद्यमः ॥ ३६ ॥

आत्मनेति । हरहारवत् गौरीवत् सुन्दरी । सा भैमी आत्मनापि
स्वयमेव यत्किमपि यत् किञ्चिच्चेष्टितं तदर्थकरोपितकटाक्षवीक्षणता-
म्बूलदानतालवृन्तव्यजनादि अभिललाष कर्तुमैच्छत् तदर्थं तस्मै प्रयो-
जनाय तद्दानादानायेङ्गितज्ञेन स्वामिना नलेन ताम्बूलं देहीति यद्य-
र्थिता याचिता तर्हि अनया भैम्या तस्य तत्कर्मण उद्यमो यत्नप्रय-
त्नो मुद्रितः ताम्बूलादीनामदानात्त्यक्त इत्यर्थः । तेन याचिता सती न
ददाविति भावः । अपि चेत्यर्थः । स्वामिनेत्यनेनावश्य कर्तव्यतायां प-

त्यामपीति सूचित । गौर्य्यपि प्रथमसम्भोगे ह्रेपार्दिता सत्येवमेवाक-रोदिति ध्वनिः ॥ ३६ ॥

केवलं न खलु भीमनन्दिनी दूरमत्रपत नैषधं प्रति । भीमजाहृदि जितः स्त्रिया ह्रिया मन्मथोऽपि नियतं स लज्जितः ॥ ३७ ॥

केवलमिति । भीमनन्दिनी केवल नैषध प्रति उद्दिश्य दूर नितरा अत्रपत लज्जां प्राप्नोति न किन्तु भीमजाहृदि वर्त्तमानत्वाद्ध्रिया लज्जारूपया स्त्रिया जितः खलु जित इव सोऽतिप्रसिद्धपराक्रमः हृद्येव वर्त्तमानो मन्मथोऽपि नियतं बहुकाल लज्जित । मथ्नाति च मनो मथ्नाति पीडयतीति मन्मथ पृषोदरादि । एवंविधोऽपि जितो लज्जित मनुचितश्चेति चित्र । ह्रायशालज्जिपयोऽतिपीडाकरोऽपि कामो बहुकाल तामभिभवति स्मेति भाव । अन्योऽपि स्त्रिया जितो लज्जते ॥३७॥

ह्रीभराद्विमुखया तया प्रियं सज्जितामननुरागशंसिनि । स स्वचेतसि लुलोप सस्मरन् दूत्यकालकलितं तदाशयं ॥ ३८ ॥

ह्रीभरादिति । दूत्यकाले कलित बुद्ध परीक्षित तदाशय तस्याभिप्राय सम्यक् दृढसंस्कारतया स्मरणपथारूढ स्मरन् विचारयन् स नल ह्रीभराद्विमुखया तया विमुखत्वादेवाननुरागशंसिनि किमस्या मयि अनुरागो नास्तीति शङ्काशील स्वचेतसि सज्जिता जनिता अनुरागाभावसम्भावनी भीति लुलोप निरस्यति स्म । दूत्यवसरमप्यनुरागातिशयादिन्द्रादीनपि परित्यज्य मदलाभे कृतमरणनिश्चयेयमिदानीमनुराग न त्यक्ष्यतीति निश्चित्य जाता शङ्का तत्याज । मुग्धा लज्जाभरादेव विमुखीय न त्वननुरागादिति निश्चिकायेत्यर्थ । तदाशय । ज्ञेयत्वाविवक्षया षष्ठ्यभाव ॥ ३८ ॥

पार्श्वमागमि निजं सहालिभिस्तेन पूर्वमथ सा

तयैकया । क्वापि तामपि नियुज्य मायिना
स्वात्ममात्रसचिवावशेषिता ॥ ३९ ॥

पार्श्वमिति । तेन नलेन भयवशादेकाकिनी नलस्य सन्निधानमागच्छन्ती सा आलिभिः सखीभिर्भूयसीभिः सह निजं पार्श्वम् आगमिं प्रापिता । भवतीभिरपि कञ्चित् कालमनया सार्द्धमागन्तव्यमित्यादिष्टाभिस्ताभिस्तां स्वसन्निधिं प्रापितवानित्यर्थः । अथानन्तरं कियतापि कालेन किञ्चिद्विश्रामसमाप्त्यनन्तरं एकया एकाकिन्यैव तया सख्या सह स ख्यन्तरपरिहारेण सन्निधिं प्रापिता । अथानन्तरं कियतापि कालेन तामपि सखीं क्वापि गन्धमाल्यताम्बूलाद्याहरणविषयेऽलीकं नियुज्य गत्वा द्रुतमानयेति छलात् प्रेष्य, यतः मायिना कामशास्त्रोक्तकन्याविस्रम्भणकपटपटुना चतुरेण तेन स्वात्ममात्रः स्वः एव सचिवः सहायः यस्याः स्वसहायैवैकाकिन्यवशेषिता स्वसमीपे स्थापिता विजनाधिगतस्त्रीयमिङ्गितमदर्शयत् तदीयं वा ऽपश्यदिति भावः । कन्याविस्रम्भणप्रकारोऽयं । आगमिं ण्यन्तात् कर्मणि चिण् । चिण्णमुलोः ( पा० ६।४।९३ ) इति दीर्घविकल्पात् पक्षे ह्रस्वः ॥ ३९ ॥

सन्निधावपि निजे निवेशितामालिभिः कुसुम-
शस्त्रशास्त्रवित् । आनयद्दूरवधिमानिव प्रिया
मङ्कपालिवलयेन सन्निधिं ॥ ४० ॥

सन्निधावपीति । स नलः आलिभिः स्वयमेव निजे सन्निधौ निवेशितामपि तेनैव प्रयोजकेन स्वसमीपे प्रयोज्याभिः सखीभिः स्थापितामपि प्रियामङ्कपालिर्भुजोत्सङ्गभागस्य स्वाङ्गस्य स्वीयैकभुजालिङ्गनविशेषस्य वलयाकारेण वेष्टनेन कृत्वा सन्निधिमानयत् । यतः कुसुमशस्त्रः कामस्तस्य वात्स्यायनादिप्रणीतं शास्त्रं वेत्तीति वित् । तथैतत्, अवधिमानिव, दूरस्थो यथा प्रिया सन्निधिमानयति । कामशास्त्रे ।

आदौ रतं बाह्यनिद्रं प्रयोज्य

तथापि चालिङ्गनमेव पूर्वमिति ।

तथा सामीप्यगाम्भीरु नवोढा सन्निधापयेत् ।
विश्वासस्थजना गाढालिङ्गनात्त्याजयेद्भयम् ॥
इत्यादि सन्निधिस्थापनव्याजेन गाढमालिङ्ग्य भयं त्याजितवानिति भावः ॥ ४० ॥

प्रागचुम्बदलिके ह्रियानतां तां क्रमाद्दूरनतां कपोलयोः । तेन विश्वसितमानसां झटित्याननं स परिचुम्ब्य सिस्मिये ॥ ४१ ॥

प्रागिति । स ह्रिया आनताननामतिनम्रान्तां प्राक् अलिके ललाटपट्टे ऽचुम्बत् । अतिनतत्वात्तदानीं कपोलादिचुम्बनस्याशक्यत्वादिति भावः । तत किञ्चिद्दूनचुम्बनभयत्वात् पूर्वापेक्षया दरमतामीषन्नम्रां किञ्चिदुन्नतमुखीं क्रमात् परिपाट्या तदानीमेवान्यदा वा किंयतापि कालेन द्वयोरपि कपोलयोश्चुम्बनेन ललाटफलकचुम्बनेन ततोऽपि विश्वसितमानस यस्यास्तां ततो ऽप्युन्नतमुखीमाननं झटिति मुखग्रहणादिभयाद्वीक्ष परिचुम्ब्य दुर्लभाधरचुम्बनलाभजनितानन्दवशात् सिस्मिये ईषद्धसनमहसत् । स्फुटहासे पुनर्लज्जा स्यादिति ज्ञपादीपज्जहासेत्यर्थः । अयं च यदेतावन्पर्यन्तं त्वया वञ्चितं तदधीदानीं मया लब्धमिति हास । ललाटादीनि कामशास्त्रोक्तानि चुम्बनस्थानानि । इयमपि विस्रम्भणरीति ॥ ४१ ॥

लज्जया प्रथममेत्य हुङ्कृतं साध्वसेन बलिनाथ तर्जितः । किञ्चदुच्छ्वसित एव तद्धृदि न्यग्भूव पुनरर्भकः स्मरः ॥ ४२ ॥

लज्जयेति । ललाटादिचुम्बनक्रमानुभावजातसुखविश्रम्भोल्लसितकामादयायास्तस्या हृदि मानसे किञ्चिदुच्छ्वसित एव विकसित एवार्भका मुग्धत्वादप्रौढ स्मर प्रथम चुम्बनजनितया लज्जया यत्य गत्य हुङ्कृत. हुङ्कारेण निषिद्ध । अथ पश्चाद्बलिना प्रबलेन चुम्बनजन्येन साध्वसेन सात्त्विकभयेन तर्जितो भर्त्सितोऽस्मदीयभूमौ हृदयलक्षण

तयैकया । क्वापि तामपि नियुज्य मायिना
स्वात्ममात्रसचिवावशेषिता ॥ ३९ ॥

पार्श्वमिति । तेन नलेन भयवशादेकाकिनी नलस्य सन्निधिमनागच्छन्ती सा आलिभिः सखीभिर्भूयसीभिः सह निजं पार्श्वम् आगमि प्रापिता । भवतीभिरपि कञ्चित् कालमनया सार्द्धमागन्तव्यमित्यादिष्टाभिस्ताभिस्तां स्वसन्निधिं प्रापितवानित्यर्थः । अथानन्तरं कियतापि कालेन किञ्चिद्विश्वासप्राप्त्यनन्तरं सकया एकाकिन्यैव तया सख्या सह सख्यन्तरपरिहारेण सन्निधिं प्रापिता । अथानन्तरं कियतापि कालेन तामपि सखीं क्वापि गन्धमाल्यताम्बूलाद्याहरणविषयेऽलीकं नियुज्य गत्वा आनयेति छलात् प्रेष्य, यतः मायिना कामशास्त्रोक्तकन्याविस्रम्भण-कपटपटुना चतुरेण तेन स्वात्ममात्रं सचिवं सखा यस्याः स्वसहायैकाकिनी अवशेषिता स्वसमीपे स्थापिता विजनादिते स्वीय-मिङ्गितमदर्शयत् तदीयं वा ऽपश्यदिति भावः । कन्याविस्रम्भणप्रकारोऽयं । आगमि णयन्तात् कर्मणि चिण् । चिण्णमुलोः ( पा० ६।४।९३ ) इति दीर्घविकल्पात् पक्षे ह्रस्वः ॥ ३९ ॥

सन्निधावपि निजे निवेशितामालिभिः कुसुम
शस्त्रशास्त्रवित् । आनयद्व्यवधिमानिव प्रिया
मङ्कपालिवलयेन सन्निधिम् ॥ ४० ॥

सन्निधावपीति । स नल आलिभिः स्वयमेव निजे सन्निधौ निवेशितामपि तेनैव प्रयोजकेन स्वसमीपे प्रयोज्याभिः सखीभिः स्थापितामपि प्रियामङ्कपालिर्भसीपृष्ठभागस्य स्वशिरोभिः स्वीयैकभुजालिङ्गनविशेषस्य वलयाकारेण वेष्टनेन कृत्वा सन्निधिमानयत् । यतः कुसुमशस्त्र कामस्य वात्स्यायनादिप्रणीतं शास्त्रं वेत्तीति वित् । क्वचिदेतत्, व्यवधिमानिव, दूरस्था यथा प्रिया सन्निधिमानयति । कामशास्त्रे ।

आदौ रत यद्यपि प्रयोज्य
तथापि चालिङ्गनमेव पूर्वमिति ।

तथा सामीप्यगाम्भीर्यं नवोढां सन्निधापयेत् ।
विश्वासरूपत्वना गाढालिङ्गनात्याजयेद्भयम् ॥

इत्यादि सन्निधिस्थापनव्याजेन गाढमालिङ्ग्य भयं त्याजितवानिति भाव' ॥ ४० ॥

**प्रागचुम्बदलिके ह्रियानतां तां क्रमाद्दूरनतां कपोलयोः । तेन विश्वसितमानसां झटित्याननं स परिचुम्ब्य सिस्मिये ॥ ४१ ॥**

प्रागिति । स ह्रिया आनतामतिनम्रान्तां प्राक् अलिके ललाटपट्टेऽचुम्बत् । अतिनतत्वात्तदानीं कपोलादिचुम्बनस्याशक्यत्वादित्यर्थः । ततः किञ्चिद्गतचुम्बनभयत्वात् पूर्वापेक्षया दरनतामीषन्नम्रां किञ्चिदुन्नतमुखीं क्रमात् परिपाट्या तदानीमेवान्यदा वा कियतापि कालेन द्वयोरपि कपोलयोश्चुम्बनेन ललाटफलकचुम्बनेन ततोऽपि विश्वसितमानसं यस्यास्तां ततो ऽप्युन्नतमुखीमानने झटिति मुखचक्रया द्विभयाऽऽशु परिचुम्ब्य दुर्लभाधरचुम्बनलाभजनितानन्दवशात् सिस्मिये ईषद्वक्रमहसत् । स्फुटहासे पुनर्लज्जा स्यादिति जयादीयज्ञत्वात्सेत्यर्थः । अयं च यदेतावन्पर्यन्तं त्वया वञ्चित तदधोदानीं मया लब्धमिति हासः । ललाटादीनि कामशास्त्रोक्तानि चुम्बनस्थानानि । इयमपि वित्तम्भणरीति ॥ ४१ ॥

**लज्जया प्रथममेत्य हुङ्कृतः साध्वसेन बलिनाथ तर्जितः । किञ्चदुच्छ्वसित एव तद्धृदि न्यग्भूव पुनरर्भकः स्मरः ॥ ४२ ॥**

लज्जयेति । ललाटादिचुम्बनक्रमानुभावजातसुखविशेषोल्लसितकामादयायास्तस्या हृदि मानसे किञ्चिदुच्छ्वसित एव विकसित एवार्भको मुग्धत्वादप्रौढ स्मर. प्रथमं चुम्बनजनितया लज्जया एत्य गत्य हुङ्कृतः हुङ्कारेण निषिद्ध. । अथ पश्चाद्बलिना प्रबलेन चुम्बनजन्येन साध्वसेन सात्त्विकभयेन तर्जितो भर्त्सितोऽस्मदीयमिमोद्दृदयलक्षण

स्वधनुषा समं सह मनागनामि शिथिलिता । कामेन धनुषि किञ्चिदारोप्यमाणे लज्जा ऽप्यस्या जातेत्यर्थः । पूर्वं भामीभयलज्जाभ्यां स्वाजितः, इदानीं तु भैमीभयं नलेन निराकृतं एका स्त्री प्रौरवशिष्टा सा कामेन सुखेनापितेति भयलज्जयो किञ्चिदपासनेन पूर्वं मन्दीभूतो ऽपि कामस्तोकं पुनरुल्ललासेति भावः । अनामि । ज्वलह्वलमि (पा० १२३ । ५ । ५) इति वार्त्तिकान्मित्वस्य पाक्षिकत्वान्मित्वाभावे ह्रस्वाभाव- मित्येऽपि चिल्लमूलोरिति ( पा० ६ । ४ । ९३ ) पाक्षिको दीर्घः ॥ ४८ ॥

सिस्मिये हसति तेन न स्म सा प्रीणितापि परिहासभाषितैः । स्वे हि दर्शयति ते परेण का ऽनर्घ्यवृत्तकुरुविन्दमालिके ॥ ४९ ॥

सिस्मिये इति । तेन परिहासभाषितैः परिहासप्रधानैः सप्रेमवचनैः प्रीणिता जनितप्रीतिरपि सा तस्मिन् हसत्यपि विकसत्कपोलनयनं ध्यलक्षितदन्तं सिस्मिये स्मितञ्चकार । दर्शितदन्तं प्रसरद्धास्यं तु न चकार । अन्या तु परिहासप्रीणिता हसति इयं तु नेति चित्रमित्यपिशब्दार्थः । हि यस्मात् प्रसिद्धे ऽनर्घ्ये निर्मूल्ये सुलभतया दन्तास्त एव ताम्रत्वात् कुरुविन्दानि माणिक्यानि तेषां मालिके ऽल्पे ह्रस्वे वा माले स्वे आत्मीये सद्वृत्तरूपे का कुलीना स्त्री परेणान्येन हासेन येन केनचित् पुरुषेण च दर्शयति दर्शनवत्यौ करोति, अपि तु हास्य स्त्रीणां दोष यैर्युत्तमस्त्रीत्वात् प्रकटितदशनं हास्यं न चकारेति युक्तं । न ह्यनर्घ्यं वस्तु अन्यस्मै प्रदर्श्यते । तेन सह न हसति स्मेति वा । स्मितहसितविहसितोपहासापहासातिहासप्रकारैर्हास्यरसो भरतेन षड्विधो निरूपित इति स्मितहसितयोर्भेदः । अथौ यः कर्त्तेति कर्तृसञ्ज्ञानुवादेन कर्मत्वविधानात् सञ्ज्ञापूर्वकविधेरनित्यत्वात् परेणेत्यत्र दृशेर्बुद्ध्यर्थत्वाद्गतिबुद्धीति (पा० १ । ४ । ५२ ) माप्तकर्मत्वाभावः ॥ ४९ ॥

वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रया

स्वधनुषा समं सह मनागनामि शिथिलिता । कामेन धनुषि किञ्चि-दारोप्यमाणे लज्जा ऽप्यस्या जातेत्यर्थः । पूर्वं मामीभयलज्जाभ्या स्वाजितः, इदानीं तु भैमीभयं नलेन निराकृतं एका स्त्री ह्रीरवशिष्टा सा कामेन सुखेनाक्षिपतेति भयलज्जयो किञ्चिदपासनेन पूर्वं मन्दी-भूतो ऽपि कामस्तोक पुनरुल्लसितेति भाव । अनामि । उपशब्दल न्ति (पा० १२५ । ५ । ५) इति वार्तिकान्मित्वस्य पाक्षिकत्वान्मित्-स्वाभावे ह्रस्वाभाव मित्येऽपि चिष्णमूलोरिति ( पा० ६ । ४ । ९३ ) पाक्षिको दीर्घ ॥ ४८ ॥

सिस्मिये हसति तेन न स्म सा प्रीणितापि प रिहासभाषितैः । स्वे हि दर्शयति ते परेण का ऽनर्घ्यवृत्तकुरुविन्दमालिके ॥ ५१ ॥

सिस्मिये इति । तेन परिहासभाषितैः परिहासप्रधानैः तन्नेनवचनैः प्रीणिता जनितप्रीतिरपि सा तस्मिन् हसत्यपि विकसत्कपोलनयनं यलक्षितदन्त सिस्मिये स्मितञ्चकार । दर्शितदन्त प्रसरद्धास्य तु न चकार । अन्या तु परिहासप्रीणिता हसति इय तु नेति चित्रमित्य-पिशब्दार्थं । हि यस्मात् प्रसिद्धेऽनर्घ्यौ निर्मूल्याः सुवृत्ता दन्तास्त एव ताम्बूलरागत्वात् कुरुविन्दानि माणिक्यानि तेषां मालिकेऽल्पे ह्र-स्वे वा माले स्वे आत्मीये मद्वं स्वरूपे का कुलीना स्त्री परेणान्येन हासिन येन केनचित् पुरुषेण च दर्शयति दर्शनवत्यौ करोति, अपि तु हास स्त्रीणां दोष मैथुनमरस्त्रीत्वात् प्रकटितदशनं हास्यं न च-कारेति युक्त । न ह्यनर्घ्यं वस्तु अन्यस्मै प्रदर्श्यते । तेन सह न ह-सति स्मेति वा । स्मितहसितविहसितोपहासाहहासप्रकारैर्हास्यरसो भरतेन पञ्चविधो निरूपित इति स्मितहसितयोर्भेदः । अपी यः कर्तेति कर्तृसञ्ज्ञानुवादेन कर्मत्वविधानात् सञ्ज्ञापूर्वकविधेरनित्य-त्वात् परेणेत्यत्र दृशेर्बुध्यर्थत्वाद्गतिबुद्धीति (पा० १ । ४ । ५२ ) मा-प्तकर्मत्वाभाव ॥ ४९ ॥

वीक्ष्य भीमतनयास्तनद्वयं मत्तहारमणिमुद्रया

ङ्कितं । सोढकान्तपरिरम्भगाढता सा त्वमानि सुमुखी सखीजनैः ॥ ५० ॥

योत्स्येति । सखीजनैस्तु सा सुमुखी सोढा कान्तस्य परिरम्भणा-नामालिङ्गनानां गाढता दृढपीडनं यया एवम्भूतामानि अनुमिता । किं कृत्वा । भीमतनयायास्तनद्वयं, स्तनद्वये मग्नानां हारमणीनां मुद्रया किञ्चिद्गम्भीररक्तीभूतस्थानयियाङ्कितं चिह्नितं वीक्ष्य । स्तनयो र्मग्नहारमणिस्थानदर्शनादन्यथानुपपत्त्या गाढालिङ्गनमनया सोढमि-ति सखीभिर्ज्ञातमित्यर्थः । सुमुखीत्यनेनालिङ्गनसञ्जातहर्षो ऽपि सूचितः ॥ ५० ॥

याचते स्म परिधापिकाः सखीः सा स्वनीविनि विडक्रियां यदा । अन्वमिन्वत तदा विहस्य ता वृत्तमत्र पतिपाणिचापलं ॥ ५१ ॥

याचत इति । सा यदा यस्मिन् समये परिधापयन्तीति परिधा-पिकाः सखीः स्वनीव्याः आत्मीयवस्त्रमेखलाबन्धस्य निविडक्रियां गाढबन्धनं याचते स्म प्रार्थितवती तदा ताः सख्यो ऽन्योन्यमुखवि-लोकनपूर्वं विहस्यात्र नीवीबन्धशिथिलीकरणार्थं वृत्तं जातं पत्युः पाणि चापलं बलादुन्मोचनव्यापारमन्वमिन्वतानुमितिविषयमकुर्वन् । अन्य-थैवं प्रार्थना न युज्यते इति पूर्ववृत्तं निश्चितवत्य इत्यर्थः । धापिर्ह्वि कर्मा । अन्वमिन्वत । मिनोतिरनुपूर्वो ज्ञानार्थे ॥ ५१ ॥

कुर्वती निचुलनं ह्रिया कियत् सौहृदाद्वियत सौरभं कियत् । कुङ्कुमैर्निमितसूनसेविनीं पद्मिनीं जयति सा स्म पद्मिनी ॥ ५२ ॥

कुर्वतीति । कामशास्त्रोक्तलक्षणा पद्मिनी सा भैमीपद्मिनीं कमलिनीं जयति स्म । कियता । कियत् किञ्चित्सुरतमादि सम्भोगकर्म ह्रिया नि-चुलिनं स्थगितमप्रकटं कुर्वती । कियदालिङ्गनादिकं सौहृदात् प्रीत्या

द् विवृतं प्रकटितं सौरभं कामशास्त्रोक्तकौशलं यत्र एवम्भूतं कर्त्रीणां । क्रियभूतां पद्मिनीं । कुड्मलोन्मिषितानि मुकुलान्येव प्रफुल्लानि नूतनानि पुष्पाणि सेवते भजत्येवंशीलां । अर्द्धविकसितपुष्पवर्ती निघुलितकलिकास्थानीया विवृतसौरभां विकसितपुष्पस्थानीयां । कियत् कलिकारूपकियद्विकसितमला कमलिनीव साभूदित्यर्थः । विवृतं सौरभं मनोज्ञत्वं सौगन्ध्यं वा यस्येति वा ॥ ५२ ॥

नाविलोक्य नलमासितुं स्मेरा ह्रीनं वीक्षितुमदा न्मृगीदृशः । तद्दृशः पतिदिशा चलन्त्यथ व्रीडिताः समकुचन्मुहुः पथः ॥ ५३ ॥

नेति । स्मेरा मृगीदृशः सुन्दर्यो भैम्या नलमविलोक्यासितुं स्थातुं ह्रीण्ण समीक्षितुं नाददात् यस्मात्तस्मात्तस्या दृशः कटाक्षविक्षेपरूपा नेत्रव्यापाराः क्रमेण पतिदिशा नलाधिष्ठितदेशमुद्दिश्य चलितवतीव वारं वारमचलन् । अथ पश्चात् अभिमुख नलनेत्रसम्मेलने सत्यनन्तरं व्रीडिताः सत्यः नलनमाप्य पथो मार्गादेव मुहुः पुनः पुनः समकुचन् परावृत्ताः कामप्रेरितत्वाद्वीक्षितुमारेभे, लज्जया निषिद्धत्वाच्च तदीक्षणान्निवृत्तेति भावः । लज्जाकामयोः समबलत्वाद्भावसन्धिः । दृशां व्यापारापेक्षया बहुत्वं ॥ ५३ ॥

नानया पतिरनायि नेत्रयोर्लक्ष्यतामपि परोक्षतामपि । वीक्ष्यते स खलु यद्विलोकने तत्र तत्र नयने ददानया ॥ ५४ ॥

नेति । अनया पतिः प्रियो नेत्रयोर्लक्ष्यतां गोचरत्वमपि नानायि परोक्षतामगोचरत्वमपि न प्रापि । नन्वेकस्य वस्तुनः परोक्षता वा भवेदपरोक्षता वा भवेन्न तूभयता विरोधादित्याशङ्क्यापपादयति । खलु यस्माद्धेतोः यस्य हारमुकुरस्तम्भादेर्वस्तुनो विलोकनं सति स नलो वीक्ष्यते तत्र तत्र हारादिवस्तुनि विषये नयने ददानया प्रेरयन्त्या मुकुरादेर्विलोकने तत्र तत्र प्रतिबिम्बितो नलोऽनुपलक्षितदर्श-

नेन दृष्टो मामियं पश्यतीति तेनाज्ञातत्वात् उद्देश्यतया विम्यरूपस्तु न दृष्ट इति विषयान्तरविलोकनव्याजेन प्रसङ्गात् सञ्जातदर्शनस्य नल स्योभयरूपताकारेण वैचित्र्यादेकस्यापि विरुद्धोजयरूपस्वरूपसम्भवे स- स्कारेन्द्रियाभ्यां सहोत्पादनाच्चास्ते प्रत्यभिज्ञावज्ञाके च रसतुरगोभयो भूतत्वाद्वेसरवञ्च युक्तेत्यर्थः । लज्जावशात् साक्षाद्यद्यपि नापश्यत्तथा- पि कामप्रेरितत्वाद्दर्पणादिद्वाराऽपश्यदिति भावः । वीक्ष्यते स्मेति पाठः सुयोजः । यद्यस्माद्विलोकने नलविलोकननिमित्तं तत्र तत्र व- स्तुनि नेत्रे ददत्या च वीक्ष्यते स्मैव तस्मात्सत्यता परोक्षताञ्च ना- नायीति वा ॥ ५४ ॥

वासरे विरहनिःसहा निशां कान्तसङ्गमभयं स मैहत । सा ह्रिया निशि पुनर्दिनागमं वाञ्छ ति स्म पतिकेलिलज्जिता ॥ ५५ ॥

वासर इति । सा यस्माद्वासरे दिने विरहनि सहा सम्भोगविच्छेद सोढुमशक्ता तस्मात् कान्तस्य सम्भोगसमय सम्भोगसमयरूपा निशां स मैहत, रात्रिः कदा वा समेष्यतीति । निशि प्राप्तायां पत्यु केलिभि. नवनवकामक्रीडाभिर्लज्जितात एव ह्रिया कृत्या पुनर्दिनोदय वाञ्छ- ति स्म । प्रभात कदा वा समेष्यतीति । हेतुहेतुमद्भावान्न पौनरुक्त्य । सहजया ह्रिया युक्ता ततोऽपि पतिकेलिभिर्विशेषेण लज्जितेति वा न पौनरुक्त्य ॥ ५५ ॥

तत् करोमि परमभ्युपैमि यन्मा ह्रियं व्रज प्रियं परित्यज । आलिवर्ग इव तां हृगित्यमूं शश्वदाश्व सनमूचिवान्नलः ॥ ५६ ॥

तदिति । नलः अमूं भैमीं वयस्यान्तर इति आश्वसनं विश्वासहेतु वच. ऊचिवान् । इति किं ? हे भैमि चतुर्विधेष्वालिङ्गनचुम्बनादिषु म ध्ये यत् त्वं अभ्युपैषि अनुमन्यसे तन्मत्रं केवलं अत्यर्थं वा करोमि ना न्यत्, तस्माद्ध्रियं मा व्रज, पुनरुपगूहनं किं वा भावीति चित्ते धृता

ज्ञियं परित्यज, यतोऽहन्ते घ्रालिवर्ग इव सखीसमूहतुल्यः, तस्मात्त्वस्मिन् यथा विश्वसिषि तथा मय्यपि विश्वसिहि भयं मायासीरिति । इह त इति पाठे इह चुम्बनादौ विषयेऽहन्त्वयालिवर्ग एव, सखीकर्तृके चुम्बनखादौ यथा कापि न भीतिस्तथात्रापी-त्यर्थः ॥ ५६ ॥

येन तन्मदनवह्निना स्थितं ह्रीमहौषधिनिरुद्धशक्तिना । उद्दिमद्भिरुददीपि तैः पुनः स प्रियप्रियवचोऽभिमन्त्रणैः ॥ ५७ ॥

येनेति । येन तस्या मदनरूपेण वह्निना, ह्रीरेव महौषधिर्दिव्यौषधिस्तया निरुद्धा शक्तिः सामर्थ्यं यस्य तेन, लज्जया विलीनेन स्थितं, स कामाग्निः पुनः उद्दिमद्भिः प्रकृतार्थसाधनसमर्थैस्तैरुक्तरूपैः प्रियस्य प्रियवचांसि तद्रूपाण्यभिमन्त्रणानि रहस्यमन्त्ररूपास्तैरुददीपि प्रदीपि प्रकटीकृतसामर्थ्योऽकारीत्यर्थः । पूर्वोक्ताश्वासवचनैः पुनरुद्दीप्तकामा जातेति भावः । अन्योऽपि वह्निरौषधवलितशक्तिः उद्दिमद्भिर्मन्त्रप्रकाशकैर्मन्त्रैः पुनरुद्दीप्यते । उददीपि । दिप दीप्तौ । दीप्ता समुद्दीप्तकरणं । अत्र समासोक्तिरलङ्कारः ॥ ५७ ॥

यद्विधूय दयितार्पितं करं दोर्द्वयेन पिदधे कुचौ दृढं । पार्श्वगं प्रियमपास्य सा ह्रिया तं हृदि स्थितमिवालिलिङ्ग तत् ॥ ५८ ॥

यदिति । सा दयितेन मर्दनाय कुचयोरुपर्यर्पितं करं कराभ्यां विधूय निराकृत्य स्वस्तिकस्वरूपेण करद्वयेन दृढं कुचौ यत् पिदधे तत्तेन कुचपिधानप्रकारेण पार्श्वग समीपे स्थितं प्रियं ह्रियापास्य हृदि स्थितं तमेवालिलिङ्गेवेत्युत्प्रेक्षा । स्त्रीणां गात्रस्पर्शो यन्निवारणं तदेव कामस्य परमायुधं । आलिङ्गनेन यथा कामः प्रदीप्तो भवति तथा कुचमर्दननिषेधपरेण कुचपिधानेनापि नलः प्रदीप्तकामो जात इति भावः । मुग्धाजातिरियं ॥ ५८ ॥

अन्यदस्मि भवतीं न याचितायारमेकमधरं ध.

यामि ते । इत्यसिस्वददुपांशुकाकुवागुपमर्द्दहठवृत्तिरेव तं ॥ ५९ ॥

अन्यदिति । इति एवम्प्रकारादुपांशु सद्दाभीत्या प्रार्थनादैन्यवशात् काकु ध्वनिविकारयुक्ता वाक् यस्य स नलो दीनप्रार्थनवशात् किञ्चिदनुमतौ सत्यामुपमर्द्द दन्तदशनोष्ठपीडनगाढालिङ्गनादौ या हठ तेन सहिता वृत्तिरधरपानादिव्यापारो यस्य सोऽयमन्यदा करधूननादिसविघ्नाधरपानहठवृत्तिर्यस्य वा एवम्भूत एव सन् तमधरमसिस्वदत् अपात् । एवमालिङ्गनाद्यपि । इति किं? हे भैमि अहं भवतीं त्वामन्यदपरं किमपि कुचमर्द्दनादि न याचितास्मि प्रार्थयिष्ये, किन्तर्हि अहं एकवारं तेऽधरं धयामि पिबामि । अपाने दीनवचनं । पाने तु बलात्कारं एकवाराधरपानानुमतेरुपमर्द्देन चाङ्गेन ताडिता हठवृत्तिरननुमतद्वितीयवाराधरपानव्यापारो यस्येति वा । एकवाराधरपानमात्रानुमतौ लब्धायामालिङ्गनाद्यपि द्वितीयाद्यधरपानमप्यकरोदपराधमाजनं त्वमन्तरं करिष्यामीति बुद्धेरिति । पूर्वं मात्रपानमात्रमकरोदनन्तरं नखक्षताद्यपीति केचित् । अन्यदेति पाठे क्षणान्तरे पुनरधरपानमपि न याचिष्य इत्यर्थः । सोऽयमर्द्देति पाठे कोऽयमर्द्द किञ्चिन्मात्रो हठो यत्रैवंविधो व्यापारो यस्य । पूर्व्वपाठे स इति ज्ञेयः । याचिता तृच् । वारं । काले द्वितीया ॥ ५९ ॥

पीतताविकमुखासवोऽधुनाभृत्य एष निजकृत्यमर्हति । तत्करोमि भवदूरुमित्यसौ तत्र सन्धिन पाणिपल्लवं ॥ ६० ॥

पीतेति । असौ नलः इत्युक्तिव्याजेन तयोरूरौ पाणिपल्लवं मृदुसुखस्पर्शतया पल्लवतुल्यं पाणिं सम्यधित स्पृष्टुं सन्निवेशितवान् इति किं? हे भैमि एष भृत्यः नलनामा दासः पीतताविकमुखासवः मत्तः पीतस्तावकस्त्वदीयमुखासवो येन स पीतताविकमुखासवो यतोऽयम्भूत एवम्भूतो अधुना निजस्य परिचारकस्य चरणसंवाहनादिरूपं भृत्यमात्रोचितं कार्यं कर्तुमर्हति उचितो भवति । तस्मात्त्वदीयमूरुं सम्वाहनादिना सेवे भवदूरू त्वदीयमूरुं

करोमि संवाहयामि । अथ सामर्थ्याद्दूर्ध्वं करोमीति । अनेकार्थत्वात् करोतिः संवाहनार्थः । अन्योऽपि भृत्यो भुक्तसुप्तोच्छिष्टचरणसंवाहनं करोति ॥ ६० ॥

चुम्बनादिषु बभूव नाम किं तद्भया भयमिहापि
मा कृथः । आलपन्निति तदीयमादिमं स व्यध
त्त रसनावलिव्ययं ॥ ६१ ॥

चुम्बनेति । इत्युदीर्य्य, सोऽयं नलः, मृगीदृशस्तदानीमतिसमय-भ्रमदृशो भैम्या आदिमं कदाचिदप्यकृतपूर्वत्वात् प्रथमं रसनावलि-व्ययं मेखलाकलापमोचनं निर्ममे चक्रे । उरुस्पर्शादौ यास्य भयञ्च भजन्त्या भैम्या एवमिति भयपूर्वकं वचनमाचकर्षेति भावः । इति किं ? नामेत्यनुभूतविषयप्रश्नाभिनये, हे भैमि चुम्बनालिङ्गनादिषु किं नाम विरुद्धं बभूवापि तु न किञ्चित्, तस्मादिहाप्यस्मिन् क्रियमाणे सुरतारम्भेऽपि कुचपीडने वा मेखलामोचने वा वृथा अकारणं भयं मा कृथाः ॥ ६१ ॥

अस्तिवाम्यभरमस्तिकौतुकं सास्तिघर्मजलम
स्तिवेपथु । अस्तिभीति रतमस्तिवाञ्छितं प्रा
पदस्तिसुखमस्तिपीडनं ॥ ६२ ॥

अस्तीति । सा एवम्भूतं रतं प्रापत् । किम्भूतं । आरम्भसमये अस्ति वर्त्तमानो वाम्यभरो रतिप्रातिकूल्याचरणबाहुल्यं यत्र, आरम्भानन्तरञ्च अस्ति कौतुकं अननुभूतचरत्वादत्याश्चर्यं यत्र, ततोऽपि सात्त्विकोत्पत्तेः अस्त्येवास्ति घर्म्मजलं यत्र, तथा अस्ति वेपथुर्यत्र, ततः सम्भोगे प्रारब्धे भये निवृत्तेऽपि किमन्ते भावीत्यस्ति भीतिर्यत्र, तथा सुरतहेतुत्वादस्ति वाञ्छितमभिलाषो यत्र, तथा लिङ्गकससम्मर्दादस्ति सुखं यत्र, समरससुरतावसानमज्ञातसुखमिति यावत्, ततोऽप्यस्ति पीडनं सम्भोगावसाने सर्वाङ्गगाढालिङ्गनं यत्र, एवम्भूतं प्रथमसम्भोगमत्यभूदिति भावः । अस्तीति (सि० कौ० २९।१।३५) विभक्तिप्रतिरूपमव्ययं । अस्ति क्षीरादयश्चेति समासः ॥ ६२ ॥

बाह्विति । तेन बोधिता सा भैमी इति पूर्वोक्तप्रकारेण समकेति सङ्केतिता । इति किं । हे भैमि उत्सुकाः स्वस्वकार्य्यसाधनोत्साहयन्तो जना यत्र रात्रिवृत्ताकर्णनाद्यर्थमुत्सुकः सखीजनो यत्रैवंविधे वा दिने, स्मित इति भैमीसम्बोधनं वा, दिवसेऽपि ते सम्बन्धिनीः, बाहू च वक्त्रं च जघनं च स्तनौ च अङ्घ्री च तस्य बाह्वादेः कामशास्त्रप्रसिद्धा ये बन्धा नागपाशादीनि करणानि तेषां गन्धो लेशो विद्यते यत्र तादृशं रतं तेन सङ्गता मिलिताश्च ता नतयश्च नितरां नम्रत्वातिकौशलातिशयनिर्म्मितावयवधर्म्मीभावान् सङ्गता इति पृथग् वा नतीरिच्छुरभिलाषुकोऽस्मीति रात्रिकृतबन्धरतप्रत्यभिज्ञानं यथा जायते तथा वीक्षणमात्रेणेङ्गितं कृत्वानुरागातिशयाद्दिनेऽपि स्वीय तादृग्रताभिलाषं तां प्रति ज्ञापितवानिति भावः । यद्वा बाह्वादेस्ताप्रसिद्धाः क्रमेण बन्धश्च गन्धश्च रतञ्च सङ्गतञ्च आनतिश्च ता बाहोर्नागपाशादिबन्धो वक्त्रस्य गन्धः पद्मिनीत्वात् सौरभं जघनस्य रतं स्तनयोः सङ्गतं श्लेषश्चरणयोः पतनमानतिरित्यर्थः । स्वत्सम्बन्धिनीस्ताः स्वस्वव्यापारकरणमात्रनिरता दुःखिता जना यत्रैवम्भूते दिनेऽपि इच्छुरस्मीति विधबिना नामेन स्वाशयं ज्ञापिता । यद्वा त्वां पश्यामि तदेवं ममैव बाह्वादेति त्वद्दर्शनमेव मम सम्भोगसमय इति च ज्ञापितेति भावः । उत्सुकसखीजनेस्मिते इति पाठे रात्रिवृत्तप्रश्नश्रावणा-गोपनार्थे तस्माल्लज्जा माभूदिति अस्मिते स्मितरहिते ब्रीडिते एवंविधे सानुमेयोत्सुके सखीजने सखीजनसन्निधौ पूर्वोक्तप्रकारेण वा तेन सङ्केतिता शङ्किता । यद्वाऽऽभाषयति बाहुबन्धादि तदिदानीमिच्छुरस्मीति रात्रिवृत्तान्तज्ञापनार्थं सखीसन्निधावेवमुवाचेत्यर्थः, अत एव सा ब्रीडिता । उत्सुके सखीजने स्मिते प्रारब्धहास्ये सति ब्रीडितेति वा । त्वं भैमि ते बाह्वादिबन्धादीन् दिने बोधिना दृष्टा एवम्भूतोऽभिलाषुकोऽस्मि, रात्रौ यद्यपि कृतास्तथापि न दृष्टाः । तस्माद् दिने तद्दर्शने दिदृक्षुरस्मीत्येव सा तेन शङ्किता न परमहमेव किन्तु त्वत्सखीजनोऽपीत्युत्सुकपदेन सूचितमिति वा । व्याख्यानान्तर ग्रन्थगौरवभयान्नोक्तं । नतीरित्यत्र चतुर्थीसहितेत्येताभ्यां योगे, न

लोकेति ( पा० २ । ३ । ६९ ) षष्ठीनिषेधः ॥ ६५ ॥

**प्रातरात्मशयनाद्विनिर्यतीं संनिरुध्य यदसाध्यमन्यदा । तन्मुखार्पणमुखं सुखं भुवो जम्भजित्क्षितिशचीमचीकरत् ॥ ६६ ॥**

प्रातरिति । भुवो जम्भजिद्भूमीन्द्रो नलः प्रातरात्मशयनादुत्थाय विनिर्यतीं शीघ्रं बहिर्निर्गन्तुकामां संनिरुध्य चेलाञ्चलादौ सम्यक् धृत्वा क्षितिशचीं भूमीन्द्राणीं सुन्दरीं यौवनाद्यवतीं च अन्यदा अन्यस्मिन् काले रात्रौ प्रायेण क्षोभवशाद्यदसाध्यमप्राप्य तत्तस्या मुखार्पणं मुखचुम्बनादिर्यस्य तत् सुखं सुरतं अचीकरत् । रात्रिप्राप्तसमये त्वं न दुक्तं चेत् करिष्यसि तर्हि दुष्करमप्राप्य तुभ्यं दास्यामि नान्यथेति तां संनिरुध्यालिङ्गनादि कृतवान् । सा गन्तुकामापि चेदेतदुक्तं न करिष्यामि तद्येव गन्तुं न दास्यति सखीनां चायमत्रागमनसमय इति विचार्य चुम्बनादि दत्त्वा शीघ्रं निर्गतेति भावः । सुखमनायासेनाचीकरदिति क्रियाविशेषणं वा । प्रभातसमये पद्मिनी रन्तव्येति कामशास्त्रं । क्षितिशचीमिति । ह्रक्रोरिति (पा० १।४।५३) कर्मत्वं ॥ ६६ ॥

**नायकस्य शयनादहर्मुखे निर्गता मुदमुदीक्ष्य सुभ्रुवां । आत्मना निजनवस्मरोत्सवस्मारिणीयमहृणीयत स्वयं ॥ ६७ ॥**

नायकस्येति ॥ अहर्मुखे प्रातर्नायकस्य शयनान्निर्गता इयं भैमी सुभ्रुवां प्रौढानां सुन्दरीणां सख्यादीनां स्वस्वप्राणेशसुरतजनितां मुदमानन्दमुदीक्ष्य आत्मनैव निजः स्वीयो नवः स्मरोत्सवः सम्भोगस्तस्य स्मारिणी स्मरणशीला सती स्वयमेवाहृणीयत लज्जिता । अपतिव्रीडित मत्स्वीजालि । शयनान्निर्गतां सखीनां प्रौढदयितपीनपयोधराग्रमालोकनादि दृष्ट्वा स्वमपि सोत्कटलिङ्गनादि स्मरन्त्येव एषा निजनवस्मरोत्सव सखी स्मरयन्त्येवशीला या सती स्वयं लज्जिता । निजपवेत्यपि पाठः । सुभ्रूशब्दः कद्वादि. ॥ ६७ ॥

तां मिथोऽभिदधतीं सखीं प्रियस्यात्मनश्च स निशाविचेष्टितं । पार्श्वगः सुरवरात् पिधां दधदद्रूश्यतां श्रुतकथो हसन् गतः ॥ ६८ ॥

तामिति । स नलः तां भैमीं हसन् दृश्यतां गतः, स्वेच्छयैव पुनर्नेत्रगोचरत्वं प्राप्तः । किम्भूता । प्रियस्य नलस्य आत्मनः स्वस्य च स्वसखीं प्रति मिथो रहसि निशाविचेष्टितं सम्भोगादि रात्रिवृत्तान्तमभिदधती कथयन्तीं । किम्भूतः । सुराणां वरात् पिधामदृश्यत्वं दधत्, अत एव पार्श्वगो निकटस्थः, अत एव श्रुता भैम्याभिधीयमाना रात्रिवृत्तान्तकथा येन । अदृश्येन मया अत्रैव स्थित्वा सर्वं श्रुतमिति प्रत्ययो भूत्वा हसन् प्राकट्यमगादित्यर्थः । हसन्नुत इति पाठे श्रुतकथो दृश्यतां गतस्तामहसदित्यर्थः । पिधेति आतश्चोपसर्गे (पा०३।३।१०६)इत्यङ्॥६८॥

चक्रदारविरहेक्षणक्षणे बिभ्यती धवहसाय साभवत् । क्वापि वस्तुनि भवत्यनागतं चित्तमुग्रदनिमित्तवैकृतं ॥ ६९ ॥

चक्रेति । सा भैमी चक्राणां चक्रवाकानां दारैः चक्रवाकीभिः सह विरहस्य वीक्षणक्षणे दर्शनकाले सन्ध्यायां, ममापि प्रियेण सहैतद्वियोगो माभूदिति क्षणमात्रमपि वियोगाद्बिभ्यती धवस्य नलस्य हसाय हासार्थमभवत् । सन्ध्यावन्दनमात्रजन्येनैव वियोगेन चक्रवियोगदर्शनमात्रेण च किमिति बिभेषीत्येव सा प्रियेण हसितेत्यर्थः । तावतैव वियोगेन तद्वियोगदर्शनमात्रेण च किमिति भीतेत्याशङ्क्याह क्वापि कस्मिंश्चिद्वस्तुनि विषये उग्रदुत्पद्यमानमनिमित्तमकारणं वैकृतं हर्षशोकभयादि यस्मिन्नेवम्भूतं चित्तं कर्तृ अनागतभाविनमर्थं शुभमशुभं वा वदति, तस्माद् भाविवियोगसूचिका साधारणी तस्या भीतिरुक्तेत्यर्थः । भावी विरहः सूचितः । इयं ज्ञातास्वादा नितरां मय्यनुरक्ता चेति सन्तोषवशात्तु स तेन हसितेति भावः । बिभ्यतीं स परिरभ्य मुग्धहेति पाठे भयमोचनार्थं गाढमालिङ्ग्यैव तस्थावित्यर्थः । विकृतिरेव वैकृतं, प्रज्ञादित्वादण् ॥ ६९ ॥

चुम्बितुं न मुखमाचकर्ष यत् पत्युरन्तरमृतं ववर्ष तत् । सा नुनोद न भुजं यदर्पितं तेन तस्य किमभून्न तर्पितं ॥ ७० ॥

चुम्बितुमिति । सा क्रमेण गतभीर्जितलज्जा च सती चुम्बितुं प्रियेण चुम्बितुमारब्धं मुखं यन्नाचकर्ष वक्रीचक्रे तच्चुम्ब्यमानमुखानाकर्षणं कर्तृ पत्युरन्तश्चेतसि अमृतं ववर्ष । तदीयं मनः सुधावृष्ट्येव परितुष्टं चक्रे इत्यर्थः । तथा तेन स्तनादावर्पितं भुजं यच्च नुनोद निराचकार तेन भुजस्वीकारेण प्रयोजकेन तस्य किमङ्गं तर्पितं नाभूत् अपि तु सर्वाङ्गं तेन प्रीणितमभूत् ॥ ७० ॥

नीतयोः स्तनपिधानतां तया दातुमाप भुजयोः करं परं । वीतबाहुनि ततो हृदंशुके केवलेऽप्यथ स तत्कुचद्वये ॥ ७१ ॥

नीतयोरिति । स नलः तया पार्श्वपीडनभिया स्तनपिधानतां कुचाच्छादनतां नीतयोः प्रापितयोस्तदीयभुजयोः परं केवलं करं दातुं स्पृष्टुं आप शक्तोऽभूदित्यर्थः । ततोऽनन्तरं वीतबाहुनि अपनीतभुजे हृदंशुके हृदयावरणवस्त्रे करं दातुमाप । अथ ततोऽपि पश्चात् केवले निरंशुके तत्कुचद्वये करं दातुमाप । मुग्धाजातिः । लज्जापचय-कामोपचयौ क्रमेणोक्तौ ॥ ७१ ॥

याचितां न ददतीं नखार्पणं तां विधाय कथयान्यचेतसं । वक्षसि न्यसितुमात्ततत्करः स्वं विभिद्य मुमुदे स तन्नखैः ॥ ७२ ॥

याचितामिति । स्वमपि नखोल्लेखं कुर्विति प्रेमभरेण याचनादपि नखक्षतं न ददतीं कयापि कथयान्यस्मिन् गोष्ठीरूपे कथ चेतो यस्यास्तादृशीं विधाय च गोष्ठीसंवादसुखाभिनयव्याजेन स्ववक्षसि न्यसितुं स्थापयितुं आत्तः स्वहस्तेन गृहीतस्तस्याः करो येनैवम्भूतः सन् तस्याः स्वकरनखैस्तन्नखैः स स्वशरीरं विभिद्योल्लिख्य मुमुदे ॥ ७२ ॥

स प्रसह्य हृदयापवारणं हर्तुमक्षमत सुभ्रुवो ब-
हिः । ह्रीमयं न तु तदीयमान्तरं तद्विनेतुमभ-
वत् प्रभुः प्रभुः ॥ ७३ ॥

स इति । स प्रभुः स्वामी सुभ्रुवो भैम्याः बहिर्हृदयापवारणं स्तनाच्छादि वसनं प्रसह्य हठाद्धर्तुमक्षमत, न तु पुनः ह्रीमयं आन्तरं अन्तस्थं भैमीसम्बन्धि तत्कामक्रीडानिवारकं कुलस्त्रीहृदयभूषणीभूतमपवारकमपनेतुं प्रभुः समर्थो नाभवत् । एवं विस्रम्भणक्रमेण यद्यपि लज्जा त्याजिता तथापि हृदयाच्छादिवस्त्रापाकरणपूर्वं कुचस्पर्शादिना पुनरपि लज्जितैवेति भावः ॥ ७३ ॥

सा स्मरेण बलिनाप्यहापिता ह्रीक्षमे भृशमशो-
भताबला । भाति चापि वसनं विना न तु
व्रीडधैर्यपरिवर्जनं जनः ॥ ७४ ॥

सेति । सा बलिना प्रभाववता अथ च प्रद्योतेनापि स्मरेण ह्रीक्षमे लज्जाधैर्ये अहापिताऽत्याजिता सा अबला स्त्री अथ च बलीत्वाद्दुर्बला भृशमशोभत, युक्ताऽयमर्थः । यतो जनो वसनं विनापि भाति च शोभत एव न तु पुनः व्रीडधैर्ययोः परिवर्जने परित्यागे नैव शोभते । तस्माद्युक्तमर्थान्तरन्यासः । उद्दीप्तेऽपि कामे लज्जाधैर्यापरित्यागात्कितरां नलस्य स्पृहणीयत्वात् शुशुभ इति भावः ॥ ७४ ॥

आरतेऽथ नेति रतयाचितेन चेन्मामतोऽनुमतम-
स्मि स्फुटं । इत्यमुं तदभिलापनोत्सुकं धूनि-
तेन शिरसा निरास सा ॥ ७५ ॥

आरतेति । सा इत्येवमनङ्ग्या अनिषेधार्थमपि तस्याः अभिलापने मञ्जुलवाणीश्रवणे उत्सुकं कौतुकिनममुं धूनितेन कम्पितेन शिरसा कृत्वा निरास निषिषेध । इति किं । हे भैमि त्वं मह्यं सुरतं देहि प्रसीदेति सुरतयाचितं मां यद्यस्माक्षेति न आस्य ध्याता हेतोरप्रसिद्धमनुमतं भवतीति न्यायेन स्फुटं सुरतं कुर्विति मामनुमितवत्यसि अनुज्ञातवती

स्यमसीति, इय सुरत नानुमन्यते पर मया सह न वदत्यपीत्येव परिहासज्ञापणे क्रियमाणे निषेधार्थमपि किञ्चिद्वदिष्यतीत्याशया नलेन तद्वाचनार्थमेव यत्ने कृतेऽपि कुशः । नञ्जाधैर्य्यवशाच्छिराधूननेनैव तन्निषेधस्तु साक्षादक्षरमप्युवाचेति भाव. ॥ ७५ ॥

या शिरोविधुतिराह नेति ते सा मया न किमियं समाकलि । तन्निषेधसमसङ्ख्यताविधिर्व्यक्तमेव तव वक्ति वाञ्छितं ॥ ७६ ॥

येति । हे भैमि ते या शिरोविधूति शिर कम्प. नेत्याह निषेधार्थं ब्रूते मया सेय किं न समाकलि सम्यक न ज्ञातापि तु सम्यग्ज्ञातैव । कथमित्याह । तयोः शिरोधूनिरूपयोर्निषधयोर्या समसङ्ख्यता तुल्यसङ्ख्या सा तववाञ्छित सुरतरूप विधि व्यक्तमेव वक्ति वदति सुरत तवेष्टमित्याहेत्यर्थ. । द्वयोरेव निषेधयो सुन्दोपसुन्दन्यायेनान्योन्यघाताद्धौ नञौ प्रकृत्यर्थं गमयत इति न्यायेन च सुरत त्वया विधेयमेवेति मा प्रति विधावेव तात्पर्य्यमिति मया त्वदाशयो ज्ञात इति भाव. । इति पुनरपि भैमीवादनार्थे वक्रोक्ति । विधिरिति पाठ तस्य नाप्रार्थितस्य शिरोधूनतिद्वयरूपौ निषेधौ तया. समसङ्ख्यैनैव विधिः । स तवाभिलाप स्पष्टमेव वक्तीति व्याख्येय ॥ ७६ ॥

नाथ नाथ शृणवानि तेन किं तेन याचमिति तां निगद्य सः । । सास्म दूत्यगतमाह त यथा तज्जगाद मृदुभिस्तदुक्तिभिः ॥ ७७ ॥

नेति । स नलस्ता इति पूर्वोक्तं निगद्योक्त्वा, सा दूत्यं गतं प्राप्त दूत्येन हेतुना वा भैमीसविध गत त नल तदद्य पिकस्य यूण इत्यादि यथा आह स्म ब्रूते स्म, तदैव मृदुभिरतिमञ्जुलाभिस्तस्या भैम्या वक्तिभिस्तज्ज्ञापनानुकारिणीभिर्जगाद सादृश्येनानुदितवानित्यर्थ. । इति किं । हे भैमि, अह ते याच न शृणवानि तेन मद्श्रवणेन हेतुना मया नाकर्णनीयमिति बुद्धा त्व नाथ न ब्रूषे न कि त्वद्वाक्यानि मया पुनरेवाकर्णितानि इदानीं तव भाषण मया न श्रोतव्यमिति बु-

चैवेयं मुखमुद्रणेति त्वया वक्तव्यमित्यवददिति भावः। त्वं गादर्येति स्वरभङ्ग्या मामवादीरित्यर्थः। किमित्याक्षेपे वा ॥ ७७ ॥ पुरमम् ॥

नीविसीम्नि निबिडं पुरारुणत् पाणिनाथ शिथिलेन तत्करं। सा क्रमेण न न नेति वादिनी विघ्नमाचरदमुष्य केवलम् ॥ ७८ ॥

नीवीति। सा पुरा प्रथमं सम्भोगारम्भे नीविसीम्नि वर्त्तमानं तस्य करं स्वपाणिना निबिडमतिगाढं यथा तथा अरुणत्। अथानन्तरं क्रमेण भयभङ्गानन्तरं दिनान्तरे नितम्बजघनस्पर्शकारिणं नलकरं शिथिलेन पाणिना रुरोध। ततोऽपि लज्जाविजयानन्तरं निषेधनार्थं न न नेति वादिनी सती अमुष्य नलकरस्य नलस्यैव वा केवलं विघ्नमाचरत्। न न नेत्युक्ते यदि न निवर्त्तेत मा निवर्त्ततु यदापि तावदेवमिति वचोमात्रेण विघ्नमाचरन्न तु कर्म्मणेति भावः। मुग्धाजातिः। भयलज्जात्याग सूचितः ॥ ७८ ॥

रूपवेषवसनाङ्गवासनाभूषणादिषु पृथग्विदग्धतां। सान्यदिव्ययुवतिभ्रमक्षमा नित्यमेत्य तमगान्नवा नवा ॥ ७९ ॥

रूपेति। सा रूपेषु देववरदानात् कामधारणनिर्म्मितेषु सौन्दर्य्यविषयेषु, वेषेषु महाराष्ट्रलाटगुर्जरादिस्त्रीधृतकच्छालङ्कारादिशृङ्गारभङ्गीषु, वसनेषु नीलपीतदुकूलादिषु वस्त्रेषु, अङ्गवासनासु चन्दनकस्तूरीकर्पूराद्यङ्गरागैरगुरुचन्दनादिधूपैश्च कृतेषु देहामोदेषु, भूषणेषु सौवर्णेषु मुक्तामाणिक्यहीरकादिखचितेषु अलङ्कारादिषु विषये पृथक् प्रत्येकं प्रतिदिनं विदग्धतां चातुरीमेत्य प्राप्यातएव नवा नवा नूतना सती नित्यं तमगात् सम्भुभुजे इत्यर्थः। किम्भूता। अन्यस्या दिव्ययुवतेरम्भादिस्वर्गस्त्रिया भ्रमे इयमेव सेति भ्रान्तौ क्षमा योग्या समर्थेत्यर्थः। अन्वहमन्येयमिति तस्य चेतसि स्फुरितेत्यर्थः। वा इवार्थः। नित्यं नवेव साऽगादपि तु नवीनेव जातेति काकुः।

सं चुम्बनालिङ्गनचरणपतनादिना ध्वनुनीय प्रसाद्य अनन्तरं इय मां प्रमादयति चेत्तर्हि मदीप्सितं करिष्यतीति बुद्ध्या पुनरर्थनं तदङ्ग याचमानं सं, तदीयां नलीयां हठात् बलात्कारेण सम्भुक्ततां सम्भोगेच्छुतां आ मर्य्यादीकृत्य नान्यमन्यत तावन्नानुमेने । पूर्वं याच्ञापूर्वं सम्भोगे प्रवृत्तोऽनन्तरं तदीयवामत्वाद्दोषवशादौदासीन्य गतः इत्यनन्तरं प्रति गमिष्यसीति बुद्ध्या तयानन्तरमनुनीतः सन् पुनरर्थ्यमानोऽपि यावद्बलात् सम्भोगं करोति तावन्नानुमतोऽनन्तरं त्वनुमत इत्यर्थः । याच्ञानन्तरमेवानुमनने तादृशोऽनुरागो न वर्द्धते, तदीयमनुरागमात्मनि परां कोटिं प्रापयितुं हेतुरूपं सम्भोगमेवैच्छदिति भावः । अनुनयानन्तरं सम्भोगे कृतेऽपि अनुरागातिशयात् पुनः सुरताभिलाषिणा नानुमेन इति पुनःशब्दार्थो वा । रोपितं । यन्ताश्लिष्टा । आतदीयेति । मर्य्यादायामव्ययीभावो नपुंसकत्वाद्ध्रस्वत्वं ॥ ८२ ॥

आद्यसङ्गमसमादरलब्धवाद्भ्रमभाय ददती क-
थञ्चन । अङ्गकानि घनमानवामताव्रीडल-
म्भितदुरापतानि सा ॥ ८३ ॥

आद्येति । सा अङ्गकानि दृश्यानि मौग्ध्यातिशयादनुकम्पानि नितान्यङ्गा न आद्यसङ्गमेन प्रथमसम्भोगेन समस्तुल्य आदरः प्रास्त्युपायासक्तिर्येषु, प्रथमसम्भोगे भयलज्जात्यागपूर्वं विश्वासार्थं यावान् प्रतारणाद्युपायः कृतस्तावानेव पाश्चात्येष्वपि सम्भोगेषु यत्प्राप्तये नलेनापाय. कृतस्तादृशीं प्रीतिं यावत् अधात् दधार । यतो यत्नभावादितिप्रयत्ने नलाय कथञ्चन भूयसा प्रयासेन तान्येव ददती, इत्यत्रापि हेतुः । यतो घनैर्दृढैः मानवामताव्रीडैः मान प्रीतिकलहोदासीनता वामता स्व कृतसमर्पणप्रातिकूल्य व्रीडा लज्जा तैः घनेन मानेन वा वामतया तया लज्जया च लम्भिता प्रापिता दुरापता दुर्लभता येषां तानि । आदौ विवाहात् पूर्वं यः समागमस्तत्कालीनेनादरेण तुल्यादरायेति वा । मानादिना तदङ्गाना दुष्प्रापत्वादिच्छाविवृद्धेर्नलीयोऽनुराग मत्यद्ध परां कोटिमध्यारोहदिति भावः । अङ्गकानि । दृश्यानुपायादिति वा कन् । वामतायुक्ता व्रीडेति समासः ॥ ८३ ॥

पत्युरागिरिशमातत क्रमात् स्वस्य चागिरिजमा लत वपुः । तस्य चार्हमखिलं पतिव्रता क्रीडति स्म तपसा विधाय सा ॥ ८४ ॥

पत्युरिति । सा पतिव्रता धर्म्मेण तपसा तपःफलेनेन्द्रादिवरदानेन वा पत्युर्नलस्य वपु आगिरीश हरमारभ्यातरु तरुपर्य्यन्त तथा स्वस्य चागिरिज पार्वतीमारभ्यालत लतापर्य्यन्त लतामारभ्य पार्वतीपर्य्यन्त वा आरोहणक्रमेण प्रथम प्रियस्य पश्चादात्मन इत्येव रुपेण वा, गिरिशरूपे गिरिजारूप तरुमारभ्य गिरिजापर्य्यन्त वा, तथा स्वस्य चात्मन शरीर गिरिशरूपे लताकपनित्वेयरूप क्रमेण विधाय तत्तद्रूप विरचय्य तस्यावलम्बितशरीरान्तरस्य सम्बन्धि अखिल यज्ञापाद्येपादि-क्रीडादि चार्हं योग्य तदपि विधाय क्रीडति स्म । यत पतिव्रता । न हि पतिव्रताना किञ्चिदसाध्यमस्ति । चाऽवधारणे । अखिल नानापायेपादि तत्स्यैवार्ह यथा तथा देह इति वा ॥ ८४ ।

न स्थली न जलधिर्न कानन नाद्रिभून विपयो न विष्टप । क्रीडिता न सह यत्र तेन सा. सा त्रिधैत्र न यथा यथा न वा ॥ ८५ ॥

नेति । सा तेन सह यत्र न क्रीडिता सम्भोग सादृत सा स्थली अकृत्रिमा भूरेव नास्ति । तथा न जलधि कूपमारभ्य समुद्रपर्यन्त स जलाशयो नास्ति । तथा कानन तत् दुर्गम वनं नास्ति । नाद्रिभूर्नास्ति । न विषय कपटादिरुपो देशविशेष एव सुखहेतु स्त्रक्चन्दनादिर्वा नास्ति । तद्विष्टप भूर्भुव स्वराद्यपि नास्ति । यस्या यस्मिन् वा तेन सह सा न विक्रीडितेति प्रत्येक योज्य । वा समुच्चये । तथा सा विधेव पुरुषायितादिरूप कामशास्त्रोक्त प्रकार एव नास्ति यया यथा येन ये न प्रकारेण सा न क्रीडिता । उत्तान सम्भोगनिषेध पूर्व श्लोके नानाक्रपापारशोक्तं मत्स्यादिकविपयाविषेधा न, मनुष्याधिकारत्वाच्च स्वर्मेति संयम । क्रीडिता । गत्यर्थाकर्मक (पा०३।४ ७२) इति कर्तरि निष्ठा॥८५॥

नम्रयांशुकविकर्षणे प्रिये वक्त्रवातहतदीप्रदीपया । भर्तृमौलिमणिदीपितास्तया विस्मयेन ककुभो निभालिताः ॥ ८६ ॥

नम्रयेति । प्रियेऽंशुकविकर्षिणि सति लज्जावशाद्दुष्प्रापयथानयलोकनार्थं नम्रया अतएव वक्त्रवातेन हतो निर्वापितो दीप्रः प्रकाशमानो दीपो यया तया भर्तृमौलौ मणयो मुकुटरत्नानि तैः दीपिताः प्रकाशिताः ककुभो दिशो विस्मयेन निर्वापितेऽपि दीपे कथमयं प्रकाश इति आश्चर्येण निभालिता विलोकिताः । रत्नप्रकाशाज्ञानाद्विस्मयो रत्नप्रेक्षा तिशयाद्वा ॥ ८६ ॥

कान्तमूर्ध्नि दधती पिधित्सया तन्मणेः श्रवणपूरमुत्पलं । रन्तुमर्चनमिवाचरत् पुरः सा स्ववल्लभतनोर्मनोभुवः ॥ ८७ ॥

कान्तेति ॥ तस्य पूर्वोक्तस्य दिक्षु दीप्तस्य मुकुटमणेः पिधित्सया आच्छादितुमिच्छया श्रवणपूरं कर्णभूषणीकृतं नीलोत्पलं कान्तमूर्ध्नि दधती स्थापयन्ती सा रन्तुं स्ववल्लभ एव तनुः शरीरं यस्य नलदेहव्याज धारयतो मनोभुवः पुरः आदौ सुरतारम्भे अर्चनमिवाचरत् चकार पुष्पपूजा शिरसि कर्तुमुचिता । रतारम्भे च स्मरः समुचिता देवतेति तत्पूजा युक्ता । प्रकाशाभावार्थं कर्णोत्पलेन मुकुटमणिं पिदधाविति भावः ॥ ८७ ॥

तं विधाय मुदिताथ पार्श्वयोर्वीक्ष्य दीपमुभयत्र सा स्वयोः । भिन्नमाप कुतुकाद्भुतत्रपात ङ्कसङ्कटनिवेशितस्मरम् ॥ ८८ ॥

तमिति ॥ सा तं नलीयं मुकुटमणिं पिधाय कर्णोत्पलेनाच्छाद्य प्रकाशाभावान्मुदिता सती, अथ पश्चात् स्वयोर्निजयोरुभयत्र द्वयोर्वामदक्षिणयोः पार्श्वयोर्दीपं वीक्ष्यार्थाद्द्वौ दीपौ दृष्ट्वा स्वचित्तमघटमानघटनात् कुतुकं तद्दर्शनजातमाः किमेतदिति चमत्करणमद्भुतमाश्चर्यं लज्जा त्रपा आकस्मिकदीपदर्शनादातङ्को भयं गोप्यान्यपि मदीयाङ्गा

नि मियेण दृष्टानीति शङ्कितिशयेयातङ्कस्तेषा सङ्कटे मस्मद्धे मध्ये नि-वेशित स्मरो यत्र तत् । एवम्भूता मायाविज्ञेपकविधौ तात्पर्यं । दीपौ दृष्ट्वा कौतुकादिसहिताभूदिति भाव ॥ ८८ ॥

एककस्य शमने ऽपर पुनर्जाग्रतं शमितमप्यवेक्ष्य स । जातवह्निवरसस्मृतिः शिरः सा विधूय निमिमील केवलं ॥ ८९ ॥

एककस्येति ॥ द्वयोर्दीपयोर्मध्ये एककस्य दीपस्य गुरुचेलाञ्चला-दिना शमने निर्वाणे क्रियमाणे सति पूर्वशमितमपि द्वितीय दीप न-लेच्छामात्रेण पुनरपि जाग्रत प्रदीप्यमानमवेक्ष्य जाता वह्निवरस्मृतिर्यस्या सा स्मरणाभिनयवशाद्वा शिर विधूय केवल निमिमील निमीलितवती । लज्जाभिनय कौतुकवशात् तदीयगोप्यावयवविलोकनार्थं तस्मा निरुपायत्वार्थं पुन पुन शमितानपि दीपान् इच्छामात्रेणाज्वलद्दिति भाव । एकस्य शमने कृतेऽपर दीप जाग्रत दृष्ट्वा शमितमपि पुनर्जागृत दृष्ट्वेति वा व्याख्येय । एकक पूर्ववत् ॥ ८९ ॥

पश्य भीरु न मयापि दृश्यसे यन्निमीलितवती दृशावसि । इत्यनेन परिहस्य सा तमः संविधाय समभाजि लज्जिता ॥ ९० ॥

पश्यं ति ॥ अनेन इति परिहस्य सोपहासमुक्त्वा तदीयलज्जापाक-रणार्थं दीपाभावेच्छामात्रेण तम संविधायान्धकार निर्माय सा समभा-जि सम्भुक्ता ततो लज्जिता । इति किं । हे भीरु लज्जाभयकातरे य-द्यस्मात्त्वं दृशौ निमीलितवत्यसि तस्मात्त्वं मयापि न दृश्यसे पश्य । नेत्रनिमीलनात्त्वया यथा स्वीयमङ्गं न निरीक्ष्यते तथा मयापि त्वद-ङ्गमित्यर्थः । अथ च त्वया नेत्रे निमीलिते मया तु त्वं न दृश्यसे चित्रमे-तत् । यस्मान्मया न द्रष्टव्यमिति हेतोस्त्वया नेत्रे निमीलिते, तावतैव मया न दृश्यसे ऽपि तु दृश्यस एव । अन्यो हि गोप्यमङ्गं वस्त्रादि-नाच्छादयति त्वया तु नेत्रे एव निमीलिते । तथा च मया त्वदीय गो-प्यमपि अङ्गं काम दृष्टमेवेति किं नेत्रनिमीलनेन पश्येति । अमुना

नलेन लज्जिता सा तम सम्यग्विधायानन्तरश्चैव परिहासपूर्वं मुक्ता । भीरु । वहन्तत्वाद्दीत्वाद्दूस्व, तत्सामर्थ्यान्न गुणः ॥ ९० ॥

चुम्ब्यसेऽयमयमङ्कग्रसे नखैः श्लिष्यसेऽयमयम र्प्यसे हृदि । नो पुनर्न करवाणि ते गिरं हुं त्यज त्यज तवास्मि किङ्करः ॥ ९१ ॥

इत्यलीकरतकातरा प्रियं विप्रलभ्य सुरते ह्रियं च सा । चुम्बनादि वितनार मायिनी किं वि दग्धमनसामगोचरः ॥ ९२ ॥ युग्मम् ॥

चुम्ब्यस इति । इनीति युग्म । हे प्रिये, मयायं त्वं चुम्ब्यसे ऽयं त्वं नखैरङ्क्यसे चिह्न्यसेऽयं त्वं श्लिष्यसे आलिङ्ग्यसेऽयं त्वं हृदि अर्प्यसे हृदयोपरि धार्यसे ते तव पुनरहं गिरं नो करवाणीति न अपि तु क रवाण्येव यत इत्यर्थः । हुमिति सुरतसम्मर्दासहत्वेन पूर्यतामित्यर्थः । त्यज त्यज इति मोहानटने, मुञ्च मुञ्च मामित्यर्थः । अहं तव किङ्करास्मीति दैन्यनटने ॥

इत्येवम्प्रकारेणालीकरते मिथ्यासुरते कातरा भीरु सुरते विषये ब- लात्कारभीता सती आत्मानं यथाकथञ्चिन्मोचयितुमेवैव वदति न तु हेलयेति । तथा यद्यपीयमप्रौढेति प्रियं विप्रलभ्य प्रतार्यैतादृशीं बु- द्धिमुद्धुं तस्योत्पाद्य तथा ह्रियमपि प्रतार्य नाभियमद्यापि न मुञ्चति, बलात्कारभयात् चुम्बनादि करोति न तु स्वेच्छयेति लज्जात्यागमप्य- प्रकटीकृत्य चुम्बनादि पूर्वोक्तं सकलमपि सुरतसम्भारं प्रौढतयैव वि- ततार प्रियाय ददौ । यतो मायिनी मायावती । उक्तप्रकारेण कपटे- नाच्छादितनिजकामोन्मादप्रौढिरिति यावत् । यस्माद्विदग्ध व्यवहार- चतुरं मनो येषां मानवानां किं वस्तु अगोचरं विषयो न भवति अपि तु सर्वमपि साध्यमेव । चतुरा हि असाध्यमपि साधयन्ति । अली- करतकातरेति पाठे अलिकरतं कातरेति समासः । त्यजरे । वीप्सया द्विरुक्तिः । किङ्करेति । दिवाविभा (पा०३।२।२१) इति टप्रत्ययापि, कि यत्तद्बहुषु कृञोऽजिवधानम् (पा०३।२।२१।वा०१) इत्यच् ततष्टाप् ॥ ९१॥९२ ॥

स्वेच्छितोद्गमितमात्रलुप्तया दीपिकाचपलया तमोघने। निर्विशङ्करतजन्मतन्मुखाकूतदर्शनसुखान्यभुङ्क्त सः ॥ १३ ॥

*स्वेति।* *स तमसा घने तस्मिन् सौधेऽथच तमस्तुल्ये घने मेघे* तमोरूपे मेघे स्वेच्छितेन स्वेच्छामात्रेणोद्गमितमात्रा प्रकाशिता चासौ तदानीमेव लुप्ता शमिता च तया दीपिकयैव चपलया विद्युता दृष्टनष्टया निर्विशङ्कं रतं तस्माज्जन्म येषां तानि च तानि तस्या मुखाकूतानि वदनेङ्गितानि तेषां दर्शनानि तज्जन्यानि सुखानि अभुङ्क्तान्यभूत्। अन्धकारवशाद्भैमीस्वेच्छाविरचितमुखाकूतदर्शनसुखानुभवार्थं यद्विरदानवशात्तदानीमेव दीपिका प्रकाशितवान्। तदानीमेव च लज्जावती स्यादिति भिया पुनस्तां शमितवानिति भावः। विद्युदप्येवम्भूता भवति। लुप्तेत्यन्तर्भावितण्यर्थो ज्ञेयः ॥ १३ ॥

यद्भ्रुवौ कुटिलिते तया रते मन्मथेन तदनामि कार्मुकं। यत्तु हु हुमिति सा तदाव्यथा तत् स्मरस्य शरमुक्तिहुङ्कृतं ॥ १४ ॥

यदिति। तया रते भ्रुवौ कुटिलिते वक्रिते इति यत् तन्मन्मथेन कार्मुकमेवानामि। यत्तु पुनः सा तदा सुरतसमये सुरतसम्मर्दं निःसहतावारणव्याजेन हु हुमिति रतिकूजितशब्दं व्यधात् तत् स्मरस्य शरमुक्तिहुङ्कृतं बाणमोचनकालीनं हुङ्कारमेवाकृत हुङ्कार एवाभूत्। तस्या हुङ्करणं कामस्य चापनमनमित्यर्थः। कामस्य बाणत्यागात् स्तम्भकादिना कामः पुनरुज्जृम्भितः तथाभूदिति भावः ॥ १४ ॥

ईङ्कृतापदिशनीव नर्त्तितुं तरङ्गणोदितमुदं मनोभुवं। कान्तदन्तपरिपीडिताधरा पाणिधूननमिय वितन्वती ॥ १५ ॥

ईङ्कृतेति। पुष्पशरभयात् कान्तदन्तैः परिपीडिताधरा दष्टाधरा अतएव पाणिधूननं वितन्वती इव तादृशी सुरतसमये वर्द्धितमुदं म-

ज्ञातरूपं मनोभुवे नर्तितुं उपदिशतीव तं शिक्षयन्तीव प्रियेणेदिता, यापि नृत्यं शिक्षयति सापि हस्तकाभिनयवशात् करकम्पनं करोति। उपदिशनी। आच्छीनद्योः (पा० ७। १। ८०) इति पाक्षिकत्वान्नुमभावः ॥ ९५ ॥

सा शशाङ्क परिरम्भदायिनी गाहितुं वृहदुरः
प्रियस्य न। चक्रमे स च न भङ्गुरभ्रुवस्तुङ्गपी
नकुचदूरतां गतं ॥ ९६ ॥

सेति। परिरम्भदायिनी सा प्रियस्य बृहदुरो गाहितुं सामस्त्येन स्प्रष्टुं न शशाक, यतो बृहत् अतिविशालं, सा च कृशाङ्गीत्यर्थः। स च ततोऽपि भङ्गुरे भ्रुवौ यस्यास्तस्या वक्षः सर्वमपि स्प्रष्टुं न चक्रमे, यतस्तुङ्गाभ्यां पीनाभ्यां कुचाभ्यां दूरतां व्यवहिततां गतं प्राप्तं। कुचमात्रमेवालिङ्गितं नतु सर्वं वक्ष इत्यर्थः। उभावपि सम्पूर्णालिङ्गनाप्राप्तेर्नितरां सस्पृहत्वादुज्जृम्भितकामौ जाताविति भावः ॥ ९६ ॥

बाहुवल्लिपरिरम्भमण्डली या परस्परमपीडयत्त
योः। आस्त हैमनलिनीमृणालजः पाश एव
हृदयेशयस्य सः ॥ ९७ ॥

बाह्विति। तयोर्बाहव एव दैर्घ्यकार्श्याभ्यां वल्लयः लतास्तुल्यास्तासां परिरम्भे आलिङ्गनविषये या मण्डली वृत्ताकाराङ्गपाली परस्परं अपीडयत् गाढमालिङ्गत् स हृदयेशयस्य कामस्य हैमनलिनीमृणालजः [illegible] पाश एवासीत् बभूव। अतिगौरत्वात्कामोद्दीपकत्वाच्च बाहूनां सौवर्णमृणालतुल्यत्वं। पाशबद्धो यथा वश्यो भवति तथाङ्गपालीपाशेन दृढं बद्धौ तौ कामवशौ जाताविति भावः ॥ ९७ ॥

वल्लभेन परिरम्भपीडितौ प्रेयसीहृदि कुचावथा
पतुः। केलनीमदनयोरुपाश्रये तत्र तूलमिलि
तोपधानताम् ॥ ९८ ॥

स सन्तोषगुणश्चेत्यर्थः । अश्लीलमप्यु तन्मैथुनादन्यत्र निषेधात् वराङ्गदर्शनं युक्तमिति ध्येयं । नाभिमित्यादौ, अन्तरान्तरेण ( पा० २ । ३ । ४ ) इति द्वितीया । अङ्गुक । अल्पे ( पा० ५ । ३ । ८५ ) ह्रस्वे ( पा० ५ । ३ । ८६ ) इति वा कन् । पुराहेति, भूते, पुरिलुङ् चास्मे ( पा० ३ । २ । १२२ ) इति लट् ॥ १०० ॥

पीडनाय मृदुनी विगाह्य तौ कान्तपाणिनलिने स्पृहावती । तत्कुचौ कलशपीननिष्ठुरौ हारहासविहते वितेनतुः ॥ १०१ ॥

पीडनायेति । कलशवत् पीवरौ निष्ठुरौ कठिनौ च तौ प्रसिद्धगुणौ तस्याः कुचौ कर्तृभूतौ कान्तस्य पाणिनलिने करकमले कर्मभूते हारस्य हासः प्रकाशस्तेन विहते आच्छादिते वितेनतुरकुरुतां । स्पृशन्तावपि नलकरौ हारदीप्त्या पिहितावित्यर्थः । अथवा हार एव हासः तेन पराभूते कृतोपहासे चक्रतुः । यतो विगाह्यमानायेयाभित स्पृष्ट्वा पीडनाय मर्दनाय स्पृहावती साभिलाषे धृतेच्छे यत मृदुनी मर्दयितुमसमर्थे । स्वयं मृदुर्हि महतः कठिनस्य च पीडनाय न प्रभवतीति मृदुभ्यां युवाभ्यां विशालौ कठिनौ चावां मर्दयितुमशक्यावितीयं वाञ्छा वृथा च मति, स्वपरतारतम्यं न ज्ञायते भवद्भ्यामिति, तत्कुचाभ्यां नलकरौ हारहासेन विडम्बितावित्यर्थः । यद्वा तौ स्पृष्टावेव न तु पीडिताविति भावः । धर्म्मकठिनौ हस्तौ इति लक्षणात् काठिन्यमेव राजकरस्य गुणस्तथापि नलिनत्वनिरूपणात् कठिनत्वेऽपि कुचापेक्षया मार्दवान्मृदुनीत्युक्तं । पीडनाय स्पृहावती ते मृदुनी विशेषेण ज्ञात्वा हासविहते चक्रतुरिति वा । अन्योऽपि निष्ठुरो मृदुमुपहसति ॥ १०१ ॥

या कुरङ्गमदकुङ्कुमाञ्चितौ नीललोहितरुचौ वधूकुचौ । स प्रियोरसि तयोः स्वयम्भुवोराचचार नखकिंशुकार्चनं ॥ १०२ ॥

याविति । यौ वधूकुचौ कुरङ्गमदेन कस्तूर्या कुङ्कुमेन चाञ्चितौ पूजितौ कृतविलेपनौ अत एव क्रमेण नीला लोहिता च रुक् कान्तिर्ययोः, अथ च नीललोहितौ हरस्तत्कान्ती, एवम्भूतौ, स नलस्तयोर्यौवनारम्भे प्रियोरसि भैमीवक्षसि स्वयमेव भवतोः प्रादुर्भवतोः रक्तशुक्लतीक्ष्णाग्रत्वान्नखैरेव किंशुकैः पलाशपुष्पैरर्चनं पूजां आचचार। कृताङ्कुरागयोः कुचयोर्नखपदानि रचितवानित्यर्थः । अत्यन्तमोद्धुः खस्य व्यापाराहित्येन शोभामात्रहेतुत्वाद्दर्शनमित्येवेत्युत्प्रेक्षा । कस्तूर्या अभ्यर्हितत्वात् पूर्वनिपात ॥ १०२ ॥

अम्बुधेः कियदनुत्थितं विधुं स्वानुबिम्बमिलितं व्यडम्बयत् । चुम्बदम्बुजमुखीमुखं तदा नैषधस्य वदनेन्दुमण्डलम् ॥ १०३ ॥

अम्बुधेरिति । सुरतावसरेऽम्बुजमुख्या भैम्या मुखं चुम्बत् मिलन्नैषधस्य वदनेन्दुमण्डलं कर्तृ प्रतिदिनमुदयसमये अम्बुधेः समुद्रात् कियत् स्तोकमनुत्थितं तथा समुद्रजले जातेन स्वानुबिम्बेनात्मीयप्रतिबिम्बेन मिलितं निरन्तरं सम्बद्धं विधुं चन्द्रं व्यडम्बयत् अनुचकार । भैमीमुखं कर्तृ नलमुखं कर्मीभूतं चुम्बदिति वा । अनेन विपरीतरतं सूचितं बिम्बप्रतिबिम्बभावनिरूपणेनात्यन्तं तन्मुखयोः सादृश्यं सूचितं । कामसमुद्रचन्द्रोदयनिरूपणाच्च कामोत्कर्षश्च व्यज्यते ॥ १०३ ॥

पूगभागगतताकपायितैर्वासितैरुदयमास्करेण तौ । चक्रतुर्निधुवनेऽधरामृतैस्तत्र साधु मधुपानविभ्रमं ॥ १०४ ॥

पूगेति । पूगफलकाणिकानां भागोऽत्यन्तमल्पस्तेन कषायितैस्तुवरत्वमापादितैः, कषायं सुरभिमित्यभिधानात् सुरभितैर्वा । तथा पक्षिणोदयनाम्ना राज्ञा ताम्बूलमध्ये गृहीतेन कर्पूरेण वासितैः सुरभितैरन्योन्याधरामृतैरधररसैरेवामृतैः कृत्वा तौ तत्र निधुवने सुरते मधुपानस्य विभ्रमं मद्यपानरूपं विलासं साधु सम्यगुपपादितवन्तौ, अथ च मद्यपानस्य विलासं चक्रतुः । मद्यपानस्थाने ऽन्योन्याधरपानमेव

चक्रतुस्तेनैव च नितरां मोन्मादौ जातावित्ति भाव.। अन्यो ऽपि कषायरस कर्पूरवासित शीतल मधु पिबति । साधु अनिषिद्ध मधिरिति वा । सुरते मधुपानविनिमयमधरामृतै. साधु यथा तथा चक्रतु । उपदंशस्थाने ऽधरामृतानि जातानीत्यर्थ । भोग इति पाठे अनुभवः । राग इति पाठे बहुनाम्बूलयर्णक्रमविक्रमानरक्तिमवाहुल्येनत्यर्थः । कषायितै. । तारकोति (पा०३।१।२८।१४१०) इति इतच्प्रत्ययः ॥ १०४॥

आह नाथवदनस्य चुम्बतः सास्य शीतकरतामनक्षरम् । सीत्कृतानि सुदती वितन्वती सत्वदत्तपृथुवेपथुस्तदा ॥ १०५ ॥

आहेति । तदा सुरतचुम्बनावसरे सीत्कृतानि वितन्वती कुर्वती सा सुदती, तथा कान्तावस्थाविकारशेषेण सत्वेन दत्त पृथुवेपथु कम्पो यस्यास्तादृशी सती चुम्बतो नाथवदनस्यानक्षर वर्णैर्विना तारकाप्यंकारित्वेन शीतकरता चन्द्रतामाह स्म । चन्द्रस्पर्शोष्णत्व सत्व भवति तथा ममसुखस्पर्शोत्तसा अभूदिति भाव । शीतेऽपि सीत्कारः कम्पश्च भवति सुखादृष्टत्त्व न निर्गच्छति । शीत कर्तु शीतलस्य शीतकर । कृञा हेतुताच्छील्ये (पा०३।२।२०) इति ट ॥ १०५ ॥

चुम्बनाय कलितप्रियाकुचः वीरसेनसुतवक्त्रमण्डलम् । प्राप भर्तुममृतैः सुधांशुना सत्कहाटकघटेन मित्रतां ॥ १०६ ॥

चुम्बनायेति । चुम्बनाय कलित स्पृष्ट प्रियाकुचो येन तादृश वीरसेनसुतस्य वक्त्रमण्डल, सुधांशुना चन्द्रेण मित्रता साम्य प्राप । किंभूतेन चन्द्रेण । स्वैरेवामृतै आत्मान भर्तु पूरयितु सक्त सद्भूत. हाटकघट सुवर्णकलशो येन । मुख चन्द्रसम, अमृतभरणार्थ चन्द्रसम्बद्धस्वर्णघटसमो भैमीकुचः मुखेन्दुना स्वीयममृत कुचकलशे निषिप्त न तु तत्त्य गृहीत इति अनौचितो नाशङ्कनीया मुखचुम्बनादमृताशुयोगादिव भैमीकुच शान्ततापो जात, सुखधाभूदिति भावः ।

मुखनेत्रस्तनद्वयमूलकपोलोष्ठद्वयवराङ्गान्यष्टौ चुम्बनस्थानानि रागतः सर्वाण्यपि चेति वात्स्यायनः । नयनगण्डकपोलदन्तवासोमुखान्तस्तन-युगललालाटं वा चुम्बनस्थानं । स्तनं चूचुकं परिहृत्येति विशेषः । मित्रशब्दस्य तुल्यार्थत्वात् तुल्यार्थैरिति तुल्यार्थं (पा०२।३।७२) इति तृतीया ॥ १०६ ॥

वीक्ष्य वीक्ष्य पुनरैक्षि सामुना पर्य्यरम्भि परि-
रभ्य चासकृत् । चुम्बिता पुनरचुम्बि चादरा-
त्तृप्तिरापि न कथञ्च नापि च ॥ १०७ ॥

वीक्ष्येति । अमुना सा वीक्ष्य वीक्ष्य पुनरैक्षि तथाऽसकृत् वार-वारं परिरभ्य च पुनः पर्यरम्भि पुनरालिलिङ्गे तथा आदराद्वारंवारं चुम्बितापि पुनरचुम्बि च । तथापि कथञ्चनापि केनापि प्रकारेणानेन तृप्तिकारणसद्भावेऽपि तृप्तिर्नापि न प्राप्ता ॥ १०७ ॥

छिन्नमप्यतनु हारमण्डलं मुग्धया सुरतलास्यके-
लिभिः । न व्यतर्कि सुदृशा चिरादपि स्वेदबि-
न्दुकितवक्षसा हृदि ॥ १०८ ॥

छिन्नमिति । सुदृशा निरीक्षण— [illegible] —या च मुग्धया प्रेम्णा सुरतलास्यकेलिभिः सुरतसम्बन्धिभिर्नृत्यविलासैः करचरणाद्यङ्गविक्षेपविलासविशेषैः कृत्वा क्वचिच्छिन्नं त्रुटितगुणमपि [illegible]सत् आत्माभिप्रेतमित्यादिविशालं हारमण्डलं मुक्ताहारदाम चिराद-पि भूयसापि कालेन न व्यतर्कि । यतः स्वेदबिन्दुकितः सञ्जातस्वेद-बिन्दुर्वक्षो यस्यास्तया । सुरतया सञ्जातस्वेदबिन्दुनिवहस्य हारमण्ड-लस्य हारसादृश्यात्मौक्त्यात्त्रुटितोऽपि हारो नाबाधीत्यर्थः । स्वा-र्थकतत्प्रत्ययान्तात् स्वेदबिन्दुकशब्दात्तारकादित्वादितच् ॥ १०८ ॥

यन्मदीयहृदि हारमौक्तिकैरासि तत्र गुण एव का-
रणं । अन्यथा कथममुत्र वर्त्तितुं तैरशाकि न
तदा गुणच्युते ॥ १०९ ॥

यदिति । हारमौक्तिकैस्तदीये हृदि वक्षस्यथ च चित्ते यदास्थि स्थितं तत्र गुणो दोरकस्तारत्वादिर्वा कारणं हेतुः । अन्यथा न चेदेवं तर्हि तदा सुरतसमये गुणच्युतैस्तत्र त्रुटितैर्मौक्तिकैरमुत्र तदीये हृदि वर्तितुं स्यातुं कथं कस्मान्नाशाकि समर्थनं जातं । अथ च तारत्वादिगुणहीनैर्मौक्तिकैस्तदीये हृदये न स्थीयते किन्तु गुणैरेव । तस्मादुभयरूपेऽपि भैमीहृदये स्थातुं मौक्तिकानामन्वयव्यतिरेकाभ्यां द्विविधोऽपि गुणहेतुरित्यनुमानं । सुरतसम्मर्दान्मुक्ताहारस्त्रुटित इति भङ्ग्यन्तरेणोक्तं । अन्यस्यापि विदग्धस्य हृदयगामित्वे गुण एव हेतुः, गुणहीनेन तु चित्ते स्थातुं न शक्यत इति भङ्ग्या सूचितं । गुणच्युतैः पञ्चमी (पा०२।१।३७) इति योगविभागात् समासः ॥ १०९ ॥

एकवृत्तिरपि मौक्तिकावलिश्छिन्नहारविततौ तदा तयोः । छाययान्यहृदयेऽपि भूषणं भ्रान्तिवारिभरभाविते न्यधात् ॥ ११० ॥

एकेति । तदा सम्भोगसमये तयोर्द्वयोर्मध्ये एकस्मिन्नल एव वृत्तिर्यस्या एवम्भूता मौक्तिकावलिरन्यस्या भैम्या हृदये छायया भूषणमभूत् । किम्भूतेऽन्यहृदये । छिन्नहारस्य विततिर्विस्तारो यस्मात् । यतः भ्रान्तिवारीणि स्वेदबिन्दवस्तेषां भर पूरस्तेन भाविते व्याप्ते । द्वयोः समीपे सन्निहितयोर्मध्ये भैम्या हारे त्रुटितेऽपि स्वेदजलपूरिते हृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदये इति सर्वनामत्वात् पुंवद्भावः ॥ ११० ॥

'वामपादतललुप्तमन्मथश्रीमदेन मुखवीकृणाऽनिशं । जृम्भमाननवयौवनामुना पारसीमनि चचार सा मुदां ॥ १११ ॥

वामेति । वामपादतलेन लुप्तः मन्मथश्रीमदः कामसौन्दर्यगर्वो येनातिसुन्दरेणापि यानिशं भैमीमुखवीकृणात् केवलभैम्यधीनेन अमुना

मलेन भुज्यमानं नवयौवनं यस्याः सा भैमी मुदा सन्तोषाणां पारसीमानि परतीरमर्य्यादाया परमोत्कर्षं प्रचारायतेत। भावावसानसमयं प्रापेत्यर्थं। वामपादतलमुखवीक्षेतिपदद्वय लौकिकोक्ति। एवम्- तेन च भुज्यमानत्वान्मुदा परमोत्कर्षं प्रापेति युक्तं। मुखवीक्षण दिने रात्रावपि यरद् नप्रकाशितदीपवशात् ज्ञेयं ॥ १११ ॥

ध्वान्तयानपि तदङ्गसङ्गमैस्तर्पितानवयवानमन्यत। नेत्रयोरमृतसारपारणां तद्विलोकनमचिन्तयन्नलः ॥ ११२ ॥

ध्वान्तयानिति। नलः स्वीयानान्तराञ्छरीरमध्यवर्त्तिनोऽस्पृश्यमानानपि अवयवान् तदङ्गसङ्गमैः सुकुमारतरैर्भैम्यवयवस्पर्शैरतिवेधकतया तर्पितान् सुखितानमन्यत। तथा तद्विलोकनञ्च स्वीयनेत्रयोः अमृतस्य सारेण श्रेष्ठजातेन पारणा तद्रूप तृप्तीकरणं अचिन्तयद्बुबुधे। पुनः पुनः भैमीगाढालिङ्गनदर्शनाद्यैरन्तर्बहिश्च प्रीणितोऽभूदित्यर्थं। अन्तरशब्दात् ध्वान्त शब्दाद्वा भावार्थेऽण्। तर्पितान्। यत्नात् कर्म्मणि क्तः ॥ ११२ ॥

भूषणैरनुपदाश्रितैः प्रियां प्रागथ व्यपददेप भावयन्। तैरभावि कियदङ्गदर्शने यत्पिधानमयविघ्नकारिभिः ॥ ११३ ॥

भूषणैरिति। अथ नलः प्रियामाश्रितैः स्वशरीरे सर्वदापि ताटङ्कादिभिर्भूषणैः प्राग्ग्रथस्य तैरस्याः कियतोऽङ्गस्याप्यस्याङ्गस्य दर्शने विधानमयाना आच्छादनरूपाणां विघ्नानां दर्शनान्तरायाणां कारिभिस्तद्वृत्तैस्तैरभावि जातं। अनङ्गस्य चेत्तर्हि सर्वं दर्शनगोचरो भविष्यत इति भावयस्त्वेवं तस्मात्व्यपददेप इत्यर्थं। भैमीसौन्दर्य्यं तस्या नलानुरागातिशयश्च सूचितः। रतिसमये भूषणमोचनस्यैव युक्तत्वाद्गुरुजनसन्निधावपि यद्यप्यनुचितं तथापि यावद्भूषणानि मोचयति तावदपि विलम्बासहिष्णुतया हठमेकमूलाद्भूषणानि मोचितो न दोषायेति तदाप्यत्यन्तापरिहार्यं भूषणाभिप्रायेण चेति ज्ञेयं भूषणानि स

विदर्भसुभ्रुव इति वा पाठः सुगमः । अतुपत । पुषादित्वादङ् ॥ ११३ ॥

योजनानि परिरम्भणेऽन्तरं रोमहर्षजमपि स्म
बोधतः । तौ निमेषमपि वीक्षणे मिथो वत्स
रव्यवधिमध्यगच्छताम् ॥ ११४ ॥

योजनानीति । तौ रोमहर्षात् सात्त्विकोत्थरोमाञ्चाज्जातमत्यल्प-मप्यन्तरं परिरम्भणे आलिङ्गने विषये बहूनि योजनानि बोधतः स्म । अजानताम् । तथा मिथो वीक्षणे परस्परावलोकनेऽत्यल्पं निमेषमपि पक्ष्मसङ्कोचनमात्रमपि वत्सरेण वर्षेण व्यवधिं व्यवधानं बहुतरं दर्शनविच्छेदकालम् अध्यगच्छताम् अज्ञासिष्टाम् । अत्यल्पमपि देशकाल-व्यवधानेन प्रेमभरादन्योन्यविच्छेदमसहमानावित्यर्थः । बोधतः । बुध अवगमने भौवादिक स्मयोगे लट् ॥ ११४ ॥

वीक्ष्य जायमधिगन्तुमुत्सुकां पूर्वमच्छमणिकुट्टि
मे मृदुः । कोऽयमित्युदितसम्भ्रमीकृतां स्वानुबि
म्बमददर्शदेष तां ॥ ११५ ॥

वीक्ष्येति । एषः नलो मृदुः बालत्वात् सुरतभरासहां लघुवयां प-द्मिनीमिव एव तस्मात् पूर्वमेव बिन्दुपतनरूपं जायमधिगन्तु प्राप्तुं नेत्रनिमीलनगाढालिङ्गनादिचिह्नेनोत्सुकां सत्वरां वीक्ष्य ज्ञात्वा त-द्बिन्दुस्तम्भनार्थं कोऽयमत्रापूर्वः पुरुष इति प्रश्नेन पूर्वमज्ञातभयाम-पि नलरूपधारिणा अन्येनाह भुक्तेति बुद्ध्या सुरतसमयसमागतजना-न्तरदर्शनाद्वा उदितसम्भ्रमीकृतां समुत्पादितभयां विमनस्कतया मति-मन्दीभावोदया अनन्तरं क्व कुत्र तिष्ठतीति कृतप्रश्नान्तां भैमीं अच्छमणि-कुट्टिमे निर्मले मणिबद्धक्षितिभागे स्वानुबिम्बं प्रतिबिम्बमददर्शत दर्श-यामास । नायमपूर्वः कश्चित् किन्तु मदीयमेवेदं प्रतिबिम्बं तत्र स-मान्य इति भ्रान्तिर्गतेति स्वप्रतिबिम्बं तामदर्शयदित्यर्थः । अन्यत-रस्य पूर्वं बिन्दुपतने विपरतत्वाद्वैरस्यं स्यादिति बिन्दुस्तम्भार्थं अ-न्यचित्ततया सम्भ्रमजननं च भावयन् कुर्यादिति कामशास्त्रात्तया बि-न्दुपातप्रतिबन्धमकरोदिति भावः । अददर्शत् । चिङ्स्व (पा०१।३।७४)

यद्भावजननं तस्मिन् सति वा स्वस्य भावजननसमय इति यावत्, तत्र बाहुमूले वक्षो कुचौ नाभिश्च एतेषां चुम्बने कृत्वा रतस्य रहसि समापनसञ्जनितं परमकाष्ठापन्नं शर्म सुखं समापनारूपा वा शर्म सारस्तस्य समस्तुल्यो य संविभागोऽशस्तद्वतीं समरतप्रापणेन सुश्रिणीं प्रियां मे चकार । स्वनेत्यस्य प्रथमद्वितीयव्याख्ययोः कक्षादिचुम्बनजाति । तृतीयायान्तु कक्षादेर्निरन्तरं कामाधिष्ठानत्वान्न चुम्बनेरुपायैः स्वस्य भावमाप्तिसमये तामपि भाववत्यमकरोदिति भावः । भाव भजनेन त्विति पाठे स्वीयेन भावजननेन निमित्तेन बाह्वादिचुम्बनैरिति व्याख्या ॥ ११७ ॥

विस्मयैरवयवैर्निमीलया लोमभिर्द्रुतमितैर्विनिद्र
ता । सूचितं श्वसितभास्कृतैश्च तौ भावमक्रम
कमभ्यगच्छताम् ॥ ११८ ॥

पुनरपि भङ्ग्यन्तरेण तदेवाह । विस्मयैरिति । तौ भावलाभक्रमवशात् स्वाङ्गमपि विस्मये शिथिलीभूतैरवयवैरङ्गैस्तथा निद्राभावेऽपि निमीलया भावजनितनयनमुद्रणतया तथा तस्मिन् क्षणे द्रुतं शीघ्रं विनिद्रतामुल्लासं प्रतिगतैर्लोमभी रोमाञ्चैस्तथा श्वसितैः स्वनसुखं भास्कृतैः सीत्कृतैश्च सर्वैः सूचितं अक्रमकं युगपत् सञ्जातबिन्दुच्युतिजन्यसुखरूपं भावमभ्यगच्छतां समरसं प्रापतुरित्यर्थः । भोगिनो सम्भोगान्ते श्रमावयवत्वादिजाति ॥ ११८ ॥

आस्त भावमधिगच्छतोस्तयोः सम्मदेषु करज
क्षतार्पणा । फाणितेषु मरिचावचूर्णना सा स्फुट
कटुरपि स्पृहावहा ॥ ११९ ॥

आस्तेति । एवं भावमधिगच्छतोः सुरतान्तसुखमनुभवतोस्तयोः करजक्षतानां नखक्षतानामर्पणा दानं सम्मदेषु परमानन्देषु मध्ये आस्ताभूत् आनन्ददायिकैवाभूदित्यर्थः । नखक्षतस्य सुखदायित्वं कथमित्यत आह । स्फुटं यस्मात् फाणितेषु दुग्धविकाररूपेषु खण्डवि-

कारेषु या पातकेषु मध्ये सा सूपशास्त्रप्रसिद्धा मरिचावचूर्णना कटुरसापि स्पृहावहा मधुररसजन्या रुचिः परिहारस्य दूताभिच्छामाधइति । तथा कटु पीडाजनिकापि नखक्षतावर्पणा सुखकारिण्येवाभूदित्यर्थः । सम्मदेषु नानाप्रकारेषु सुरतेषु भाव प्राप्त यत्रास्तमास्तासिक्त व समये कामशास्त्रप्रसिद्धा कटु पीडाजनिकापि नखक्षतार्पणा स्पृहावहाभूत् स्फुटशब्द इवार्थ । केषु कैव । फाणितेषु कटुरसा मरिचावचूर्णनेव सुरतान्ते कृतापि पुन सुरतेच्छामेवोददीदिपदिति भावइति वा । भावमधिगच्छतोस्तयो कटुरपि सुरतेषु स्पृहावहा या नखक्षतार्पणा सा स्फुट निश्चितेषु फाणितेषु मरिचावचूर्णनाभूत्तद्रूपेवाभीभूदित्यर्थ इति वा । मत्स्यण्डी फाणित खण्डविकार* शर्करा सितेत्यमर । चूर्णना सत्यापपाश ( पा० ३ । १ । २५ ) इति णिजन्ताद्युच् ॥ ११९ ॥

अर्द्धमीलितविलोलतारके सा दृशौ निधुवनक्लमालसा । यन्मुहूर्तमवहन्न तत् पुनस्तृप्तिरास्त दयितस्य पश्यत: ॥ १२० ॥

अर्द्धेति । निधुवनक्लमेन सुरतश्रमेणालसा सुरतायामनि सहेत्यर्थः । सा दृशौ मुहूर्त क्षणमात्र अर्द्ध मीलिते ईषत् सङ्कुचिते विलोले तारके ययोस्तादृशे यदवहद्धार तत् तादृक नैमीलेत्रावस्थान पश्यतो दयितस्य पुनस्तृप्तिर्नास्त नाभूत् पुन पश्यत इति वा । पौन पुन्यदर्शनाभिलाषस्यानिवृत्तत्वात् पश्यन्नेवस्थित इत्यर्थ । तादृशी सा तस्य सुरतसुखायाभूदिति भाव ॥ १२० ॥

तत्क्लमस्तमदिदीक्षत क्षणं तालवृन्तचलनाय नायकं । तद्विधा हि मधदैवत प्रिया वेधसोऽपि विदधाति चापलम् ॥ १२१ ॥

तदिति । तदाभीमतस्तया क्लम सुरतश्र श्रम नायकं भैम्यस्यामिम क्षणमात्रमपि स क्षणमात्र तालवृन्तचलनाय अदिदीक्षतादिदेश । सुरतश्रान्तां ता दृष्ट्वा व्यजनवीजनेन श्रमापनयन चकारेत्यर्थं ।

हि यतो भयस्य संसारस्य कामसुरसर्वस्वस्य दैवतमिष्टदेवता तद्विधा पैमीसदृशी अतिसुन्दरी सौभाग्यवती प्रिया येषणोऽपि व्रस्नकाऽपि स्वविषय चापलमनुरागतरलता विदधाति करोति किं पुनर्मनुष्यस्येत्यर्थं । पुनरपि सानुरागो जात इति भाव । व्यजनं तालवृन्तकमित्यमर । छादितीसत । नियमार्थात्तदीसतर्हेतुमणिच् चङ् ॥ १२१ ॥

स्वेदबिन्दुकितनासिकाशिखं तन्मुखं सुखयति स्म नैषधं । प्रोषिताधरशयालुयावकं सामिलुप्त पुलकं कपोलयो ॥ १२२ ॥

स्वेदेति । तस्या मुखं नैषधं सुखयति स्म । किम्भूतं । स्वेदबिन्दुका सञ्जाता यस्यास्तादृशी नासिकाशिखा नासाग्रं यस्य तथा प्रोषितो गतः अधरशयालुरधरस्थितो यावकोऽलक्तको यस्य तथा परिचुम्बनवशात् कपोलयो सामि अर्द्धं लुप्ता पुलका रोमाञ्चा यस्य एवम्भूतं मुखं दृष्ट्वा स सुखी जात सञ्जातकामश्च जात इत्यर्थं । अत्र पूर्वोत्तरार्द्धे व्यत्यस्ते पठनीये । अन्यथा स स्मृतरागसदोषापात । सुखयति । सुखवन्तात् तत् करोति (पा०३।१।२६ वा०१) इति णिचाविष्टवद्भावात् मतुब्लोप ॥ १२२ ॥

क्षीणमेव पृथु रस्मरं कियत् क्लान्तमेव बहु निर्वृतं मनाक् । कान्तचेतसि तदीयमाननं स्तदालभत लक्ष्मादरात् ॥ १२३ ॥

क्षीणमिति । तदतिसुन्दरं तदीयमाननं तदा सुरतान्तसमये कान्तचेतसि प्रियचेतसि आदरातिशयाल्लक्ष्म्या लक्षणं द्रष्टव्यमलभत । सूत्यरहितेऽप्युत्कृष्टे वस्तुनि एतल्लक्ष लभ्यते इति लोकोक्त्या परमरूपस्यानिर्वाच्यत्वात परमसुरूपं प्राप्तमेव । किम्भूतं । सुरतसुखानुभवयोग्यम्लानस्वीयस्मरचापलस्मरणाद्वा पृथु बहुतरं क्षीणं लज्जितमेव । तथा पुमसुरताज्जितस्मरणात् कियदीषत् सस्मरं वहीप्तकामं । तथा श्रीकुमारातिश्रमायासवत्त्वाद्बहु सुतरां क्लान्तं म्लानमेव । तथा प्रलया-

स्यया कामायम्यया साधनजैद्राश्रगमराहित्यादेकीभावात् परस्परानन्दानुभवादिव महासुखानुभवविषयसुखानुभवविषयसुखापन्नापात् कनाक् निवृत्तं अल्प सुखित विस्मृतानुभूतसुखमिति यावत् । रतान्तसमये योषित्सुरतमन्यादरकारि भवतीति कामशास्त्रं । तदा तादृक् तदाननं दृष्ट्वा पुनः समदनोऽभूदिति भावः । अथ च लब्ध विषयतामलभतेत्यर्थः ॥ १२३ ॥

स्वेदवारिपरिपूरितं प्रियारोमकूपनिवहं यथा
यथा । नैषधस्य दृगपात् तथा तथा चित्रमा
पदपतृष्णतां न सा ॥ १२४ ॥

स्वेदेति । नैषधस्य दृक् स्वेदवारिणा सुरतश्रमजलेन परिपूर्णं प्रियारोमकूपनिवहं यथा यथा यावत् अपात् सादरमवलोकयत् सा दृक् तथा तथा तावत् तावत् अपतृष्णता तृप्तिं नापदिति चित्रं पुनः पुनरवलोकने हि तृप्तिर्भवत्यत्र तु न जातत्याश्चर्यमित्यर्थः । अथ च पिपासोरञ्जलिजलेनापि पिपासा शाम्यत्यस्यास्तु स्वेदवारिपूरितकूपसङ्घस्य पुनः पुनः पानेऽपि पिपासा न शान्तेति चित्रमित्यर्थः । एवम्भूतमेतद्रोमकूपदर्शनमात्रेण पुनः सकामोऽभूदिति भावः ॥१२४॥

वान्तमाल्यकचहस्तसंयमव्यस्तहस्तयुगया स्फुटी
कृतं । बाहुमूलमनया तदुज्ज्वलं वीक्ष्य सौख्य
जलधौ ममज्ज सः ॥ १२५ ॥

वान्तेति । स सुरतसम्मर्दाद्वान्तमाल्याभ्युतकुसुमाः कचहस्तास्तेषां संयमाय ग्रन्थिबन्धनाय व्यस्तमूर्ध्वं व्यापारित हस्तयुगं यया अनया भैम्या स्फुटीकृतं तदतिरमणीयं कामक्रमनिर्वाणगुल्मवनगतिगौरं बाहुमूलं वीक्ष्य सौख्यजलधौ ममज्ज निरवधिसुखमन्वभूदित्यर्थः । धौतेति च पाठः । कचहस्त इति केशसमूह प्रशस्तवाची । सुखमेव सौख्यं चातुर्वर्ण्यादित्वात्ष्यञ् ॥ १२५ ॥

वीक्ष्य पत्युरधरं कृशोदरी बन्धुजीवमिव भृङ्ग

सङ्गतं । मञ्जुलं नयनकज्जलैर्निजैः संवरीतुमशकत् स्मितं न सा ॥ १२६ ॥

वीक्ष्येति । सा कृशोदरी नेत्रचुम्बनवशात् संलग्नैर्निजैर्नयनकज्जलैर्भिन्नवर्णं तथा मञ्जुलं शोभमानं पत्युरधरं भृङ्गेण भ्रमरेण सङ्गतं मिलितं पीयमानमकरन्दं बन्धूकपुष्पमिव वीक्ष्य समुत्पद्यमानं स्मितं ईषद्धास्यं संवरीतुं गोपायितुं उत्पद्यमानमेव निरोद्धुं नाशकत् समर्था नाभूत् । उत्तमस्त्रीत्वात् सलज्जत्वात् प्राणेशस्य सविधे स्मितं कर्तुमयुक्तं यद्यपि तथापि स्वीयसम्भोगसौभाग्यस्मरणवशादुत्पन्नस्य स्मितस्य संवरीतुमशक्यत्वात् सपत्नीदर्शने च सलज्जत्वेऽपि प्रागल्भ्यागमनशङ्कया सिस्मिये इति भावः ॥ १२६ ॥

तां विलोक्य विमुखीं स्मितस्मितां पृच्छतो हसितहेतुमीशितुः । ह्रीमती व्यतरदुत्तरं वधूः पाणिपङ्करुहि दर्पणार्पणात् ॥ १२७ ॥

तामिति । वधूर्भैमी विमुखं तिर्यङ्मुखं यथा तथा पराङ्मुखीभूय स्मितस्मितां कृतेषद्धास्यां, विमुखी चासौ स्मितस्मिता च तादृशी या तां विलोक्य हसितहेतुं पृच्छत ईशितुर्नलस्य पाणिरेव पङ्कजं कमलं तस्मिन् करकमले दर्पणस्यार्पणमेवोत्तरं व्यतरद्ददौ । स्मितहेतुमाचष्ट, यतो ह्रीमती । स्वनेत्रचुम्बनवशात्त्वदोष्ठे नेत्रकज्जलं लग्नमिति लज्जावशात् साक्षादुत्तरं दातुमशक्ता कज्जलाङ्कितं स्वाधरं पश्येति भावेन दर्पणमेवोत्तरं ददावित्यर्थः ॥ १२७ ॥

लाक्षयाऽऽत्मचरणस्य चुम्बनाल्लाक्षभालमवलोक्य तन्मुखं । सा ह्रिया नतनतानना स्मरच्छेपरागमुदितं पतिं निशः ॥ १२८ ॥

लाक्षयेति । कुपितभैमीप्रसादार्थं चरणे पतनात् भैम्या पद्मिनीत्वात् पद्मासनबन्धेन सुरतारम्भवशाद्वा आलक्तकस्य लाक्षया चुम्बनात् सम्बन्धाद्धेतो लाक्षं भालं ललाटं यस्य एवम्भूतं तस्य नलस्य

र्योषान्नूत् । दन्तदश नलोकेति (पा० २। ३। ६९) षष्ठी निषेधः ॥१३०॥

वीक्ष्य वीक्ष्य करजस्य विभ्रमं प्रेयसार्जितमुरो-
जयोरियं। कान्तमैक्षत हसत्पृशं कियत् कोप
सङ्कुचितलोचनाञ्चला ॥१३१॥

वीक्ष्येति । इयं प्रेयसा नलेन उरोजयोरुपरि बुद्धिपूर्वमार्जितं कृतं करजस्य नखस्य विभ्रमं कोपसम्भ्रमवशाद्वीक्ष्य वार वार विलोक्यान-न्तरमेव कियत् किञ्चित् कोपेन कुञ्चितौ उन्मील्य मुकुलितौ पर्यायेण गुणाधिक्यवशात् विलोचनाञ्चलौ नेत्रपक्षयौ यया एवम्भूता सती स्वयं कृतत्वात् सम्भोगसमये तया ज्ञातत्वाच्च हसत्पृशं स्मितस्मित का-न्तमैक्षत कोपेन वक्रमपश्यदित्यर्थः । कोपस्याल्पत्वेन धीरस्य भैम्या सूच्यते वीक्ष्य वीक्ष्य सम्भ्रमे द्विरुक्तिः । हसत्पृशा स्पृशोऽनुदके (पा० ३ । २ । ५८) इति क्विन् ॥ १३१ ॥

रोषरूषितमुखीमिव प्रिया वीक्ष्य भीतिदरकम्पि-
ताङ्कुरः। तां जगाद स न वेद्मि तन्वि तं ब्रूहि
शास्मि तव कोपरोपिणम् ॥ १३२ ॥

रोषेति ॥ सरोषरूषितं कोपयुक्तं मुखं यस्यास्तामिव दन्तदशनादि सुखकारित्वेन स्वयमं कोपरहितत्वेऽपि कृत्रिमकोपेन कुञ्चितमुखीं प्रियां वीक्ष्य भीत्या दरमीषत् कम्पितानि भगद्गदान्यक्षराणि यस्या क्रियाया तद्यथा तथा तां इति जगाद । इति किं । हे तन्वि अहं तं न वेद्मि कस्तव कोपरोपणं चकार ब्रूहि शास्मि तव कोपरोपणमिति च पाठः । कोपस्य रोपिणमध्यारोपकं न वेद्मीत्यात्मनः कोपरोपित्व गोपयति ॥ १३२ ॥

कोपकुङ्कुमविलेपनान्मनागन्तराचि क्रशतन्व
वाचि ते। भूदयुक्तसमयैव रञ्जनामानने विधु
विधेयमानने ॥ १३३ ॥

कोपमिति ॥ पुनरपि इति किं । ननु कृशतनु छायापि कोपवशात्

अवाघ्यभापणे तथा अवाचि नम्रीभूते तथा विधुनापि विधेया गुणा-
धिक्यशाद्विधेया कार्या मानना पूजा यस्येयम्भूतं चन्द्राधिके तवान-
ने रोपरूपेण कुङ्कुमेन विलेपनाद्वैनोर्मनागल्पीयसीय रञ्जना रञ्जितम-
प्यादना मा भूत् न कार्या। यस्मादयुक्तसमयैवाप्रस्तावसमुद्भूतैव कि
मपि मया नापराद्धमिति निर्हेतुकेयमनुचिता कोपरञ्जना त्यज्यतामि-
त्यर्थं । अथ वाऽयं सम्भोगसमयो रात्रिरियं न तु कोपरञ्जनसमयः,त
स्मादन्यदा कोप. कार्योऽधुना तु त्यज्यतामित्यर्थं । अथ च चन्द्रतु-
ल्ये मुखे रञ्जना अयुक्तसमया माऽभूत् किन्तु युक्तसमयैवकार्येत्ययुक्त-
समयत्वमेव निषिध्यते । अथ च चन्द्राधिक तव मुखं इदानीं रोपक-
पितं सत्यं न भवतीति अयुक्तसमया रञ्जना न कार्या कोपस्त्यज्यता-
मित्यर्थं । अथ च कोपकुङ्कुमविलेपनरञ्जना अयुक्तसमया यतस्तस्मा-
न्नैव कार्या । शीतकालेष्वुष्णवीर्यतया वदनप्रसाधनं कुङ्कुमविलेपन
युक्तं इदानीं वसन्तेन अमजोष्णया श्रीखण्डपाण्डिमैवाननप्रसाधना
याल न कुङ्कुमरञ्जनेत्यर्थं. ॥ १३३ ॥

क्षिप्रमस्यतु रुजा नखाद्विजाः तावकीरमृतशी
यरं किरत् । एतदर्थमिदमर्थितं मया कण्ठचु
म्बि मणिदाम कामदम् ॥ १३४ ॥

क्षिप्रमिति ॥ हे भैमि कण्ठचुम्बि मम कण्ठे स्थित तथा कामदमि
च्छादापि अनर्घ्यमिदं त्वदीयकरजरदनक्षतजपीडापाकरणार्थं भैमी-
करजादिक्षतपीडापनोदन कुर्वंति मयाऽर्पितं प्रार्थितं तदिदं चिन्ता-
मणिस्रग्दाम माला अमृतशीकर सुधाबिन्दुं किरत् स्रवत्सत्तावकीस्त्व
दीयाः नखद्विजा नखक्षतादिजा रुजाः पीडाः क्षिप्र अस्यतु शमयत्वि
त्यर्थः । तस्मात कोप मा कार्षीरिति भावः । अर्पितमिति पाठे पी-
डाशान्त्यर्थं मया त्वदीयकण्ठे क्षिप्तं मत्प्रदीयकण्ठचुम्बीति व्याख्ये-
यं । रुजा भिदादित्वात् (पा०३।३।१०४) अङ् प्रत्ययः ॥ १३४ ॥

स्वापराधमलुपत् पयोधरे स्मरकरः सुरधनुः कर
स्तव । मेचका व्यजनचालनाभुवा भूय एव चर

मस्तु पदपातुकस्तव ॥ १३७ ॥

दीपेति । हे भैमि यो मल्लिखामणिस्त्वत्पदाहृतिषु त्वदीयचरणकर्षणेषु सतीषु लज्जावशान्मुखवाय्वादिना त्वया कृत दीपलोप स्वकिरणैरेव तिमिरनिराकरणादफल व्यर्थं व्यधत्त । तस्य ममेरागसि अपराध पर केवल करावलम्बनादिव्यसमर्थना परिहारो नो अस्ति तस्मादुपायान्तराभावात्सोऽयं मौलिमणिस्तव पदयोः पातुको वन्दारुरस्तु । उपायान्तराभावे हि नमस्कारेणापि अपराधमार्जनं क्रियते तस्मादयमपि नमस्कारं करोत्वित्यर्थ ॥ १३७ ॥

इत्यमुक्तिमुपहृत्य कोमलां तल्पचुम्बिचिकुरश्चकार सः । आत्ममौलिमणिकान्तिजाह्नुनीं तत्पदाम्बुजसरोजसङ्गिनीं ॥ १३८ ॥

इत्यमिति । स इत्यमुक्तप्रकारेण कोमलां सामयुक्तां उक्तिं वाचं उपहृत्य उपहारीकृत्य प्रणामकरणवशात्तल्पचुम्बिन शय्यास्पर्शिनश्चिकुराः केशा यस्य स आत्ममौलिमणिकान्तिर्निजशिरोमणिद्युतिस्तद्रूपा जाह्नवी नदी सा तत्पदे भैमीचरणौ तद्रूपे अरुणसरोजे तत्सङ्गिनीं सम्बद्धां चकार । प्रणनामेत्यर्थं । नद्याश्च रक्तोत्पलसम्बन्धो युक्त एव । तल्पचुम्बीत्यनेन शय्यायामेव प्रणामः सूचित । भङ्गास्तरङ्गा अस्या सन्तीति विग्रहः ॥ १३८ ॥

तत्पदाखिलनखानुबिम्बनैः स्वैः समेत्य समतामियाय सः । रुद्रभूमविजिगीषया रतिस्वामिनो पदशमूर्त्तताभृता ॥ १३९ ॥

तदिति । कृतप्रणाम स नल स्वैर्निजैस्तस्याः पादयोरखिलेषु दशस्वपि नखेषु जातैरनुबिम्बनै प्रतिबिम्बै समेत्य मिलित्वा रुद्रस्य भूमा बहुत्वमेकादशत्व तस्यापि स्पर्धावशाद्विजिगीषया जेतुमिच्छया स्वयमेकादशमूर्त्तिता धारयता रतिस्वामिना कामेन समता साम्य मियाय गतीय । रुद्रोऽप्येकादशत्वं धारयति तर्हि ममापि तावद्रूपस्याकम भवितु युक्तमिति । एकादशत्वं यदि कामो धारयेत्तर्हि

भैमीदशनखमञ्जातस्वप्रतिबिम्बमस्यास्यको दशमूर्तिधरो नलस्तेनोपमीयतेत्यभूतोपमा । रुद्रभीतीति पाठे एकादशभ्यो रुद्रेभ्यो भीते विजिगीषया तदपाकरणाद्वेतोर्यद्वैकादशमूर्त्तितां मदनो धारयतीह स्वप्रतिबिम्बयोगादेकादशमूर्त्तिर्नलस्तेनोपमीयतेत्यर्थः । प्रणामवशान्नखेषु प्रतिबिम्बित इति भावः । दशानां समीपे उपदशाः । सङ्ख्ययाव्ययेति ( पा० २ । २ । २५ ) समासः । बहुव्रीहौ सङ्ख्येय ( पा० ५ । ४ । ७३ ) इति डच् । उपदशा मूर्तयो यस्येति समासः ॥ १३९ ॥

आख्यदेष कुरु कोपलोपनं पश्य नश्यति कृशा
मघोनिशा । एवमेव तु निशान्तरे दर रोष
शेषमनुरोत्स्यसि क्षणम् ॥ १४० ॥

आख्यदिति । एष तां इति आख्यत अवोचत । इति किं । हे भैमि त्वं कोपलोपनं कुरु । यथार्थसत्तस्य कृशा दिनापेक्षया स्वभावत एवाल्पपरिमाणा अथ च प्रतिक्षणमपचीयमाना निशा नश्यतीति, पश्य कोपापरित्यागे एवंप्रकारेणावशिष्टा रात्रिर्गमिष्यति, तस्मात् कोपं मुञ्च । तु पुनरत्र एवमेव रोषशेषं निशान्तरे आगामिरात्र्यन्तरे दिनापेक्षया अधिकपरिमाणाया शिशिरर्तुरात्री क्षणमात्रमनुरोत्स्यसि कामयिष्यसे परन्तु तन्मनागिष्ट शिष्ट कोपं तदा कुरु इदानीं सम्भोगार्थं प्रसन्ना भव । सर्वं कोपमिदानीमेव चेत् करिष्यसि तर्हि तदा किं करिष्यसि तस्मादल्पं कोपं निशान्तरार्थं स्थापयेति लौकिकरीत्याधुना तावत् कोपं त्यजेति तां भैमीं प्रार्थयति स्मेत्यर्थः । आख्यत । ख्या किंत्वाम् ( पा० २ । ४ । ५४ ) ख्या० । अस्य तिवक्तीति ( पा० ३ । १ । ५२ ) च्लेरङ् । हित्व सह ॥ १४० ॥

साऽथ नाथमनयत्कृतार्थतां पाणिगोपितनिजा
ङ्घ्रिपङ्कजा । तत्प्रणामधुतमानमाननं स्मेरमेव
सुदती वितन्वती ॥ १४१ ॥

सेति । अथ प्रणामसमयानन्तरं प्रणामं मा कार्षीरित्यादिवचनपूर्वं पाणिभ्यां गोपिते निजाङ्घ्रिपङ्कजे यया तथा तस्य प्रणामेन धुतो

णैर्निमित्तैरन्तरान्तरा मध्ये मध्ये सान्तरायाणि विघ्नानि कियन्तं कालमनुष्ठितानि सुप्तिङन्तानि यत्राभियत्र ॥ १४३ ॥

दैवदूत्यमुपगत्य निह्नुय धर्मभीतिकृततद्दृशागसः । अस्तु सेयमपराधमार्जना जीविताविधि नलस्य वश्यता ॥ १४४ ॥

किन्तु यापेत्याह । दैवेति । दैवदूत्यमुपगत्य अङ्गीकृत्य निह्नुयं यथा तथा धर्माद्भीत्या चिन्तनुद्या दूत्याकार्ये प्रतिश्रुतापरिपालनाद्धर्मो लुप्येतेति लुप्यमानाद्धर्माद्भीत्या धर्मस्यैव वा भीतिर्नलापगमता तया हेतुभूतया कृत तादृशमागो निर्व्याप्य भवत् यादृशरूपमुक्तप्रकारमागोऽपराधो येन तस्यापराधिनो नलस्य मम जीवितावधि यावज्जीवं या वश्यता भवदधीनता सैषमपराधस्य मार्जना शोधयित्री अस्तु । यद्यप्रकृति यावदहं जीवामि तावत्तव वश्य किङ्कर एवेति प्रतिज्ञां सत्यां मत्वा तमपराधं क्षमस्वेत्यवोच इति भावः । मार्जना यथान्त इत्यादियुच् ॥ १४४ ॥

स क्षणः सुमुखि यत्र वीक्षणं तच्च राज्यमुरु येन रज्यसे । तन्नलस्य सुधयाभिषेचनं यत्त्वदङ्गपरिरम्भविभ्रमः ॥ १४५ ॥

स इति । हे सुमुखि यत्र वीक्षणं स एव नलस्य मम क्षणो महानुत्सवः प्राभवयदन्त्यादेवैत्यथ । अथ च यत्र महत्यपि काले भवदीक्षण स महानपि काल सुखरूपत्वात क्षणतुल्यः सुखेनातिवाहितुं शक्य इत्यर्थः । तथा येन त्वद्विषये मदीयेन मद्विषये त्वदीयेन व्यापारेण त्वं रज्यसे प्रीता भवसि, तच्च तदेव मम उरु राज्यं त्वदनुरागहेतुर्व्यापार एव साम्राज्यं न तु सकलभूमण्डलाधिपत्यमित्यर्थः । तथा यस्त्वदङ्गस्य परिरम्भविभ्रम आलिङ्गनविलासः त्वच्छरीरस्य मदङ्गे कृतो वा परिरम्भविभ्रम तदेव नलस्य मम सुधयाऽमृतेनाभिषेचनं अञ्जितं स्नानं । सुधाभिषेकादपि भवदङ्गसङ्गः सुखकर इत्यर्थः । सर्वथा त्वमेव मम सकलपुरुषार्थसर्वस्वभूतासीत्यर्थः ॥ १४५ ॥

ष्यते । विक्रीय मूल्येन गृहीते वस्तुनि तु स्वत्व न्याय्यमस्त्येवेति त दारोपो न प्राप्यते इत्यर्थः । यदि मयि रागस्त्व नाभविष्यत तर्हि इन्द्रं परित्यज्य मां नावरिष्यः वृणवत्यसि तावत् तस्मादेवमपि मया याचितुमयुक्तमेवेति । तव किंकरोऽस्मीति भावः । द्विरपति इत्यापर्णेनेप्सिताभ्या इन्द्रापेक्षया त्वदर्पेक्षया बाहुमतितरा गुणवानिति वृत इति न किन्तु मद्वरणे तव कृपैव हेतुः । मा याचनीय कार्येत्यर्थः॥१५७।

श्रृण्वता निभृतमालिभिर्नवद्वाग्विलासमसकृन्मया किल । सोपराघवविवर्ज्यजानकी श्राविणी भयचलासि वीक्षिता ॥ १५८ ॥

शृण्वतेति ॥ किल कदाचित् समये आलिभिः सखीभिः सह असकृत् भवत्या वाग्विलासे कथासंवादे निभृतं पश्चादागत्य स्ते तु यथा तदा वरदानादद्दृश्यत्वे नावगुण्ठ यया तया शृण्वता निभृतं रहसि स्थितत्वात् लज्जाभयाशङ्काभावात् स्वैरं स्वच्छन्दं सखीभिः सह भवत्संवादं किल श्रुते. पश्चादागमनादङ्गीकारवादिना कपटेन शृण्वतासता वा मया त्वं वीक्षिता एवम्भूता दृष्टासि । किम्भूता मयि वक्ष्यो परीक्षार्थं प्रकारं श्रीराघवेण विवर्ज्या त्यक्ता स्वाभिमेवानुरक्तापि जानकी शृणोतीति तद्वीला वीतेव भयेन त्वत्यागशङ्कया भीत्या च व्याकुला । तस्मात् किङ्करभूते मय्यन्यथाधीर्न कार्येति भाव । यद्वा यस्माद्भीता दृष्टासि तस्मादद्यापि मयि तवानुरागोऽस्तीति निश्चित्य भीयतां मयि विश्वसितुमयुक्तमिति भावः । राघव गोत्रापत्ये बिदादेराकृतिगणत्वाद् ञ् । बहुत्वे तु यञञोश्चेति (पा०२।४।६४) अञोलुक् । तेन रघूणामपत्य ययत्ये इति साधु ॥ १५८ ॥

क्षुप्तपत्रविनिमीलितक्षुपात् कच्छपस्य धृतचापलात् पलात् । त्वत्सखीषु सरटाच्छिरोधुतः स्वं भियेऽभिदधतीषु वैक्लवं ॥ १५९ ॥

त्वं मदीयविरहान्मया निजां नीतिमीरितवती

या युधा स्वप्नदर्शनादिवशात् सङ्क्रमय्य संयोग प्रापय्य युवयो जीविकासि प्राणधारणहेतुरभूमित्यर्थः । तत्क्षण तस्या मम सम्बन्धिन क्षण अवसर या अथ विवाहानन्तर स्वकार्यार्थं रताय युधा दत्त. । रात्रिलक्षणे मदीयसमय एव सुरतस्य क्रियमाणत्वात् हन्त कष्टमनुचित कृत उपकार न स्मरथ इत्यर्थः । आपदि कृतोपकारा हि तदीयेऽवसरे अन्यस्मै दत्ते सति कोपात् स्वामिसमीप नागच्छतीति, आपदि कृतोपकाराया मम रात्रिरूपोऽवसर सुरताय दत्तो युवाभ्या, मह्य तु मदीयावसरस्य लेशोऽपि न दत्त प्रभातपर्यन्त सुरतस्यैव करणादिति कोपवशादिति वाऽऽवयोर्निद्रा नायातीति नलस्तामवोचदित्यर्थः ।॰ आप्रभात ताभ्या कामकेलय कृता इति भाव । न क्षणमिति पाठे मैव जीविका तस्या मम रताय प्रीताय क्षणमल्पमपि समय न दत्थ इति रुदयैति व्याख्येय । सङ्क्रमय्य ल्यपि लघुपूर्वादिति (पा०६।४।५६) णेरयादेश । जीविका कर्तरिण्वुल् या षष्ठी द्वितीया द्विवचने वानादेश ॥ १५१ ।

इंदृशं निगदति प्रिये दृशौ सम्मदात् कियदिव न्यमीलयत् । प्रातरालपति कोकिले कल जागरादिव निशः कुमुद्वती ॥ १५२ ॥

ईदृशमिति । इय प्रिये ईदृशमेवप्रकारमन्यदपि निगदति सत्येव सम्मदाद्धर्षात् सुरतानन्दजश्रमादिति यावत् । तस्माद्धेतो दृशौ नेत्रे कियत् न्यमीलयत् किञ्चित् निमीलितवती श्रमसञ्जातया निद्रया प्रयोजिकयेति शेष । निद्द्राविव्यथ । श्रान्तो हि निद्राति सम्मदादेव न दति सतीति वा दृशौ न्यमीलयत् । सम्मदादिव प्रियप्रियोक्तिश्रवणसञ्जातहर्षवशादिवेत्यर्थः । आनन्दातिशयसुखमनुभवन् हि निमीलितदृग्भवतीति प्रतीयमानोत्प्रेक्षा वा । कियदित्यनेन दृशार्धनिमीलनस्य सूचितत्वाद्न्यत्र तथा सूचित । केव । प्रात कोकिले कल मधुरा स्फुटध्वनि श्रोत्रसुख आलपति सति कुमुदिनी इव यथा निमीलिता स्वला भवति सर्वेयमपि । कस्मादिव निशा रात्रिसम्बन्धिनो जागरादिव । रात्रावनिद्रा हि मातङ्गी पूर्वनेन निमीलयति कुमुदिन्यपि रा-

प्रावनिद्रावशादिव प्रातर्निमीलयति, तस्मादियमपि प्रतीयमानोत्प्रे-
क्षा । न्यमीमिलत् इति पाठे णौ चङि भ्राजभासेति (पा०७।४।३) पा-
क्षिक उपधा ह्रस्व । जागरात् भावेघञि जाग्रो विचिणल्ङित्स्विति
(पा०७।३।८५) वृद्ध्यपवादो गुण ॥ १५२ ॥

मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपर
स्परक्रियं । तौ ततोऽनु परिरम्भसम्पुटे पीडनां
विदधतौ निदद्रतुः ॥ १५३ ॥

मिश्रितेति । ततोऽनु तादृक्प्रियभाषणमध्य एव भैमीनिद्रानन्तर
परिरम्भरूपे सम्पुटे सम्पेटिकायामिति यावत् । तदत्र पुनरपि पी-
डना गाढालिङ्गन विदधती कुर्वाणौ तौ, मिश्रितौ परस्परामन्तरालं
घटितौ ऊरू यस्या क्रियाया तद्यथा भवति तथा मिथ पानवशादन्-
न्योन्यमिलितावधरौ यस्यां क्रियाया तद्यथा भवति तथा, स्वप्ने वी-
क्षिता. परस्परक्रिया अन्योन्यचुम्बनादिव्यापारा यस्या तद्यथा तथा
निदद्रतु । वीरमीरालिङ्गन कृत्वा निद्रितावित्यर्थ । पीडना । ण्यन्-
तात्युच् ॥ १५३ ॥

तद्यातायातरंहःस्खलनकलितरतिश्रान्तिनिश्वासधारा
राजस्त्रद्यामिश्रभावस्फुटकथितमिथः प्राणभेद
व्युदास । बालावक्षोजपत्राङ्कुरकरिमकरीमुद्रि
तावीन्द्रवक्षःश्लिष्टाब्ध्यौ तौ क्रमाद्वै जयहृदयमयाद्द्व
न्द्वमानन्दनिद्रां ॥ १५४ ॥

तदिति । तत् द्वन्द्व स्त्रीपुंसमिथुन आनन्देन सम्भोगसुखभरेण नि-
द्रा ततः प्राप । किम्भूता निद्रासम्बन्धिश्वासाना यातायातयोर्निर्गम-
प्रवेशयो सम्बन्धिनोरंहसो वेगस्य स्खलनेन व्याजेन कलिता अङ्गीकृता
या रतिश्रान्तिनिश्वासधाराः सुरतश्रमसञ्जातनिश्वासपरम्परास्तासाम-
न्योन्यगजस्रगमनागमनेन मुहुर्या व्यामिश्रभाव. निद्रावशभैमीनासानि-
र्गतश्वासपरम्परासु निद्रावशनलनासान्तर्गतनिश्वासपरम्परा प्रविष्टा ए

च वैपरीत्ये। इति मिश्रीभावार्थमिव यातायाते, तथा च सतं सम्प्र-
वेशवदन्योन्यनिश्वासपरम्पराणां यो नितरामभेदापन्नत्व इति यावत्।
तेन कर्तृभूतेन स्फुटं स्पष्टं कथितो मिथोऽन्योन्यस्य प्राणानां भेदशून्यता
वा भेदनाश ऐक्यं यस्य तत्। तथा बालाया वक्षोजौ स्तनौ तत्र
पत्राङ्कुराः पत्रवल्लीभूताः तत्पत्रवल्लीषु वर्तमानाः कारिकार्य्यः कस्तू-
र्यादिरचिता हरिणकर्ण्यस्तामिर्मुद्रितं चिह्नितं निद्राभरयन्त्रगाढालि
ङ्गनवशात्तत्सादृश्यप्रतिरूपकं कृतं उर्वीन्द्रवक्षःस्वरूपं चिह्नं तेनाप्यासौ नि
तरां स्पष्टं कथितं एकभावं एकत्वमभेदो यस्यैवम्भूतमुभयोर्मीलनयो
र्हृदयं वक्षः स्वमनश्च चित्तं यत्र। यातेत्यादिबालत्यादि च द्वयं क्रि
याविशेषणत्वेन वा योज्यम्। आत्मैक्यं शरीरैक्यञ्च क्रमेण सूचितमिति
ज्ञेयम्। उभयोरपि मिश्रितप्राणत्वादेकवाक्यताद्यस्य दुरूहेयमिदं ॥ १५४ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुत
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च
यम्। यातोऽस्मिन् शिवशक्तिसिद्धिभगिनी सौ
भ्रात्रभव्ये महाकाव्ये तस्य कृतौ नलीयचरिते
सर्गोऽयमष्टादशः ॥ १५५ ॥

श्रीहर्षमिति। पूर्वार्द्धं पूर्ववत्। शिवस्य शक्तेश्च सिद्धिर्यत्र शिव-
शक्तिसाधनं यत्र कृतं शिवशक्तिसाधननामा ग्रन्थः। शिवभक्तीति पा-
ठे शिवस्य भक्तिः सिद्धिर्यत्र शिवभक्तिप्रतिपादको ग्रन्थविशेषः तस्य
भगिनी एककर्तृकत्वात्तस्य विषये सौभ्रात्रेण शोभनत्वानुभावेन भव्ये
प्रशस्ते तत्तुल्यमनोहरत्वान्नलीयचरिते अष्टादशसर्गः पूर्णः सर्गः
समाप्तः। शिवशक्तिसिद्धिरपि मया कृतेति सूचितम्। सौभ्रात्रमित्यत्र
भावे युवादित्वादण्। अष्टादशः। तस्य पूरणे डट् (पा० ५।२।४८) ॥ १५५ ॥

इति श्रीवेदरकरोपनामश्रीनारायणपण्डितकृते नैषधीयप्रकाशे
अष्टादशः सर्गः समाप्तः ॥

घोषकरा इत्यमरः । दशमोऽवस्थाविशेषो विद्यते यस्यासौ दशमी, स्थविर वृद्ध इति योगरूढोऽयं शब्दः । दशमिन्या वृद्धाया भावो दशमितेति वा । विशिष्टस्तालो वितालः सशिल्पं येषां ते वैतालिकाः शिल्पमिति ( पा० ४। ४। ५५ ) ठक् । सौखशायिका इत्यर्थः । तदुक्तं वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः । राज्ञः प्रबोधसमयं घण्टाशिल्पास्तु घाण्टिकाः । जगिरे गैशब्दे कर्मणि लङ् । अस्मिन् सर्गे सूत इति यावद्धरिणी छन्दः ॥ १ ॥

जय जय महाराज प्राभातिकीं सुषमामिमां
सफलयतमां दानादक्ष्णोर्दरालसपक्ष्मणोः ।
प्रथमशकुनं शय्योत्थाय त्वयास्तु विदर्भजा
प्रियजनमुखाम्भोजात्तुङ्गं यदङ्ग न मङ्गलम् ॥ २ ॥

जयेति । भो महाराज त्वं जय जय सर्वोत्कर्षेण वर्तस्व । त्वं इमां प्रत्यक्षदृश्यां प्राभातिकीं प्रातःकालसम्भवां सन्ध्यादिजनितां सुषमां परमां शोभां दरमीषत् अलसे तत्कालमेव निद्रात्यागादीषद्घूर्णनयुतेऽर्द्धोन्मिषितपक्ष्मणी ययोस्तयोरक्ष्णोर्नेत्रयोर्दानात् विषयीकरणाद्धेतोः सफलयततमां, अतितरां सफलां कुरु । त्वत्कृतदर्शनेनैव धन्या भविष्यति तस्माच्छीघ्रमुद्बुध्यस्वेति भावः । विदर्भजा शय्योत्थाय शय्यायाः सकाशाच्छीघ्रमुत्थाय त्वया प्रथमं पूर्वं प्रातःकालभवं च शकुनं शुभसूचकं प्रशस्तमस्तु तत्स्थाने भैम्येव भूयात् । उत्थितः सन् प्रथमोत्थितभैमीमुखमेव प्रथमं पश्येत्यर्थः । यद्यस्मात् हे अङ्ग स्वामिन् प्रियजनस्य मुखाम्भोजादन्यत् तुङ्गमुत्कृष्टं मङ्गलं शुभावहं वस्तु नास्ति । प्रातरुत्थाय प्रथमं प्रियजनमुखदर्शनं कर्तव्यमिति लौकिकी स्थितिः । त्वत्तः पूर्वं भैम्युत्तिष्ठत्विति भावः । दरालसपक्ष्मत्वं स्वाभाविकमद्भुतस्य जातिः । पश्चात्त्वया पूर्वं मुख्यानमित्युक्तमकुलक्षीनातिश्च । जय जयेति वीप्साया द्विरुक्तिः । प्राभातिकीं प्रभाते भवेति, कालाट्ठञ् । सफलयततमां सफलशब्दात् तत् करोतीति ( पा० ३ । १ । २१ । वा० १ ) णयन्ताल्लोटि तमपि किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यामुः ( पा० ५।४।११ ) शय्योत्थायं अपादाने परीप्सायामिति ( पा० ३।४। ५२ ) णमुल् ॥ २ ॥

वरुणगृहिणीमाशामासादयन्तममुं रुचीनिचय
सिचयांशांशभ्रंशक्रमेण निरंशुकं। तुहिनमहसं
पश्यन्तीव प्रसादमिषादसौ निजमुखमितः स्मेरं
धत्ते हरेर्महिषी हरित्॥ ३॥

वरुणेति। हे राजन् हरेरिन्द्रस्य महिषी राज्ञी असौ प्राची हरित् दिक् इतः प्राग्भागे अङ्कः प्रारम्भभाग एव निजमुखं तत् तिमिरत्यागे प्रसादमिषान्नैर्मल्यव्याजात् स्मेरं सहासं धत्ते बिभर्ति, उत्प्रेक्षते। कथंभूतेव। वरुणस्य महिषीं भार्यां प्रतीचीमाशामासादयन्तं अभिगच्छन्तमत एव रुचीनिचयस्य कान्तिसमूहरूपस्य सिचयस्य वस्त्रस्यांशा भागास्तेषामपि अंशेन लेशेन भ्रंशस्तस्य क्रमेणैकैकभागापगमक्रमेण निर्गता अंशवो यस्य निरंशुकं, अथ च विवस्त्रम् अमुं तुहिनमहसं पश्यन्तीव। मम्मगुरुतरस्त्वमभ्युदयभागाऽभूरिदानीमेतस्यामनुरक्त इमां दशामापन्नोऽयमितीव हसतीत्यर्थः। अन्यापि नारी अनुरागातिविह्वलं गणद्भुतं परस्त्रीसेवमानं विटं दृष्ट्वा मुखं स्मेरं करोति। प्राच्यामरुणादयोऽभूत्। प्रतीच्यां स्वरुणकिरणप्रसरणाभावाच्चन्द्रो निःप्रभोऽस्त जिगमिषुरस्ति। तस्माच्छोभा वृत्तस्येति। अंशेन भ्रंश तृतीयेति (पा० २।१।३०) योगविभागात् समासः। तत्र षष्ठीसमासः। इत समभ्यर्थितसिः। एवंभूतं चन्द्रं पश्यन्ती इतो ऽस्माद्धेतोरिवेति इतो दृश्यमानादस्मात् प्रसादमिषादिति वा। सम्बन्ध पञ्चम्येव॥ ३॥

अमहतितरास्तादृक् तारा न लोचनगोचरास्त
रणिकिरणा द्यामश्चन्ति क्रमाद्धपरस्पराः। कथ
यति परिम्लानि रात्रीतमः सहयुद्ध्वनामय
मपि दरिद्राणप्राणस्तमीदयितस्त्विषां॥ ४॥

अमहतीति। भो राजन् अमहतितरा स्वरूपेणैव सूक्ष्मतरा ध्रुवादयस्ताराः इदानीं तादृक् पूर्ववल्लोचनगोचरा न भवन्ति स्वरूपेण सूक्ष्मत्वात्। पूर्वमपि चतुःप्रमिता महता यत्नेन या दृश्यन्ते ता इदानीं चक्षुषा न दृश्यन्त एव इत्यर्थः। सादृश्यो बहुमहत्त्याः

पूर्वंस्थूलाः प्रकाशमानाश्च यास्तारकाः स्थास्य दूरीदयस्ताः सम्प्रति सू-तरामल्पाः सूक्ष्माश्च सत्यो नेत्रगोचरा न भवन्तीति वा । यस्मात् त-रणेः सूर्यस्य किरणाः अपरस्पराः अहमहमिकया सततमविच्छेदेन प्र-सृमाः सन्तः क्रमात् द्यां गगनं अश्नुवन्ति व्याप्नुवन्ति । सूर्यकरस्पर्शवशाभिः प्रभत्वात् तारा न दृश्यन्ते इत्यर्थः । तथा दरिद्राणाः क्षीणाः प्राणाः समयो यस्येव भूतोऽस्त जिगमिषुः । अथ गमोदयिनो निशानाथश्च-न्द्रो ऽपि रात्रिलमया सह युद्ध्वना सङ्ग्राम कुर्वतीमा निशस्विपा परिश्रान्तिं सामस्त्येन ग्लानि रणवात च कथयति । न केवलं त्विष एव दरिद्राणप्राणा, किन्तु चन्द्रोऽपि इत्यपि शब्दार्थः । अतिशयेन महत्योमहतितराः । घरूपेति ( पा० ६।३।४३ ) ह्रस्व । ततो न स-मासः । गोचरः पुमान् । अपरे च परे च अपरस्परा अपरस्पराः क्रि-यासातत्य इति ( पा०६।१।१४४ ) सुट । द्या सततमविच्छेदेनाश्नुवन्ती-त्यर्थः । सह युद्ध्वानं सहेयेति ( पा०३।२।९६ ) युधे क्वनिपि वनोर-चेति (पा०४।१।७) ङीप् रेफान्तादेशश्च प्राप्तौ वनोमश्च ( पा०४।१।७-वा० १ ) इति निषेधाभवत. । दरिद्राण इति दरिद्रातेरार्धधातुक इत्यादिना ( पा०६।४।११४। वा० १ ) प्राप्तोप्याल्लोपो, न दरिद्रायके लो-पो दरिद्राणे च नेष्यत इत्यादि ( पा० ६।४।११४। कारिका ) निषे-धान्न भवति ॥ ४ ॥

स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः पुरु
सितगरुच्छत्रच्छ्रच्पुटस्फुटचुम्बितः । अपि मधु
करी कालिमन्या विराजति धूमलच्छविरिव र
वेर्लाङ्गलक्ष्मी करैरतिपातुकैः ॥ ५ ॥

स्फुरतीति ॥ भो राजन् तिमिरस्य स्तोमः समूह लाक्षारक्तमी अ-तिपातुकैः अतिक्रामद्भिः ततोऽप्यधिक रक्ततरैः रवेः करैःकृत्वा पुरूणां बहूनां सितगरुता श्वेतपक्षाणां हंसानां चञ्चभिश्चपलैः अत्यन्तरा वि-लसद्भिर्वा चञ्चूपुटैः स्फुट यथा तथा चुम्बित स्पृष्टः पङ्कस्य प्रपञ्चः समूह इव उच्चकैः अतितरां स्फुरति शोभते । तिमिरस्तोम प्रविष्टसू-

रचनां यासामुच्चैरुदात्ततया हृताः शिशिरमहसो
बिम्बादस्मादमंत्र्यमंत्राः ॥ ७ ॥

रवेरिति ॥ रवेः पौर्वाह्णिक्यो रुचय एव ऋचः तासां प्रातःकाले रविकिरणानामृग्रूपत्वात् ऋग्भिः "पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः" इत्यादि श्रुतेः । ऋग्वेदवाक्यानामोङ्कारेषु प्रारम्भप्रणवेषु अ य च लाघवाः प्रारम्भेषु उदयसमयेषु स्फुटां प्रकटां अमलां स्वरोच्चारणादिदोषरहितां अनुस्वाररूपां बिन्दुतां गमयितुं प्रापयितुं चन्द्रबिम्बा दमी स्थितास्तारकाः केनाप्युच्चीयन्तेऽवयवेन समुच्चयन्त इव । कृशामलत्वाद्योग्यत्वात् ऋक्प्रणया बिन्दुनिर्माणार्थं एता गृह्यन्त इव ततो न दृश्यन्त इत्यर्थः । प्रत्यृचमोङ्कारसद्भावात्तद्बाहुल्यात्तारबिन्दूनामिति वक्तुम् । अथवा ऊर्ध्वं चीयन्ते नीयन्ते इति यावत् । सूर्यप्रभोदय एव तारका नश्यन्तीति भावः । तथास्तमयोन्मुखाच्छिशिरमहसश्चन्द्रस्य बिम्बात् मन्त्रग्राहिणोऽप्यासामृचामुच्चैर्नितरां उदूर्ध्वं आयतत्तया गृहीततयाऽत एव लक्षणयाऽऽहिताततया उपरिस्थिततया च अपचोच्चैरुदात्त इति उदात्तलक्षणयोगादुच्चैरुदात्तत्वेन योग्यत्वादुत्तमस्वरस्य विरचनाय निर्माणायाऽसंशयं निश्चितं केनापि हृता नीता इव । उदात्तस्य शिरसि उपलभ्यमानत्वात् त्रिकोणोर्ध्वरेखा लिख्यते । यजुर्वेदवाकशाखायामुपनिषदि रुचिरुदात्त समाहारः स्वरित इति लक्षणं द्रष्टव्यम् । चन्द्रकिरणानामप्यस्तमनये उपरिगामित्वात् सूत्रोपरिसमरेखातुल्यत्वादेवमुत्प्रेक्षितं । सूर्यप्रभोद्गमक्रमेण चन्द्रकिरणा अपि कृशीभूता इति भावः । हृता इति पाठे स्वीकृताः । असंशयं उभयत्रापि योज्यं । रुचि ऋचः । ऋत्यक इति (पा०६।१।१२८) प्रकृतिभावः ॥ ७ ॥

व्रजति कुमुदे दृष्ट्वा मोहं द्वारापिधायके भ
वति च नले दूरं तारापतौ च हतौजसि । लघु
रघुपतेर्जायां मायामयीमिव रावणिस्तिमिरचि
कुरग्राहं रात्रिं हिनस्ति गभस्तिराट् ॥ ८ ॥

व्रजतीति ॥ गभस्तिराट् सूर्यः तिमिरमेव चिकुरास्तिमिरतुल्याः के

भ्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥

नयतीति : अम्भोजस्य कमलकुलस्य अनिदम्भनबान्धवः अकारणमित्रं तदानन्दकारी भगवान् षड्गुणैश्वर्यसम्पन्नः सूर्यो मघवत इन्द्रस्य वैजयन्ताख्यस्य प्रासादस्य प्रघाण अलिन्दं किमपि स्तोकं यथा तथा उपघ्नतां आश्रयतां नयति प्रापयति आश्रयति, तावत्पर्यन्तमूर्ध्वं गात इत्यर्थः । अथ च तं श्लिष्यति । पराङ्मुखशत्रोः शूरस्य परस्पराश्लेषो युक्तः । किम्भूतः, अपसरत् पुर पलायमानमरिरूप ध्वान्तं तस्य प्रतीपः पश्चिमाशायाः सम्बन्धिनि विपरपर्यं गगनमार्गे मत्सहत्या सध्रीभावेन यद्गमनं तस्येव प्रत्यग्दिगन्तगामित्वं, लयगमिति पाठे सध्रीभावेन यत् तिरोधानं सामस्त्येनादर्शनं तेन फलन् सफलो भवन् अश्रान्तो निरन्तर. स्वर्णाचलस्य मेरो. प्रदक्षिणलक्षणो भ्रमः स एव विभ्रमो विलासो यस्य । सद्वस्तुपरिपालनाय रात्रौ भ्रमतोऽयामिकस्य चौरपलायनेन यथा साफल्यं भवति तथा स्वर्णाचलरक्षाय सूर्यस्य भ्रमणविलाससाफल्य युक्तमित्यर्थः । अतएव स्वर्णाचलपद प्रायाजि । अत्रापि पूर्वोत्तरार्द्धविपर्यासो ज्ञातव्यः । प्रघाणप्रघणालिन्दा इत्यमर. । बान्धवः प्रज्ञादित्वात् स्वार्थेऽण् । मघवत्प्रासादस्य प्रातिपदिकान्तस्यान्त्यलोपः । अगारैकदेशे प्रघण. प्रघाणश्च । उपघ्न आश्रये ( पा०३।३।७९--८५ ) इति च प्रघाणोपघ्नशब्दौ साधू । प्रत्यक् दिक्शब्देभ्य ( पा०५।३।२७ ) इत्यस्तातिः अञ्चेर्लुगिति ( पा०५।३।३० ) लुक् । तनिलादयस्तद्धिता ( पा०२।१।३७अ० ) इत्यव्ययत्वं ॥ ११ ॥

नभसि महसां ध्वान्तध्वंसप्रमापणपत्रिणामिह विहरणैः श्येनम्पातां रवेरवधारयन् । अशिशमनत्रासादाशामगान्मृगमां शशी तदधिगमनान्नाशं तारा व्रतैरुदडीयत ॥ १२ ॥

नभसीति । शशी निजाङ्कवर्तिशशाख्यपशुविशेषस्य विशसनं मारण तस्माद्यस्त्रासो भय तस्माद्धेतोराशां पश्चिमां दिशमयात्, ययौ । तथा तारा नक्षत्राणि तद्रूपैः पारावतैः तस्य चन्द्रपलायनप्रसङ्गस्य

सूर्यमृगयारम्भवृत्तान्तस्य वा अधिगमनात् पठितनात उदडीयत पला- यितं । किं विधः शशी । नभसि गगने ध्वान्तमन्धकारस्तद्रूपध्वांक्षाणां काकानां प्रमापणे मारणे विषये पटिष्ठा श्येनाश्यपाक्षिरूपाणां सहसा सूर्यतेजसां इह प्राग्भागे विहरणैः क्रीडनैः रवेः सूर्यस्य श्येनम्पातां मृगयामवधारयन् निर्धारयत् । अन्यस्मिन्नपि राज्ञि मृगयायां श्येन- पातेन काकादीन् हिनस्ति सति शशयुक्तः पुरुषः मदीयं शशमपि मांसार्थमेतदीया. श्येना हनिष्यन्तीति भिया पलाय्य गच्छति । पा- रावता अप्युड्डीय यान्ति । सूर्यकिरणा गगने खेलन्ति चन्द्रः प्रतीचीं गतः । ताराश्च न दृश्यन्त इति भावः । इह नभसीति वा । शशेन नित्यं युक्तः शशी । श्रामादिव तदधिगमादिवेति च प्रतीयमानोत्प्रे- क्षा । अथ शशादनः । पत्री श्येन इत्यमरः । श्येनम्पाता च मृगया । पारावत. कलरव इत्यमरः । पतन्त पात. ञ्वैवेषञ्च श्येनानां पात श्येनपातः सोऽस्यां क्रियायां वर्तते श्येनम्पाता मृगयेति । घञः सा- स्यां क्रियेतिञ (पा०४।२।५८) इति ञः । श्येनतिलस्येति मुम् ॥ १२ ॥

भृशमयिमहस्तारा हाराच्च्युता इव मौक्तिकाः
सुरसुरतजक्रीडालूनाद्द्युमाद्रुयदङ्गणं । अहस्कर
कृत.त्प्रातःसम्मार्जनादधुना पुनर्निरुपधिनिजा
वस्थालक्ष्मीविलक्षणमीक्ष्यते ॥ १३ ॥

भृशमिति । सुरसुरतं देवमिथुनरतं तस्माज्जाता क्रीडा विलासव- स्मर्दः अथ च सुरतुल्यराजादिरतक्रीडासम्मर्दस्तेन लूनात्त्रुटितात् हा- रात् च्युता मुक्ता इव वृत्तरास्तारा: द्युमद्वियदङ्गण सुराणामजिरभूत यदङ्गनं निशि नितरां अपूपुरम्, तदङ्गनं अधुना पुनः अहस्कः सहस्रं करा यस्य स सूर्यस्तेन अथच रजःशोधकेन खलप्वा कृतात् प्रातः सम्मार्जनात् प्राभातिकात् सम्यङ्मार्जनात्तिमिरनिराकरणद्वारा शोधना- दथच शोधन्या रजोऽपनयनेन शोधनान्निरुपधिरुपाधिरहिता स्वाभा- विकी निजावस्था सहजदशा तस्याः श्रिया कृत्वा तमीसम्बन्धिशोभा- त्यागादथच रजःपुष्पमालामुक्ताद्युपाधित्याजनात् सहजश्रिया विलक्ष-

विद्धरंस्तावाधं दुकीलुकदर्शनेन परिक्षोदमान एषा सूर्यः प्रहरागोप-
श्लेषमूलान्युदयाचलसानूनि यानातपसन्तापविलीनशिलाजतुच्छायाव्या-
जेनेव किंयत्कालविलम्बधूमलीभूतरुधिरप्रवाहान् धारयन्ति । रणभू-
मिषु हि कालविलम्बेन धूमलाः रुधिरप्रवाहा भवन्ति । अत एवोद-
यन् उदयं प्राप्नुवन् अरुणो अग्रजस्तस्मात्मविमि प्रतीभावं नमस्कारे
विषये च आदरो जनस्यविशयस्तस्माद्धेतोः अरुणानुज गरुडे मिलति
सङ्गमं प्राप्नुवति सति तयोररुणगरुडयोः सङ्गन्मेलनाद्धेतो रत्नप्रदी-
प्त्या नवास्तःकालमायाकादाकृष्टा इष्टका यत्र तादृशी नूतनेष्टकानि-
र्मिता वेष्टना । नवा इष्टका यत्र शिरसि सन्नवेष्टक तेन वेष्टना प्राकार
इति वा । किमु न शङ्क्यते तद्धी अपि तु सैव तर्क्यत्यर्थः । परिणा-
रभूते दिनप्रकर्षे पुच्यमाने तदाश्रिता लीलाच्छिन्नविक्षा सन्ध्यारागस्य स्वा
मिनो महारजोचितगैरिकसुवर्णभूपितप्राकाराध्यं स्थिति वर्णिता स-
म्भाव्यते । अथच दिनरात्र्याः संतानीभूतयोः सङ्ग्रामे उदयाचलसा-
नूनि तद्धटतुल्यानि रुधिरं धारयन्ति । भटाः प्रहारवशात् रक्तसिक्ता
भवन्ति । तत्र च दिनपक्षीयप्रस्थानां जयित्वात् सुवर्णमयगरुडमस्य-
कोष्ठ इष्टकस्य वेष्टना सुवर्णपट्टिकाया धारणा न तर्क्यते कि, अपि तु
जयिना तया जवितव्यमेवेति, गरुडस्तथा सुवर्णमयविरुदपट्टिकास्थानं
जात इत्युचितमित्यर्थः । नवाष्टकवेष्टनेति क्रियायां युवदिति ( पा० ६।-
३।३४ ) पुंवत । वेष्टक । कर्तरि ल्युट् ॥ १६ ॥

रविरथहयानश्वस्यन्ते ध्रुवं वडवा बलप्रतिबल
बलावस्थायिन्यः समीक्ष्य समीपगान् । निजप
तिवृढगाढप्रेमा रथाङ्गविहङ्गमी स्मरशरपराधीन
स्वान्ता नृपस्य त सम्प्रति ॥ १७ ॥

रवीति । भो राजन् सम्प्रति प्रातःकाले बलस्य प्रतिपक्ष शत्रु प्रा
चीपतीन्द्रस्तस्य बलं सैन्य तत्रावस्थायिन्यो मध्यवर्तिन्यो वडवास्तुरग्यः
गाढप्रेम्णा सूर्याश्वेषु दृढानुरागाः सत्यः रविरथहयान् समीपगान् स-
मीक्ष्य मैथुनार्थं आत्मनोऽश्वानिच्छन्ति ध्रुवमुत्प्रेक्षाया निश्चित वा इ

ति । अश्वकिशोरकाः प्रातः क्षीरपानार्थं ह्रेषन्ते । अश्वास्तु प्रातः हैयङ्गवास्वादनाय ह्रेषन्त इति जातिः । सूर्योदयो जात इत्यर्थः । क्षीरस्यन्तो लवणस्यतीत्यत्र चात्मेच्छायां क्यचि अश्वक्षीरेत्यादिना क्षीरलवणयोर्लालसायामिति (पा०७।१।५१।वा०८२) वचनात् लालसायामसुक् । किशोरकाः अल्प इति (पा०५।३।८५) कः । ह्रेषन्ति ह्रेषृ अव्यक्ते शब्दे । समजः पशुविषयत्वात् समुदोरजः (पा०३।३।६९) इत्यप् । स्यानोत्यार्थं अनपादाने परीप्सायामिति (पा०३।४।५२) णमुल् । लेहः भावे घञ् ॥ १८ ॥

उडुपरिषदः किं नार्हत्वं निशः किमु नौचिती
पतिरिह न यन्नाभ्यां दृष्टो गणेयरुचीगणः ।
स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मनच्छवि
यदनयोर्विच्छेदेऽपि द्रुतं बत न द्रुतं ॥ १९ ॥

उडुवेति । हे राजन् उडुपरिषदः नक्षत्रपरम्परायाः अर्हत्वं किं न अपि तु औचित्यमेवैतत् तथा निशो रात्रेः औचिती न किमु अपि त्वौचित्यमेव यद्यस्मात्ताभ्यां तारापङ्क्तिविभावरीभ्यां गणेयोऽल्पो रुचां गणो दीप्तिसमूहः क्षीणतेजाः पतिः नाथश्चन्द्रः इहास्मिन् समये न दृष्टः । तस्य तयोरौचित्यमेवेत्यर्थः । धन्यास्ता या न पश्यन्ति पति भङ्गं कुलक्षयमिति वचनात् पतिविपद्नदृष्टैव द्वयोरपि अस्तत्वादौचित्येव जातेत्यर्थः । स्फुरन्ती प्रकाशमाना कलङ्कव्याजेन मलिना कृष्णा आश्मनी पाषाणसम्बन्धिनी छविः कान्तिर्यस्यैवम्भूतं उडुपतेर्यद्वक्षो मध्यं अथ च हृदयं स्फुटं निश्चितं आश्मं पाषाणविकाररूपं पाषाणघटितमिवातिकठिनं मलिनं चेत्यर्थः । यद्यस्मादनयोस्ताराराज्योर्विच्छेदे वियोगे ऽथच विनाशे सत्यपि द्रुत शीघ्रं द्रुतं स्फुटितं पाषाणनिर्मितमेवेत्यर्थः । बत खेदे । यत् । यतोविशेषणं वा । स्वस्यापि विनयं निकटे सत्यपि तत्पतिना चन्द्रेण स्वप्रेयस्याः प्रेम न दर्शितमिति तस्यानौचित्यमित्यर्थः । तारापरम्परा रात्रिश्च विनष्टा । चन्द्रोऽपि क्षीणतेजा ध्वस्तप्रायो जात इत्यर्थः । नार्हन्तीति पाठे अर्हः प्रशंसायामिति (पा०३।२।१३३) शतरि अर्हतीभाव इत्यर्थे ब्राह्मणादित्वात् (पा०

५।१।१२४) ष्यञिमित्यादेर्लोपः । अर्हतो नुम् चेति (पा०५।१।१२४।वा०२) नुम् । आश्मं विकारेऽपि अश्मनो विकारे टिलोपः (पा०६।४।१४४। वा०१) इति टिलोपः । आश्मनेति सम्बन्धेऽपि विकाराभावाट्टिलोपाभावे, अश्मनो चासौ अविधेति समासे तुंवत् कर्मधारयेति (पा०६।३। ४२) पुंवत् ॥ १९ ॥

अरुणकिरणे वह्नौ लाजानुडूनि जुहोति या प
रिणयति तां सन्ध्यामेतामवैमि मणिद्युतिः ।
इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः
करमपि न कस्तस्यैवोत्कः सकौतुकमीहितुं २०

अरुणेति । भो राजन् या सन्ध्या अरुणस्य किरणरूपे वह्नौ उडूनि नक्षत्राण्येव लाजान् जुहोति । दिवो मणिः सूर्य्यस्तामेतां प्रातःसन्ध्यां परिणयति प्रापयति विवाहयतीति अहं अवैमि मन्ये । यतः इयमिव सन्ध्या यथा रक्तवर्णत्वादग्निभ्रान्तिं वह्निविषय्यं ज्ञानं पुरा करोति अकरोत् । यद्वा यथैव करोति तथा स एव सूर्य्योऽपि रक्तत्वात् उज्ज्वलत्वाच्च वह्निबुद्धिं पुरा करोति उदितमात्र एव करिष्यति । अथचैवं सन्ध्या पुरा प्रथम वह्निप्रदक्षिणं परिक्रमणं यथा करोति तथैवास्या अनन्तरमेव सूर्य्योऽपि वह्निप्रदक्षिणं परिक्रमणमिदानीमेव करिष्यति । एवकारोऽप्यर्थः । यतश्च सकौतुकं यथा तथा तस्य सूर्य्यस्यैव करं किरणमपीहितुं कः पुरुषो न उत्कः नोत्कण्ठितः, अपि तु सन्देहाद्यनिराकरणद्वारा अस्य किरणमीहितुं सर्व्वोऽप्यपेक्षां करोतीत्यर्थः । अथ च सकौतुकं माङ्गलिकसूत्रकङ्कणेन सह तस्य विवोढुः सूर्य्यस्यैव हस्तमपि वीक्षितुं कः पुरुषो नोत्मनाः अपि तु सकङ्कणं च रक्तं सर्व्वोऽपि द्रष्टुमुत्कण्ठित एव । या च वधूः परिणीयते सा प्रदीप्ते वह्नौ लाजान् जुहोति, सा च वह्निं पूर्व्वं प्रदक्षिणीकरोति । वरोऽपि तया सह पश्चात्प्रदक्षिणीकरोतीति सन्ध्यासूर्य्ययोर्वधूवरत्वमुक्तं । अरुणोदयो जातस्तत्प्रभया च तारा न दृश्यन्ते, अधुना रविरुदेतीति भावः । कौतुकं कुतुके स्यात् हस्तसूत्रेऽपि कथ्यत इति विश्वः । कि-

या विरचितो विप्रोऽपि निहितमकोपाय केवलं वदेत् इति न किन्तु, मदेऽप्यदेत् । सदाक्षेपकोधिना अभिहितेऽपि वक्तुं रोषो न भवति किन्तु, हर्ष एव भवतीत्यर्थ इति वा। किञ्च प्रियवचःप्रवीणा अपि च यं यतो नग्नाचार्या जितनज्जा अत स्वच्छन्दं वदाम इति भावः। नग्नो यन्दिस्तुत्यर्थोरिति विश्वः । वदामनर्मा प्रैषातिसर्गेति (पा०३।३।१६३) प्राप्तकाले लोट् लिङ्श्चेति (पा०५।३।५६) अतिशये तमप् । युध- द्रुहः सत्सूद्विषेति (पा०३।२।६१) क्विप् । उदेतीति पाठे वर्तमानसामी- प्य इति (पा०३।३।१३१) भविष्यति लट् । तस्यै तादर्थ्यमात्रविवक्ष- या चतुर्थी ॥ २१ ॥

भव लघु युताकान्तः सन्ध्यामुपास्व तपे मय
त्वरयति कथं सन्ध्येयं त्वां न नाम निशानु
जा । द्युतिपतिरथःवङ्गुल्ङ्कारी दिनोदयमासि
ता हरिपतिहरित्पूर्वाभूणायितः कियत. क्षणात् २२

भवेति । हे राजन् त्वं तस्मात् लघु शीघ्रं युता पृथग्भूता कान्ता यस्मादेवम्भूतो भव । इदानीं भैम्या सह क्रीडां त्यज । ततः सन्ध्या नित्यकृत्योपासनामुपास्व कुरु । हे तपोमय नित्यकर्मानुष्ठानरूपेण धर्मेणासक्तोज्वलनिर्दोष निशानुजा रात्र्यनन्तरजाता प्राजापतिको इय सन्ध्या त्वां कथं नाम न त्वरयति अपि तु त्वरयत्येव । अथ मुहूर्ता- नन्तरक्षणे द्युतिपतिः सूर्यः दिनोदय दिवसप्रारम्भमवश्य कारी अ- वश्य करिष्यति उदेष्यतीत्यर्थः । यतो हरिरिन्द्रः पतिर्यस्यास्तस्या ह रितो दिशः प्राच्याः पूर्वं भूणायितः दृशमानगर्भ इवाचरितो रक्तवर्णः कियतस्त्रिचतुरानेव क्षणान् आमिता स्थाता । अत सन्ध्यामुपास्वेत्य- र्थः । युतेति युमिश्रणामिश्रणयोरिति अस्मादमिश्रणे क्त स्यत्कादिप्र- दत्यागेन अमङ्गलप्रतीतिपरिहारार्थं युतेति श्लिष्टपदं प्रायोजि । सन्ध्या पदेन कर्मानुष्ठानपर्यन्तमेव कान्तारहितो भव तदनन्तरं पुनरपि युता संयुक्ता कान्ता येनेति मिश्रणमपि विवक्षितं एतदर्थमेतत्प्रायोजि वा । कान्तशब्दस्य प्रियादित्वात्युतेत्यस्य न पुंवत् । त्वरयति हेतुमणिच् ।

कारीति भविष्यत्यावश्यके णिनि तद्योगे अकेनोरिति (पा०२।३।७०) निषेधात् दिनोदयमिति षष्ठ्यभाव । प्राशिता लुट् । चूर्णावित आधारक्त्वन्तात् क्त । घणान् कारावाचित्वाद्द्वितीया । २२ ॥

मुषितमनसश्चित्रं भैमि त्वयाद्य कलागृहैर्निष-
धवसुधानाथस्यापि श्लथश्लथता विधौ । अज
गणदयं सन्ध्यां वन्ध्यां विधाय न दूषणं नम
सितुमना यन्नाम स्यान्न सम्प्रति पूषणं ॥२३॥

मुषितेति । हे भैमि चतु षष्टिकलानां गृहैर्निलयभूतया त्वया अद्य मुषितं चोरितं मनो यस्यापहृतचित्तस्य त्वाजितस्वभावस्य वा निषधवसुधानाथस्य नलस्यापि विधौ श्रुतिविहितसन्ध्यादिनित्यकर्मणि विषये श्लथश्लथता श्लथप्रकारता आदरस्यातिशयोऽनादरातिशयो वा यत् तत इति चित्रं । परमधार्म्मिकोऽप्यनेककलाभिज्ञया त्वया स्वयशीकारेण धर्म्मविमुखः कृत इत्याश्चर्य्यं अनुचितमेतदित्यर्थं । अथ च कलानिधिभूतया त्वया मुषितमनस्कत्वं कलानिधौ विधावपि अनादर इति चित्रं । कथं शैथिल्यमित्यत आह । यद्यस्मादयं परमधार्म्मिकोऽप्य य सन्ध्यां वन्ध्यां सन्ध्योपलक्षितप्रातःकृत्यरहितां विधाय कृत्वा विहिताकरणजन्यं दूषणं नाजगणत् । यच्च सम्प्रति पूषणं सूर्य्यं नमसितु मनाग्नाम नमस्कर्त्तुकामोऽपि न स्यादुद्यति । नामाप्यर्थे । परित्यक्तनित्यकर्म्मा सूर्यस्य नमस्कारमपि न करोतीत्युपालम्भ । अन्योऽपि कामी कस्याञ्चिदासक्तो निजधर्म्मपत्नीमसम्भुञ्जानो वन्ध्यां विधत्ते दोषञ्च न गणयति सम्भोगविप्रलम्भत्वाद्दिनकरमपि नाद्रियते । तथा अयमपि सन्ध्यादिनित्यकर्म्मानुष्ठानार्थं क्षणमपि न मुमोचेति भाव । गृहशब्दस्य पुंस्त्वाद्बहुवचनान्तत्वेऽपि त्वयेत्यनेन सामानाधिकरण्यं युक्तं । स्यात् सम्भावने लिङ् ॥ २३ ॥

न विदुपितरा काचित्यत्नस्तता नियतक्रियाप
तनदुरिते हेतुर्मन्तुर्मनस्विनि मा स्म भूः । आन

त्यागवदत्यागादेनं जनः खलु कामुकीसुभगमभि-

धास्यत्यहो मा पराङ्मुखवदावदः ॥ २४ ॥

नेति ॥ भो मनस्विन्धतिधैर्ययुक्त सावधाने वा त्वत्सकाशाद्विदु-षितरा नितरां पण्डिता सर्वलोकशास्त्ररहस्यविदुषी काप्यन्या मद्य-स्मान्नास्ति ततस्तस्माद्गतेर्नलस्य नियतक्रियापतनान्नित्यसन्ध्यादिक-र्मलोपाद्बिभ्युरिति तत्र त्वं हेतुः मा स्म भूः सन्ध्याद्यनुष्ठानार्थं शीघ्रमेनं मुञ्चेत्यर्थः । किञ्च खलु यस्मात् उद्दामा निरङ्कुशाऽनएव पराङ्मुखवदा-वदः अस्मदीयकलङ्कभाषणशीलो जनः अभिज्ञा भवत्या अत्यागात् भवत्या कर्तृभूतया वा ऽमोचनात् हेतोरेन नलं कामुक्यामतितरां मैथुनेच्छा-वत्या सुभग तत्परवशं कामुकीं पुंसं सुभगा सौभाग्यवती भव-दूशी स्त्री यस्य तद्भूत वाऽभिधास्यति वदिष्यति । स्त्रीपरवशत्वा-देव नित्यकर्मापि त्यजतीति निन्दां करिष्यति तस्माद्विहिताकरणप्र-त्यवायलोकगर्हादिपरिहारार्थं एनं मुञ्चेति भाव. विदुषितरा उगि-त्वात् ङीपि तरपि उगितश्चेति (पा०६।३।४५) पक्षे ह्रस्व । भवदत्या-गात् सर्वनामत्वात् पुंवत् । पूर्वं च सहनमूरस्य सकारादित्वात् सम्भम । सुभगाशब्दस्य प्रियादित्वात् पूर्वस्य न पुंवत् । वदतीति वदावद इ-त्याद्यच् । चरिचलीत्यादिना (पा०६।१।१२ वा०१) द्वित्वमभ्यासस्याग-मश्च ॥ २४ ॥

रह सहचरीमेतां राजन्नपि क्षितमां क्षणं तर-

णिकिरणैः स्तोकोन्मुक्तैः समालभते नभः । उ-

दधिनिरयद्भास्वत्स्वर्णोदकुम्भदिदृक्षुतां दधति

नलिनं प्रस्थायिन्य. श्रियः कुमुदान्मुदा ॥२५॥

रहेति ॥ हे राजन् त्वं सहचरीं सदा सहचरणशीलां तथा क्षितन-मां स्त्रीषु श्रेष्ठां भयभूतामप्येनां क्षणमात्रं रह मुञ्च । यतः नभ स्तो-कोन्मुक्तै घाल्पनिर्गतैर्बालैस्तरणे सूर्यस्य किरणै. करणै समालभते आत्मान. कुङ्कुमानुलेपनं करोति । तथा सङ्कुचन कुमुदात् सकाशाद्वि-काशोन्मुखं नलिन कमलवनं प्रति मुदा प्रस्थायिन्य प्रस्थास्यन्त्यो लक्ष्मी

दर्शनाल्ले शोभासम्पत्तिमत्त्वविशेषबुद्धिरिति सामान्यापेक्षया विशेषस्य चलवत्त्वात्, उभयदर्शिभिः सूर्यकिरणैरिन्द्रापेक्षया शोभासम्पत्तिभ्यां नन्वयमधिक इति निर्णीयतामिति भावः। अन्योऽपि प्राज्ञः कदापाहृतम् सामान्यविशेषभावादिचातुरीं तनोति। अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययमित्यमरः। पाटिमा पृथ्वादिः। ऊहा स्त्रीत्वविवक्षायां गुरोश्च हलः (पा०३।३।१०३) इत्यप्रत्ययः ॥ २६ ॥

अनतिशिथिले पुम्भावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः।
किमपि मुखतः कृत्वा नीतं वितीर्य सरोजिनी
मधुरसमुपायोगे जायां नवान्नमचीकरन्॥२७॥

अनतीति॥ हे राजन् खलु यस्मात् पुम्भावेन पौरुषेण प्रगल्भबलाः उत्कटशक्तयोऽतिधृष्टाः अतएवानतिशिथिले विकासोन्मुखे अत्यक्तकलिकाविधकाठिन्येऽपि पाथोजास्ये कमलमुखे मकरन्दग्रहणार्थं प्रसभं हठान्निविश्य प्रविश्य निरित्वराः निर्गमशीलाः एवम्भूताः अलयः भ्रमराः किमपि कियदंशं मुखतः मुखे कृत्वा आनीतं किमप्यपूर्वरसं स्वादुतरं सरोजिनीमधुरसं कमलिनीमकरन्दरूपं रसं आस्वाद्य यस्तु उपायोगे प्रभातकाले वितीर्य दत्त्वा नवान्नं नूतनमपूर्वं मधु च प्रेमभरात् स्वयमभुक्तमनुच्छिष्टमेव जायां मधुकरीं इत्यर्थः। अचीकरन् कारयामासुः। अतिकमितेऽतिकठिने कमले अबलत्वात् प्रवेष्टुमशक्ता एता इति कृत्वा पौरुषेण स्वयं तत्र प्रविश्य मकरन्दं मुखे धृत्वा समानीय मधुकरीभ्यो दत्त्वा ताभिस्तद्भोजयामासुरित्यर्थः। किञ्चिदासन्नसौरभकाशत्वात् कमलानि विकासोन्मुखानि जातानीति भावः। अन्येनापि प्रातः शुभयोगेऽन्नप्राशनं कार्यते। उषायोग इति पाठो विभावनीयः। नक्तमुषा च शर्वरीति चेति हलायुधः। उषायोगे अर्थाद्दिनेन सहयोगे प्रातरित्यर्थः। निरित्वराः इण्नशजि (पा०३।२।१६३) ति क्वरप्। मुखतः कृत्वेति स्वाङ्गे तस्प्रत्यय इति (पा०३।४।६१) कृञः क्त्वा। जायां हृक्रोरिति (पा०१।४।५३) कर्मत्वं। जाया इत्यपि पाठः ॥ २७ ॥

मिहिरकिरणाभोगम्भोक्तुं प्रवृत्ततया पुरः कलि
तचुलुकापोशानस्य ग्रहार्थमियं किमु । इति
विकसितैकेन प्राग्दलेन सरोजिनी जनयति
मतिं साक्षात्कर्तुर्जनस्य दिनोदये ॥ २८ ॥

मिहिरेति ॥ सरोजिनी कमलिनी दिनोदये प्रातःकाले प्राक् अन्यदलापेक्षया पूर्वं विकसितैकेन दलेन पत्रेणोपलक्षिता साक्षात्कर्तुरात्मनः पश्यतो जनस्य इति मतिं जनयति । इति किं इव मिहिरस्य सूर्यस्य किरणानां आभोगं परिपूर्णतां भोक्तुं अनुभवितुमथ च भक्षयितुं प्रवृत्ततया कृतप्रारम्भतया हेतुभूतया पुनर्भोजनादावकाग्रामृतकरणार्थस्यापोशानसोपस्तरणमन्त्रोदकस्य ग्रहार्थं कलितो यद्वचुलुकः प्रकृतिविशेषो यया एवम्भूता किमु । भोजने प्रवृत्तमापोशनक्रियापूर्वमादावन्ते च भोक्तव्यमिति स्मृतेः । अनाग्रानग्रहीता करकमले एका कनिष्ठाङ्गुलिं प्रसारयति अन्यास्तु संकोचयतीति संप्रदायः । कमलविकाससमयो जातस्तस्मादुद्बुध्यस्वेति भावः ॥ २८ ॥

तटतरुखगश्रेणीसारविणैरिव साम्प्रतं सरसि वि-
गलन्निद्रामुद्राऽजनिष्ट सरोजिनी । अधरसुधया
मध्ये मध्ये वधूमुखलब्धया धयति मधुपः स्वा
दुङ्कारं मधूनि सरोरुहां ॥ २९ ॥

तटेति । साम्प्रतं सरसि सरोजिनी सरस्तटे तरुषु वर्तमानानां खगश्रेणीनां सारविणैर्मिलितैः कलकलशब्दैरिव विगलन्ती स्रवन्ती निद्रेव मुद्रा कोरकता यस्याः, मुद्रा विगलन्ती निद्रायाः सङ्कोचस्य मुद्रा भङ्गो यस्याः सा त्यक्तनिद्रोन्मीलितकमललोचनेवाजनिष्ट जाता । कलकलेन च निद्रितस्य निद्रा अपयाति । तथा मधुपो भ्रमरः सरोरुहां मधूनि कमलमकरन्दान् वध्वाः भ्रमर्याः मुखात् लब्धयाऽधरसुधया ओष्ठगतपीयूषेण मध्ये मध्ये स्वादुङ्कारं स्वादूनि माधुर्यातिशययुक्तानि कृत्वा धयति पिबति । कमलानि विकसितानि भ्रमराश्च

तन्मधूनि क्रमशश्चैव पिबन्तीत्यर्थः । मधुप इति साभिप्राय मधु-पा अप्येतादृशा भवन्ति । समन्ताद्रावाः साराविणानि आभिविधी भाय ( पा० ३।३।४४ ) इत्यिनुणतात् स्वार्थे अणिनुण इत्यण् ( पा० ५।४।१५ ) । स्वादुङ्कारं स्वादुमिणमुल् ( पा० ३।४।२६ ) । मान्तत्वञ्च पूर्वस्य स्वादुमीति निर्देशात् ॥ २९ ॥

गतचरदिनस्यायुर्भ्रंशे दयोदयसङ्कुचत्कमलमु
कुलक्रोडाक्रोडप्रवेशमुपेयुषां । इह मधुलिहां
भिन्नेष्वम्भोरुहेषु समायतां सह सहचरैरालो
क्यन्त्यधुना मधुपारणाः ॥ ३० ॥

गतेति । गतचरदिनस्यातीतचरदिनस्यायुर्भ्रंशेऽवसानकाले सायं-समये दयाया उदयादिव सङ्कुचतां स्वामानां कमलानां मुकुलानि क-लिका. तेषां क्रोडान्मध्यात् नीडेषु प्रवेशं उपेयुषां प्राप्तानां मकरन्दा-स्वादलाम्पट्यात् सायं सन्ध्यासमयेऽपि कमलेषु स्थितानामनन्तरञ्च तेषु सङ्कुचितेषु बहिर्निर्गन्तुमशक्तत्वात् सङ्कुचत्कमलसमरूपेषु नीडेषु स्थितानामिति यावत् । क्रोडमिति पाठे मुकुलविशिष्टकमलक्रोडमेव नीडमयेन गतानां । अनन्तरञ्च रात्र्यतीतायां इह प्रातःसन्ध्यास-मये भिन्नेषु ईषद्विकसितेषु अम्भोरुहेषु समायतां पूर्वदिनान्तसङ्कुचि-तेषु ईषदुन्मिषितेषु सरःसु सुखेन निर्गन्तुं शक्तत्वात्तेभ्यः सकाशाद्दयो-दयीनकमलानि उद्दिश्य समागच्छतां मधुलिहां अधुना सहचरैः पू-र्वं दिनान्ते कमलसङ्कोचात् पूर्वमेव कमलक्रोडान्निर्गतैः सहचरैः सह-चरीभिश्च मित्रकलत्रादिभिः सह मधुना मकरन्देन कृत्वा पारणाः उ-पोषितसम्बन्धीनि भोजनानि आलोक्यन्ते लोकैरिति शेषः । ये रात्रौ कमलबद्धास्ते तत्र मकरन्दाभावान्निर्बन्धवशाच्च कृतोपवासा । अनि-बद्धाः सहचरास्तु रात्रौ निद्रावशात् तद्वियोगाच्च कृतोपवासाः अतः सर्वेऽपि प्रातर्मिलित्वा विकसितकमलमधुना पारणां कुर्वन्तीत्यर्थः । पूर्वदिनान्ते सङ्कुचितानि कमलानि प्रातः पुनः किञ्चिद्विकसितानी-ति प्रसिद्धिः । भूयान् समयो जातः तस्मादुद्बुध्यस्वेत्यर्थः । अन्येऽपि कस्मिंश्चिन्महीयसि मृते बन्ध्यादौ वा निबद्धे कृपया सङ्कुचितहर्षा

भवन्ति । केचिद्य महत्यु परले सति उपयासद्धुर्याणा गृहमध्यं प्रविश्य दिनान्तरे ज्ञातिभिः सह भुञ्जते । ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतपु दुर्लभमिति शास्त्रार्थः सहचरपदेन सूचितः । निगडयन्त्रोऽपि कारागृहेषु भिक्षे पुन्मोचितः समागच्छन् सन् स्वस्य बन्धनग्रन्थिराहरित्तातिभिः सह मधुरैरन्नैः पारणां करोति । क्रोडदीति यथायथं हेतौ ल्यब्लोपे पञ्चमी । समायतां क्षणः शता । सहचरैः पुमान् स्त्रियेत्येकशेषः ( पा० १।२।६७ ) ॥ ३० ॥

तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीवोन्नीयते सरसी न का ।
शरणमिलितध्वान्तध्वंसिप्रभादरधारणाद्गगन
शिखरं नीलत्येकं निजैर्यशोभरैः ॥ ३१ ॥

तिमिरेति । प्राच्यादयो दिशस्तिमिरस्य विरहान्नाशात् पाण्डूयन्ते शुभ्रा इवाचरन्ति, अतएव कृशाः अप्रकाशाः किञ्चिद्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु एवं विधाः । अन्यापि प्रियवियोगात् पाण्डुरनिमग्नातिकृशनेत्रकनीनिका भवति । तथा का सरसी कमलानां हसितैर्विकासैः कृत्वा श्येनीव नोन्नीयते न तक्यंते, अपि तु सर्वा अपि सरस्यः शुभ्रायन्ते । अन्यापि प्रियप्राप्तेः कमलतुल्यमुखहसितैः श्वेता भवति । एकं गगनशिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा तस्यादरधारणाद्धेतोः निजैर्यशोभरैः स्वीयैरकीर्तिसमूहैः नीलति श्याम इवाचरति, अन्योऽपि शरणागतं परित्यज्य तद्वैरिणामादरेणाङ्गीकुर्वन् दुर्यशसा श्यामो भवति । दिशः सरांसि च प्रसेदुः । गगनञ्च नक्षत्राद्याहार्यशोभापगमात् निजं नीलिमानं प्राप्तमिति भावः । पाण्डूयन्ते उपमानादाचारेऽर्थे कर्तुः क्यङिति ( पा० ३।१।११ ) क्यङ् । अकृत् सार्वधातुकयोरिति ( पा० ७।४।२५ ) दीर्घः । वर्णोयाधिमः श्येनशब्दात् वर्णादनुदात्तादिति (पा०४।१।३९) ङीप् तस्य नश्च नीलति नीलवर्णे इति धातुः । आचारक्विबन्तान्नीलशब्दाद्वित्ति ॥ ३१ ॥

सरसिजवनान्युद्यत्पक्षार्यमाणि हसन्तु न क्लान्त
रुचिरुडुश्चन्द्रस्तन्द्रामुपैतु न कैरवम् । हिमगि
रिदृषद्दायादश्रि प्रतीतमदः स्मितं कुमुदविपि
नस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥

सरसिजेति । सरसिजवनानि न हसन्तु अपि तु विकसन्त्येव । यस्मादुद्यन् उदित्वर पक्ष सहायभूत अर्यमा सूर्यो येषां विकस्वराणीत्यर्थ । यश्च यदीयमित्रस्योदयो भवति स सर्वोऽपि हर्षवशाद्विकसत्येव । तथा कैरवं कुमुदं तन्द्रां सङ्कोचं नापैतु अपि तु प्राप्नोत्येव । यतः क्लान्तरुचि गतलक्ष्मीक सुहृच्चन्द्रो यस्य तादृशं । चन्द्रोदये विकसत कुमुदस्य चन्द्रक्षये सङ्कोचो युक्त एवेत्यर्थ । अन्योऽपि सुहृत्क्षये मूर्च्छावशान्निमीलति । अथो अथवा पाथोरुहैर्विकसितकमलै रात्रिसम्बन्धिन्या निजनिद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतं हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादाः भागिनी सदृशी श्रीः शोभा यस्य शुभ्रतरमित्यर्थ । कमलानां रात्रौ निद्रा कुमुदानाञ्च विकास प्रातस्तु कमलानां विकासः कुमुदानाञ्च सङ्कोचो दृश्यते तत स्वीयां निद्रां कुमुदेभ्यो दत्त्वा कमलैस्तद्विकास परिवृत्त्य गृहीत इति सम्भाव्यत इत्यर्थ । सूर्य उदित कमलानि विकसितानि कुमुदानि च सङ्कुचितानीति भाव । प्रतीत प्रतिपूर्वादिणो निष्ठा । प्रतीष्टमिति च पाठ अर्थ पूर्वोक्त एव ॥ ३२ ॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः । इह
तु लिहते रात्रीतर्पं रथाङ्गविहङ्गमा मधु निजवधू
वक्त्राम्भोजेऽधनाऽधरनामकम् ॥ ३३ ॥

धयत्विति । अभिनवो नूतन प्रभाते आगत भ्रमरोत्कर नलिनेषु वर्त्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा । यत रात्रौ कुमुदमकरन्दौघैः कुक्षिम्भरिः आकण्ठतृप्त परिपूर्णोदर रात्रौ कुमुद-

मकरन्दवृन्दे· पूरितोदरत्वात् प्रातर्मधु पिबतु वा मा पिबतु वा न तत्रास्माकमाग्रह इत्यर्थः । अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुक्ता न वा न तत्रादर· । रथाङ्गविहङ्गमास्तु रात्रीतर्पं सकलां रात्रिं तर्पित्वा वियुक्तत्वात् कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा 'इह' प्रत्यक्षदृश्ये निजवधूवक्त्राम्भोजे वर्तमानमधरनामकमोष्ठसंबं मधु अधुना प्रातःसमये लिहते आस्वादयन्ति, एतद्युक्तं । तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थं । अन्यत्रापि तृप्त्यर्थं इच्छया उपार्पितस्य भोजनं युक्ततरं भवति । भ्रमरा मकरन्दमास्वादयन्ति चक्रवाकाश्च प्रातर्वियोगापगमात् कमलमकरन्दमनादृत्य निजसहचरीषु रमन्तीति भाव· । फलेग्रहिरात्मम्भरिश्चेति (पा० ३।२।२६) चात्कुक्षिम्भरि· । रात्रीतर्पं अस्वातितृपोरिति (पा० ३।४।५७) णमुल् । तृतीया प्रभृतीति (पा० २।२।२१) समास ॥ ३३ ॥

जगति मिथुने चक्रावेव स्मरागमपारगौ नव-
मिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ ।
सततममृतादेवाहाराद्यदापदरोचकं तदमृतभुजां
भर्त्ता शम्भुर्विषं बुभुजे विभुः ॥ ३४ ॥

जगतीति । जगति त्रैलोक्यमध्ये चक्रावेव मिथुने स्त्रीपुंसौ स्मरागमपारगौ कामशास्त्रपारगामिनौ तावेवात्र वेदितौ नान्यौ । यद्वा स्मरागमपारगौ चक्रवाकावेव जगति मिथुने नान्ये एतादृशे चतुरे मिथुने स्त इत्यर्थः । कुत एतज्ज्ञातमित्यत आह । यौ चक्रवाकस्त्रीपुंसौ वियुज्य वियुज्य पुनरन्योन्येन सह रात्रौ वियोगं प्राप्य मिथोऽन्योन्यं नवमिव अतिपरिचयजन्यावज्ञाशून्यं नातिस्पृष्टमिव सम्भुञ्जाते सुरतसुखमनुभवतः । अजस्रकामसेवनाद्विरागो भवेदिति वियुज्य सम्भोगः प्रत्यग्रसम्भोगवद्रसातिशयचमत्कारकारी भवतीति कामशास्त्ररहस्यं जानन्त्यैव तावेव कुरुत इत्यर्थः । अत्र दृष्टान्तः । यद्यस्मात् अमृतभुजां केवलपीयूषाहाराणां सुराणां भर्त्ता स्वामी सुललितामृत एति यावत् । विभुर्व्यापकः समर्थो विषभक्षणेऽप्यसम्भावितोपद्रव इति यावत् । स शम्भुः नीरोगकरणद्वारा सर्वेषामारोग्यसुखकारी असम्भा-

पितरोगोऽपि शूरः सततममृतभक्षणादेवाहाराद्रत्यादरोचकं अमृताशनानभिलाषरूपं रोगमापत् प्राप । तत् तस्मात्परिहारार्थं विषं बुभुजे । सततमधुररसास्वादजन्यारुचिपरिहारार्थमेव स कालकूटं जग्धिवान्, अनन्तरञ्च पुनरमृतभक्षणे सत्यपि रुचिस्तस्य यथा जायते तथा वियोग एव सम्भोगे नितरां रुचिमुत्पादयतीति बुद्ध्या चक्रवाकाभ्यां क्षिपत इति तावेव कामशास्त्ररहस्यज्ञाविति भावः । पारणी अन्तात्यन्ते ति ( पा० ३ । २ । ४८ ) ड । सम्भुज्जाते भुजोऽनवने इति ( पा० १ । ३ । ६६ ) तङ् । अनेन सम्भोगस्य वियोगादेव नूतनत्वं भवतीति सूच्यते ॥ ३४ ॥

विशति युवतित्यागे रात्रीमुचं मिहिकारुचं दि
नमणिमणिं तापे चित्तानिलाच्च पिपासति ।
विरहतरलजिह्वा बहवाह्वयन्त्यतिविह्वला
मिह सहचरीनामग्राहं रथाङ्गविहङ्गमाः ॥ ३५॥

विशतीति । युवतित्यागे चक्रवाकनितम्बिनीवियोगे मिहिकरुचं शीतांशुं विशति सति रात्रीमुचं रात्रिलक्षणप्रियत्यागिन तथा दिनमणेः तापे परितापे औष्ण्ये च चित्तानिलचक्रवाकहृदयात् सकाशात् दिनमणिमपि सूर्यकान्तं पिपासति जिगमिषति सति विरहेण तरलन्तो तरलेवाचरन्तो विह्वलीभवन्तो स्खलन्तो जिह्वा येषां ते रथाङ्गविहङ्गमा विरहेणातिविह्वला सहचरीं चक्रवाकीं नामग्राहं स्वसङ्केतेन नाम गृहीत्वा इह प्रभाते कोलाहलेन वा बहुवारं आह्वयन्ति आकारयन्ति । अन्योऽप्यतिविह्वलो बहुवारं आकार्यते अपितु न वेत्ति सन्देहात् । प्रतिचक्रवाकानां संयोगः परितापत्यागः परस्पराह्वानं चन्द्रधूसरत्वं सूर्यकान्तसन्तापश्च । प्रालेयं मिहिकेत्यमरः । रात्रीमुचं क्विप् । रुगिति सम्पदादित्वात् । मिहिका रुग्यस्येति समासः । तरलजिह्वा तरलेवाचरतीति आचारक्विबन्ताच्छतरि पुम्वत् आह्वयन्ति स्पर्द्धायामाङ्भाव. ॥ ३५ ॥

स्वमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः किम्

कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकां । लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये शृणुत शृणुतासूर्यंपश्या न सा किल भाविनी ॥ ३६ ॥

रवेति । जनो लोकः स्वमुकुलनमयैः आत्मीयकलिकानेत्ररूपैः कृत्वा अन्धम्भविष्णुतया अनन्धाया अप्यन्धत्वाङ्गीकाराद्धेतो रवेः अनवेक्षिकां अनवलोकिकां कुमुदिनीं किम् किमर्थं दुर्व्याचष्टे दुष्टां कथयति । अवश्यदर्शनीयपवित्रसूर्यादर्शननियमादियं निन्द्यैव न सहत इति लोकः किमिति निन्दति, अपि त्वयुक्तमेव निन्दतीत्याशयः । उ अहो किं निन्दतीति वा । अन्धम्भविष्णुतयाऽविचारतया रहस्यमज्ञात्वैव किमिति निन्दतीति जनविशेषणं वा । कथमयुक्तमित्यत आह । हे श्रोतारः एव शृणुत शृणुत तस्याः सूर्यादर्शने हेतुमाकर्णयत । ये राज्ञो नृपस्य दाराः कवीनां पाणिन्यादीनां प्रतिभामयेषु व्याकरणादिग्रन्थेषु विषये लिखितास्तच्छिष्यैः पठिताश्चातः अवश्यदर्शनीयं सूर्यमपि न पश्यन्तीत्यसूर्यम्पश्या राजदारा इत्येव लिखितास्तच्छिष्यैश्च तथैव पठिताः । ननु प्रकृते किमित्याशङ्क्याह सा कुमुदिनी किल प्रसिद्धं न भाविनी भविष्यति यथोक्ता दाराः, अपि तु राज्ञश्चन्द्रस्य एव च नृपस्य दारा भवन्त्येव । राजमहिष्यो हि अतिसुरक्षितत्वादसूर्यम्पश्याः, एवमपि तथा तस्य देवस्य अपि असूर्यम्पश्यता युक्तेति रहस्यानभिज्ञो जनो वृथैवैतां निन्दतीत्यर्थः । किलशब्दः किंवदर्थो वा । अत्र य इति कुमुदिनीपरामर्शेऽपि दारैः सामानाधिकरण्याद्बहुवचनं । येति पाठः समीचीनः । लिखितपठिता एकवचनं बहुवचनं वा । सूर्योदयवशात् कुमुदिनी सङ्कुचतीति भावः । अन्धम्भविष्णुतया कर्तरि भुवः खिष्णुजिति (पा०३।२।५७) अन्धशब्दे उपपदे भुवः खिष्णुच् इत्यात् अरुर्द्विषदिति (पा०६।३।६७) मुम् । अवेक्षिका ण्वुलि प्रत्ययस्थादिति (पा०७।३।४४) कात्पूर्वस्येत्त्वं । लिखितपठिता कर्मधारयो द्वन्द्वो वा । असूर्यम्पश्याः असूर्यललाटयोरिति (पा०३।२।३६) खश् । मित्यात्मुम् । अत एव ज्ञापकात् क्रियायोगिनापि नञ् समास ॥३६॥

चुलुकिततमःसिन्धोर्भानोः करादिव शुभ्यते नभसि बिसिनीबन्धोः रन्ध्रच्युतैरुदबिन्दुभिः। शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणादनुपदमदः पङ्कं शङ्के ममी मम तन्वते ॥ ३७ ॥

चुलुकितेति। गगने गच्छद्भिर्भृङ्गैः उदबिन्दुभिरिव नभसि शुभ्यते दीप्यते। किम्भूतैरुदबिन्दुभिः चुलुकः कृतश्चुलुके धृत्वा पीतः तमःसिन्धुस्तिमिरसमुद्रो येन तस्य बिसिनीबन्धोः पद्मिनीमित्रस्य सूर्यस्य करात् किरणादेव हस्तात् रन्ध्रेभ्योऽङ्गुल्यन्तरालविवरेभ्यश्च्युतैर्गलितैः, चुलुकेन पीततमःसिन्धोरुपरि वर्तमानस्य रवेः कराङ्गुलीविवरेभ्योऽधोगलिता इस्वजलबिन्दव इव भृङ्गा गगने शोभन्त इत्यर्थः। चुलुकितेति करविशेषणं वा। अनुपदं गगनात् सकाशात् कमलानि प्रति पातानन्तरं शतदलाढ्यान्यतिस्थूलानि कमलानि तथा मधुस्रोतसः मकरन्दप्रवाहस्य कच्छद्वयी मकरन्दार्द्रभागद्वयं यत्तटद्वयं तस्याः परिरम्भणात् सश्लेषाद्भ्रमतस्तत्र लग्नाद्धेतोरमी भृङ्गा अदः पङ्कं शङ्के अमुष्य पीतस्य तमःसिन्धोरधःस्थितावशिष्टकर्दमसम्भावना वैतालिकस्य मम तन्वते विस्तारयन्ति। सकलेऽपि तमोजले पीतेऽवशिष्टमपि पङ्कमिव भृङ्गाः शोभन्त इत्यर्थः। अमुष्या मकरन्दप्रवाहकच्छद्वय्याः पङ्कमिति वा। प्रवाहतटद्वये पङ्कोपयुक्तः। भृङ्गाश्च मकरन्दस्योपरि नोपविशन्ति किन्तु भ्रमन्ति इति तेषां जातिः। प्रातःकालो जातोऽन्धकारः सकलश्च नष्टः भ्रमरास्तरुनीडेभ्यो निर्गत्य गगने उड्डीय मधुपानार्थं कमलान्युद्दिश्य यान्तीति भावः। चुलुकितमिति तत्करोतीति (पा० ३।१।२१, वा० ७१) णयन्तात्क्तः। शुभ्यते शुभ्ड् दीप्तौ भ्वादिः यक् ॥ ३७ ॥

घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरःपरिसरचरैर्जातं भानोः कुमारतरैः करैः। स्रजनि जलजामोदानन्दारपातितमधुव्रतावलितुलनाद्गुञ्जापुञ्जाद्भिय ग्रहयालुभिः ॥ ३८ ॥

घुसृणेति । घुसृणसुमनसः कुङ्कुमकुसुमानि तासां श्रेणिस्तस्याः श्री या कान्तीनां ग्रहणादरिभि ग्रहणादरवशालिः साम्योऽपि रक्तसरैः सरः परिसरचरैस्तीरसञ्चरणशीलैः कुमारतरैरतिशयलैर्भासा भर्तुं करैः सूर्यं किरणैः जलजामोद गगनावगाहिकमलबहुलपरिमलस्तद्विषय आनन्दस्तेनोत्पत्तिर्गुरुत्पत्तनशीला मधुव्रतावलिस्तया शबलनात् मिश्रणाद्धेतोः गुञ्जापुञ्जश्रिय अर्द्धरक्तं परकृष्णगुञ्जाराजिशोभा ग्रहयालुभिर्ग्रहणशीलैः अजनि तरसङ्ग्रीर्णातमित्यर्थः । बाला अपि सुमनसां चौराद्याभ्यनादरिणो भवन्ति । बाला अपि रक्तकरा भवन्तीति केचित् । अजनि भावे क्तिन् । उत्पतिष्णु अलङ्कृञि (पा०३।२।१३६) इष्णुच् । शब लम तत्करोतीति (पा०३।१।२६ वा०१)ण्यन्तान्नपुंसके भावे ल्युट ॥ ३८ ॥

रचयति रुचिः शोणीमेतां कुमारितमा रवेर्यद-
लिपटली नीलीकर्तुं व्यवस्यति पातुका । अ-
जनि सरसी कल्माषी तद्ध्रुवं धवलस्फुटत्कमल-
कलिकाखण्डैः पाण्डूकृतोदरमण्डला ॥ ३९ ॥

रचयतीति । यद्यस्मात् रवे कुमारितमा अतिबाला रुचि सरसीं शोणीं रक्तवर्णां रचयति । यस्माच्च कमले मकरन्दास्वादार्थं पातुका अलिपटली भृङ्गश्रेणी स्वसम्बन्धादेतां नीलीकर्तुं व्यवस्यति । यतश्चैव धवलानां स्फुटन्तीनां कमलकलिकानां खण्डैः समूहै पाण्डूकृत उदरमण्डलमध्यदेशो यस्याः सैतादृशी तस्मात ध्रुव निश्चित इयं सरसी कल्माषी कर्बुं रेवाजनि जाता । रक्तकृष्णश्वेतवर्णमिश्रणात् कर्बु रत्वोत्प्रेक्षा । ध्रुवमुत्प्रेक्षायां वा । बालातपो जातः भ्रमराः परितो भ्रमन्ति कमलानि विकसितानीति भावः । चित्रं किर्मीरकल्माषेत्यमर । शार्ङ्गरवाद्यञो ङीनिति (पा०४।१।७३) ङीप् । कुमारितमा घरूपेति (पा० ६।३।४३) ह्रस्वः । पटलकल्माषी गौरादी ॥ ३९ ॥

कमलकुशलाधाने भानोरहो पुरुषव्रतं यदुपकु-
रुते नेत्राणि श्रीगृहत्व वस्रुभिः । कविमिरुपमा

दानादम्भोजतां गमितान्यसावपि यत्तथाभा-
वान्मुञ्चत्युलूकविलोचने ॥ ४० ॥

कमलेति । कमलमात्रस्य कुशलाधाने आनुकूल्याचरणे भानोः अहो अत्याश्चर्यरूपं पुरुषस्याप्रि व्रतं नियमः, अङ्गीकृतपरिपालनशीलत्वमिति यावत्, यं दृष्ट्वाऽहो आश्चर्यरूपः पुरुष इति सर्वे वदन्ति । कुतो ज्ञातमत आह । यद्यस्मात्तत्विकासानि कमलानि विकासयतीति किं वाच्यं किन्तु श्रियः कान्तिलक्ष्म्याः गृहस्य स्थानता विवक्षुभिः वक्तुमिच्छुभिः व्यासवाल्मीकिकालिदासादिभिः कविभिः उपमादानात् किञ्चिच्छ्रीगृहत्वादिगुणसादृश्यादपि अम्भोजतां कमलत्वं गमितानि प्रापितान्यारोपितकमलत्वान्यपि नेत्रकमलानीति निर्दिष्टानि लोकनेत्राणि असौ रविः उपकुरुते उन्मीलयति । उदिते हि सूर्ये लोकनेत्राण्युन्मीलन्ति । अथच घटाद्यर्थग्रहणसमर्थानि करोति । यत आलोकस्य कृतमेव चक्षुः पदार्थग्रहणसमर्थं । यदपि अन्यथाभावात् श्रीगृहत्वाभावात् कविभिः कमलत्वेनाननुरक्तत्वादुलूकविलोचने मुञ्चति नोन्मीलयति । न च पदार्थानाप्यति । यत्रोलूकस्य दृष्टिस्तत्रालक्ष्मीरिति लोकप्रसिद्धिस्तन्नेत्रयोः श्रीगृहत्वं दूरनिरस्तं । सूर्येण कमलानि कमलतुल्यानि च लोकनेत्राणि विकाश्य उलूकनेत्राणि कमलगुणयोगाभावादविकाश्यान्वयव्यतिरेकाभ्यां स्वप्रतिज्ञा सत्या कृता । एवंविधः सत्यप्रतिज्ञः कोऽपि नास्तीत्यर्थः । कमलानि विकसितानि सर्वोऽपि लोकः प्रबुद्धः कौशिकनेत्रे च निमीलिते प्रातःकालो जात इति भावः । श्रीगृहत्वविवक्षुभिः द्वितीयेति योगविभागात् समासः । उपमितिरुपमानं नपुंसके भावे ल्युट् । उपमीयतेऽनेनेति उपमानं सादृश्यमिति भावः ॥ ४० ॥

यदतिमहती भक्तिर्भानौ तदेनमुदित्वरं त्वरित-
मुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः । इह हि स-
मये मन्देहेषु व्रजन्त्युदवज्रतामभिरविमुपस्थानो-
त्क्षिप्ता जलाञ्जलयः किल ॥ ४१ ॥

ज्योतिरित्याद्यग्निहोत्रमन्त्रादिप्रामाण्यात् दहनमविशत्। सैषा दीप्तिः अपरभुवनात् पातालात् सकाशात् हठ त् बलात्कारेणाग्निरविमैयोद्भूत्योद्यं प्राप्य नरकोरयं कृतामरपतिपुरस्य स्वर्गस्य प्रथ्या वा प्राप्तियंया स्वयम्भूना सभो तीव्रतया तीक्ष्णतया सह वर्तमाना मूर्ति यस्यास्तथां धत्ते। क्रमेण सूर्यं ऊर्ध्वदेशे प्राप्ते दीप्तिः खरतरा जातेति भाव.। या नारी भर्तरि विनाशमनयप्राप्ते विनष्टे सति तस्मिन्ननुरागिणी सती जन्मान्तरेऽपि तत्प्राप्त्यर्थमग्निप्रवेशं कुरुते,. सा दुष्कृते पातालप्राप्तमपि निरयपतितं, व्यालग्राही यथा व्यालमित्यादिवचनप्रामाण्यान्निरयाद्बलादुद्धृत्य तस्य कृतस्वर्गप्राप्तिः सतीनां पतिव्रतानां व्रतमेव मूर्तिः शरीरं यस्याः, सती गौरी तस्या वा प्रत्युक्ता मूर्तिर्यस्यास्तथा धत्ते। गौरीवद्दिव्यमयीत्यर्थः। मनयप्राप्ते प्राप्तापन्न इति (पा० २।२।४) समासः॥ ४४॥

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः पितृ
श्रितिहरिरपर्णाद्याहारजः किल कालिमा। श्रम
नयमुनाक्रोडैः कालैरितस्तमनां पिबादपि यद्
मलच्छायात् कायादभूयत भास्वतः॥ ४५॥

बुधेति। तनुजन्मनोऽपत्यस्य तनौ वर्तमानः कालिमा श्यामत्वं किल प्रसिद्धं निश्चितं वा, पितुः पित्रोर्वा श्रितिहरिद्रुर्णादीनां कल्याणीलवर्णपत्रफलशाकादीनां च आहारो तज्जनकं श्रितिहरिद्रूपं यदाद्यमदनीयं पत्रशाकादि वा तस्माज्जातः सश्यामो मैत्राननयस्यादित्यादि बुधानामुदयनाचार्यादीनां इयं कथा गोष्ठी तथ्यैव सत्यैव। यद्यस्मा हेतोः भास्वतः इतः प्रत्यक्षदृश्यादमलच्छायादुज्ज्वलकान्तेः शुक्लभास्वरादपि समनां पिबात् तमिस्रैकहारात् कायात् श्रमनयमुनाक्रोडैः यमयमुनाशनैश्चरैः कालैः श्यामैरभूयतोत्पन्नं। सूर्यकायस्योज्ज्वलत्वेऽपि श्यामतमिस्राहारपरिणतिवशात् यमादिभिरपत्यैः श्यामैर्जातं तस्मादियं पण्डितकथा सत्यैवेत्यर्थः। तत्र तमपि तमः सूर्यैण नाशितमिति भावः। पाघ्रा ध्मादेः पाश्वदीर्घदेदिति (पा० ३।१।१३४) पयत्। कालीय का

लौ चेति पुमान् स्त्रियेत्येकशेष (पा० १।२।६७)। तमसा कर्मणि षष्ठी। अभूततद्भावे सह्। काक. कालोचित पशुमन्द छायासुत. शनिरित्य मरशेषः॥ ४५॥

अभजत चिराभ्यासं देवः प्रतिक्षणदात्ययं दिन
मयमयं कालं भूयः प्रसूय तथा रविः। न खलु
शकिता शीलं कालप्रसूतिरसौ पुरा यमयमुनयोर्ज
न्माधानेऽप्यनेन यथोज्झितुं॥ ४६॥

अभजतेति। अयं रविर्देवः क्षणदा रात्रिस्तस्या अत्ययं प्रत्यूषं प्रति रात्र्यपगमे इत्यर्थः। दिनमयं दिनरूपं कालं तुल्यादिलक्षणसमयं अयमयं तद्रूपं श्यामं वपुः भूयो बहुतरं यथा तथा पौनःपुन्येन वा प्रसूय उत्पाद्य चिरकालमभ्यासं तथा तेन प्रकारेण अभजत अभ्यस्यत्। यथा येन प्रकारेण पुरा पूर्वं कालप्रसूतिर्यस्याश्च काली श्यामा प्रसूतिर्यस्य वस्तुतोऽसौ सूर्यः यमयमुनयोरपि प्रसविष्यतोर्जन्माधाने जन्माधेयेऽजनमयमयेऽपि, अनेन चिराभ्यासेन हेतुना शीलं कालापादनस्य स्वभावमुज्झितुं खलु निश्चितं न शकिता समर्थो भविता। कालप्रसूतिस्वभावः सूर्यः स्वभावस्य दुरतिक्रमत्वात् सायमपि कालमुदपादयदित्यर्थः। उदयमानेन सूर्येण दिवसः कृत इति भावः। प्रातःकाले क्रियमाणोऽभ्यासः पटुतरो भवति। चिराभ्यासं मयूरव्यंसकादित्वात् समासः। यद्वा ऽकारान्तस्य चिरशब्दस्य अत्यन्तसंयोगे चेति (पा० २।१।२९) समासः। प्रतिक्षणदात्यये वीप्सायामव्ययीभावे नाव्ययीभावादिति (पा० २।४।८३) सुपो नलुक्। तृतीयासप्तम्योर्बहुलमिति (पा० २।४।८४) इयम् अरपयमिति निपातः कालप्रसूति पक्षे पुवत्॥ ४६॥

रुचिरचरणः सूनोरूर्वीसनाथरथः शनिं शमन
मपि स त्रातुं लोकानसूत सुताविति। रथपद्
कृपासिन्धुर्बन्धुर्दृशामपि दुर्जनैर्यदुपहसितो मा
स्वान्नास्मान् हसिष्यति कः खलः॥ ४७॥

न्तुरित्यपि विरुद्धलक्षणेति उपमालङ्कारः । एवम्भूतः सूर्यः समुदेतीति भावः ॥ ४७ ॥

शिशिररुजां घर्मं शर्मोदयाय तनूभृतामथ
खरकरश्यानास्यानां प्रयच्छति यः पयः । ज
लभयजुषां तापं तापस्पृशां हिममित्ययं परहि
तनिरतकृत्यावृत्तिः स भानुरुदञ्चति ॥ ४८ ॥

शिशिरेति । स भानुरुदञ्चति उदेति । स कः, यः शिशिररुजां शिशिरं हिमं तस्माज्जाता रुक् पीडा येषां तेषां तनूभृतां जनानां शर्मणः सुखस्योदयाय प्रकर्षाय वसन्तनिदाघसम्बन्धिनं घर्मं उष्णं प्रयच्छति । अथानन्तरं वसन्तनिदाघसम्बन्धिनः खराः तीव्रतराः कराः सूर्यकिरणास्तैः श्यानं शुष्कं म्लानं वा आस्यं मुखं येषां तेषां देहिनां सुखाय पयः वर्षासम्बन्ध्युदकं प्रयच्छति दत्ते । ततो जलभयजुषां जलभीतानां तापं दत्ते । ततस्तापस्पृशां शारदतापवतां देहिनां हैमन्तं हिमं दत्ते एवम्प्रकारेण परेभ्यो यद्धितं तस्मिन् विषये निरता पौनःपुन्येन वर्तमाना कृत्ये शीततापजलदानरूपपुरुषव्यापारस्यावृत्तिरावर्तना यस्य । यद्वा कृत्यानां शीतादिदानरूपाणां कार्याणाम् आवृत्तिर्यस्यैवम्भूतः परोपकारपरः सूर्य उदेतीत्यर्थः । श्यानेति द्रवमूर्तिस्पर्शयोश्चित्यात्राभावात् सम्प्रसारणाभावः । निष्ठानत्वम् । परहितेति चतुर्थी तदर्थार्थेति (पा० २। १। ३६) समासः । कृत्या कृञः श चेति (पा० ३। ३। १००) योगविभागात् क्तिनि कृतिः । चकारात् क्यपि तुकि च कृत्या । पक्षे ग्रहार्थे विभाषा कृवृषोरिति (पा० ३। १। १२०) क्यपि तुक् ॥ ४८ ॥

इह न कतरश्चित्रं धत्ते तमिस्रततीर्दिशामपि
च तनुभामुत्सङ्गेषु स्थिता धयता क्षणात् । तरु
शरणतामेत्य च्छायामयं निवसन्नमः शमयितु
मभूदनैश्वर्यं यदयं मरीचिषां ॥ ४९ ॥

इहेति । पूर्वादीनां चतसृणामपि दिशां अन्तेषु प्रान्तदेशेषु स्थिता वर्त्तमानात्मनिस्तनतीस्तिमिरपरम्परा. यत्नाद्वयतां विनाशयतामपि अर्यम्णः सूर्यस्य रोचिषा तेजसां, रविः शरणं यस्य तद्भावं वृक्षतलवासित्वादेत्य प्राप्य निवसद्वर्त्तमानं छायारूप तमः शमयितुं विनाशयितुं आनैश्वर्य्यं सामर्थ्यमभूदिति यत् इहाश्चासामर्थ्ये विषये कस्य को नाम जनस्त्विह विस्मयं न धत्ते, अपि तु सर्वोऽप्याश्चर्यं प्राप्नोत्येव । दिगन्तगताया अपि तिमिरपरम्परायाः संहारे येषां शक्ति तेषां रवितेजसां तरुतलमात्रस्थितं छायारूप समीपवर्त्यपि तमः शमयितुं शक्तिर्नाभूदित्याश्चर्यमित्यर्थः । तनु इति पाठे तनुं स्वरूप शरीरं वा शरणं यस्य तद्भाव प्राप्य निवसदित्यर्थः । महदाश्रयेण स्थितमपि यो विनाशयितुं शक्नोति सोऽल्पाश्रयेण वर्त्तमानं शमयितुमपि न शक्नोतीत्याश्चर्यमेव । तरुच्छायारूपं देहच्छायारूपं वा तमो विहाय सर्वमपि तमः सूर्येण विनाशितमिति भावः । आनैश्वर्य्यं अनीश्वरस्य भाव इत्यर्थे न नञ् पूर्वादिति ( पा० ५। १। १२१ ) भावप्रत्ययनिषेधेऽपि ब्राह्मणादिष्वनीश्वरशब्दस्य पाठात् ष्यञि नञः शुचीश्वरेति ( पा० ७। ३। ३० ) पक्षे उभयपदवृद्धिः ॥ ४९ ॥

जगति तिमिरं मूर्च्छामन्धत्वजेऽपि चिकित्सतः
पितुरिव निजाद्दस्रादस्रावधीत्य भिषज्यतः ।
अपि च शमनस्यासौ तातस्ततः किमनौचिती
यदुपनयः कह्लाराणामुदेत्यपमृत्यवे ॥ ५० ॥

जगतीति । दस्रौ नासत्यौ निजात् स्वीयात् अस्मात् पितुः सूर्याद् धीत्येवायुर्वेद पठित्वैव भिषज्यतः । लोके चिकित्सां कुरुतः । किम्भूतात् पितुः, जगति वर्त्तमानं तिमिरं अपथ वस्तुदर्शनासामर्थ्यजनकं नेत्ररोगविशेषं चिकित्सतो नाशयतः । आयुर्वेदोक्तप्रतीकारेण शमयतः । तथा अजभुजे कमलवनषष्ठे वर्त्तमानां मूर्च्छां सङ्कोचमपि नाशयतः, अथवाप राय मपत्नादाविति वचनादपां मूलभूतत्वादब्जपूरे लोकमध्ये वर्त्तमानां मूर्च्छां वैचित्त्यअसत्यचैतन्यमात्रवरूप मोह-

मपाकुर्वं । उपचारचतुरात् कल्याणपाणेर्वद्यादधीत्यैव हि राजवैद्या भवति तस्माद्वैद्य स्वपितुरेव वैद्यकमधीत्य ताभ्यामिन्द्रवैद्यत्व माप्त- मित्यर्थ । अपि च शिष्य सर्वभूतानि शमयति नाशयतीति शमनो यमस्तस्याभौ सूर्यो तात पिता ततस्तस्मात कह्लाराणां कुमुदानाम- पमृत्यवे सङ्कोचायाथाकालमरणायादेति । यत यतोऽय सूर्योऽदयो- निष्कप सोऽस्य सूर्यस्य किमनौचित्ती अपि त्वेवऽनौचित्यम करु- णागुणप्रकर्षेणैव कार्यं गुणारम्भादुदयतोऽपमृत्युदायिता च यमेनाप्य- स्मात् स्वपितुरेव सकाशात पठितत्यर्थ । उदयता सूर्येण तदा नाशि- त, कमलान्युन्मीलितानि, कुमुदानि मुकुलितानीति भाव । पितु आख्यातोपयोग ( पा० १ । ४ । २९ ) इत्यपादानत्व । भिषज्यत । कण्ड्वादि ॥ ५० ॥

उडुपरिवृढ पत्या मुक्तामय यदपीडयत्तदपि
विदिनीं भानोर्जाया जहास कुमुद्वती । तदुदय
मत. शङ्क सङ्कोचित निजशङ्कया प्रसरति नवा-
र्के चर्केन्धूकणारुणरोचिषि ॥ ५१ ॥

उडुपेति । अयमिदानीमस्त गिगमिषु उडुपरिवृढश्चन्द्र नाय उ- दित मन अस्त गतन पत्या सूर्येण मुक्ता त्यक्ता वियोगिनीं भार्यां पद्मिनीं यद्यस्मात्कारणात् अपीडयत सङ्कोचितवान् अयच करैरुपिध- वान् । यदपि चन्द्रे पद्मिनीं पीडयति सति कमुद्वती कुमुदयिन्यामख्या- येन रात्री जहास अतएव हेता तदुभय चन्द्रकुमुदिन्यौ कर्कन्धूफल- वत् पक्वबदरवत् कणारुणरोचिषि रक्तकिरणे नवार्के तरुणादित्ये प्रसरति प्रकर्षेण गच्छत्युदयति सति निजशङ्कया स्वकृतानाचारनिमि- त्तभयेनेव प्रयोजकेन सङ्कोचित सङ्कोच प्रापित नि प्रभीकृतमित्यर्थ । इत्यह शङ्क मन्ये । सूर्य उदित पद्मिनी च विकासिता चन्द्रा नि प्र- भोऽस्तमेति कुमुदिनी सङ्कुचितेति भाव । अन्यत्राप्युक्त प्रमेय था:- ख्य । कर्कन्धूर्बदरी कोलीत्यमर । सङ्कोचितमिति ण्यन्तात कर्मणि निष्ठा, अन्यथा व्याख्याने सङ्कुचितमित्येव स्यात् । तदुभय निजशङ्कया

करणभूतया स्वयमेव सङ्कुचित कृतारम्भामिति वा व्याख्येय । कर्कन्ध्, धुणोति पाठश्चिन्त्य । ग्रन्थविस्तारभयात् माघस्याधकादिर्नोक्त सुधीभिर्विविच्य वाच्यम् ॥ ५१ ॥

श्रुतिमयतनोर्भानोर्जातान्धनेरधराध्वना विहरणकृत शाखा साक्षात्कृतानि दशत्विषा । निशि निशि सहस्राभ्यां दृग्भिः शृणोति महस्वराः पृथगहिपतिः पश्यत्यस्य क्रमेण च न स्वरा ५२

श्रुतीति । अहिपतिः शेष ज्यालि शास्त्रानुसरेण अयने नेरधराध्वना अधस्तनेन मार्गेण पातालमार्गेण रात्रौ विहरणकृत परिभ्रमत । तथा श्रुतिमयी वेदरूपा तनुर्देहा यस्य तस्यास्य भानोस्त्विषा दशशतानि एकसहस्रमेव दशशतानि कठकण्वादिशाखा निशि निशि रात्रौ रात्रौ सहस्रफणत्वात् प्रतिफणञ्च नेत्रद्वयसद्भावाद्वाभ्यां सहस्राभ्यां दृग्भ्यां सहस्रद्वयपरिमिताभिर्दृग्भिश्चिरकसेन युगपत् पृथक्च चक्षुश्रवस्त्वात् साक्षात् शृणोति पश्यति चेत्यर्थ जान । क्रियाद्वये क्रमेण हेतुद्वय । यत सहस्वरा स्वरूपघोदात्तादिस्वरै सह वर्तमाना व्य रावा शब्दरूपत्वाच्छृणोति । तथा भास्वरा शुक्लभास्वररूपा शाखा तत साक्षात् पश्यति च । रात्रौ पातालगामित्यागम च शेषस्य वर्त नाद्वेदमयशरीरस्य किरणसहस्ररूपं शाखासहस्र शेषा नेत्रसहस्रद्वयस्य सत्त्वाद्युगपत् पृथगेकेन नेत्रसहस्रेण शृणोति द्वितीयेन च पश्यतीति युगपत् पृथक् श्रवणदर्शनाभ्यामेव शेषनेत्रसहस्रद्वयस्य साफल्यमभूदित्यर्थं । श्रुतिमयतरोरिति पाठे वेदरूपस्य वृक्षस्य शाखा युक्ता । अध्वना वलिमद्मनेति पाठे बलिसद्मरसातलमित्यभिधानात् स एवार्थ । दशशतानीति काकाक्षिवदुभयत्रापि सम्बध्यते । सहस्वरा वोपसर्जनस्येति ( पा०६।३।८२) पाक्षिकत्वात् सभावाभाव ॥ ५२ ॥

बहु न स्मरता येषामग्रे खलु प्रतिभासते कम लसुहृदस्तेऽमी भानोः प्रत्यालमच्च करा. । उन

तीरमूरर्द्धं कररूपाङ्गुलीजालप्रवेशादङ्गुलीतुल्यान् सूर्यकरान् अथच प-रेषाङ्गुलीना युक्तत्वादर्ककराणामङ्गुलीनालां इव कमलदण्डसदृशीं नय-नयोर्द्वृक् शीघ्रं पेयत्वं गोचरत्वं नय प्रापय सादरं पश्य, त्वन्नयनयोः कमलत्वाज्जालमार्गप्रविष्टास्त्वया विलोक्यमाना एताः त्वन्नेत्रकमलना-ला एव भवेद्वत्यन्त इत्यर्थः । जालानां कमलतुल्यस्य नालाला इव त्वं पश्येति वा । भ्रमः का । याः भ्रमता जालस्य छिद्रकिरणमध्ये परि-भ्रमता शाणेन भ्रमरेणादिरूपरज कणानां गणेन समूहेन आक्रान्ता व्याप्ता अत एव दिवो वर्द्धकिना स्वर्लोकतक्ष्णा त्वष्ट्रेव विश्वकर्म्मणा पुनरपि कुन्दे शाणचक्रे धृता आरोपिता सत्य आशु भ्रमन्त्य इव किरा न भान्ति अपि तु तथैव शोभन्ते । यद्वा भ्रमन्तः शाणघर्षणव-शात् पतित पतन्त येऽणवः शाणतेजसः कणास्तेषां गणैराक्रान्तस्य यु-क्तं । विश्वकर्म्मणा सूर्यः शाणमारोपित इति पुराणं । नयनयोरातिथेय-त्वमिति पाठे स एवार्थः । गुणति पाठे गुणेन सह्योनेत्यर्थः । जालात् जातावेक्वचन ॥ ५४ ॥

दिनमिव दिवाकीर्त्तिस्तीक्ष्णैः क्षुरैः सवितुः करै-
स्तिमिरकबरीलूनां कृत्वा निशां निरदीधरत् ।
स्फुरति परितः केशास्तोमैस्ततः पतयालुभिर्ध्रु-
वमधवलं तन्नच्छायच्छलादवनीतलम् ॥ ५५ ॥

दिनमिति । दिवाकीर्त्तिरिव नापित इव दिवसः तीक्ष्णैः सवितुः करैरेव क्षुरैर्निशां तिमिरकबरीलूनां तमोरूपां वेणीं छिन्नमूलां कृत्वा निरदीधरत् निर्द्धारितवान् । मुण्डयित्वा क्वापि कश्चित् केशोऽवशिष्ट-स्यादिति गवेषितवानित्यर्थः । अथवा बहिर्निष्कासयामास । नापितो ऽपि व्यभिचारादिदुष्टां स्वीयां परकीयां वा स्त्रियं क्षुरैर्मुण्डयित्वा दे-शाद्बहिर्निष्कासयति । ततोऽनन्तरं तस्मात् मुण्डनाद्धा परितस्तत्र पत-यालुभिरधःपतनशीलैः केशस्तोमैः एतस्याः अवनीतलं तेषां वृक्षादिपदा-र्थानां छाया प्रतिबिम्बं तस्य छलं व्याजेन ध्रुवं निश्चितं अधवलं श्या-मं स्फुरति शोभते । वृक्षाद्यधोभागे कृष्णस्य मुण्डितकबरीपतयालुके-

शकृन्दमभ्यन्तरस्थं न तु प्रतिबिम्बरूपं इत्यर्थः । छायाव्यतिरिक्त एवं नापि तमो दिवसे सूर्यकरैर्नाशितमिति भावः । दिवाकीर्त्तिस्तु नापित इत्यमरः । कबरी जानपदेति (पा०४।१।४२) ङीप् लूना स्वादिभ्य (पा० ८।२।४४) निष्ठानत्वं । निरदीधरत् धारेर्णिच चङ्‌ि ओचङि (पा०७।४।१) त्यु पधाह्रस्वत्वे अभ्यासस्य सन्वद्भावात् दीर्घो लघोरिति पा०७।४।९४) दीर्घः । तत्र स्थापंयति विभाषाऽऽसने से (पा०७।४।२५) था नपुंसकत्व ॥ ५५॥

ब्रूमः शङ्खं तव नल यशः श्रावसे सृष्टशब्दं य
स्योदर्यः स दिवि लिखितः स्पष्टमास्ते द्विजे
न्द्रः । अद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य
म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः ५६

इदानीं शाङ्खिकानां शब्दं श्रुत्वा तद्व्याजेन नलयशोवर्णनं कुर्वन्ति। ब्रूम इति ॥ हे नल तव श्रावसे मङ्गलाय सृष्टः कृतः शब्दो यस्य त श ङ्खं तव यश एव ब्रूमः, त्वत्कीर्तिमेव शङ्खरूपतया वर्णयाम । शाङ्खि कैर्यः शङ्खो वाद्यते तत्त्वद्यश एव, तद्वदुज्ज्वलतरं तव यशः इत्यर्थः । शङ्खध्वनो हि मङ्गलदीपकः । त्वद्यशोऽपि लोकानां शुभाय तव प्रभा तोकत्वाद्भवति । यस्य शङ्खस्य यशसश्च समुद्रप्रभवत्वात्शुक्लतरत्वाच्च । उदर्यः समानोदर्यः भ्राता स प्रसिद्धो द्विजेन्द्रश्चन्द्रः दिवि स्पष्टं लि खितोऽस्ति निःप्रभत्वाच्चित्रलिखित इव निर्व्यापारः स्फुटोऽत्र दृश्यत इत्यर्थः । त्वमिह गगने प्रत्यूषसमये वाऽस्य चन्द्रस्य अद्धा निश्चितं श्र द्धाकरं शङ्खसोदरत्वात्स्तित्वबुद्धिजनकं करच्छेदं किरणविनाशमपि प श्य, शङ्खेऽपि किरणा न सन्ति तस्यापीदानीं न सन्ति । किञ्चास्य ह रिणसम्बन्धी हारिणो यः कलङ्कस्तद्रूपं नितरां अतिशयितं म्लाने इत्या सतापा. स्थानमपि पश्य शङ्खस्याप्युदरभागे नितरां श्यामताऽस्ति सा चन्द्रेऽपि तस्मादपि चन्द्रस्य शङ्खसोदर्यत्वं निश्चितं तथा चन्द्रमपि त व यशो ब्रूम इत्यर्थः । उक्तप्रकारेण शङ्खसोदर्यत्वे चन्द्रस्य यद्यप्य स्ति तदपि तथा च हरिणसम्बन्धी यः कलङ्कस्तदस्य सुतरां म्लानिस्था नं पश्य । चन्द्रस्य शङ्खसदृशत्वेऽपि निष्कलङ्कं शङ्खमेव तव यशो

ऽश्मिना पाणिना च निविडा निष्पीडना बाधा दृढा यन्त्रणा तु राभित प्रापित स्वस्त गतमर्द्धं यस्य एतादृशो विधुश्चन्द्रः शशच्छेदमौकर्य्यार्थ-मुपहृतमानीतं यदम्बु जलं तस्य कम्बुजरजोजम्बाल छिद्यमानशङ्ख-सञ्जातरजश्चयकर्दमं तदकसम्बन्धाद्धज कर्दमो भवति तेन पाण्डुर्नव-श्लोहमयत्वादधवलमपि धवलपङ्कवशात् धवलं भवत्, यच्च खण्डित् शशच्छेदकारि करपत्रं तद्भाव इव प्रातःसमये वहति चन्द्र इत्यर्थः । शाङ्खिकशिल्पिनो हि छेदसौकर्य्यार्थं छिद्यमानशङ्खादिदेशे जलं क्षि-पन्ति । दृढतरग्रन्थिच्छेदादौ च करपत्रं करेण निबिडं पीडयति शाङ्खा-दिच्छेदकरपत्रस्याद्धचन्द्राकारं सञ्जातरजःपङ्कपाण्डुरत्वं भवति । अ-स्तमिताद्धचन्द्रस्तादृक्करपत्रतुल्यो दृश्यत इत्यर्थः । सूर्य्योदयो जात-स्तारा शुभाः कमलानि विकसितानि चन्द्रोऽर्द्धमस्तमित इति भावः । अत्र पक्षे मात्सर्यकथन पाण्डुभवदिति चि ॥ ५५ ॥

यदपाथोजश्रिमुद्रणप्रकरणे निर्निद्रयत्यशुभान्दृ
ष्टी पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कविनृभिः पद्मोपमा चक्षु
षः ॥ ५८ ॥

यदिति ॥ प्रभुर्नल पाथोजानां कमलानां विमुद्रणप्रकरणे उन्मी-लनप्रस्तावे एव यद्यस्मात् दृष्टी लोकनेत्राणि निर्निद्रयति विगतनिद्रा करोति उन्मीलयतीत्यर्थः । यस्माच्च हरिः श्रीविष्णुः शिवपूजासमये एककमलन्यून जलरुहां कमलानां सहस्रं स्वीयेनाक्ष्णा पूरयति स्म । तत्तस्मात् सरसीरुहां दृशामपि वास्तवं अबाधितं साजात्यं तुल्यजा-तीयत्वमस्ति । यत् साजात्यं मूलमारोपकारणं यस्यास्तादृशी चक्षु-षः पद्मेन सहोपमा सादृश्यं कविनृभिः कालिदासादि-भिः कविभिराद्रियतेतरा अत्यादरेणोपनिबध्यते । यदि नेत्राणि कम-लसजातीयानि नाभविष्यन् तर्हि रविः कमलोन्मीलनप्रस्तावे तानि नोदमीलयिष्यत् श्रीविष्णुश्च कमलसहस्रं नेत्रेण नापूरयिष्यत् नह्य-

न्यप्रस्तावेऽन्यस्य योग्यताऽस्ति, तस्मात् दृशां कमलानाञ्च साजात्यं वास्तवमस्त्येवेत्यर्थः । उदितः सूर्यः कमलानि विकसितानि मत्त्वैऽपि जनः प्रबुद्धः, तस्मात् त्वमपि प्रबुध्यस्वेति भावः । विष्णुः स्वचक्षुषा कमलसहस्रं पूरितवानिति लिङ्गपुराणादौ द्रष्टव्यं । विमुद्रणेति विगमुद्रं करोतीत्यर्थे णयन्ताद्भावे ल्युट् । निनिंद्रयतीति सत्करोतीति णिच्, पूरयतीत्यत्रापि । समाना जातिः साजात्यमिति विग्रहे चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् समानस्येति योगविभागात् समानस्य सः । वास्तवं आगतार्थे सम्बन्धे वा अण् । तत्पर्य्यायात् वस्तुशब्दात् प्रज्ञादित्वात् स्वार्थे वा । षष्ठ्युपमा षष्ठीसमास. ॥ ५८ ॥

श्रुवेमि कमलाकरे निखिलयामिनीयामिकश्रियं श्रयति यत् पुरा विततपत्रनेत्रोदरं । तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रमद् द्विरेफरवघोरणा घनमुपैति निद्रामुदं ॥ ५९ ॥

अवैमीति । यत्कुमुद कमलानामाकरे देवखातसरसि वा अथ च कमलायाः लक्ष्म्याः आकरे गृहे कोशागारे विततं विस्तारितं पत्ररूपनेत्राणामुदरं येन विततानि पत्राण्येव नेत्रमध्यानि येन तत् । विशाम्बरं अथ च प्रसारितपक्ष्मनेत्रोदरं उन्मीलितनेत्रं सत् निखिलयामिन्याः सकलाया रात्र्याः सम्बन्धिनो यामिकस्य रात्रिचतुःप्रहरप्राहरिकस्य सकलरात्रिजागरूकस्य श्रियं शोभां पुरा श्रयति अभिश्रयत् । या यमारभ्यसूर्योदयावधि यद्विकासिमभूत् । अथ च सकलां रात्रिं जजागार, तदेव कैरवं पुनरिदानीं दिनमवाप्य गर्भे अन्तः सूर्यकिरणसङ्कुमुद्धालशीघ्रमङ्कोचवशान्निर्गन्तुमशक्ते रन्तःसञ्चारिणो द्विरेफास्तेषां निर्मन्थमन्द्राणो रवस्तद्रूपा या घोरणा प्रसुप्तघर्घरा शब्दस्तया घनं निबिडं यथा तथा निद्रामुदं निद्रासम्बन्धिसुखं उपैति, अन्तर्गतभ्रमरं सत् मुकुलीभवतीत्यर्थः । अथ च यः कोशागारे सकलां रात्रिं जागर्ति स दिवसे घोरणापनं यथा तथा निद्रातीत्यर्थः । इत्यहमवैमि मन्ये । प्रराश्रयतीति पुरियुगोर्लिर्लम्भे (पा०३।२।१२२) इति सूत्रे लट् । घोरणेति घुरेर्घातोर्लिजन्तात् युच् ॥ ५९ ॥

इह किमुपसि पृच्छाशासिकिंशब्दरूपप्रतिनिय मितप्राचा वायसेनैष पृष्टः। भण फणिभवशास्त्रे तातङ:स्थानिनौ काविति विहितलतुह्रीवागुत्तरः कोकिलोऽभूत् ॥ ६० ॥

इहेति। इह प्रभाते पृच्छाशासिनि प्रश्नवाचिनि किंशब्दस्य प्रथमान्त रूप तनैव प्रतिनियमिता प्रतिवश शब्दान्तरमापवाद् व्यावर्तिता वाग्येन कौ कौ इति नियतवाणिना वायसेन काकेन फणिन शे पाङ्गवन्.पतन महाभाष्यलक्षण शास्त्र पाणिनीयमिति यावत्। तत्र तातङ्लक्षणस्यादेशस्य स्थानिनौ आदेशिनौ को भण कथयेति पृष्ट कृत प्रश्न एष कोकिल विहिता कृता या तुह्रीति वक् सैवोत्तर यस्यैवम्भूतोऽभूत्। किं काक प्रात स्वभावत एव कौ काविति वदति को किलश्च तुह्री तुह्रीति। काक स्वभावात् कौ काविति प्रथमद्वितीयव चनान्त प्रश्नशब्द ब्रूते। कोकिलश्च तुह्री तुह्री इति तत्रोत्प्रेक्षा तुश्च ह्निश्च तुह्री तुह्योस्तातङाशिष्यन्यतरस्यामिति पाणिनिसूत्रस्योपशाल सन् तु हि स्थाने तातङाविधानात्तुह्रीति तातङ स्थानिनावित्युत्तर कोकिलो दत्तवान् किं। प्रभात जात काकादय शब्दायन्त इति भाव। सूत्रवार्त्तिकयोर्महाभाष्येणैव दार्ढ्यापादनात् फणिभवत्युक्त। स्थान प्रसङ्ग सोऽस्त्यनयोरिति स्थानिनौ अत इनीति इनिप्रत्यय (पा०५।२।११५) ॥ ६० ॥

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः कण्ठे शब्दौघसिद्धिक्षतबहुकठिनी शेष भूपानुयातः। सर्वं विस्मृत्य दैवात् स्मृतिमुपसि गता घोषयन्त्या घुसञ्ज्ञा प्राक्संस्कारेण सम्प्रत्यपि घुवति शिर पठिकापाठनेन ॥ ६१ ॥

दाक्षीति। अय आकर्ण्यमान कापि शब्द- कापि कश्चित् कपोत घुकलक्षण पक्षी दाक्षीपुत्रस्य दक्षगोत्रसञ्जातमातृकस्य पाणिनेस्तन्त्रे

रक्तायां हरिति प्राच्यां दिशि कुङ्कुमेन युक्तायाः कुङ्कुमयुक्ता सुमनसः श्रीः शोभा तां जुषी भजन्त्या वैजयन्त्याः पताकायाः स्तामैः सङ्घरूपैः सीरयुक्तकण्ठैर्लम्बकयाऽतियालैर्मयूरैः कृत्वा चित्तं हरति । इन्द्रसौधस्योपरि वर्तमाना ध्यानरा सूर्यकिरणास्तद्रीयरक्तपताकासमूहा इव, सूर्यश्च स्वर्णकलश इव शोभत इत्यर्थः । राजादिप्रासादेषु हि रक्ता भूयस्यः पताकाः सुवर्णकलशाश्च वर्तन्ते । यतोऽयं इन्द्रसौधस्य स्वर्णकुम्भरूपोऽतएवैतस्माद्व्याजिरूपप्राभिभिः कर्त्रीभिः तिमिररूपोऽतिरयाः जलधिस्तस्य यत्पानं ग्रासेन तिरोधापनं तत्र स्थाने नितरामुचितं । कुम्भाद्भूतो ह्यगस्त्यः पूर्वं समुद्रमपात्, अतः तासामपि भानुरूपकुम्भाद्भवत्वात् समुद्रपानं युक्तमित्यर्थः । सूर्यकुम्भजागस्तितिरश्च सर्वं निरस्तमिति भावः । तार्कैरिति पाठे तोकमपत्यं पताकाया अपत्यरूपैस्तत्सदृशैरित्यर्थः । पौरस्त्या पुरादेशे भवा दक्षिणापश्चात्पुरसस्त्यगिति ( पा० ४।२।९८ ) त्यक् किति चेति (पा०७।२।११८) वृद्धिः । कर्तृकर्मणोः कृतीति ( पा० २।३।६५ ) कर्तरि प्राप्तापि षष्ठी उभयप्राप्तौ कर्मणीति ( पा० २।३।६६ ) नियमेन व्यावर्तितत्वात् तिमिरजलधेरित्यत्रैव भवति । भाभिरित्यत्र तु कर्तरि तृतीयैव ॥ ६२ ॥

द्वित्रैरेव तमस्तमालगहनग्रासे दवीभावुकैरस्य सहस्रपत्रसदसि व्यग्राणि घस्रात्ययः ।
घर्माणां रयचुम्बनं वितनुते तत् पिष्टपिष्टीकृतक्ष्मादिग्व्योमतमोऽयमीयमधुना मोघं निदाघद्युतिः ॥ ६३ ॥

द्वित्रैरिति । तमस्तमालानां तिमिररूपातिशयमलतरुविशेषाणां गहनस्य गाम्भीर्यस्यैव ग्रासे विनाशे दवीभावुकैर्वनवह्निना द्वाभ्यां त्रिभिर्वाऽल्पसङ्ख्यैरेव अस्य सूर्यस्योस्रैः किरणैः सहस्रपत्राणां सदसि आकरे घस्रात्ययः दिनसम्बन्धी हर्षो विकासो यस्य द्वाभ्यामपि चितोऽयं तस्मात् कारणान्निदाघद्युतिः सूर्यः घर्मांशामुष्णानां किरणानां आघ समूहं अधुना द्वित्रैरेव करैस्तमोविनाशे पद्मविकासे च जाते

रयचुम्बिन वेगवत्तर मोघ निष्फलं वितनुते विस्तारयति । किम्भूतं घनतया पिष्टं पिष्टं भृशं तत्कृतं पिष्टपिष्टीकृतं अत्यन्तचूर्णीकृतं स्मादि- व्योम्ना भूदिगाकाशानां तम एवाघ मालिन्यात्पातकं येन । तिमिर- विनाशस्य कमलविकाशस्य च द्वित्रैरेव किरणैस्तत्करणे पिष्टपेषणवद्वै- यर्थ्यमित्यर्थः । दयहायो यनारपयहरो किरणोऽस्रमयूखेत्यादि ' घस्रो दिनाहनी इत्याद्यमरः । द्वित्रैः द्वौ त्रयो वा द्वित्राः सङ्ख्ययाव्ययेति ( पा० २।२।२५ ) बहुव्रीहौ, बहुव्रीहौ सङ्ख्येये इति ( पा०५।४।७३ ) डच् । दयोभावुकै ज्ञुयो लपपतपदेति ( पा०३।२।१५४ ) ताच्छील्यादा- युकञ् व्यञ्जि दानार्थाल्लुपातेर्धौरादिकात्कर्मणि चिण् । रयचुम्बिन पिष्टपिष्टीकृतमिति च कर्मणि भावे वा निष्ठा ॥ ६३ ॥

दूरारूढस्तिमिरजलधेर्वाडवाग्निप्रभानुर्भानुर्भा
स्वद्वनरुहवनीकेलिवैहासिकोऽयं । न स्वात्मीयं
किमिति दधते भास्वरश्वेतिमानं द्यामद्यापि द्युम
णिकिरणश्रेणयः शोणयन्ति ॥ ६४ ॥

दूरेति । अय भानुः तिमिरमेव जलधिस्तस्य समुद्रस्य शोषकत्वाद्वाडवो व डवानलरूपोऽग्निः प्रभानुरग्निस्तया ताम्यन्त्या खिद्यन्त्या वनरुहवन्या कमलवन्या एव कान्तायाः केल्यां क्रीडायां वैहासिकः परिहासकः क्रीडासंकारी, हेलामात्रेण विकासक इत्यर्थः । तथा दूरं गगनमार्गमा- रूढ ऊर्ध्वमागतः एवम्भूतः सन् स्वात्मीय स्वीयतेजोरूपत्वात् सहज भास्वरं श्वैत्यं न स्वपरप्रकाशकं शुक्लभास्वररूपत्वमद्यापि दूरारूढत्वे- ऽपि किमिति कुतो न दधते धारयति, तथा द्युमणेः सूर्यस्य किरण- श्रेणयश्चाद्यापि द्यां गगनं किमिति न शोणयन्ति रक्तीकुर्वन्तीति प्रश्न द्वय । यद्वा स्वीय रूप रवि न धत्त इति कुतो ज्ञातमित्याशङ्क्य प्रत्यक्ष प्रमाणयति यस्मादद्यापि सूर्यकिरणपङ्क्तयः शोणयन्ति तस्माद्भास्वरश्वे- तिमा सूर्येण न धृत इति ज्ञायत इत्यर्थः । एवंविशिष्टः सूर्यो दूरारू- ढः सञ्जातस्तस्मादद्यापि सूर्यकिरणाः स्वीय शुक्लभास्वरत्वं किमिति न दधते न धारयन्ति । ऊर्ध्वमागत सूर्यः कमलानि च विकसितानि न

स्याच्छोचिष्मत्सिद्धिरिति भाव. । चित्रभानुर्विभावसुरित्यमरः । दूरारूढः ग-
म्यादिद्वितीयासमासः । वैहासिक इति विहासे नियुक्त सप्रयोजन
शिल्पमस्यास्येति । तत्र नियुक्त (पा०४।४।६९) इति वा शिल्पमिति (पा०
४।४।५५) ठक् । प्रयोजनमिति (पा०५।१।१०९) ठञ् । स्वात्मीयं वृद्धाच्छ
(पा०४।२।११४) । दधते दधधारणे इत्यस्यैकवचनत्वात् धातुत्व बहुवच-
नान्तत्वंभि । श्वेतिमा पृथ्व्यादि. । शोणं कुर्वन्तीति तत्करोतीति णिच्
स्तास्मायिष्ठवद्भाव. पुंवद्भाव. टिलोपश्च वा । ६४ ॥

> प्रातर्वर्णनयाऽनया निजवपुर्भूपाप्रसादानदाद्देवी
> यः परितोषितेति निहितामान्तःपुरीभिः पुरः ।
> नूनं मण्डनमण्डली परिदधुर्माणिक्यरोचिर्मय
> क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीः ॥६५॥

प्रातरिति । नूना मण्डनमण्डलीं भूषणश्रेणीं परिदधु तत्तदङ्गसुव-
र्णाद्यवयवेषु धारयामासु । किम्भूतां आन्त पुरीभिरवरोधसङ्गारिणी-
भि सखीभिरित्युक्ता पुरो मागधानामग्र निहिता स्थापिता । इति
कि । हे मागधा. अनया प्रातर्वर्णनया प्रबोधिकया परितोषिता नि-
तरां सन्तोषं प्रापिता देवी कृताभिषेका राज्ञी भैमी निजवपुर्भूषाः
स्वीयशरीरालङ्काररूपानेकविधसुवर्णमणिप्रभृतीनि भूषणान्येव प्रस द-
न् पारितोषिकाणि वो युष्मभ्य अदादिति । पुन किम्भूतां माणिक्य-
रोचिर्मयपद्मरागप्रभारूपया क्रोधस्य आवेगः आडम्बरस्तेन सराग
लोचनरुचा अरुणनेत्ररुचा कृत्वा दारिद्र्यस्य विद्राविणीं पलायनकारि-
णीं मयि स्थितायामप्यत्र त्वं कथं नाम स्थातुमिच्छसि इति क्रुद्धयाऽ-
नया माणिक्यप्रभारूपनेत्रारुणकान्त्या कृत्वा दारिद्र्यं दूरादपसारितं ।
एवं प्रभातवर्णने क्रियमाणे भैम्या निजशरीरभूषणैस्ते सम्मानिता इ-
त्यर्थः । अन्योऽपि रोषारुणलोचनरुचा किञ्चिद्विद्रावयति । आन्त.पु-
रीभिरिति बहुत्वेन माणिक्येत्यादिना भूषणाना भूयस्त्वमनूल्यत्वञ्च
सूचितं । देवी अदादित्यनेन च नलः स्नानार्थं गतः प्रासादे नास्ती-
ति सूचितं । प्रातर्लुप्तसप्तमीकमव्ययं । परितोषिता ण्यन्तान्निष्ठा । आ-
न्त पुरीभिः सम्बन्धेऽण् । अन्तःपुरिकेति पाठे अन्त पुरशब्दात् अन्त·

पूर्वपदात्संज्ञायामिति (पा०४।३।६०) ज्यायार्थे ठञ् । रोचिषमयेति स्त्रिया. पुंवदिति (पा०६।३।३४) पुंवत् ॥ ६५ ॥

आगच्छन्मगधतामुप क्षणमथातिथ्यं दृशोरानशे
स्वर्गङ्गाम्बुनि बन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः । आनन्दादतिपुष्पकं रथमधिष्ठाय प्रियार्थोत्सुकप्राप्तैरध्वरागतैर्विदितप्रासादतो निर्गमः ॥ ६६ ॥

आगच्छन्निति । भूपतिर्नलो बन्दिनां दृशोरातिथ्यं प्रेक्षणविशेषयोग्यता निजप्रेमभक्तिबाहुल्येन गोचरस्य आनशे लेभे । किम्भूतानां मगधानामुप प्रभातसमय आगच्छतां वर्णयतां । किम्भूतः स्वर्गङ्गाम्बुनि मन्दाकिनीजले कृतदिनारम्भाप्लुतिः कृतप्रातःस्नानः, तथा अध्वरागतैर्नलयज्ञंगमनानन्तरमागतैस्तैर्मागधैर्विदितोऽज्ञातः प्रासादतो निर्गमः राजगृहाद्बहिर्निर्गमो यस्य । तथा प्रियार्थोत्सुकः भैमीपाणिग्रहणसमये कन्यादानप्रतिष्ठाकृतया दीयमानं वस्तूनि मध्ये प्राप्तं अतिपुष्पकं पुष्पकाख्यकुबेरविमानं अतिरमणीयवेगवत्तरं सर्वत्राप्रतिहतगमनं रथमधिष्ठायारुह्य आनन्दात्सातिशयमद्भुतहर्षादागच्छन् । मागधागमनात् पूर्वं न तु वर्णनानन्तरं प्रवृत्तं प्रासादान्निर्गच्छन्नित्यर्थः । अत एव भैम्यैवैते सम्मानिता इति पूर्वश्लोके उक्तं । तथा परमधार्मिकत्वं सूचितं । कृतदिनारम्भाप्लुतिरागच्छन्नित्यनेन वल्पनाचनैर्भीमत्स्नानं वहुरमर्गङ्गातिथं सूचिता । नलस्य पुण्यश्लोकत्वं तं मर्त्यत्राप्रतिहतत्वात् तस्य च रथस्य पन्थमेव सुमहद्ध्यादिमणुद्रकापथमित्यादिना मर्त्यत्राप्रतिहतगतित्वोक्तेश्च । अतिपुष्पकत्वोक्तेः स्वर्गगमनाक्तिर्युक्तैव । आनशे अश्नोतेश्चेति (पा०७।४।७२) नुट् । अतिपुष्पकमत्यादय क्रान्ताद्यर्थे इति (पा०२।२।१८वा०५) समासः । रथमधिशीङ्स्थेत्यादारस्य (पा०१।४।४६) कर्मत्वं । प्रीतप्रासमिति पाठे कर्तृकरणेति (पा०२।१।३२) समासः । अध्वरागते कालाः इति (पा०२।१।२८) द्वितीया समासः । प्रासादतो निर्गम पञ्चमीतियोगविभागात समासः मयूरव्यंसकादि ॥ ६६ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एका न त्यजतो नवार्थघटनामेकान्नविंशो महा
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गो
ज्ज्वलः ॥ ६७ ॥

श्रीहर्षमिति। पूर्वार्धं पूर्ववत्॥ एकां नवार्थघटनां नवार्थनिर्मितिमत्यजतोऽमुञ्चत नूतनमेव प्रमेयं ग्रथ्नतः सतः श्रीहर्षस्य। एकान्नविंशः विंशतेः पूरण इत्यर्थे डटि तिविंशतेर्डितीति (पा० ६। ४। १४२) लोपे च विंशः। तत एकोनविंश इति तृतीयेति योगविभागात् समासे एकादिश्चैकस्य चादुगिति (पा०६।३।७६) नञ प्रकृतिभावः एकशब्दस्यादुगागमश्च ॥ ६७ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकान्नविंशः सर्गः ॥ १९ ॥

# उत्तरनैषधचरितं ।

## विंशः सर्गः ।

श्रीलक्ष्मीनृसिंहौ जयतः ।

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम् । स
प्राप रथपाथोभृद्वातजातजवो दिवः ॥ १ ॥

सौधेति । सर्गमङ्गलिकत्वेन । स, रथ एव पाथोभृत् मेघः दिवः स्वर्गात् गगनाद्वा सौधो राजसदनमेवाद्रिस्तस्य कुट्टिमः नानावर्णानेकमणिबद्धभूमिः सैवानेकधातुका नानाविधगैरिकादिधातुयुक्ताऽधित्यकोर्ध्वभूमिस्तस्यास्तटं पर्यन्तप्रदेशं प्राप । किम्भूतः वातात् मरुतः सकाशादधिको जातो जवो वेगो यस्य । यद्वा जातो जवो यस्य स जातजवः वातो जातजवो यस्माद्धेतोः तेनापि यस्माद्रथात् सकाशाद्वेगः शिक्षितः, अथवा तेन जातवेगः मेघोऽपि उक्तविशेषणविशिष्टो पर्वतोर्ध्वदेशं गगनात् पतति । धातुकेति शेषाद्विभाषेति ( पा० ५।४।१५४ ) कप् ॥ १ ॥

ततः प्रत्युदगाद्भैमी कान्तमायान्तमन्तिकं ।
प्रतीची सिन्धुवीचीव दिनोद्गारे सुधाकरम् ॥२॥

तत इति । ततः सौधोर्ध्वभूमिप्राप्त्यनन्तरं दिनोद्गारे दिनप्रारम्भे प्रभाते अन्तिकमायान्तं सुधाकरं चन्द्रं प्रतीचीसिन्धुवीचीव पश्चिमदिक्समुद्रलहरीव भैमी रथाद्यतीयोऽन्तिकं गृहपरिसरप्रदेशमागच्छन्तं कान्तं नलं प्रति लक्षीकृत्योदगात् प्रत्युज्जगाम । एतेन भैम्या नले आदरातिशयः सूचितः अन्तिके इत्यपि पाठः । अधिकरणे चेति चकारबलात् दूरान्तिकार्थेभ्योऽपि सप्तमीविधानात् सप्तमी । वीची कृदिकारादितिङीष् ( पा० ४।१।४५ । वा० ) दिनोद्गारे ओमाङोश्चेति ( पा० ६।१।९५ ) पररूपम् ॥ २ ॥

स दूरमादरं तस्या वदने मदनैकदृक् । दृष्टमन्दा-
किनीहेमारविन्दश्रीरविन्दत ॥ ३ ॥

स इति । दृष्टा मन्दाकिन्या हेमारविन्दश्रीर्येन एवम्भूतः स नलः तस्या वदने दूरं स्वर्णकमलादपि नितरामादरम् अविन्दत लेभे, अत एव मदने एका केवला मुख्या वा दृक् यस्य सः स्वर्णकमलादप्यधिकं तत् दृष्ट्वा स सम्भोगवासनया ऽपश्यदित्यर्थः । एका दृग्यस्येति एकदृक् मदने एकदृक् सप्तमीति योगविभागात् समासः । माद्यति हृष्टो भवतीति मदनः नन्द्यादित्वात् ल्युः तत्र समानाधिकरणो वा बहुव्रीहिः ॥ ३ ॥

तेन स्वर्देशसन्देशमर्पितं सा करोदरे । बभ्राजे
बिभ्रती पद्मं पद्मेवान्तिकपद्मदृक् ॥ ४ ॥

तेनेति । सा पद्मेव श्रीरिव बभ्राजे, किम्भूता स्वर्देशस्यागमनसमये मन्दाकिनीस्वर्णकमलं मम क्रीडार्थमानेयमिति सन्देशरूपं पद्मं तेन नलेनार्पितं दत्तं करोदरे बिभ्रती, तथा हर्षादुल्लिद्रपद्मदृक् विकसितकमलतुल्यनेत्रा लक्ष्मीरपि करे पद्मं धारयति प्रसादाद्विकसितपद्मदृक् भवति । सन्देश कर्मणि घञ् ॥ ४ ॥

प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ । एकल-
क्षतया दध्यौ पद्ममेकवराटकम् ॥ ५ ॥

प्रियेति । असौ भैमी प्रियेण प्रेम्णा दत्तं स्वर्णकमलरूपत्वात् अल्पमपि बहु मेनेतरां नितरां बहु मेने । यद्यस्माद्धेतोरेको मुख्यः वराटको बीजकोशो यस्य तत् पद्मम् एकमेव लक्ष्यं नयनविषयो यस्य यस्या वा तद्भावेन वस्तुविलोकनपरित्यागेन तदेकपरतया ऽत्यादरेण दध्यौ, अचिन्तयत्, शोभां पुनः पुनरपश्यदित्यर्थः । अथ च यद्यल्पमपि दत्तं बहुतरं न मन्येत तदेकवराटकस्य तवैककपर्दकमपि एकलक्षसङ्ख्यापरिमितद्रव्यत्वेन न ध्यायेदिति श्लेषप्रतिभोत्थापितम् । तेन प्रेम्णा स्वर्णकमलदानात् वसन्ति हि प्रेम्णि गुणा न वस्तुनि इति न्यायेन तत् स्वर्णकमलं लक्षकोटिपरार्द्धद्रव्यादपि नितरामधिकं मेने

इति भावः । प्रियपदेन प्रेमभरः सूचितः । पद्मस्य पुंलिङ्गत्वाद्यमिति पुंनिर्देशः ॥ ५ ॥

प्रेयसाऽश्रावि सा तन्वी त्वदालिङ्गनविघ्नकृत् ।
समाप्यतां विधिः शेषः क्लेशश्चेन्नासि चेन्न ते ६

प्रेयसेति । प्रेयसा नलेन सा भैमी इत्यश्रावि उक्ता । इति किं । हे तन्वि कृशाङ्गि तवालिङ्गनविघ्नं करोतीति कृत् स शेष स्नानसन्ध्यानन्तरकरणीयस्त्वेनावशिष्टः श्रुतिस्मृत्युक्तोऽनतिक्रमणीयो नित्याग्निहोत्रादिरूपो विधिर्मया समाप्यतां परिपूर्णीक्रियतां तदेव वदेति सामप्रश्नः । परं यदि ते चेतसि आवेशविशेषवशात् क्लेशः खेदश्चेन्न भवेत् समागतेनाश्लेषलोलुपेन मया भवदाश्लेषः कर्तव्यः । परं अन्तरा यस्तपःशेषो विधिरस्ति स पुनः प्रसङ्गविरत्येन यद्यनुजानासि तर्ह्येव समाप्ति नेष्यते नान्यथेत्यर्थः । भैमीकर्मकालिङ्गनविषयमेतत्, नैमीकर्तृकालिङ्गनविषये अनालिङ्गनरीत्या सा प्रत्येव तेन प्रार्थना कृतेति भावः । विधेः शेष इत्यपि पाठः ॥ ६ ॥

क्वैतावान्नर्ममर्मविद्विस्तरे विधिरद्य ते । इति
तं मनसा रोषादवोचद्वचसा न सा ॥ ७ ॥

क्वेति । असौ भैमी इति रोषात् ईर्ष्यया तं मनसैवावोचत् मनसैवाचिन्तयत्, न वचसा साक्षादुवाचेत्यर्थः । इति किं । हे प्रिय नर्ममर्मवित् आलिङ्गनादिकेलिरहस्यभेदी एतावान् अतिबहुलः अद्यापि ते तव विधिः क्व कुतः, कियति वा काले, विद्यते, अपि तु नास्त्येव । मय्यपि विधिस्त्वयाचरित एव केवलं ममालिङ्गनाद्यनास्वीकरणायेतत् । यद्वा अद्यैतावान् क्वविद्यते, अपि तु नास्त्येव । पूर्वं कदाप्येतावतो विधेरदर्शनात् । इदमपि नात्युत्तरमेवेत्यर्थः । रोषार्थः रोषवशः लज्जावशाद्वा मा वाचाऽब्रवीत् सभाय इत्यर्थः । प्रतारणामेव मम करोषीति रुष्टाऽभूदिति भावः । नर्ममर्म विध्यति इति व्यधः क्विपि सम्प्रसारणे च नहि वृतीति ( पा० ६ । ३ । ११६ ) पूर्वपदस्य दीर्घः ॥ ७ ॥

क्षणविच्छेदकादेव विधेर्मुग्धे विरज्यसि । वि
च्छेत्ताऽहं चिरं न त्वा हृष्टोऽह स्म तदा कलिः ॥ ८ ॥

क्षणेति । तदा भैमीचिन्तावसरे गृहारामस्य विभीतकनिवासी कलिः हृष्टः मनसा इति प्राह स्म अवोचत् । इति किं । हे मुग्धे मूढे भैमि क्षणविच्छेदकात् क्षणमात्रवियोगकात् विधेर्नित्यकर्मण एव हेतोर्यत् विरज्यसे उद्विग्ना भवसीति काकुप्रश्नः । एतावता उद्वेगो न कार्य इत्यर्थः । यतोऽहं कलिस्त्वा त्वां चिरं बहुकालं न विच्छेत्ता त्वां विच्छेदभाजं न करिष्यामि, अपितु वियोजयिष्याम्येवेति । एवमहं करिष्यामि न जानासीति सप्रतिभं मनोरथमकरोदित्यर्थः । भावी वियोगः सूचितः । विच्छेत्ता ताच्छील्ये तृन् । त्वेति त्वमावेकवचने (पा० ७।२।९७) त्व देशः ॥ ८ ॥

सावज्ञेवाथ सा गाढः सखीं पद्ममुखीमगात् । ल
क्ष्मीः कुमुदकेदारादारादम्भोजिनीमिव ॥ ९ ॥

सावज्ञेति । अथ एवं कलिवाक्यश्रवणोद्वेगानन्तरं सा भैमी नलेन अनालिङ्गनात् स्वयमारब्धालिङ्गनानङ्गीकाराद्वा सावज्ञेव सापमानेव सती पद्ममुखीं नलात् सकाशाद्भैम्यागमनमज्ञातरूपत्वाद्विकसितकमलतुल्यवदना सखीं कलानाम्नीं अगात् प्रतिजगाम । का कस्मात् कामिव । लक्ष्मीः कुमुदानां केदारात् क्षेत्रात् आरान्निकटे पद्मरूपवदनां अम्भोजिनीं कमलिनीमिवेत्युपमा । लक्ष्मीनिर्गमे च कुमुदक्षेत्रस्य यथा म्लानत्वं तथा भैमीनिर्गमे नलस्य, अम्भोजिन्याश्च लक्ष्म्यागमनानन्तरं यथा हर्षस्तथा भैम्यागमनानन्तरं सख्या इति सूचितमुपमया ॥ ९ ॥

ममासावपि मा स्म भूत् कलिद्वापरवत्परः । इ
तीव नित्यमत्रे तां स त्रेतां पर्य्यतूतुपत् ॥ १० ॥

ममेति । स नलः इतीव हेतोर्नित्यमत्रे नित्याग्निहोत्रे विषये ताम् आहवनीयगार्हपत्यदक्षिणाग्निरूपेण प्रसिद्धां त्रेतां, अथ च त्रेतारूपं द्वितीयं युगं आज्यादिना पर्य्यतूतुपत् परितोषितवान् पूजितवांश्च । इति किं । असौ त्रेताऽपि कलिद्वापरवत् मम परः शत्रुर्मा सम्भूत्,

इति । अग्निवयमप्यपूजनेऽहितकारित्व च्छत्रुरेव भवति, एतेन चाक रणे प्रत्यवायमियेव नित्याग्निहोत्रमकरोत् तस्यतस्तु भैमीपरवश एवा नृदिति भाव । त्रेता त्वग्नित्रये युगे इत्यमर । अनूनुपत् णौचङि-त्युपधा ह्रस्व (पा०७।४।१) ॥ १० ॥

क्रिया प्राह्णेतनीं कृत्वा निषेधन् पाणिना स खीं । कराभ्यां पृष्ठ ।स्तस्या न्यमीमिलदसौ दृगौ ॥ ११ ॥

दमयन्त्या वयस्याभि सहास्याभिः समीक्ष्त । प्रसृतिभ्यामिवायामं मापयन् प्रेयसीदृ शोः ॥ १२ ॥

क्रियामिति । दमयन्त्या इति । युग्मम् । असौ नल पृष्ठग सन कराभ्या तस्या दृशौ न्यमीमिलत् पिदधौ । कि कृत्वा प्राह्णेतनीं प्रा-भातिकीं अर्चाऽग्निहोत्रादिक्रिया कृत्वा, कि कुर्वन् पाणिनाऽहमा-गत इति तस्या भये भयत्या न कथनीयमिति करसत्त्वैव सखीं नि-षेधयन्, अत एव महास्याभिर्मलस मम्मुखीभिः दमयन्त्या वयस्या-भि समीक्षित । तथा कि कुर्वन्निव प्रसृतिभ्या करद्वयचुलुकाभ्या प्रे-यस्या दृशोरियत्परिमाणमेतयोर्दैर्घ्यं मायाम मापयन्निव । कीदृशाभ्या कारि-यामिव जाति । युग्मपाणिमि करप्रसृतिरित्यमर । प्रसृतिप्रमाणे दृशाविति सूचित । प्राह्णेतनीं साय चिरमिति ( पा० ४ । ३ । २३ ) ट्यु ट् टित्वान्ङीप् कौसेरकमं कत्वाद्गतिबुद्धीत्यादिना अणौ कर्तुर्णौ कर्मत्वात् दृशाविति द्वितीया । मापयन् मा माने अस्माद्धेतुमण्णिचि शत ॥ ११ ॥ १२ ॥

सर्क्तिताऽसि त्वमित्यर्द्धवाणी+ पाणिमोचना त् । ज्ञानस्पर्शान्तरा मौनमानशे मानसेभिनी१३

शंकितासि । हे आलि सखि मया केशविभागत्री त्व सक्रिता शा-मार्मात्यर्धक्रपाऽर्द्ध मा मृष्टेत्याद्यर्धवचनाम अपरिपूर्णपदा वाणी य-स्या तथा स्वकराभ्या नमपाण्यामोचनदेता ज्ञात स्पर्शान्तर स्योप-

स्पर्शाद्विलक्षणो नलस्पर्श इति यया ज्ञातस्पर्शमन्तरं चेतो यस्या इति वा । सा मौनमानशं प्राप । यतो मानसंयमिनी मानिनी । स्पर्शेन नलं ज्ञात्वा मामयज्ञाय प्रेतायामनुरक्तोऽपुना वृथैव किमित्यागत इत्यभिमानात् किमपि नावददित्यर्थः । वामोकेति नद्यन्तत्वात् नद्यृतश्चेति ( पा० ५ । ४ । १५३ ) कप् ॥ १३ ॥

ध्यायादि सुतनुस्तेन कोपस्ते नायमौचिती । त्वां
प्राप्तं यत्प्रसादेन प्रिये तस्यादृये तपः ॥ १४ ॥

ध्येति । तेन नलेन सुतनुः शुभाङ्गी सा इति ध्यायादि उक्ता । अयि प्रिये भैमि ते तवायं मयि कोपो नौचिती । औचिती शब्दस्याविशिष्टलिङ्गत्वादुचितोऽयं नेत्यर्थः । अहं यस्य प्रसादेन त्वां प्राप प्राप्तवानस्मि तस्य तपसोऽग्निहोत्रादि नादृये आदरेण न कुर्यामित्याक्षेपे काकुः प्रश्नः । एवंविधमहाफलस्य तपसोऽत्यादरो युक्त एवेत्यर्थः । त्वत्प्रापकत्वादेवास्यादरः क्रियते न त्वन्यथा तस्मात् कोपं माकार्षीरिति भावः ॥ १४ ॥

निशि दास्यङ्गतोऽपि त्वां स्नात्वा यन्नाभ्यवी
वदं । त प्रवृत्ताऽसि मन्तुं चेन्मन्तुं तद्वद वन्द्यसे १५

निशीति । हे भैमि अहं निशि तव दास्यं आलिङ्गनादिचुम्बनादिचरणपर्यन्तं सेवाकारित्वं गतोऽपि सन् प्रातः स्नात्वा त्वां नाभ्यवीवदं न नमस्कृतवानिति यत् तं मन्तुं अपराधं मन्तुं अङ्गीकर्तुं त्वं प्रवृत्ताऽसि चेत्तर्हि वद तदापराधमार्जनायेदानीमेव वन्द्यसे नमस्क्रियसे । रात्रौ दास्यं प्राप्त इत्यनेन सखीषु भैमीरात्रिवृत्तमपि सूचितम् । अभ्यवीवदं अभि पूर्वान्नमस्कारार्थाद्वदेर्णिजन्ताल्लुङि । स्वार्थे णिचि चङि परे णौ चङ्युपधाया ह्रस्वः (पा०७।४।१) इत्युपधा ह्रस्वः ॥ १५ ॥

इत्येतस्याः पदासत्त्यै पत्यैपा प्रेरितौ करौ । रुद्ध्वा
सकोपं सातङ्कं तद्दृष्टाक्षैरमूमुहत् ॥ १६ ॥

इतीति । एषा इत्येवमुक्तप्रकारेणैतस्याः भैम्याः पदासत्त्यै चरणनिकटीभावाय प्रणामार्थं पत्या प्रेरितौ करौ नमस्कारारम्भानौचित्या-

दृग्विभ्रमस्य प्रकटनेन वा सरोष, पतित्वात् स्वीयचरणयोः पतिकरस्य शंसानौचित्याद्वा आतङ्को भय तेन च सह यथा तथा, चरणस्पर्शात् पूर्वमेव रुध्वा स्वकराभ्यां निवार्य्य त कटाक्षैरमूमुहत् कामाधीन चकार । एव तया विलोकित एव कामवशो जात इति भावः । यद्वा-सत्यै तादर्थ्यमात्रे चतुर्थी । मुहेरकर्मकत्वाद्गतिबुद्धीत्यादिना (पा०१। ४।५२) अणौ कर्तुर्णौ कर्मत्वात्तमिति द्वितीया । अमूमुहत् हेतुमति-चि चङि उपधा ह्रस्वादि ॥ १६ ॥

अवोचत ततस्तन्वीं निषधानामधीश्वरः । तदपाङ्गलतारम्भलत्कारवशीकृतः ॥ १७ ॥

अथावचतेति । ततस्तस्यास्त दृक्कटाक्षविलोकनानन्तर निषधानामधीश्वर तन्वीं वक्ष्यमाण अवोचत । किंभूत तारशब्दस्य कनीनिकावाचित्वे नपुंसकलिङ्गत्वात्तस्यापाङ्गे चलतस्तारस्य कनीनिकाया किरणाश्चलद्यो दर्शननमस्कारभलत्कारचमत्कारस्तेन वशीकृतः, यद्वा चलन्ती तरला तारा यत्र तादृशश्चासौ भलत्कारश्च तत पूर्ववत् पष्ठी समास । भलत्कार इति देश्य पद ॥ १७ ॥

कटाक्षकपटारब्धदूरलङ्घनरंहसा । दृशा भीत्या निवृत्त त कर्णकूप निरूप्य कि ॥ १८ ॥

कटाक्षेति । हे प्रिये कटाक्षकपटेन नेत्रप्रान्तवक्रविलोकनव्याजेनारब्ध कर्तु व्यवसित दूरलङ्घने अतिदूरदेशातिक्रमणे रहो वेगो यस्या, यत्ताद्दृश्या ते दृशा कर्णरूप कूप अग्र निरूप्य विलोक्य भीत्या पुनर्निवृत्त परावृत्त किमित्युत्प्रेक्षा । दूर गन्तुमुपक्रान्ता हि गच्छन्त कूप पुरो दृष्ट्वा भयेन शीघ्र परावर्तन्त एव । दृशा स्त्वेन स्त्रीत्व युज्यते, स्त्रिया हि भीतियुक्ता ॥ १८ ॥

सरोषाऽपि सरोजाक्षि त्वमुदेषि मुदे मम । तप्ताऽपि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥

सरोषेति । हे सरोजाक्षि सरोषाऽपि त्व मम मुदे हर्षायैवोदेषि भवसि, पद्मानामालिङ्गनाद्यर्थे दुरापत्वेन स्पृहणीयतरत्वात्सौन्दर्या-

तिशयाच्चेत्यर्थः । यस्मात्तस्माऽपि तत्सम्बन्धिनापि सूरः सूर्यस्तत्सम्बन्धिनी सौरी भा दीप्तिः शतपत्रस्य कमलस्य विकासपूर्वं सौरभ्यमेवेति न तु स्वान्यै । सौरभेत्यत्र पुंवत्कर्मधारयेति (पा०६।३।४२) पुंवत् भावः ॥१९॥

क्षेप्तुमिन्दौ भवद्वक्त्रबिम्बभ्रान्तिभ्रमभ्रमं । शङ्के श
शाङ्कमानङ्क्ष भिन्नभिन्नविधिर्विधिः ॥ २० ॥

क्षेप्तुमिति । हे भैमि विधिर्ब्रह्मा पूर्वं निष्कलङ्केऽपीन्दौ विषये अतिसादृश्यात् प्रतिक्षणं जायमानं चन्द्रभ्रमाणां जनतो वा वक्त्रबिम्बस्य विभ्रम विशिष्टा भ्रान्तिस्तस्य विभ्रम विलासं क्षेप्तुं शशाङ्कमानङ्क्ष शशरूपेण कलङ्केन चिह्नितवानित्यहं शङ्के । यतो भिन्नभिन्नप्रकारः किञ्चित्किञ्चिद्दृष्टयुक्तो विधिर्घटपटादिविधानं यस्य तादृशः । तस्माद्भवन्मुखमृगाङ्कयोरत्यद्भुतमानसादृश्यभ्रान्तिनिरासाय चन्द्रं कलङ्केन चिह्नितवानित्यर्थः । इत्यहं मन्ये । निष्कलङ्कं भवन्मुखं चन्द्रादप्यधिकमिति भावः । आनङ्क्ष, चौरादिकादङ्कधातोर्लङ् । भिन्नभिन्नेति प्रकारे द्विरुक्तिः ॥ २० ॥

ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः । बद्ध
स्पर्द्धतरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ २१ ॥

ताम्रपर्णीति । तव वक्त्रात्त्वद्वदननिर्गता वर्णाः प्रसन्नाः स्पष्टतराः, निर्दोषत्वादुज्ज्वलाश्च, तथा स्वादवो मधुराः श्रुतिसुखाश्च क्रमेण मलयनिर्गतमलयदक्षिणसमुद्रगामिताम्रपर्ण्याख्यनद्यास्तटे उत्पन्नैः, तथा अमृतमयस्य इन्दोः कुक्षौ जातैर्मौक्तिकैः सह बद्धा धृता स्पर्द्धा सादृश्यदर्पो यैस्ते, अतिशयेन बद्धस्पर्द्धा बद्धस्पर्द्धतराः, इन्दुकुक्षिजैरिति पाठे इन्दुकुक्षेर्जातैर्मौक्तिकैः । ताम्रपर्णीजातस्य मौक्तिकस्य सौन्दर्यं न तु माधुर्यं । इन्दुकुक्षौ मौक्तिकानि यदि जायेरन् तदा माधुर्यातिशयात् तैः सह बद्धस्पर्द्धतरा इत्यद्भुतोपमा । इन्दुवंशत्रिशीर्षस्तत्रोत्पन्नस्य मौक्तिकस्य वैद्यकनिघण्टे शैत्यं माधुर्यं पित्तोपशमकत्वञ्चोक्तं वंशान्मौक्तिकोत्पत्तिः प्रसिद्धा पूर्वमुक्ता च ॥ २१ ॥

त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः ।

क्षुद्य यावदहो धावद्दुग्धलेपलवस्मिताः ॥ २२ ॥

त्वदिति । तव गिरः क्षीरपाथोधेः क्षीरसमुद्रात् सकाशात् सुधयैव सहोत्थिता उत्पन्नाः । यस्मादद्य यावत् अद्यतनदिनमवधीकृत्य अद्यापि अहो चित्रं धावत्प्रसरत् दुग्धलेपलवरूपं स्मितं हास्यं यासां तादृश्यः । अमृतेन सह निर्गतत्वादमृतवन्मधुराः क्षीरसमुद्राच्च निर्गतत्वात् स्मितव्याजेन दुग्धलेपलेशः स्थाद्यापि अनुवर्तते, तद्वद्धवलस्मिताश्चेति भावः । धावत् धावु गतिशुद्ध्योरित्यस्माच्छता ॥ २२ ॥

पूर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव । नल
उपाङ्के स पर्यङ्कमङ्कसङ्क्रमितप्रियः ॥ २३ ॥

पूर्वेति । स नलः पर्य्यङ्कमलञ्चक्रे । किम्भूतः, अङ्के सङ्क्रमिता समारोपिता प्रिया येन सः । क इव, आश्लिष्टा चन्द्रिका कौमुदी येन स चन्द्रमाः पूर्वपर्वतमिव ॥ २३ ॥

प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियां ।
परिरभ्य चिरायास विश्लेषायासमुक्तये ॥ २४ ॥

प्रावृडिति । सः प्रियां विश्लेषः प्रातः स्नानादिनित्यकर्म्मानुष्ठानवशेन तावन्मात्रभिन्नदेशावस्थायितया यो वियोगस्तज्जनितो यः आयासः खेदस्तस्य मुक्तये निवृत्तये परिरभ्य चिराय आस तस्थौ शुशुभे वा । क इव प्रावृडारम्भणे वर्षारम्भे अम्भोदो मेघो द्यामिव । किं भूतः स्निग्धः सजलत्वात् श्यामः । मेघो यथा चीर्णो श्लेषो यागं शरदादौ सदा गगने क्रीडद्भिः पतिजिर्षः श्लेषः सम्बन्धस्तज्जनितदुःखपरिहाराय जलजिया परिया नीडनियोगित्वात्सद्योगक्लेशमुक्तये दिवमालिङ्ग्य चिरं तिष्ठति । किम्भूतः स्निग्धोऽतिमोतिमान् । आस गतिदीप्त्यादानेषु ॥ २४ ॥

चचुम्बास्यमसौ तस्या रसमग्नः स्मितस्मितं ।
नभोमणिरिवाम्भोजं मधुमध्यानुबिम्बितः ॥ २५ ॥

चुचुम्बेति । असौ रसमग्नः प्रेमभरपरवशः सन् तस्या गतरोषस्यादालिङ्गनसुखात् स्मितस्मितं आस्यं चुचुम्ब । क इव मधुमध्ये म-

करन्दमध्ये अनुबिम्बित प्रतिफलित अत एव रसमग्ना नभोमणि सूर्यं अम्भोजमिव श्रितविकास । सूर्यपद्मयोर्दूरदेशत्वात् कथ चुम्बनमिति प्रश्न मधुमध्यानुबिम्बित इत्युत्तर ॥ २५ ॥

अथाहूय कलां नाम पाणिना स प्रियासखीम् ।
पुरस्ताद्वेशितामूचे कर्तुं नर्माणि साक्षिणीम् ॥ २६ ॥

अथेति । अथ चुम्बनानन्तरं स पाणिना हस्तसंज्ञया कलां नाम प्रियायाः सखीमाहूय ऊचे । किम्भूतां नर्माणि अन्योन्यरहःक्रीडाहास्ये साक्षिणीं कर्तुं पुरस्तादग्रे वेशितां स्थापिताम् । वेशिना स्थपन्ताश्रिताः ॥ २६ ॥

कस्मादस्मात्कमब्जास्या वयस्या दयते न ते ।
आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते ॥ २७ ॥

कस्मादिति । हे कलि अब्जास्या पद्ममुखी ते वयस्या भैमी कस्मात्कारणादस्मान् न दयते कृपां न करोति कथय पृच्छेति शेषः । स्वयमेव कारणमाशङ्कते भवतीषु भवादृशीषु भूयसीषु सखीषु आसक्ता सामस्त्येन अनुरक्ता सती हितकारिणमप्यन्यं मादृशं बहु यथा तथा नितरां न मन्यते, इत्यहं मन्ये, तेन मयि कृपां न करोतीत्यर्थः । राज्ञा अस्मान मम हस्तेन स्प्रष्टुमपि नाददादिति तां प्रति सूच्यते । भवदासक्तरस्माकमिव दया अनया कृतेति कलां प्रत्यपि सोल्लुण्ठनम् । अथ च भवत्परिचये ऽप्यस्मान् दयते चिरपरिचयेऽपि ते तुभ्यं दयते । कुतः भवतीषु आसक्ता सती अन्यं मल्लक्षणं बहु मन्यते । एवं इत्युत्तरानुरोधेन व्याख्येयम् । अधीगर्थदयेति ( पा० २।३। ५२ ) षष्ठी अस्मदो द्वयोश्चेति (पा० १।२।५९) एकत्वेऽपि बहुवचनम् ॥ २७ ॥

अन्वग्राहि मया प्रेयान्निशि स्वोपनयादिति ।
न विप्रलभते तावदालीरिरमणीकवाक् ॥ २८ ॥

अन्विति । अलीका असत्या वाक् यस्याः सैव इत्युक्ता विद्यासस्यानभूता भवादृशाः राज्ञी सखीस्तावत् विप्रलभते प्रतारयति । इति किं । मया निशि आलिङ्गनचुम्बनादिना स्वस्यात्मशरीरस्योपनयाद्दानादनु-

पूर्णयैव द्विलोचन्या सैषालीरवलोकते । द्रागन्तेनाणुना मान्तु मन्तुमन्तमिवेक्षते ॥ ३१ ॥

पूर्णयेति । सैषा, आलीर्मदादृशो सखीः पूर्णयैव द्विलोचन्या नेत्रद्वयेनावलोकते मान्तु पुनः मन्तुमन्तमिव सापराधमिव अक्ष्णोऽपि दृशः अन्तः प्रान्तदेशस्तस्यापि अणुर्लेशस्तेनापि द्राक् झटिति सापमानमेव ईक्षते । पूर्णद्विलोचन्या चिरकालविलोकनस्य का कथा इत्यर्थः । सापराधोऽपि मरोषया दृशा विलोक्यते । प्रियया च प्रियाम् दृगन्तेनैव विलोक्यते, सख्यादिदास्यजनस्तु सकलैः सकले नेत्रे । द्विलोचन्या तद्धितार्थद्विगोर्द्विगोरिति ( पा० ४।१।२१ ) ङीप् ॥ ३१ ॥

नालोकते यथेदानीं मामियन्तेन कल्पये । यो ऽहं दूत्येऽनया दृष्टः नाऽपि व्यस्मारि पीदृशा ॥ ३२

नेति । हे सखि यथा येन प्रकारेण यत इति यावत्, मस्मादिदानीं इयं मां नालोकते, तेन हेतुना योऽहं दूत्यावसरे अनया दृष्टोऽप्यस्मीदृशा सर्वथा ऽनवलोकित्वाऽनयैव व्यस्मारिषि विस्मृत इति कल्पये सम्भावयामि । अस्मासि चिन्तामितार्थविशेषं मा द्रक्ष्यतीति तु कथा दूरेऽस्तु, किन्तु सर्वथा नावलोकयत्यपीत्यर्थः । स एवायमिति प्रत्यभिज्ञाय यद्यभविष्यत्तर्हि तादृगेव व्यलोकयिष्यत्, नत्वेव, तस्माद्विस्मृत एवाहमनयेति कल्पना युक्तेति श्लोकपठनपूर्वं वक्रोक्ति । कल्पयेत् । चिन्तायाञ्चौरादिकात्कृपेः णिचश्चेति ( पा० १।३।७४ ) तङ् । व्यस्मारिषि विस्मरतेः कर्मणि लुङुत्तमैकवचने, इटि, स्यसिच्सीयुडित्यादिना ( पा० ६ । ४ । ६२ ) सिच सीयुडागमे, तस्य चिण्वद्भावे, अचो ञ्णितीति ( पा० ७ । २ । ११५ ) वृद्धि ॥ ३२ ॥

रागं दर्शयते सैषा वयस्याः सूनृतामृतैः । मम त्वमिति वक्तुं मां मानिनी मौनिनी पुनः ॥३३॥

रागमिति । हे कल सैषा वयस्या मदादृशीः सूनृतानि प्रियाणि सत्यानि च वचनानि तद्रूपैरमृतैः कृत्वा रागं निजां प्रीतिं दर्शयते बोधयति, भवतीष्वितिनमा मम प्रीतिरिति ज्ञापयतीत्यर्थः । मां पुनः त्व

ममेति एतावन्मात्रमपि वक्तुं मौनिनी तूष्णीम्भवतीत्यर्थः । यतो धृ‐ थैव मानिनी धृताभिमाना, न हि मया किमप्यपराद्धमित्यर्थः । त्वं मदीय इत्येतावतैव वचनेनाह सनाथः, पर तावदपि न वदतीति म‐ य्यस्याः कृपा नास्त्येवेति सोल्लुण्ठन, लज्जावशान्न वदतीति व्याजेन स्तुतिर्वा । दर्शयत चित्रयेति (पा०१।३।७४) लङ् । वयसा दुर्बोधुय‐ यंत्यावृत्तिबुद्धीति (पा०१।४।५२) छायौ दातुर्गौकर्मत्वं ॥ ३३ ॥

कां नामन्त्रयते नाम नामग्राहमियं सखी । क‐
ले नलेति नास्माकं स्पृशत्याह्वां नु जिह्वया ३४

कामिति । हे कले इयं कां नाम सखीं नामग्राह नाम गृहीत्वा नामन्त्रयते सम्बोधनपूर्वं नाह्वयति, अपि तु सर्वामपि । नाम प्रिर‐ यालने । अस्माकमस्मत्सम्बन्धिनी तु पुनर्नलेति सम्बुध्यन्तामाह्वां स‐ ञ्ज्ञां जिह्वया न स्पृशति नोच्चारयति रहस्यभाषणं तु दूरापास्तमित्यर्थः । ख्यौषा भर्तुर्नामग्रहणस्य निषिद्धत्वादनौचित्यारोपेणोपालम्भव्याज‐ स्तुतिः । आह्वामनाह्वा, आतश्चोपसर्गे (पा०३।३।१०६) इत्यङ् ॥ ३४ ॥

अस्याः पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये ।
अवकाशलवोऽप्यस्ति नात्र कुत्र विभर्तु नः ४५

अस्या इति । अस्याः परिदृश्यमानेऽत्र हृदये अवकाशलव स्थान‐ लेशोऽपि नास्ति तस्मात्कोऽस्मान् कुत्र कस्मिन् स्थाने बिभर्तु धारयतु । अवकाशलेशाभावे हेतुमाह । यस्मात् पीनाभ्यामावाहुमूलमूलाभ्यां स्तनाभ्यां व्याप्ते समन्तादावृतेऽतिसङ्कटेऽपि दयया समावेशो भवति, इत्याशङ्क्य साऽपि नासीत्याह, अस्मासु निर्दयेऽस्मद्विषये कृपारहिते । एतेन नास्याः कश्चिदपराध इति सोल्लुण्ठ । उद्धकुचाभ्यामङ्गपर्य्येव प्रिये न तु मम हृदयपद्मं कदाऽपि दीयत इत्यौचित्येऽप्यनौचित्या रोपादुक्तोक्तिभ्यां स्तुतिर्वा ॥ ३५ ॥

अधिगत्यं दृगेतस्या हृदयं मृदुनामुचोः । प्रतीम
एव वैमुख्यं कुचयोर्युक्तनृतयोः ॥ ३६ ॥

अधिगत्येति । हे कले वयं इदृगेवं पूर्वोक्तप्रकारेण कठिनं तस्या

हृदयमधिगत्य प्राप्य ज्ञात्वा वा मृदुनामुचो कठिनाश्रयवशात् काठि-
न्यं भजता कदाप्यनालिङ्गनमपि विषय निर्दययोरिति भावः । त-
था युक्तमुचितं वृत्तमाचरणं ययोः, कदाचिदप्यालिङ्गनकरणाद्विरुद्धल-
क्षणयाऽनाचारशीलयोरिति भावः । एवम्भूतयोरस्यास्तनयोः कदाचि-
दप्यालिङ्गनादानाद्विमुखत्वं पराङ्मुखत्वमेव प्रतीमो जानीमः । आलि-
ङ्गने कुचौ मम मुखौ भवतः । निर्दयहृदयत्वादेव तस्याः पराङ्मुखत्वा-
देवम्भूतावेतत्कुचावपि सदा मम पराङ्मुखावेव जातावित्यर्थः । अथ
च स्त्रियाः हृदयस्यातिमृदुत्वादेनस्या हृदयमीदृगतिमृदु ज्ञात्वाऽपि स
र्वस्य तस्यावरणान्निर्दयत्वं भजतो, अत एव विपरीतलक्षणया युक्त-
वृत्तयोरनाचारशीलयोः । मृदु प्रति हि मृदुनैव भवितव्यं । विशेषत-
स्तु स्त्रियम्प्रति, तदा च विपरीताचरणादनाचारशीलयोरत एव चैतु-
कस्य पराङ्मुखत्वं, अथवा विरुद्धमुखत्वं जानीम एव । अनाचारशीला
हि कस्मैचिदपि स्वं मुखं न दर्शयति मलिनमुखश्च भवति । एतया-
रप्युक्तप्रकारेण पराङ्मुखत्वं चूचुकयोः श्यामत्वान्मलिनमुखत्वं जानी-
म इति सोल्लुण्ठ । अथवैनस्या हृदयं कठिनं ज्ञात्वा आश्रय हि कु-
टिलेषु न नीतिरिति न्यायेन निष्ठुरत्वमङ्गीकुर्वतो । यस्मादुचित वृ-
त्तं स्थितिर्ययोस्य च शुद्धाचारयो पराङ्मुखत्वं प्रतीम एव । हृदय-
स्योपर्यूर्ध्वमुखेन वर्तमानत्वात् हृदयं प्रति कुचौ सदा पराङ्मुखौ भवे-
त्वय । युक्ताचारा हि कठिनहृदयं प्रति निर्दयो भूत्वा तस्मात् परा-
ङ्मुख एव भवति न तु पश्यति, अथ च ईदृक्सुन्दरमन्तरपरित्यागे-
नाम्या हृदयं प्राप्य कठिनतरत्वगुणं भजतो तथा पीवरत्वादन्योन्य-
मश्लिष्टयोरतुंगयोश्च विततमुखत्वं निमग्नचूचुकत्वगौरत्वविरहाच्छ्या-
ममुखत्वञ्च जानीम एव । अथ चेदृगतिकोमलमेनदाय हृदयं ज्ञात्वा
प्राप्य वा मृदतामनुसारालिङ्गनादीनामपि विषये सकृपयोरतएव यु
क्ताचारयोर्विशिष्टमत्युन्नतमुखत्वं ययोस्तादृक् प्रसन्नमुखत्वञ्च जानी-
म एवेति इत्यादि ज्ञातव्यं ॥ ३६ ॥

इति मुद्रितकण्ठोऽस्मिन् सोल्लुण्ठमभिधाय तां ।
दमयन्तीमुखाचीर्णस्मितयाऽसौ तया जगे ॥ ३७ ॥

इतीति । अस्मिन्नले इत्युक्तप्रकारेण सोल्लुण्ठ वक्रोक्त्यादिमिश्रितं यथा तथा तां भैमीं कलां वा अभिधायोक्त्वा मुद्रितकण्ठे मौनिनि स ति दमयन्तीमुखाद्धीतं स्मितं यथा नलवक्रोक्तिमाकर्ण्य दमयन्तीमुखं दृष्ट्वा सञ्जातहासया भैमीमुखेनाधीतं स्मितं यस्याः, नलोपमोऽप्यामय- वनात् स्वयं हसन्ती भैमीमपि हासयति स्मेत्यर्थः । सादृश्याद्वा तया कलया असौ नलो जगे, अजायत । सोल्लुण्ठनं तु सोपहासमित्यमरः । उल्लुण्ठनमुल्लुण्ठ, भावे घञ्, तेन सह यथा स्यादिति क्रियाविशेषणम् । मुखाधीतेति पञ्चमीति योगविभागात् समासः । यद्वा कर्तृकरणे कृते- ति (पा०२।१।३२) तृतीयासमासः । अस्मै तयेति पाठे क्रियया यमभि प्रैतीति (पा०१।४।३२वा०१) सम्प्रदानत्वं ॥ ३७ ॥

भावितेयं त्वया साधु नवरागा खलु त्वयि ।
चिरन्तनानुरागार्हं वर्त्तते नः सखीः प्रति ॥३८॥

कस्मादस्माकमित्यस्योत्तरमाह ॥ भावितेति । हे राजन् त्वयेयं सा धु सम्यक् भाविता सम्यक् तर्किता यत्त्वयि विषये खलु निश्चितं न- वरागा नवप्रीतिर्वर्त्तते नवोढत्वाद्धाष्ट्र्येन सलज्जा वर्त्तत इत्यर्थः । त्वयि नवरागा सती नः सखीः प्रति चिरन्तनो योऽनुरागस्तस्यार्हं यो- ग्यं यथा तथा वर्त्तते बहुकालीनस्नेहवशान्निःशङ्कवदित्यर्थः । त्वयि न- वरागा सती नः प्रति चिरन्तनानुरागार्हमतिदृढप्रीतिर्यथा तथा वर्त्तते न तु त्वयीत्यर्थः कथापयता वा । तस्माल्लज्जावशाद्धाष्ट्र्यात्त्वय्युदासीना भवतीषु तु प्रीतिमती तव वृद्धिरायत्तेत्यर्थः । अथ च त्वयेयं साधु त- र्किता साध्विति काक्वा विपरीतलक्षणया वा साध्वेव विपरीतमेव त- र्कितेत्यर्थः । यद्वा अकारप्रश्लेषेणासाधुतर्किता, खलु यस्मात् त्वय्येव नूतनानुरागा अतिदृढप्रीतिर्वर्त्तते, अस्मासु तु जीर्णानुरागयोग्य यथा तथा अतिशिथिलप्रीतिर्वर्त्तते न तु त्वयि । अतिपरिचयादवज्ञा इत्या दि न्यायादित्यर्थः । यतोऽस्मभ्यं दयते तुभ्यं न दयत इति पूर्वोक्तव चनात् त्वया सत्यमुक्तं इत्यर्थः । यद्वा सम्यक् भाविता भावं प्रापिता द्रावितेत्यर्थः यस्मात् त्वयि नवरागत्वाद्दृढप्रीतिः सती अस्मान्प्रति पु राणप्रीतिसदृशमतिशिथिलप्रीतिर्वर्त्तते न तु त्वयि । तथा सम्यग्भा-

विता यथा त्वय्येव दृढप्रीति. सती अस्मान् सर्वथा न गणयतीत्य-
र्थं । तस्मादस्मान् वृथैव उपहससीति भाव इति साधु पठ ॥ ३८ ॥

स्मरशास्त्रविदा सेयं नवोढा नस्त्वया सखी ।
कथं सम्भुज्यते बाला कथमस्मासु भाषता ॥ ३९ ॥

अन्यथाहीत्यादेरुत्तरमाह ॥ स्मरेति ।

बाला बलान्न भुञ्जीत विरागोत्पत्तिशङ्कया ।
भुञ्जीत चेदुपायोतित्याजनकमसङ्कुला ॥

इत्यादि स्मरशास्त्रविदा कामशास्त्ररहस्यज्ञेन त्वया नवोढा नव-
परिणीता सेय बाला नोऽस्माकं सखी कथं सम्भुज्यते, अपि तु विरा-
गोत्पत्तिभिया बलादुपमर्दनम् कथ विद्रूयते, अत एव त्वया सम्भु-
क्तत्वादेवास्मान् कथं केन प्रकारेण भाषता कथयतु, अपि तु त्वत्कृत
रतत्वादेव किञ्चिदपि न कथयतीति स्पष्टोऽर्थं । अथ चैव वक्रोक्ति
कामशास्त्रज्ञेन त्वयैव नवोढा बाला कथ क्रिया सम्भुज्यते, अपि तु
सामस्त्येन भोगो न क्रियत एव, किन्तु स्मरशास्त्रवित्वात् स्वल्पमेव
भुक्त्वा मुच्यत इत्यर्थ । अत एवास्मासु किं भाषता, अपि तु स्वति
पीडनाभावान्न किञ्चिदप्यस्मासु भाषते । या हि बाला सुरते नितरां
पीड्यते सैव सखीषु ममातिपीडा भवति यथा सोढुं न शक्यत इत्या-
दि वदति, न तु साभिभुक्तमुक्तेत्यर्थ । अथ च कामशास्त्रज्ञेन त्वया
बालापीयमेतन्मनोऽनुकूलमेव भुक्ता, अत कथमस्मासु भाषता अपि
तु न कथञ्चिद्भाषते कस्याप्यग्रे न कथयतीत्यर्थ । बाला हि कामशा
स्त्रकौशलयथायथानुराग भुक्ता यद्यपि भोग सहते तथाप्यतीव ल-
ज्जालुत्वात् सम्भोगरहस्य कस्याप्यग्रे न कथयतीत्यर्थ । तस्मादुभाव-
पि वञ्चकौ युवामस्मान् वञ्चयथ इति भाव । अथ च सामर्थ्याच्छा-
स्त्रविदा कामशास्त्रज्ञेन त्वया नवोढेय बाला केन प्रकारेण सम्भुज्यते
स्मर चिन्तय त प्रकारमित्यर्थात् रात्रौ कृतमेव सम्भोगमकृतमेव कथ-
यसि, सम्भोगमियेण स विस्मृतोऽत्र स्मरेति काकूक्ति । कथञ्चिदम-
स्मासु भाषतामपि तु नास्मासु कथयतीत्यर्थ । अथ च विपरीतलक्ष
णया त्वयैव भुक्ता अनया रहस्यमस्मासु कथितं किमिति न प्रकार-

यथोत्यर्थः । अथ च त्वयेयं बाला परिणीता यथं समन्ताद्गृह्यते, अ-
पि तु अनुचितमेतत् विदुषाऽपि त्वया क्रियते, अस्मासु कथं न भा
षतां अपि तु भाषत एवेत्यादि ज्ञातव्य ॥ ३९ ॥

नासत्यवदनं देव त्वा गायन्ति जगन्ति यं ।
प्रिया तस्य सरूपा स्यादन्यथालपना न ते॥४०

आलीरियमलीकवागित्यंशस्य, आह स्मेत्यत्र तन्नृपाभूदित्यस्यांश-
स्योत्तरमाह ॥ नासत्येति । हे देव राजन् जगन्ति त्रयोऽपि लोका यं
त्वा त्वां असत्यं वचन भाषणं यस्य तादृशं न गायन्ति किन्तु सत्यवा
दिनमेव वदन्ति । यद्वा न असत्यं नासत्यं सत्यमेव भाषण यस्य तं
तस्य तादृशस्य सत्यभाषिणस्ते तव प्रिया अन्यथा विपरीतार्थमलीक-
मालपनं भाषणं यस्यास्तादृश्यसत्यवादिनी सरूपा तुल्यस्वभावा योग्या
न स्यात् किन्तु सत्यवादिन्येव प्रिया तव योग्या स्यादित्यर्थः । तस्मा
दस्मासु यदनया कथित सत्यमेवेति भाव । अथ च वक्रोक्ति, त्रयो
लोका य त्वामसत्यभाषिणं न गायन्ति, अपि तु असत्यभाषिणमेव गा
यन्ति । यद्वा त्वा इंषदपि सत्यभाषण यस्य त सदाऽनृतवादिनं त्वां
वदन्ति तस्यानृतवादिनस्तवान्यथालपनात् सत्यवादिनी सदृशी योग्या
न स्यात् किन्तु असत्यवादिन्येवोचिता । कृतमपि सम्भोगमहं न कृ-
तवानिति वदसि तथेयमपि रात्रौ कृतमपि सम्भोग नेति वदति यो-
ग्यं योग्येन सम्बध्यत इति न्यायो युक्त, इति द्वावपि प्रति बोल्लु
ठं । भो राजन् त्रयोऽपि लोका नासत्यवदश्विनीकुमारवन्मुख यस्य
समतिसुन्दरमुख वदन्ति तस्य तव प्रिया अन्यथाऽननुरूप लपनं मुखं
यस्यास्तादृशी तुल्यरूपा न स्यात किन्तु सुन्दरतरवदनैव योग्या स्या-
त्, तथा च त्वन्मुखवदेवैतस्या अपि मुख सुन्दरमिति जानीहीति
भावः ॥-४० ॥

मनोभूरस्ति चित्तेऽस्याः किं नु देव त्वमेव सः।
त्वदवस्थितिभूर्यस्मान्मनः सख्या दिवानिशम्॥४१

आह स्मेत्यादे. श्लोकत्रयेणोत्तरमाह ॥ मनोभूरिति । अस्याश्चित्ते
मनोभू. कामोऽस्तीति सत्य, हे देव किन्तु त्वमेव स मनोभू· न तु

त्वदन्यः कश्चिदित्यर्थः । कुत, यस्मात् कारणात् तस्या भैम्या मन दिवानिशं तथावस्थितेर्मू स्थान । कामपरत्वे मनसि भवति, नल-परत्वे मनोजू स्थान यस्य, यस्माच्चेतसि सुन्दरतरो मनोजूस्त्वमेव वर्तसे नान्य इति ॥ ४१ ॥

सतस्त्वय्यथ सखीचित्ते प्रतिच्छाया स मन्मथः ।
त्वयास्य समरूपत्वमतनोरन्यथा कथ ॥ ४२ ॥

यद्यहमेव कामस्तर्हि मद्विषयेऽस्या कामो नास्तीति नलीयावा-न्तरच्छलनाशङ्कानिराकरणव्याजेन प्रकारान्तरेण सखीवोत्तरमाह ॥ सत इति । अथवा स मन्मथो तस्या भैम्याश्चित्ते सतो वर्तमानस्य तव प्रतिच्छाया प्रतिबिम्ब एव न तु स्वतन्त्रो बिम्बरूप, प्रतिबिम्बश्च स्वच्छ एव मुकुरादौ जायतेति भैमीमनस स्वच्छतरत्व द्योतित । कुत एतदित्याशङ्क्यान्यथानुपपत्ति प्रमाणयति । अन्यथा यदि प्रतिच्छाया न भवेत्तर्ह्यतनोरशरीरस्यास्य कामस्य त्वया सह समरूपत्व कथ स्यादपि तु न कथञ्चित्, ऐलनामत्यादीना सशरीरत्वात् त्वया सह सारूप्य युज्यते अथ त्वतनुस्तस्मादस्य प्रतिबिम्बत्व एव त्वत्सारूप्य युज्यते । प्रतिबिम्बेनाशरीरमपि तुल्यरूप भवति । तस्मात् प्रतिबिम्बस्य बिम्ब विना स्थातुमशक्यत्वान्मनसि तव धारणात् सारूप्य त्वत्प्रतिबिम्बभूत त्वदेकविषय काम नान्तरीयकतया धारयतीत्यर्थ । बिम्बत्वे अनङ्गत्वेन सारूप्यानुपपत्ते प्रतिबिम्ब एवायमित्यनुमान ॥ ४२ ॥

कः स्मरः कस्त्वमत्रेति सन्देहे शोभयोस्तयोः ।
त्वय्येवार्थितया सेयं धत्ते चित्ते यथा युवाम् ॥ ४३ ॥

क इति । अथ वामयाहुर्योर्भवतोस्तुल्यया शोभया कृत्वाऽत्र द्वयो मध्ये स्मर कः त्व नलश्च क इति सादृश्यात् सन्देहे सति अत्रास्मिन् सन्देहे सति वा त्वय्येव विषये अर्थितया साभिलाषतया सेय भैमी युवा द्वावपि स्मरनलौ चित्ते धत्ते । सन्नौ अतिसदृशयो काचमण्यादिपदार्थयो सन्देहे एकतरपरित्यागे मणिरेव परित्यक्त स्यात्तस्मा

भूदिति तस्यपिंत्वेनैव चायमिणंय याचमपि न मुञ्चति । तथा तुल्य शोभत्वेन निर्धेतुमशक्यत्वात स्मरपरित्यागे भयानेव परित्यक्त सा- त्मा मृदिति त्वय्येव साजिलापतया द्वायपि न मुञ्चतीत्यर्थं । स्व- दर्थमेव धारयति न तु कामार्थं त्वामिति भाव । त्वयंति पाठे त्वया हेतुना याऽपिता तयेत्यर्थं ॥ ४३ ॥

त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात् ।
शङ्कया पङ्कजाक्षी त्वां दृगंशेन स्पृशत्यसौ॥ ४४॥

पूर्णंपेत्यादेरुत्तरमाह । त्वयीति । पङ्कजाक्षी असौ त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वस्याप्रत्यावर्तमानत्वस्य दर्शनाद्धेतो शङ्कया चित्त- वत् पुनरप्रत्यावृत्तिभिया त्वा दृगंशेन नेत्रप्रान्तेन स्पृशति पश्यति । न तु पूर्णया द्विलोचन्या, त्वयि न्यस्तेति अनुरागातिशय., पङ्कजा- क्षीति दृशोरतिसौन्दर्यञ्च सूचित । सुन्दरवस्तुन पुनरप्रत्यावृत्तौ न- ष्टप्राय इति च सूचित । शङ्कयेवेति प्रतीयमानोत्प्रेक्षा ॥ ४४ ॥

विलोकनात् प्रभृत्यस्या लग्न एवासि चक्षुषो ।
स्वेनालोकय शङ्का चेत् प्रत्यय. परवाचि क ४५

'नालोकत इत्यादेरुत्तरमाह ॥ विलोकनादिति । विलोकनात् प्र- भृति अनया प्रथम त्व यदा दृष्टोऽसि तदारभ्य त्व अस्याश्चक्षुषो लग्न एवासि । त्वामेवैव सदा पश्यति नान्यत् किञ्चिदपीति । अ- स्यास्त्वयि महती नेत्रप्रीतिरित्यर्थ. । एव सति मद्वचने इय मिथ्या वदतीति शङ्का अविश्वासश्चेत्तर्हि एतदीयचक्षुषोर्मध्ये अह वर्ते न वेति निर्धेतु स्वेनात्मनैवावलोकय एतदीयचक्षुषो पश्य अहमत्र वर्ते इत्यनुभवेनैव निर्द्धारयिष्यसीत्यर्थं । स्वेनालोकने हेतुमाह । परवाचि को नाम प्रत्ययो विश्वासः, अपि त्वनुभवयोग्येऽर्थे परवचनमप्रमाण- मेवेत्यर्थं । दृश्यकनीनिकाया सम्मुख दृष्टुमवश्य प्रतिबिम्बो भवत्ये- वेति दूत्योक्ति । अथवं नेत्रलग्नत्वादेव नेत्रकज्जलवदीक्षितुमसाम- र्थ्यान्नालोकन इति त्वया सत्यमेवोक्तमित्यर्थं । अत्र चेच्छङ्का तर्हि स्वनेत्रलग्नमेव गोलकादि स्वयमालोकय तदा ज्ञास्यसि, यत परवा- चि च प्रत्ययः । विलोकनात् आरभ्यार्थयोगे पञ्चमी ॥ ४५ ॥

परीरम्भेऽनयारभ्य कुचकुङ्कुमसङ्क्रमं । त्वयि
मे हृदयस्यैवं राग इत्युदितैव वाक् ॥ ४६ ॥

राग दर्शयत इत्यादेरुत्तरमाह ॥ परीति । अनया परीरम्भे गाढा-
लिङ्गने क्रियमाणे तव हृदये कुचकुङ्कुमस्य सङ्क्रममारभ्योपक्रम्य तद्-
व्याजेन मे हृदयस्य मनसोऽथ च वक्षसस्त्वय्येवं अनेन प्रकारेण रा-
गोऽनुरागोऽथ च रक्तिमा, एतादृशी वागुदितैव, साक्षात् यद्यपि
नोक्त तथाप्युक्तप्रायमेवेत्यर्थ । गाढालिङ्गनमनुरागं विना न घ-
टत इति गाढालिङ्गने कुचकुङ्कुमाङ्गरागलेपनव्याजेन मम त्वय्येवमनु-
रागो वर्तत इत्यन्तर्गतोऽनुरागभर एव प्रकटीकृत इति भाव । हृद-
यस्यैवेति पाठे त्वय्येवेति योजना । त्वयि मे हृदयस्यैव रागो न तु
वाचिक । सख्यादौ तु वाङ्मात्रेणैव रागो न तु हृदयस्येति वा । उ-
दितैवेति पाठ उत्प्रेक्षा । अनया गाढालिङ्गनेन तव हृदये लग्नमिद
परिदृश्यमानं कुचकुङ्कुमादिकमेव सर्वमपि रात्रिवृत्तान्तमस्मान् बोध-
यतीति वृथैव पृच्छसीति सूचितं ॥ ४६ ॥

मनसास्य भवन्नामकामसूक्तजपव्रती । मुक्तसूत्र
सखीकण्ठस्फुरत्येकावलिच्छलात् ॥ ४७ ॥

का नामन्त्रयत इत्यादेरुत्तरमाह ॥ मनसेति । अयं सख्या भैम्या
कण्ठो मनसैव भवतो नलेति ते नाम तदेव कामसूक्तं स्मरस्य प्रका-
शको मन्त्रस्तस्य जप स एव व्रतमस्यास्तीति तादृश सन् एकाव-
लिच्छलात् एकयष्टिकमुक्ताहारविशेषव्याजात अक्षसूत्र पद्माक्षादिर-
चिता जपमालिका स्फुरति । मन्त्रनामग्रहणनिषेधात् साहस्र मानसो
जप इति मानसजपे फलविशेषश्रवणाच्च मुक्ताहारजपमालिकया त्व-
न्नामैव मनसा जपतीति भाव । नलेति स्मरणमात्रेणैव कामोद्रेका-
न्नाम्न कामसूक्तत्व ॥ ४७ ॥

शुध्यासिते वयस्याया भवता महता हृदि । स्त
नावन्तरसम्भ्रान्तौ निष्क्रान्तौ ब्रूमहे बहि ४८

अस्या पीनस्तनेत्यादेरुत्तरमाह ॥ अधीति । महता नितरां गौरवयुक्तेनाथ च महापरिमाणेन भवता त्वया वयस्याया: भैम्या हृदि अध्यासिते ऽधिष्ठिते सति अन्तर्हृदयमध्ये ऽमान्तौ स्थातुमशक्तौ स्तनौ हृदयात् बहिर्देशे निष्क्रान्तौ, इति वयं ब्रूमहे सम्भावयामः । यदाप्रभृति त्वं चित्ते लग्नस्तदाप्रभृत्यवैतौ बहिर्दृश्येते तस्मात् पूर्वमन्तराऽवस्थितत्वाद्बहिर्न दृश्येते त्वदधिष्ठानानन्तरं तु बहिर्निर्गतौ इति तवैवायमकाशोऽभूत् न तु कुचयोस्तस्मादस्मानेवं प्रतारयसीति भावः । अन्योऽपि महताऽधिष्ठिते स्थाने स्थातुमशक्तो बहिर्निर्गच्छत्येव । बहिरपि यदादि त्वया हृदयं स्पृष्टं तदादि साटोपं निर्गताविति भावः । अध्यासिते हृदन्तरसमान्तावित्यन्वयः ॥ ४८ ॥

कुचौ दोषोज्झिताचरणाः पीडितौ व्रणितौ त्वया।

कथं दर्शयतामास्यं बृहन्तावावृतौ ह्रिया ॥४९॥

अधिगत्येत्यादेरुत्तरमाह ॥ कुचाविति । दोषेणोज्झितौ निर्दोषावथ च दोषायां रात्र्यां कूर्पासेन त्यक्तौ, तथा बृहन्तावतिपीवरौ, अत एव त्वया पाणिभ्यां पीडितौ नखैर्व्रणितौ नखैश्च क्षतयुक्तौ कृतावस्याः कुचौ दिने ह्रिया हेतुना आवृतौ वस्त्रेणाच्छादितौ सन्तौ आस्यं चुचुकाग्रं कथं दर्शयतां अपि तु न कथञ्चित् । रात्रौ हि सम्भोगसमये निर्विघ्नं तद्दर्शनं भवेत् दिवा तु ह्रिया नखक्षतादिसम्भोगचिह्नदर्शनभिया च वस्त्रावृतत्वात् कथं नाम चूचुकाग्रस्यापि दर्शनं स्यादपि तु न कथञ्चिदित्यर्थः । दोषया रात्र्या त्यक्तौ रात्रेर्गमनात् हिमप्रकाशमस्यहो अत एव ह्रिया वस्त्राच्छन्नत्वाद्दिवा वैमुख्यमेव तयोर्युक्तमित्यर्थः, इति वा । बहिःस्थितौ त्वामपि वैमुख्यासम्भवात् हृदयस्थितस्य तव स्वमुखं कथं दर्शयतामिति ह्रिया पराङ्मुखत्वाद्वा भैम्या कुचौ स्वमुखं न दर्शयतः । स्वान्तःस्थितस्य भैमीहृदयस्य वा कुचौ स्वमुखं न दर्शयतः । न हि कुचौ हृदस्य सम्मुखौ भवतः । अन्योऽपि दोषोज्झितो निरपराधो लब्धप्रतिष्ठो धनादिग्रहणेन पीडितो नासादिकर्तनेन व्रणयुक्तो लज्जितः कस्याप्यग्रे मुखं न दर्शयति । व्रणितौ तारकादित्वादितच् ॥ ४९ ॥

इत्यसौ कलया सूक्तैः सिक्तः पीयूषवर्षिभिः ।
ईदृगेवेति पप्रच्छ प्रियामुन्नमिताननां ॥ ५० ॥

इतीति । कलया पीयूषवर्षिभिरमृतक्षरद्भिरतिमधुरैः सूक्तैः शोभनवक्रोक्त्यादिरूपैर्वाक्यैः सिक्तः सञ्जातगाढप्रेमभरोऽसौ नल उन्नमितपाणिना ऊर्द्धीकृतमाननं यस्यास्तां प्रियां भैमीं हे भैमि इदं कलाधनमीदृगेवमेवेति सत्यमिति पप्रच्छ । उन्नमितेति ज्वलत्तूलेति ( सि० कौ० चा० १२५ पत्रे ) मित्यपङ् प्रत्ययः ॥ ५० ॥

बभौ च प्रेयसीवक्त्रं पत्युरुन्नमयन् करः । चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥ ५१ ॥

बभाविति । पत्युः करोऽरविन्दमिव बभौ । किं कुर्वन् प्रेयसीवक्त्रमुन्नमयन् । किम्भूतमरविन्दं चिरेण बहुकालेन वैरं विस्मृत्य निश्शङ्कं रतया इन्दुना सह लब्धं सन्धानं येन, अभूतोपमा । चन्द्रकमलयोः सदा वैरित्वं ॥ ५१ ॥

ह्रीणा च स्मयमाना च नमयन्ती पुनर्मुखं ।
दमयन्ती मुदे पत्युरत्युच्चैरभवत्तदा ॥ ५२ ॥

ह्रीणेति । नलोक्तिकलोक्तिवक्रोक्तिप्रत्युक्तिपरिहासेन ह्रीणा स्मयमाना चात एव लज्जाधीनेन स्मितच्छलेन दूषयामिति बुध्या वा अत्युच्चैर्नितरामुन्नमितमपि मुखं पुनर्नमयन्ती दमयन्ती तदा तस्मिन्नुन्नमनसमये पत्युर्मुदेऽभवत् । अत्युच्चैर्मुदेऽभूदिति वा । तादृशीं तां दृष्ट्वा नितरां हृष्टोऽभूदिति भावः ॥ ५२ ॥

भूयोऽपि भूपतिस्तस्याः सखीमाह स्म सस्मितं ।
परिहासविलासाय स्पृहयालुः सहप्रियः ॥५३॥

भूय इति । प्रियया सह वर्तमानो भूयोऽपि पुनरपि वक्रोक्त्या दि परिहासविलासाय स्पृहयालुरभिलाषुको भूपतिस्तस्याः सखीं कलां सस्मितं यथा तथा आह स्म । विलासाय स्पृहेरीप्सितः ( पा० १।४।३६ ) सम्प्रदानत्व । सहप्रिय वोपसर्जनस्येति ( पा० ६।३।८२ ) पाक्षिकत्वात् सादेशाभाव ॥ ५३ ॥

क्षन्तुं मन्तुं दिनस्यास्य वयस्येयं व्यवस्यतात्।
निशीव निशि यात्वर्थं यदाचरति नात्र नः॥५४॥

क्षन्तुमिति। हे कले इयं तव वयस्या अस्य वर्तमानस्य दिनस्य म न्तुमपराधं क्षन्तुं सोढुं व्यवस्यतात् प्रयतताम्। कोऽपराधो दिनस्येत्यत आह। यद्यस्मादियं भैमी निशीव रात्राविव नोऽस्माकं निशि चुम्बन इति पठितस्य धातोरर्थमत्र दिने नाचरति, रात्रौ यथा मां निःशङ्कं चुम्बति तथा भयलोभ्यो लज्जया दिने नेति दिनस्यापराधस्तस्मात्तस्यापराध क्षमस्वेति प्रार्थित इत्यर्थः। व्यवस्यतामिति पाठे आत्मनेप दं चिन्त्यं॥५४॥

दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः।
तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः॥५५॥

दिनेनेति। दिनेनास्या मुखस्य सखा इन्दुर्यदि तिरस्कृतः निष्प्रभी कृत्य पराभूतः, एवमपराधश्चेन्मन्यते तर्हि तस्य भैमीमुखस्य सादृश्या न्मित्रभूतानां बहूनां शतपत्राणां कमलानां श्रियो विकासलक्ष्म्योऽप च सम्पदोऽपि तेन कृताः। अनेकोपकारकारिण्येकस्मिन् पराभूते य- दि बहूनां क्षेम भवति तदा महानुपकार एवेति त्वन्मुखमित्रभूतानां कमलानां प्रकाशकत्वाद्दिनेनोपकार एव कृतो नापकारस्तस्माद्दिनस्या- पराधो नास्तीति तन्मुखचुम्बनं दिनेऽपि कुर्विति भावः। एकस्मिन् धर्षितेऽपि बहूनामपकारिणि बहूनां भवति क्षेमं तस्य पुण्यप्रदो वध इत्याद्युक्तेः। तत्कृता इति पाठे दिनस्य मित्रभूतानां सम्बन्धात् सम स्तोकानां कमलानां, अथ च शतसंख्यानि बहूनि पत्राणि वाहनानि येषां मित्राणां श्रियोऽपि तेन चन्द्रेण कृतास्छिन्नाः। रात्रौ सङ्कोचक रणात्, दिनेन तु त्वन्मुखमित्र चन्द्रो धर्षितश्चन्द्रेण तु दिनमित्राणि च बहूनि कमलानि धर्षितानीति चन्द्रस्य स्वयं वैरनिर्यातनं कृतमेवेति दि नस्यापराधोऽन्यथा न गणनीय इत्यर्थः। त्वन्मुखमित्राणां कमलानां श्रियोऽपि छिन्ना अपि तु न, किन्त्वतिवृद्धिमेव प्रापितास्तस्मात् पूर्व वदेवापराधो नास्तीति काकुर्वा। त्वन्मुखमित्रं चन्द्रो यदि दिनेन ति

रक्तस्तर्हि दिनमित्राणां कमलानामपि श्रियस्तेन त्वन्मुखेन छिन्नाः, स्वकान्त्या तेषां निःश्रीकरणात् वैरं निर्यातितमेवेति दिनस्यापराधो न गणनीय इति भाव इति वा ॥ ५५ ॥

लज्जितानि जितान्येव मयि क्रीडितयाऽनया ।
प्रत्यावृत्तानि तत्तानि पृच्छ सम्प्रति कम्प्रति ५६

लज्जितानीति । हे कले अनया मयि विषये नायकविषये लज्जितानि लज्जाविशेषा जितान्येव निरस्तान्येव । यतो रात्रौ क्रीडितया कृतसुरतक्रीडया मयि प्रदर्शितबहुविधसुरतचातुर्यया, तस्मात् सम्प्रति तानि लज्जितानि यत् पुनः प्रत्यावृत्तानि तत् कं प्रति वर्तिष्यन्ते इति त्वमेनां पृच्छ, मयाऽस्याः सुरतचातुर्यप्राचुर्यं बहुवारं दृष्टमेव । त्वामेव प्रति इयं लज्जते इति जानीहीति भावः ॥ ५६ ॥

निशि दष्टाधरायापि सैषा मह्यं न कुप्यतु ।
कः फलं दश्यते बिम्बीलता कीराय कुप्यति ५७

इदानीं श्लाघनपूर्वेण स्वापराधाशङ्कां परिहरति ॥ निशीति । सैषा निशि दष्टः अधरो येन तस्मादपि मह्यं न कुप्यतु न कुप्यतु, यस्मात् पक्वबिम्बी फलं दश्यते आस्वाद्यते, कीराय शुकाय बिम्बीलता कः कुप्यति, अपि तु न कुतोऽपि । किन्तु स्वसम्बन्धेन शोभाहेतवे तस्मै स्निह्यत्येवेत्यर्थः । दन्तक्षते कृतेऽपि प्रायमधरस्य शोभितत्वात् अधरशोभाकारित्वेन मह्यं प्रसादः अत्र युक्तो न तु कोप इति भावः । कुप्यतीति पाठः मिहदयरकारेणोक्तिः । मह्यं कीराय च क्रुध द्रुहेति (पा० १।४।३७) चतुर्थी ॥ ५७ ॥

सृणीपदसुचिह्नाभ्यां श्रीशृङ्गारिता कुम्भिकुम्भयोः ।
एतद्वैतस्याः कुचाभ्यां सन्तपस्तौ पीडयामि नयद

सृणीति । एतस्याः कुचाभ्यां सृणीपदं अङ्कुशाघातक्षतमेव शोभनं चिह्नं यस्याः, अथ चाङ्कुशाकारनखपदविशेष एव शोभनं चिह्नं ययोः सा कुम्भिनः करिणः कुम्भयोः श्रीः शोभासम्पद् यस्माच्चारिता, पश्य, एतत्कुचयोरङ्कुशाकारं नखं यदि नास्ति तर्हि त्वमेव विलोकय ।

तत्तस्मान्नृपो दण्ड्यदण्डकरणाधिकारी अहं तौ स्तेयकारिणावेतौ कुचौ न पीडयाणि, अपि तु पीडयाम्येव । तयो पीडनं दण्डरूपनखक्षता दिरूप चोचितमित्यर्थः । राज्ञा हि चोरस्य दण्डः क्रियते । ममापराधो नास्तीति भावः । अङ्कुशो ऽस्त्री शणिर्द्वयोरित्यमरः । शृषो कृदिकारादिति (पा०४।१।४५वा०) ङीप् ॥ ५८ ॥

अधरामृतपानेन ममास्यमपराध्यतु । मूर्द्धा कि मपराद्धं यन् पादौ नाप्नोति चुम्बितुं ॥ ५९ ॥

अधरेति । ममास्य मुखमेतस्या अधरामृतस्य पानेन कृत्वाऽपराध्यतु, मम मुखस्यापराधोऽङ्गीकृत इत्यर्थः । मम मूर्द्धा पुन किमपराद्धं यो मस्तक प्रणामहेतुनाऽस्याः पादौ चुम्बितुं स्प्रष्टुमपि नाप्नोति, नमस्कर्तुमपि न ददाति कोऽपराधो तेन कृत इति पृच्छेत्यर्थः ५९॥

अपराद्धं भवद्वाणीभ्यांविणा पृच्छ किं मया । वीणाऽऽह परुषं यन्मां कलकण्ठी च निष्ठुरं ६०

अपराद्धमिति । त्वद्वाणीश्राविणा त्वद्वचनाकर्णनशीलेन मया वीणाया कोकिलायाश्च तव वा किमपराद्धं को वाऽपराधः कृत इति कं ले त्व भैमीमनेन किमपराद्धमिति पृच्छ । यद्यस्माद्वीणा साम्प्रतं परुषमाह, कलकण्ठी कोकिला च मां प्रति निष्ठुरं ब्रूते तस्मादपराध मन्माव्यते । येन हि यस्य कश्चिदपराध क्रियते त प्रति सा तदीयो वा तत्सदृश कश्चित्परुष भाषते । अथच वीणाकोकिलयो स्वरे यस्मान्माधुर्यं नास्ति तस्मात् पश्चादागत्य निभृत मयाऽमरुद्भावमाणाया भवत्या भारती श्रुता न त्वन्येन केनाप्याश्रयेणेति । सोऽप्यपराधो न भवतीत्यर्थः । वीणाकोकिलाभाषितया भैमीवाणी मधुरतरा रात्रौ एतद्वाणीमाधुर्यं मया यदनुभूत, इदानीन्तु त्वा दृष्ट्वा मा प्रति मूकी नास्ति इति । परुष निष्ठुर च क्रिया विशेषण । परुष निरुष्ट निष्ठुर सतिरस्कार । कलकण्ठी पाङ्गाग्रेति (पा०४।१।५४वा०) ङीप् ॥ ६० ॥

सेयमालिजने स्वस्य त्वयि विश्वस्य भाषता । ममतानुमतास्मासु पुनः प्रस्मर्यते कुतः ६१

येति हे कले सेयं स्वस्याश्रिजने त्वयि विषये विश्वास आपता कथ यतु । अस्मासु विषये अनुमताऽङ्गीकृता ममता स्वीयताभति पुन प्रुत प्रसमय्यंते विस्मय्यते इति त्व पृच्छ । इयं च त्वयि विश्वस्त कथ यत्वित्यथ । रात्रौ रतानुकूल्यमाचरितमनया इदानीं तु तव समक्ष प्रातिकूल्य किमित्याचर्य्य त इति भाव इत्युपालम्भनभङ्गि । प्रशब्दस्य गतार्थतया विस्मरणार्थता ॥ ६१ ॥

अथोपवदने भैम्याः स्वकर्णोपनयच्छलात् । स न्निधाप्य श्रुतौ तस्या निजास्य सा जगाद ताम् ॥६२॥

अथेति । अथ नलोक्त्यनन्तर सा कला भैम्या उपवदने वदनस मीपे स्वकर्णस्य उपनयच्छलात् समीपनयनव्याजात् तस्या भैम्या श्रुतौ कर्णे निजास्यं सन्निधाप्य सन्निहितं कृत्वा सा जगाद । अवदन्त्या अपि भैम्या वचन शृण्वतीव कर्णं भैमीमुखसमीपे कृत्वा अनन्तरञ्च तद्वच प्रतिवचनमेकान्ते वितरन्तीव भैमीकर्णसमीपे निजमुखं कृत्वा भैमीं जगादेत्यर्थः । छेकानुप्रासकजाति । उपवदनेऽव्ययीभावे सम स्या अभावाभाव । सन्निधाप्य हेतुमण्यन्तात्ल्यप् ॥ ६२ ॥

अहो मयि रहोवृत्तं धूर्ते किमपि नान्यथा । आस्स्व सत्यमिमं तत्ते भूपमेवाभिधापये ॥ ६३ ॥

अहो इति । हे धूर्ते वचनचतुरे त्वं मयि विषये रहोवृत्तं एकान्ते निष्पन्नमालिङ्गनादि किमप्येकमपि अल्पमपि च नान्यथा , अहो आश्चर्यं एतादृशी धूर्ता काऽपि न दृष्टेत्यर्थ । त्व आस्स्व तिष्ठ तिष्ठ , यद्यपि त्व नाचकथा , तथापि ते तव तद्रहोवृत्तं सत्य सत्यवादिनमिमं भूपं नलमेवाभिधापय वादयामि । अहमपि त्वया यतो वञ्चिता तथा किञ्चिद्रच यिष्यामि यथा नल एव स्वयं त्वदीयसुरतप्रागल्भ प्रकटयति मा वञ्चयित्वा कथङ्कार स्थास्यसि क्वास्यसि क्षणमात्र स्थिरा भवति सरोषोक्ति । सत्यमिति पाठे अभिधापये नल सत्य जानीहीत्यर्थः । आस्स्व सत्यमिति पाठे इमं भूपमेव तमेवेदंसत्य सभाया जनसमक्ष वञ्चनङ्गे तद्रहोवृत्तमाख्यदानीमेवाभिधापये तिष्ठ तिष्ठे-

त्ययं । भूप सकर्मकान्वेति ( पा० १ । ४ । ५१ ) कर्मत्वं अभिधा-
पये अभिपूर्वात्प्रापणार्थाद्धातोर्हेतुमण्णिचि णिचश्चेति ( पा० १ । ३ ।
७४ ) तङ् ॥ ६३ ॥

स्मरशास्त्रमधीयाना शिक्षिताऽसि मयैव यं । अ-
गोपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ॥६४॥

स्मरेति । स्मरशास्त्र वात्स्यायनादिप्रणीतं शास्त्रं अधीयाना पठन्ती
त्व तत्र प्रतिपादित य दाम्पत्यव्यत्यय विपरीतसम्भोग मयैव शिक्षि-
ताऽसि । स दाम्पत्यव्यत्ययः त्वया कृत्वाऽपि निष्पाद्यापि मम पुर-
स्तात् किमगोपि गोपित कथयेति प्रश्नः । नितरां धाष्ट्र्यकथनमस्य
मया शिक्षित विपरीतसुरत कृत्वाऽपि ममैव पुरस्तादकृतमेव कथय-
सीति नितरां मञ्जुलचतुराऽसीति भावः । स्मरशास्त्रं नलोकेति ( पा०
२ । ३ । ६९ ) षष्ठीनिषेधः । दम्पत्योर्भाव. सम्भोग इति यावत् । प-
त्यन्तपुरोहितादिभ्य इति ( पा० ५ । १ । १२८ ) यक् ॥ ६४ ॥

मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती ।
वादं वादं मुहुश्चक्रे हुं हुमित्यन्तरान्तरा ॥६५॥

मौनिन्यामिति । सा कला तस्यां भैम्या मौनिन्यामवदन्त्यामेव स-
त्यां तदुक्तीर्भैमीवचनानि शृण्वतीव भैम्यामवदन्त्यामपि भैमी मा प्र-
ति किमपि वदतीत्येव शृणोमीति नलमति प्रकटयन्ती वादं वादं
भैमीवचनप्रतिवचनव्याजेन स्वयमेव किञ्चिदुक्त्वोक्त्वा अन्तराऽन्तरा
मध्ये मध्ये मुहुर्मुहुः हुं हुं इति शब्दं चक्रे । यदत्यविपरीत्यादेवं-
त्यमानास्य सत्यत्वबुद्धिजननार्थं पूर्वं रहस्यमलीकमेव श्रवणासरदान-
रीतिप्रकटनमकरोदिति भाव । वादं वादं आभीक्ष्ण्ये णमुल् चेति
( पा० ३ । ४ । २२ ) द्विर्वचनञ्च ॥ ६५ ॥

अथासावभिसृत्यास्या रतिप्रागल्भ्यशंसिनी ।
सख्या लीलाम्बुजाघातमनुभूयालपन्नृपं ॥६६॥

अथेति । एवम्प्रकारप्रकटनानन्तर असौ कला नृप अभिसृत्य
भैम्याः सकाशादेव प्रति गत्वा वक्ष्यमाणमेव अवोचत् । किम्भूता ,

अस्या भैम्या रतिप्रागल्भ्यं शंसति वर्णयति तच्छीला विपरीतसुरतमपि करोषि साम्प्रतं नितरां धृष्टा जातासीति भैमीकर्त्तृकप्रेमभाषण कुर्वा- णा, अत एव तस्या भैम्या लीलाम्बुजेनाघातमनुभूय प्राप्य रतिप्रा- गल्भ्यं नलेन शंसयति तच्छीलेति च । शमिनी केवलाद्वैतुमत्यन्ताद्वा शंसेस्ताच्छील्ये णिनिः ॥ ६६ ॥

दृष्टं दृष्टं महाराज त्वदर्थाभ्यर्थना क्रुधा । य
ताडयति मामेव यद्वा तर्जयति भ्रुवा ॥ ६७ ॥

दृष्टमिति । हे महाराज सार्वभौम इय नलाय रम्भाम वितरेति त्वदर्थं रतिसम्भोगमभ्यर्थितया क्रियमाणमभ्यर्थनं तस्माज्जातया क्रुधा कोपेन हेतुना मामेव लीलाकमलाघातप्रकारेण यत्ताडयति यद्वा मम भ्रुवा कटाक्षेण वा तर्जयति भीषयते तत्त्वया दृष्टं दृष्टं त्वं पश्य पश्ये- त्यर्थः । त्वयि परपुरुषबुद्धिं कृत्वा त्वत्र मा कथं प्रार्थयसीति मां ता- डयति भ्रूक्षेपेण चेत परं मा वादीरिति तर्जयती च त्वं पश्येति भाव दृष्टं दृष्टं सम्भ्रमे द्विरुक्तिः ॥ ६७ ॥

वदत्यचिह्नं चिह्नेन त्वया केनैष नैषधः । शङ्के
शक्रः स्वयं कृत्वा मायामायातवानयं ॥ ६७ ॥

वदतीति । हे राजन् इयं इति वदति । इति किं हे कलि यदर्थ- मर्थना त्वं करोषि एष नैषध त्वया केन चिह्नेन अचिह्नं निश्चितः, तदहं का अयं शक्रः स्वयंवरकाल इव मायां नलरूपं कृत्वा स्व- यमायातवान् इति अहं शङ्के त्वदर्थमर्थनां कुर्वन्त्या मम कथं इति वदति ॥ ६८ ॥

स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदानतां । न
यतीयं त्वदिन्द्रत्वे दिवश्चागमनञ्च ते ॥ ६९ ॥

भैमी त्वदिन्द्रत्वे इन्द्रप्रमाणमाह ॥ स्वर्णदीति । इयं स्वर्णद्यां म- न्दाकिन्यां स्वर्णपद्मिन्याः पद्मस्यात्मनो दानं, दिवः स्वर्गात्ते भूमिं प्रति आगमनञ्च तवेन्द्रत्वे निदानतां प्रथमकारणतां नयति प्रापयति । न हि मनुष्यस्य स्वर्णदीस्वर्णपद्मिनीसुवर्णकमलानयने स्वर्गादागमने

च सामर्थ्यं दृष्टं । तस्मान्नलरूपं धृत्वा पूर्वं इन्द्र एवायमागत इति । एतदर्थं मा प्रत्ययं ना त्वया कर्तुमयुक्तमिति तृतीयं सत्कर्णौ कथयतीति, भावः । स्वर्णंदीति पूर्वपदात्सञ्ज्ञायामग इति ( पा०८।४।३ ) णत्वं ॥६९॥

भापते नैषधच्छायामायामापि मया हरिः ।
आह चाहमहल्यायां तस्याकर्णितदुर्नयः ॥७०॥

भापत इति । हरिरिन्द्रस्य नैषधस्य छायाया कान्त्या मायया कापट्य मया स्वयंवरकाले धमापि जानेति इव भापते । स्वयंवरकाले तव परस्त्रीत्वाभावात् नलरूपं धृतं, इदानीन्तु परस्त्रीत्वभियैव न करिष्यतीति मया प्रत्युक्ता सती इव भैमी अहल्यायां गौतमपत्न्यां तस्येन्द्रस्याकर्णितो व्यभिचारलक्षणो दुष्टो नयो यया एवंविधाऽस्मीति चाह ब्रूते । परस्त्रीत्वभीतिरपि तस्य नास्ति तस्मादिन्द्र एवायमिति त्वया ऽप्ययं ना न कार्यमिति मा प्रति भाषत इति भावः । नैषधस्येव छाया यस्यामिति मायाविशेषणेन पृथक्वा ॥ ७० ॥

सम्भावयति वैदर्भी दर्भाग्राभमतिस्तव । जम्भा -
रिरयं कराम्भोजाद्दम्भोलिपरिरम्भिणः ॥ ७१ ॥

समिति । कुशाग्राभा मतिर्यस्याः सा वैदर्भी दम्भोलि साधु भीमस्यमूचकं वज्र तत्परिरम्भिणो युक्तात् कराम्भोजाद्धेतोस्तव जम्भारित्वमिन्द्रत्वं सम्भावयति, तर्कयति स इत्यमिन्द्रो वज्रहस्त । रेखारूपादपि वज्रादेवमनुमानात् कुशाग्रबुद्धित्वमस्या ॥ ७१ ॥

अनन्यसाक्षिकाः साक्षाद्दाम्पत्यरहःक्रियाः ।
आख्यातास्तु नृदैतस्या यदि त्वं तत्त्वनैषध. ॥७२॥

अनन्येति । तस्मात्त्वं राजन् त्वं यदि तत्त्वेन नैषधो भवसि न तु छद्मना, तर्हि न विद्यतेऽन्यो भैमीभवद्व्यतिरिक्त साक्षी यासु ताभ्यामेव ज्ञायन्त इत्यर्थः । तादृशा रह क्रिया एकान्तक्रीडाः साक्षात् स्वयमेवात्र च व्यङ्ग्यवृत्तिं विना आख्याय प्रकट कथयित्वा ततएताः अस्यातस्त्वमिन्द्रमायामपनय त्वं शुद्ध निराकुरु एतत्प्रत्यायिका क्रो-

ह्यामयपर्येष्टाम् उक्ता अस्माकमेतस्याः सन्देहमपनुदेत्यर्थः । सत्यनैषध इति वा पाठः ॥ ७२ ॥

इति तत्सुप्रयुक्तार्थं निह्नुतीकृतकैतवाम् । वाच-
माकर्ण्य तद्भावे संशयालुः शशंस सः ॥ ७३ ॥

इतीति । इत्युक्तप्रकारेण तया कृतया सुप्रयुक्तार्थेन कैतवद्योतक-हास्यादिविकारव्यतिरेकेण सुवर्णकमलदानादिकस्वनिश्चायकोपपत्ति-मत्तया च सम्यक् प्रयुक्तार्थेन निह्नुतीकृतमाच्छन्नं कैतवं छद्म य-स्यास्तां कलायाचमाकर्ण्य तद्भावे नयीन्द्रत्वास्यैवेयं पुच्छनादि न क-रोति किमिति भैम्यां शये संशयालुः सन्दिहानः स नलः भैमीत्वभ्रान्ति-निरासार्थं शशंस स्वोक्तमित्यर्थः ॥ ७३ ॥

स्मरसि च्छद्मनिद्रालुर्मया नाभौ शयार्पणात् ।
यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि ॥७४॥

स्मरसीति । हे भैमि छद्मना निद्रालुर्निद्राणा अलीकमेवाङ्गीकृत-निद्रा त्वं मया नाभौ शयस्य करकमलस्यार्पणाद्धेतोः आनन्देन सात्त्वि-कभावेनोल्लसन्ति लोमानि यस्याः मत्करनाभिस्पर्शेन जातरोमाञ्चा स-ती पद्मयुक्तनाभिर्यस्यास्तादृशी भविष्यसि सञ्जाता, तत् स्मरसि । पा-णिरोमाञ्चसम्बन्धात् सकण्टककमलसम्बन्धसम्भावनया पद्मनाभीत्व तव यज्जातं तत्स्मरेत्यर्थः । नलपाणिः पद्मस्थानीयः रोमाञ्चश्च तत्क-ण्टकस्थानीयः । अथ च विकसितकमलदलतुल्यरोमाञ्चोद्गमात् पद्म-मिव नाभिर्यस्यास्तादृशी जाताऽसि तत्स्मर । शयार्पणं रोमाञ्चोद्गमे हेतुः । अथ च नाभौ शयार्पणाद्पद्मनाभः पद्मनाभः श्रीविष्णुर्भवि-ष्यसि । पद्मनाभी भविष्यसीति च्विः । तत् स्मरसि मार्जो करकमल-धारणाच्छ्रीविष्णुर्जाताऽसि । न हि विष्णुं विनाऽन्यस्य नाभौ कमल-मस्तीत्यर्थः । निद्रिताऽसीति बुद्ध्या वसनस्रंसनार्थं नाभिसमीपे मया करेऽर्पिते तत्स्पर्शाज्जातसात्त्विकरोमाञ्चा जाताऽसि तत् स्मरसि भा-वः । आनन्दोल्लासि लोमेति निद्राया अलीकत्वं द्योतितम् । न हि निद्रायाः सत्यत्वे करस्पर्शाद्रोमाञ्चोद्गमो भवति । भैमीपक्षेऽपि पद्म-

तृप्तोऽधरपानेषु रसनामपिबन्तव ॥ ७८ ॥

प्रसृतमिति । हे भैमि मोहनेन सुरतेन विशेषेण मोहितः सुरतपरवश. मोहनकारिणा कामबाणेन मोहितो निरस्तविवेकोऽहं तवाधरपानेषु ध्यतृप्त सन् तव रसना जिह्वामपिब तत्त्वया तावत् चापल्ये न प्रसृत । जिह्वाग्रलेहनमपि कामशास्त्रोक्तमिति ॥ ७८ ॥

स्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थिता ।
स्मरेः स्वहृदि यन्स्मेरमुखी. शिल्पं तवाङ्गुवं ७९

स्वदिति । अह स्वहृदये तवालिङ्गनात्थिता तव कुचे तात्कालिकत्वादार्द्र स्राग्मुकरुधिरस्य मया कृतस्य नखाङ्कस्य मुद्रा नखक्षतदर्शनादेव स्मेरमुखी हास्यपरास्तव सखी. प्रति तव शिल्प भवत्सख्या केशोद नत्कृतम कृत पश्यतेति स्वक्रियांबा यद्भ्रुव तत्स्मरे चिन्तये । स्मेर इति पाठे स्मेर मन्दहसितयं , सखी मुख्य कर्म । शिल्पमिति शाकपिनञ्छेति (पा०१।४।५१) कर्मत्व ॥ ७९ ॥

त्वयाऽन्यः क्रीडयन्मध्ये मधुगोष्ठि रुपेक्षितः । वेत्सि तासां पुरां मूढ्रां त्वत्पादे यत्किलास्खलत् ८०

त्वयेति । मधुगोष्ठ्या मद्यशालाया मध्ये मद्यसहपानावसरे चान्या सपत्नी क्रीडयन् त्वया रुषा रोषकलुषितया दृशा ईक्षितो ऽहं तासां स पत्नीनां पुर समक्षमेव किल मद्यमत्तत्वात् स्खलनव्याजेन त्वत्पादे मूर्धा यदस्खल यदपतं तद्वेत्सि जानासि । स्खलनव्याजेन प्रणामेन त्वा प्रसादितवान् अस्मि तत्स्मरेत्यर्थइति भाव. । मध्येमधुगोष्ठि पारे मध्या चेति (पा०२।१।१८) समास. ॥ ८० ॥

वेत्थ मय्यागते प्रोष्य यद्वशां पश्यति द्वार्द्धिनि ।
त्वचुम्बीरालिमालिङ्ग्य तस्यां केलिमृदा किल८१

वेत्येति । मयि प्रोष्य विजययात्रां कृत्वा आगते सत्य द्वार्दिनि मे समरतलमे त्वा पश्यति सति आलि सखी आलिङ्ग्य धन्या प्रति तस्या केलिमुदा हर्षेण किल विलासप्रकारव्याजेन यत्त्वया अचुम्बी त

ह्रत्य स्मरसि । कामशास्त्राभ्यासकौशलवशान्मयालिङ्गनचुम्बनव्याजे न मा मत्यालिङ्गनचुम्बनद्वारा स्वप्रेमज्वर यत् सूचितवत्यसि तत्स्मरेति भाव. । हे हार्द्दिनि इति भैमीसम्बुद्धिर्वा । प्रोष्य प्रपूर्वाद्वसे र्क्वोल्य- पि यजादित्वात् सम्प्रसारण । हार्द्दिनि हृदयस्य हृल्लेखेति (पा०६।३। ५०) हृद्भाव ॥ ८१ ॥

जागर्त्ति तत्र संस्कारः स्वमुखाद्भवदानने । नि
क्षिप्यायाचिषं यत्त्वां न्यासात्ताम्बूलफालिका ८२

जागर्तीति । मद्द ताम्बूलस्य चर्वितपूगफलनागवल्लीदलस्य फालि का शकलानि स्वमुखात् सकाशाद्भवत्या आनने निक्षिप्य निधाय य- दीयां निक्षेप स तस्मै दातव्याऽन्यथा दण्ड्य इति न्यायाच्छास्त्रोक्त- युक्त्येतां ताम्बूलफालिका मदीया पुनर्मह्य देहीति याचितवान् तत्र विषये स्मरणकारणभूतो भावनाख्य संस्कारो जागर्त्ति स्फुरद्रूपो वर्त्तते स्मरसि किमित्यर्थ इति प्रश्न ॥ ८२ ॥

चित्ते तदस्ति कच्चित्ते नखज मयि यत् क्रुधा ।
प्राग्भावाधिगमागःस्थे त्वयाऽशब्याकृत क्षत८३

चित्त इति । मयि प्राक् त्वम्प्राप्तसुरतान्तसुखायामेव सत्या यो भावाधिगम सुरतान्तसुखप्राप्तिं तद्रूपे आगस्यापराधे तिष्ठतीति एव- म्भूते सति मयि विषये वा समरतस्यैव सुराहेतुत्वाद्विपरतस्यासुरहे तुत्वात् क्रुधा मध्य एव सुरजन्याद्रोषाद्धेतो नखज हत त्वया यत् श ब्याकृत । प्रथम कालकृष्टे चेत्रे पुनरपि सीताभद्रारव्यप्रथमकृष्टभूम्या पुन· कर्षयत् प्रथमकृतनखक्षतमध्य एव पुनरपि गाढतर नखक्षत य दारोपित तत्ते चित्ते अस्ति कच्चित् तत्स्मरेत्यर्थ । शब्याकृत द्वितीये- त्यादित्यमरः शब्याकृत कृषौ द्वितीयेति (पा०५।४।५८) डाच् तत्तथा प्रयोग· ॥ ८३ ॥

स्वद्विशिरनियमेनैव निशि पार्श्वाश्रयास्तिनीः ।
स्वप्नेष्वप्यस्तमैथुन्यं सख्ये सौख्यं स्मरायेः८४

स्वेति । स्वीयस्वीयदिशो विनिमयेनैव परिवर्त्तनेनैव निशि पार्श्व-विपर्त्तिनोर्वामदक्षिणकुक्षिपरिवर्त्तनशीलयोर्न तु यथावस्थितयोः स-म्मुखयोरेवंभूतयोः आवयोस्तव मम च स्वप्नेऽपि निद्रास्वपि मध्ये अस्तं त्यक्तवैमुख्यं पराङ्मुखत्वं यत्र तादृशे मत्ये मैत्रे यत्सौख्यं सु-खसुखित्व वा तत्स्मर । सम्मुखयोर्हि यथावस्थितयोरेव पार्श्वपरिव-र्त्तिनोर्द्वयोरपि पृष्ठभागघटनात्पराङ्मुखत्वमेव स्यादिति स्वस्वदिग्वि-निमयपूर्वकमेव पार्श्वपरिवर्त्तनेनैव वैमुख्याभावान्निद्रासमयेऽपि सा-म्मुख्येन यदावयोर्मैत्र्यं तत्स्मरेत्यर्थः । स्वदिग्विनिमयेन पार्श्वपरिव-र्त्तनं वाऽन्योन्यसाम्मुख्यमेव भवतीति सर्वं साधिक । सौख्य स्वार्थे भावे वा ष्यञ् ॥ ८४ ॥

क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणं । दर्शि
ताधरमद्दंशा ध्याय यन्मामतर्जयः ॥ ८५ ॥

क्षणमिति । सदस्येव सभायामेव वर्त्तमानाऽपि त्वं सभास्थाना नृणां विमनितानि कार्यान्तरदर्शनपराणि कृतानि ईक्षणानि यत्र येन वा तादृशं क्षणमवसरं नृत्याद्युत्सवं वा प्राप्य मह्यम् अङ्गुल्यादिना द-र्शितोऽधरे वर्त्तमानो मद्दंशो मत्कृतो दन्तव्रणो यया एवम्भूता सती तर्जन्यादिना मां यदतर्जयः ध्याय स्मर । विमनितेति तत्करोतीति (पा० ३।१।२६। वा०) णिचि प्रातिपदिकेति सि० कौ० सू० १५१ इष्टवद्भावाट्टिलोपः ॥ ८५ ॥

तथाऽवलोक्य नीलाब्जनालभ्रमणविभ्रमात् ।
करौ योजयताऽध्येहि यन्मयाऽसि प्रसादिता ॥ ८६ ॥

तथेति । तथाऽधरदन्तक्षतदर्शनपूर्वं तर्जनप्रकारमालोक्य लीला-ऽब्जस्य तस्य कराभ्यां भ्रमणरूपाद्विभ्रमात् तद्व्याजात् प्रणामप्रमादा-ञ्जलिबन्धनरूपेण करौ योजयता संयुक्तौ कुर्वता मया कापत्याञ्जनपू-र्वं यत्प्रसादिताऽसि तदध्येहि स्मरेत्यर्थः । इक् स्मरणे ॥ ८६ ॥

ताम्बूलदानमन्यस्तकरजं करपङ्कजे । न मम स्म
रसि प्रायस्तव नैव स्मरामि तत् ॥ ८७ ॥

ताम्बूलेति । त्वं त्वदीयकरपङ्कजे मम ताम्बूलदानं अन्यस्तकरं ज गणितनखक्षतं प्रायो बाहुल्येन न स्मरसि । अहमपि मदीयपाणिपद्मे त्वत्कृतं तृषाच्छेदकं तत्ताम्बूलदानं अक्षिप्तं नखक्षतं यथा तथा बाहुल्येन नैव स्मरामि किन्त्वन्योन्यवीटिकादानक्षणे प्रेमभरात्पाणिपद्मगभारोपितनखक्षतमेव सदा ताम्बूलदानमावयोस्तत्स्मरेति भाव ॥ ८७ ॥

तदध्येहि मृषोद्य मां हित्वा यत्र गता सखी. ।
तत्रापि मे गतस्याग्रे लीलयैवाच्छिनस्तृणं ॥८८॥

तदिति । कमप्यपराधं कृत्वाप्यहमेतन्नाकार्षमित्यादिमृषोद्यं अलीकवादिनं मा कोपेन हित्वा सखीं प्रति गता त्वं तत्रापि सखीसमीपे त्वदीयपृष्ठदेशानुवर्तित्वेन गतस्य मे अग्रे लीलयैव स्वप्रायेनैव यत्तृणं अच्छिनः चिच्छेद तदध्येहीति पूर्ववत्, अद्यप्रभृत्यलीकभाषिणस्त्वयाह न कोऽपि त्वं मम न कोऽपि इति मैत्रीविच्छेदसूचकं तृणच्छेदं यथा बालकाः कुर्वन्ति तद्वदेव त्वयाऽपि कृतमिति स्मरेत्यर्थं । मृषाद्य राजसूयेति ( पा० ३ । १ । ११४ ) निपात ॥ ८८ ॥

स्मरसि प्रेयसि प्रायो यद्द्वितीयरतासहा । शु
चिरात्रीस्वपालब्धा त्वं मया पिकनादिनी ८९

स्मरसीति । हे प्रेयसि बालत्वात्सौकुमार्यविशेषाच्च यत् द्वितीयरताभिलाषिणोऽपि मम द्वितीयस्य रतस्यासहा तथा पिकवन्नदति तच्छीला कोकिलतुल्यकूजना त्वं मया शुचिरात्रौ ग्रीष्मर्तुसम्बन्धिनी रात्रीति तदागच्छा सोपालम्भमाभाषिताऽसि तस्माद स्मरसि कथयेत्यर्थ. । शुचिरात्रिरपि स्वल्पप्रमाणत्वादेकवारसुरतेनैव जातप्रभातत्वात्, द्वितीयसुरतासहा । वसन्तनैकत्वाच्च पिकनादोऽस्या वर्तत इति । तत्रापि प्रभाते कोकिलालापो भवतीत्यर्थः । यद्वा वसन्तस्यातीतत्वात्कोकिलानामभावतः पिकध्वनिरिता पतिव अपिकातस्माद् गुणाः ॥ ८९ ॥

भुञ्जानस्य नव निम्बं परिवेविषती मधौ ।

सपत्नीष्वपि मे रागं सम्भाव्य स्वरुषः स्मरेः ॥१०॥

भुञ्जानस्येति । मधौ वसन्ते नवं नूतनसमागतपत्रपुष्पादिकं निम्बं भुञ्जानस्य मे सपत्नीष्वपि रागं प्रीतिं सम्भाव्य अनुमाय कोपवशात् पुनः निम्बमेव मम भोजनार्थं परिवेविषती पात्रे परितः क्षिपन्ती त्वं स्वरुषः स्वीयात् कोपात् स्वकोपस्य वा स्मरेः, मधुरशर्करादिपरित्यागेनातिकटुरसेऽपि चेदस्यैव रुचिस्तर्हि मदीयापेक्षयातिहीनासु मत्सपत्नीष्वप्यस्य रुचिः स्यादिति सम्भाव्य बहुतरनिम्बमेव भुङ्क्ष्वेति वारंवारं अतिकटुनिम्बाभिदानेन स्वकोपात्मानं प्रति व्यञ्जनवत्यसि तत्स्मरेति भावः । वसन्ते च जना निम्बं भुञ्जते । परिवेविषती परिवेषणार्थात् परिपूर्वाद्विषेः शता । श्लाविति (पा०६।१।१०) द्विर्वचनं, स्वरुषः अधीगर्थेति । षष्ठी (पा०२।३।५२) कर्मत्वविवक्षया द्वितीयापि ॥१०॥

स्मर शार्करमास्वाद्य त्वया शाद्वमिति स्तुवन् ।
स्वनिन्दारोपरक्ताभ्रु यदभैषं तवाधरात् ॥११॥

स्मरेति । शार्करं शर्कराविकारभूतं शर्करास्वकृतं वा किमपि वस्तु आस्वाद्य एतत् सर्वातिशायिरसं अमृततुल्यं हृष्टया त्वया साधितं किमिति स्वादातिशयात् अतिस्तुवन् वारंवारं तदेव वर्णयन्, अहं सर्वातिशायिरसमेतच्छार्करमिति स्तुतौ अधरस्यापि सर्वमधुरवर्गान्तःपतितया निन्दापर्यवसानात्मदपेक्षया ऽप्येतदधिकमिति अयं वर्णयति । ननु तत्प्रभृति अयमेतदेव रसयतु मम तु कथाऽप्यनेन न कार्येति स्वनिन्दया रोषस्तेन रक्ताद्धराधरात् पुनर्यदभैषं भीतवानस्मि तत् स्मर । कोपेन लौहित्यं मुक्तं त्वदधरकल्पशार्करवर्णनया कुपितया त्वया अधरस्फुरणादिना व्यञ्जितात्कोपाद्यदभैषं तत्स्मरेति भावः । शार्करं विकारे संस्कृतार्थे वा अण्, अधरात् भीत्रेत्यपादानत्वम् (पा० १।४।२५) ॥११॥

मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बं न तृप्तवान् ।
न प्रापं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः ॥१२॥

मुखादिति । मुखादारभ्य नाभ्यन्तं नाभिपर्यन्तं त्वदङ्गं चुम्ब

चुम्ब चुम्बित्वा चुम्बित्वा अतृप्तत्वात् असमाप्तचुम्बनेच्छ सन्नद स्मरमन्दिरं यत्त्वदङ्ग पाणयादिना प्रतिबन्धाल्लज्जातिशयाद्वा गोपितत्वाच्चुम्बितुं न प्राप तत्स्मरमन्दिरं धन्या स्मृतिः चुम्बतु इति घाटिरागात्स्मरमन्दिरमपि चुम्बितुं प्रवृत्तस्य मम तत्र दत्तवती तत्स्मरेति भाव । चक्रवर्तिनाऽपि मया यच्चुम्बितुं न प्राप्तं तत्स्मृत्या प्राप्तं अत एव सा धन्येति भाव । मुखादिकस्य कुचनाभिमूलवराङ्गभागादयश्चुम्बनस्थानानि ॥ ९२ ॥

कमपि स्मरकेलिं त स्मर यत्र ज्वलन्निति । मया
विहितसम्बुद्धी व्रीडिता स्मितवत्यसि ॥ ९३ ॥

कमिति । त्वं कमपि त अनिर्वचनीयं लोकोत्तरपुरुषायिताख्य स्मरकेलिं कामकेलिं स्मर, यत्र कामकेलौ पुरुषारोपेण भवन्नित्येव पुनिङ्गोचितसम्बुध्या मया विहिता सम्बुद्धिर्यस्या सा त्वं व्रीडिता स्मितवत्यसि कामशास्त्राभ्यासकौशलाद्विपरीतसुरतकार्या तत्स्मरेत्यर्थं । केलौ पुरुष पूर्वं दर्शितं ॥ ९३ ॥

नीलद्राचिवुकं यत्र मदाक्तेन श्रमाम्बुना ।
स्मर हारमणौ दृष्ट स्वमास्य-तत्कृणोचितं ९४

नीलदेति । यत्रोक्तरूपे पुरुषायिते ललाटकपोललिखितपत्रवल्लीसम्बन्धिना मदेन कस्तूर्याक्तेन मिश्रितेन कलुषितेन गच्छता श्रमाम्बुना आचिबुकं एतन्नामकमभिव्याप्य नीलत् नीलवर्णं भवत् उपरिस्थितत्वादधोविनाकयता मुखस्य कस्तूरीमिलितेन गलता श्रमजलेन चिबुकपर्यन्तस्यौचित्याचीरा भवत् स्वमभूत । अधोभागे वर्तमानस्य मम हृदि वर्तमाने मुक्ताहारमध्यमणौ तत्क्षण विपरीतरताचरणसमये तत्क्षणे उरसि वा उचितमुक्तरीत्या योग्यमथ च पुरुषायितक्षणे तादृशस्य स्मरजनस्य पुरुषालियाहित्येनाचितं दृष्टं स्वमास्यं स्मर । मदो रेतसि कस्तूरी गर्वे हर्षेभदानयोरित्यभिधानान्मदपदस्य एकदेशग्रहणया मृगमदवाची । नीलम् आचारात्क्विबन्तात्शता । नीलायमानमापादिति योजित ॥ ९४ ॥

स्मर तन्नखमत्रोरौ कस्त्योघाटिलि तन्मृषा । ह्री
दैवतमलुम्प यद्व्रतं रतपरीक्षण ॥ ९५ ॥

स्मरेति । अहमत्र स्थिते तवोरौ को नखमघाट्टितवानिति मृषाऽ-
सत्यभाषी सन् ह्रीरेव दैवतं यस्य तत्, अत एव रतस्य परीक्षणे परी-
क्षाकरणे ब्रह्मचर्य्यरूपं रतिप्रतिबन्धकं व्रतं नियमं यदलुम्प निवर्त्ति-
तवान्, तत्स्मर । परपुरुषसम्बन्धशङ्कोत्पादनार्थं मृषाभाषणेन रसान्त-
रमुत्पाद्य लज्जाकृतं सुरतप्रतिबन्धकमनुयोगं यन्निवर्त्तितवान् तत् स्म-
रेत्यर्थः । व्रतं सदैवतं भवतीति ह्रीदैवतमित्युक्तं ॥ ९५ ॥

वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति । देहि म
ह्यमुदस्येति मह्गिरा व्रीडितासि यत् ॥ ९६ ॥

वनेति । त्वं इति मद्गिरा यद् व्रीडिताऽसि तत्स्मर । इति किं ।
हे भैमि त्वं वनकेलौ आरामविहारसमये भुवि पतितं अश्वत्थदलं उ-
दस्य पाणिना उत्क्षिप्य मह्यं प्रतिदेहीति अश्वत्थपत्रसदृशं विपुलञ्च
गुह्यमिति कामशास्त्रवचनात् भूपतिताश्वत्थदलयाचनेन वराङ्गयाचनस्य
सूचितत्वाद् व्रीडिताऽसि तत् स्मरेति भावः ॥ ९६ ॥

इति तस्या रहस्यानि प्रिये शंसति सान्तरा ।
पाणिभ्यां पिदधे तस्याः श्रवसी ह्रीवशीकृता ९७

इतीति । सा भैमी प्रिये इति पूर्वोक्तप्रकारेण तस्याः रहस्यानि ए-
कान्तरसवृत्तानि शंसति सति ह्रिया वशीकृता लज्जिता सती अन्तरा
मध्ये एवासमाप्त एव वचने पाणिभ्यां तस्याः कलायाः श्रवसी कर्णौ
पिदधे आच्छादितवती । इत परमयं सङ्कुलमपि रहस्यमस्यै कथयिष्य-
ति तदनया श्रवणीयमिति बुद्ध्वा तस्याः कर्णौ पिधत्तेत्यर्थः ॥९७॥

कर्णौ पीडयती सखात्रा वीक्ष्य नेत्रासितोत्पले ।
अप्यपीडयतां भैमीकरकोकनदे नु तौ ॥ ९८ ॥

कर्णपिधानमेवोत्प्रेक्षते ॥ कर्णाविति । भैम्याः करावेव कोकनदे रक्तो-
त्पले अपि कर्त्तारौ सख्याः कलायाः नेत्रे एवासितोत्पले तस्याः एव क

तदेति । अस्य नलस्यास्यहसिताज्जातमासां सखीनां स्मितं श्रोत्रा-ग्रोरालोकात् सकाशाज्जातं कुमुदश्रेण्यां जृम्भणं विकासनमिवाभासत । तदस्येति क्वचित् पाठः ॥ १०२ ॥

प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरं । स
ख्यास्तासु स्वपक्षायाः कला जातबलाऽजनि ॥ १०३ ॥

प्रतीति । अथ सखीसमूहहास्यानन्तरं विज्ञा अतिचतुरा कला तासु सखीषु मध्ये स्वपक्षाया निजमित्रभूतायाः कस्याश्चित् सख्याः स्वरं हास्येन विकस्वरं सुव्यक्तं, अत एव साऽप्य नरसख्या एव स्वर इति प्रत्यभिज्ञाय परोक्षप्रत्यक्षोभयात्मकज्ञानविषयं कृत्वा, जातं बलं यस्या-स्तादृशी भैमीप्रतारणार्थं समहायोत्साहयुक्ता वाऽजनि । मत् प-क्षीयाऽत्र विद्यतेऽतोऽस्याः सकाशात्त्वां मोचयिष्यति, अथवाद्द्वन्द्वाक-र्णयिष्यतीति साऽऽश्वस्ताऽभूदिति भावः । अन्योऽपि केनचित् प्रति-बद्धः स्वपक्षीयं दृष्ट्वा जातबलो भवति । सखीस्वरश्रवणन्तु कर्णपिधा-नात् पूर्वमेव ज्ञातव्यं अन्यथा स्वरश्रवणानुपपत्तेः । भैमीकरयोः कौ-तलतरतया कर्णविवरपीडनमासम्यगभावेन वा स्वरश्रवणोपपत्तेः । सख्येषा इति च पाठः ॥ १०३ ॥

साऽऽहूयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते । पिब
वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि ॥ १०४ ॥

सेति । अथ स्वपक्षीयस्वरप्रत्यभिज्ञानानन्तरं सा कला तां स्वसखी-मुच्चैस्तारस्वरं यथा तथा आहूय इति ऊचे । इति किं दूरस्थत्वात् हे स्वर्गसुखेन वञ्चिते सुन्दरि एहि समीपमागच्छ । आगत्य च नृप ए-वाह्लादकत्वाच्चन्द्रस्तस्य सुधावेणीः अमृतप्रवाहरूपा वाणीः पिब सादरमाकर्णयेति । स्वर्गेऽपीन्द्रामृतपानमेव, नलपरिहासाकर्णनसुखं स्वर्ग-सुखमेव तदनुभवेत्यर्थः ॥ १०४ ॥

साऽस्पृशोत्तस्य वागभागमनत्यासन्नमत्यपि । क
लपग्रामाल्पनिर्घोषं वदरीव कृशोदरी ॥ १०५ ॥

संति । कलया ऽऽहूता ऽनत्यासन्नमित्यपि अत्यन्तनैकट्यरहिता ऽपि यत्र स्थितौ किञ्चित् श्रूयते किञ्चिन्नेति तत्र स्थिता कृशोदरी सा कलासखी तस्य वचोभागमवशिष्टमश्रौषीत् कलाकर्णयोर्भैम्या पिहितत्वादाहूता सखी नलकथ्यमानरहस्यकथाशेषमशृणोदित्यर्थः । का इव । कृशोदरी कृशमध्या अल्पजनेति यावत् । एवम्भूता बदरी बदरपाचननाम्नो ग्रामस्याल्पनिर्घोषं लोककलकलं तत्र पठतां वेदध्वनिस्यार्थमिव, बदरिकाश्रमस्था लोके मुनिजनस्यानभूत. बदरपाचननिवासिनो जनस्य कोलाहलं शृणोतीति तीर्थकप्रसिद्धिः ॥ १०५ ॥

अथ स्वप्ननिष्ठाया. शृण्वन्त्या नैषधागिरः ।

नलमौलिमणौ तस्या भावमाकलयत् कला ॥१०६॥

अथेति । अथ कलामरया नलवाक्यशेषश्रवणानन्तरं स्वप्ने निष्ठा स्थितिर्यस्याः कर्णपिधानपरतया कलापश्चाद्भागे स्थितायास्तथा कला सखीं प्रति रहस्यं ब्रुवतो नैषधस्याभिधा वचनानि शृण्वन्त्याः तस्या भैम्या भावं रहस्यकथनाद्धासकोपाभिव्यञ्जकमुखचेष्टाविशेषं नलस्य मौलिमणौ शिरोरत्ने प्रतिबिम्बवशादाकलयद्पश्यत् ददर्शेत्यर्थः । नलेन कलासखीं प्रति रहस्ये उक्ते भैम्या हासकोपादिचेष्टां नलमौलिरत्ने प्रतिबिम्बितां सा कला ददर्श न त्वशृणोदित्यर्थः ॥ १०६ ॥

प्रतिबिम्बेङ्गितैः सख्या मुखाकूतकृतानुमा । तद्

व्रीडाद्यनुकुर्वाणा सूचयती चान्वमायि सा १०७

प्रतिबिम्बेति । प्रतिबिम्बे इंगितैः सख्या पृष्ठस्थितायाः भैम्याः स्वपक्षमरया या मुखाकूतिः व्रीडाहास्यादिसूचकमुखभङ्गीचविकारादिचेष्टितैः कृत्वा कृता अनुमा ऽनुमितिर्यया तादृश्या एवविकारदर्शनात् प्रायेण नर्मनैवमुक्तं स्यादित्येवं कृता नलवाक्यार्थसम्भावना यया सा, तथा तस्या भैम्याः स्वपक्षसख्या या नलवाक्यानुरूपव्रीडाद्यनुकुर्वती प्रतिबिम्बदर्शनादेवाङ्गभङ्गीचाद्यभिनयेनानुकुर्वाणा दर्शयन्ती सती सा कला भैमीपाणिपिहितकर्णाऽपि सत् व्रीडाद्यनुकरणादेव भैमीवयस्या यद्वा नलवचनं शृण्वतीवान्यमानि भैमीनलाभ्यां सम्भाविता । व्रीडा-

दि न लाकेति (पा०२।३।६९) षष्ठीनिषेधाद्द्वितीया । अनुकुर्वाणा अनुपराभ्यां कृञ इति (पा०१।३।७९) परस्मैपदविधानाच्छानजभावे ताच्छील्ये शत्री या चानश् ॥ १०७ ॥

कारङ्कारं तथाकारमूचे साम्प्रतमन्तमां । मिथ्या वेत्थ गिरश्चेतद्यर्याः स्युर्मम देवताः ॥ १०८ ॥

कारमिति । सा कला तथा पूर्वोक्तभैम्याः स्वयमनया वा नलमीलितमिदं सुरक्रीडाचर्योद्याकारं कृत्वा कृत्वा अनया सर्वं श्रुतमिति यथा प्रतीतिर्भवति तथाऽभिनयं कृत्वा इत्यूचे । इति किं । अद्य भय दीय यद्यं तृतात्त कत्वंत्तगृण्यत्तमां निहरां आकर्णितमस्ति, हे भैमि त्वं भवद्वचनश्रवणमूषिका मम गिर मिथ्या वेद्धत्य आमीये अनाकर्णितमप्याकर्णितमिव वदतीति मन्यसे येनाहं अभीष्टमित्यर्थं प्रत्यह पूज्यमाना मम कौर्यादीष्टदेवता व्यर्था निष्फलाः सुरिष्टदायिन्यो मा भूवन्निति मया शपथ क्रियते इति मल प्रत्यक्षाचद्वा । अन्तमांतमा निकटेनि (पा०५।३।५६) तमप ॥ १०८ ॥

मत्कर्णभूषणानान्तु राजन्निविडपीडनात् । ध्यचिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया॥१०९॥
इति मा मोचयाञ्चक्रे कर्णौ सख्याः करग्रहात् । पत्युराश्रवतां यान्त्या मुधायासनिषेधिन ॥११०॥

मदिति । इतीति युग्मम ॥ सा कला इति पूर्वोक्तं नलं प्रति उक्त्वा सख्या भैम्या करग्रहात् पाणिभ्यां पीडनात् सकाशात् कर्णौ मोचयाञ्चक्रे अर्थाद्भैम्यैव प्रयोज्यया । तृतीयान्तस्तु स्पष्टार्थं । किम्भूताया- । कर्णपिधानरूपान्मुधायासात् वृथाप्रयासात् निषेधिनो निवारयितु- पत्युराश्रवतां वचनकारित्वं यान्त्या गच्छन्त्यास्तद्वचनकारिण्या इत्यर्थं । शपथरूपकलावचनमाकर्ण्य कर्णपिधानप्रयासो व्यर्थ इति निविडपीडनात् तव पाणिपीडैव जनिष्यतीति तत्कर्णौ मुञ्चति । न तद्वचनाद्भैमी तत्कर्णावमुञ्चदित्यर्थं । इति किं । हे राजन् मत्कर्ण-

वयस्याभ्यर्थनेनास्याः प्राक्कूटस्तुतिनाटने । वि
स्मितौ कुरुतः स्मैतौ दम्पती कम्पितं शिरः ११४

वयस्येति । अस्तुतरहस्यवचनार्थमाहूताया वयस्याया अभ्यर्थनेन स्वाश्रुतवचनप्रार्थनेन हेतुनाऽस्याः कलायाः प्रकृतवचनात् प्रागित्या- दिप्रकृटस्तुतिं पूर्वकृतमिथ्याशिरःकम्पादिपूर्वं वचनं तस्या नाटने ऽभिनये विस्मितौ अनया कथमावां प्रतारितौ स्व दुष्टे दुष्टे इति नि- यावचनपूर्वकं साश्चर्यौ तौ दम्पती शिरः कम्पितं कुरुतः स्म । नाटने चौरादिकान्नटेर्नपुंसके भावे ल्युट् ॥ ११४ ॥

तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः ।
आस्व तद्वञ्चितौ स्वप्ने मिथ्या शपथमाहृतात्११५

तथेति । निषधाधिपः तथा रहस्यविनिमयकथनप्रापणरूपेण या स्वपक्षभूता आलिं प्रत्यालापवती तां कलामभ्यधात् अवोचत् । हे कले मिथ्याशपथरूपात् साहसादविचारकारित्वाद्धेतोः येयावां कथमो- चनार्थमयं त्वयाऽलीकवचनात्त्वया वञ्चितौ प्रतारितौ स्वो भवाव त- र्हि आस्व तिष्ठ तिष्ठ । तर्हि आस्वेति निन्दा वा प्रतारनिमित्ता त- र्जनोक्तिर्न्यूचे इत्यर्थः ॥ ११५ ॥

प्रत्यालापीत् कलाऽपीमं कलङ्कं शङ्कितं कुतः ।
प्रियापरिजनोक्तस्य त्वयैवाऽत्र मृषोद्यता ११६

प्रतीति । कलाऽपि इमं नलं प्रति उद्दिश्य आलापीत् अवादीत् हे राजन् त्वया प्रियाया भैम्याः परिजनस्य सेवकभूताया ममोक्तस्य वचनस्य सत्यावत्सु दिनेषु मध्ये एवैव मृषोद्यता मिथ्यावादित्वरूपः कलङ्को दोषः कुतः कस्माद्धेतोः शङ्कितः सम्भावितः तत्कारणं कथयेति सत्यवादित्वाद्भैम्याः परिचारिकाया ममालीकवादित्वं सम्भावयि- तुमप्यशक्यमित्यर्थः । भैमी रात्रौ वृत्तमपि सुरतमस्मदग्रे अवृत्तमिति कथयति परिजनश्च प्रभुसदृशो युक्तः । तथा चालीकभाषणं मम गुण एव न तु कलङ्क इत्यर्थः । परिजनस्योक्तावित्ति वा पाठः ॥ ११६ ॥

कर्कशोदर्कं इति यन्मन्वादिभिरुक्तं तन्मत्य । यस्माच्छपथभ्रान्त्या स- म्मत्येव त्वया मयि कलङ्क आरोपित इत्यर्थ इति वा ॥ ११८ ॥

असम्भोगकथारम्भैर्वञ्चयेथे कथं नु मां । हन्त

सेयमनर्हन्ती यत्तु विप्रलभे युवां ॥ ११९ ॥

इदानीं आर्जवं हि कुटिलेषु न नीतिरिति न्यायाद्लीकभाषणेऽपि अदोषत्वमाह । असम्भोगेति । हे भैमीनलौ युवां भैमी मह्यं स्पर्शम- पि न ददाति नलेनाह कदाचिदपि न स्पृष्टा ऽपि इत्यसम्भोगकथार- म्भैरन्योन्यसम्भोगाभावविषयवृत्तान्तारम्भैः मिथ्याऽनुभूतसुरतभरनिह्नवै- कृत्य मां कथं नु कथमिव वञ्चयेथे प्रतारयथ । यत्तु पुनः अहं क- र्मीभूतौ युवां विप्रलभे प्रतारयामि सेयमहं अनर्हन्ती अयोग्या अ- नुचितकारिणी हन्त कष्टं चित्रं वेति काकु । युवाभ्यामहं वञ्चनीया मया तु भवन्तौ न वञ्चनीयौ का वा रीतिरियं वञ्चनकरणसाम्यात् स- मदोषगुणौ युवामहं चेति भावः । अर्हन्तीति अर्ह प्रशंसायामिति धा- तोः शत्रन्तान्ङीप नुम युवां कर्तस्वम चाकृत्या योज्य ॥ ११९ ॥

- कर्णे कर्णे ततः सख्यौ रहस्याचख्यतुर्मिथः । मु

हुर्विस्मयमाने च स्मयमाने च ते बहु ॥ १२० ॥

कर्ण इति । ततः स्ववञ्चकत्वदोषपरिहारानन्तरं भैमीसुरतप्रागल्भ्ये मुहुर्विस्मयमाने आश्चर्यं कुर्वाणे च बहु नितरां स्मयमाने हसन्त्यौ च ते कलाशशीलरूपे सख्यौ भैम्या वा सहचर्यौ मिथोऽन्योन्यस्य क- र्णे कर्णे स्वस्वश्रुतं रहस्यं आचख्यतुः । चावन्योन्यसमुच्चये । अन्या- न्यकर्णार्पणया वीप्सायां द्विरुक्तिः ॥ १२० ॥

अथाख्यायि कलासख्या कुप्य मे दमयन्ति मा ।

कर्णाद्द्वितीयतोऽप्यस्याः सद्यः प्राप्यैव यद्ग्रहम् ॥ १२१ ॥

अथेति । अथान्योन्यकर्णे तत्तद्रहस्यकथनानन्तरं कलाया सख्या क- लयैव सख्या या भैमी आख्यायि इति उक्ता हे दमयन्ति त्वं मे मह्यं मा कुप्य अहं यद्ग्रहम् तदस्याः द्वितीयतोऽपि कर्णात् सद्यः प्राप्यैवाग्रहम्,

न्यस्या एकेनैव कर्णेन श्रुतं न तु द्वितीयेनेति लौकिकादाभाणकात् प-
रिहासोऽपि । एवमिति पाठे एवम्प्रकारेण सङ्काप्येति । कुप्य मे क्रुध
द्रुहेति (पा० १।४।३७) सम्प्रदानत्वं मा निरनुबन्धकं अत्र च लङ् १२१

प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवम् । वयस्य
योरिदं नस्तन्मा सखीषु विश्वसीः ॥१२२ ॥

प्रिय इति । अथ मदुक्त्यनन्तरं प्रियः प्रियां आचष्टे इति कथं ।
इति किं हे भैमि त्वं वयस्ययोः कपटपाटवमिदं अधुनयानुयैं दृष्टमनु
भूतं यत तस्मात्सखीष्वेव मा विश्वसीः किन्तु मय्येव कदाचिद्विश्वसिहि
सखीषु नैव विश्वसीः किन्तु मय्येवेति वा । यद्वा मा विश्वसीरेव १२२

आलापि कलयाऽपीयं पतिर्नालपति क्वचित् ।
वयस्येऽसौ रहस्यं तदस्यां विश्रम्भमीदृशि॥१२३

आलापीति । कलयाऽपि इयं भैमी मधुरकाकुत्या आलापि इत्यु-
क्ता । इति किं । हे वयस्ये असौ तव पतिः क्वचिदपि देशे काले वा
त्वद्रहस्यं नालपति किन्तु गोपायत्येव । तस्मादीदृश्यां एतस्यां दृशे-
ऽन्यस्मिन्नपि सख्यां साध्व्यां विस्रम्भं विश्वसनीयं त्वया किं पुनरेतस्मि-
न्निति विरुद्धलक्षणया अयं सखी साऽपि त्वद्रहस्यं प्रकटयत्येव, अतश्च-
यामीऽयमिन्यस्मिन्नेतत्तुल्येऽन्यस्मिन्नपि नैव विश्वसीरिति । नालपति
अपित्यालपति विस्रम्भणमपि तु नेति काकुर्वा । आलपीत्यपि क्वचि-
त्पाठः ॥ १२३ ॥

इति व्युत्तिष्ठमानायां तस्यामूचे नलः प्रियाम् ।
भण भैमि बहिः कर्तुं दुर्विनीते गृहादमू॥१२४॥

इतीति । नलस्तस्यां कलायां इति उक्तप्रकारेण प्रतिपादयन्त्यां व्यु-
त्तिष्ठमानायां प्रतिरोधकारिण्यां सत्यां प्रियां प्रति इत्यूचे । इति किं ।
हे भैमि अमू दुर्विनीते दुष्टे नितरां विश्वासघातिन्यौ अमू सख्यौ गृ-
हाद्बहिः कर्तुं निष्कासयामि भण आज्ञापय । अनेन नलस्य सम्भोगे-
च्छा व्यज्यते मदर्थमेव कर्तुं इति लट् । व्युत्थानं प्रतिरोधे च विरा-

चाचरणेऽपि चेत्यभिधानादूर्ध्वकर्मत्वाभावात् नदोऽनूर्ध्वकर्मणीति (पा० १ । ३ । २४) तङ् । व्युत्क्षिप्यमानाया विरोधाचरणे कृतोद्यमाया वा ॥ १२४ ॥

शिर:कम्पानुमत्याऽथ सुदत्या प्रीणितः प्रियः ।
चुलुकं तुच्छमुत्क्षिप्य सख्योः सलिलमाक्षिपत् ॥१२५॥

शिर इति । अथाक्तविषयकथानन्तरं सुदत्या भैम्या शिरःकम्पेन या मर्शो निष्कामनस्यानुमतिस्तया हत्वा प्रीणितो जनितानन्दः प्रियः सख्योर्विषये तुच्छं रिक्तं चुलुकमुत्क्षिप्य उद्यम्य वरुणवरेण प्राप्तं सलिलं तन्निष्कासनार्थं आक्षिपत् । सख्यादुक्त्वाच्छिरःकम्पेन भैम्या तद्बहिष्करणमङ्गीकृतं, नलस्तु स्वाशयानुसारेण भैम्यपि सम्भोगेच्छयैवेते बहिष्कर्तुमिच्छति अतस्सम्भोगोऽनुमतोऽस्या इति सन्तुष्टोऽत एव तन्निर्गमनार्थं जलं क्षिप्तवानिति भावः । शिरःकम्प एवानुमतिर्यस्यास्तया सुदत्येति वा ॥ १२५ ॥

तच्चित्रदत्तचित्ताभ्यामुच्चैः मिथ्यसेचनं । ताभ्या-
मलम्भि दूरेऽपि नलेच्छापूरितैर्जलैः ॥ १२६ ॥

तदिति । तुच्छचुलुकमोचनमात्रेण जलसेचनात् तज्जलेन चित्रे आश्चर्ये दत्तं स्थापितं चित्तं याभ्यां ताभ्यां दूरेऽपि स्थिताभ्यां सखीभ्यां तुच्छं चुलुकं नलेच्छामात्रेण पूरयन्ति सर्वमाप्लावयन्ति तच्छीलैः परिपूर्णतरैर्जलैः कृत्वा उच्चैर्नितरां सिचयस्य वस्त्रस्य सेचनमार्द्रीभावोऽलम्भि प्रापि ॥ १२६ ॥

वरेण वरुणस्यायं सुलभैरम्भसां भरैः । एतयो-
स्तिमितीचक्रे हृदयं विस्मयैरपि ॥ १२७ ॥

वरेणेति । अथ नलो वरुणवरेण सुलभैरनायासलभ्यैरम्भसां भरैः पूरैः तथाऽऽकस्मिकदर्शनप्रभवैर्विस्मयैराश्चर्यैरपि कृत्वा एतयोः सख्योः क्रमेण हृदयं उरःस्थलमन्तरञ्च स्तिमितीचक्रे पूर्वमनार्द्रमप्यार्द्रीचक्रे तथाऽनिश्चलमपि निश्चलीचक्रे वारिपूरसेकेनातितरां आश्चर्यं जातमित्यर्थः । तिमस्तिम आर्द्रीभावे ॥ १२७ ॥

तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः । ह्रेपे-
णादर्शयत् पश्य तन्विमे तन्वि मे पुरः ॥१२८॥
क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते ।
सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने ॥१२९॥

तेनेति ॥ क्लिन्नीकृत्येति ॥ युग्मं ॥ ततो जलसेकानन्तरं अयं नलः तेन तावता जलसेकेनापि गृहाद्बहिरनपसर्पन्त्यौ अनिर्गच्छन्त्यौ ते सख्यौ कुचदर्शनाज्जातेन ह्रेपेण दमयन्तीम् अदर्शयत् । ह्रेपेणेति पाठे कुचदर्शनोपलक्षकपाणिचेष्टाभिनयेन, ननु तन्वि त्वं मे पुर इमे सख्यौ पश्य । किम्भूते सख्यौ । अम्भसा कर्तृभूतेन करणेन कर्तृभूतेन मया वा वसनं क्लिन्नीकृत्यार्द्रीकृत्य जैनप्रव्रजितीकृते दिगम्बरपरिव्राजिकात्वं प्रापिते । यत सक्षौमभावे दुकूलसाहित्ये सत्यपि निर्विघ्नमन्तरावरहितं स्तनदर्शनं ययोस्ते सूक्ष्मतरे वस्त्रे जलसिक्ते निरन्तरमङ्गदर्शनं भवति तथा च नग्नप्राये एते सख्यौ समाग्रे विलोकयेति तयोर्लज्जा-त्यागद्वारा बहिर्निर्गमनार्थं कुचदर्शनोपलक्षकपाणिचेष्टाभिनयेनादर्शयदित्यर्थः । दृशेर्बुध्यर्थत्वात् दमयन्तीमित्यत्र, अणौ कर्तुर्णौ कर्मत्वं । जैनानां दिगम्बराणां प्रव्रजिता परिव्राजिका अतादृश्यौ तादृश्यौ कृते, अभूततद्भावे ( पा० ५ । ४ । ५० ) इति च्वि ॥ १२८ ॥ १२९ ॥

अम्बुनः शम्बरत्वेन मायैवाविरभूदियं । तत्प-
टावृतमप्यङ्गमनयोः कथयत्यदः ॥ १३० ॥

अम्बुन इति । अदः जलं कर्तृ, अनयोः सख्योः पटावृतमप्यङ्गं स्तनजघनादिकमपि यत्कथयति प्रकटयति सेयं अम्बुनः नीरक्षीराम्बुशम्बरमित्यभिधानाच्छम्बरसंज्ञत्वेन च शम्बराख्यदैत्यभावेन मायै-वाविरभूत् प्रकटाऽजनि । शाम्बरी हि माया अविद्यमानमपि वस्तु प्रकाशयति । अत्रापि जलसेके जलदर्शनात् अमग्ने नग्नीकरणाच्चैव शाम्बरी मायैव प्रकटाऽभूदित्युत्प्रेक्षेण नलवचः कविवचो वा । एव-मुत्तरश्लोकेऽपि ज्ञेयम् ॥ १३० ॥

वाससाऽम्बरत्वेन दृश्यतेयमुपानमत् । चारु
हारमणिश्रेणितारश्रीक्षणलक्षणा ॥ १३१ ॥

अत्रैव पक्षान्तरमाह । वासस इति । या अथवा स्तनाद्यङ्गानां द्वयं दृश्यता प्रत्यक्षगोचरता वाससोऽम्बरत्वेनातिसूक्ष्मवस्त्रविशेषत्वेनाथ-चाम्बरशब्दवाच्यत्वमाद्दृश्यादाकाशत्वेनोपानमत समागता जाता । निरावरणमम्बरे स्थितं वस्तु यथा प्रकटं दृश्यते तथैव वस्त्रावृतमपि च दृश्यते तत्र तत्राम्बरत्वमेव हेतुरित्यर्थः । किम्भूता । चारव स्थूलतरनिर्मलमनोहरा मणयः मौक्तिकानि तेषां श्रेणयः पङ्क्तय एव ताराणि नक्षत्राणि तेषां वीक्षणमेव लक्षणं स्वरूपं चिह्नं वा यस्याः सा । अम्बरे हि नक्षत्रदर्शनं भवति तदेव च तस्य लक्षणं तद्वदत्रापि वस्त्रावृतत्वेऽपि जालकेऽकाहारमुक्ताफलानि स्फुटानि दृश्यन्ते तस्मादम्बरत्वमेव हेतुर्युक्त इत्यर्थः । ताराशब्दस्य नक्षत्रवाचित्वं बहुधा दर्शितं ॥ १३१ ॥

ते निरीक्ष्य निजावस्थां ह्रीणे निर्ययतुस्ततः ।
तयोश्चीत्कारमात्रत्रः सख्यो निश्चक्रमुः क्रमात् १३२

ते इति । ते सख्यौ नितरां सतसंकाद्वोप्यगङ्गदर्शनरूपां निजावस्थां निरीक्ष्य ह्रीणे लज्जिते सत्यौ ततस्तद्वासगृहात् निर्ययतुः, बहिर्निर्जग्मतुः । अन्या अपि सख्यः सख्यः तयोर्जनाद्वीकृतवस्त्रयोः सख्योश्चीत्कारात् दर्शनकौतुकातिशयात् तयोः पश्चात् क्रमान्निश्चक्रमुः ॥ १३२ ॥

ता बहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि । उपेक्ष्येते पुनः सख्यौ मर्मज्ञे नाधुनाप्यमू ॥ १३३ ॥

ता इति । ताः सख्यो बहिर्भूय गृहाद्बहिःस्थित्वा वैदर्भीमूचुः हे नीतौ नीतिशास्त्रे अधीतिनि सुतरां कृताभ्यासे भैमि ते त्वया मर्मज्ञे त्वद्रहस्यवेदिन्यावमू सख्यौ अधुनाऽपि पूर्वं यत्कृतं तत् कृतमेव ततः परमपि यावद् दूरं न गमिष्यतस्तावत् पुनर्नोपेक्ष्ये "विरोधयेन सह ज्ञं

नापेक्षेत विरोधिनम् । प्रमादयेदशक्य तु" इत्याद्युशन स्मरणात् मन्त्रयोरेतयोस्त्वया नीतिशास्त्रप्रवाणायापेक्षा नैव कार्या किन्त्वेते पुन प्रमादनीये प्राकारणीये वेत्यथ । मरुंधा ह्यु पेक्षितो विकरोतीति नीतिशास्त्र तस्मादेते व्याकरणीये प्रमादनीये वेत्यथ ॥ १३३ ॥

उच्चैरूचेऽथ तां राजा सखी यमिदमाह व. । श्रुत
मर्म ममैताभ्यां दृष्ट मर्म मया तये ॥ १३४ ॥

उच्चैरिति । अथ राजा तां सखीमुच्चैर्दूरादाकर्णनयोग्य तारस्वर वत्यमाणप्रकारेणोचे । हे सख्य वा युष्माकमिय सखी युष्मानिद वक्ष्यमाणमाह, एताभ्यां मम मर्म रहस्य श्रुतमित्येतावन्मया तु पुनरनया सख्योमर्मे गुह्यमङ्ग दृष्ट श्रुताद्दृष्ट बलवदिति न्यायादेताभ्यामहमेव बलवतीति न काऽपि मे भीतिरिति वक्ष्यमाणाद्भैमीवचनानुवादरूपेण नलोऽवोचदित्यर्थ । राज्ञति पाठे तां प्रति राज्ञा ऊचे इत्यर्थ ॥ १३४ ॥

मद्विरोधितयोर्वाचि न श्रद्धातव्यमेतयो । अ
र्थापिठ्यद्विमे मायामिथ्यासिंहासने विधि १३५

मदिति । हे सख्य यद्यपि मत्कासनाद्यनुमितिद्वारा मया विरोधितयो द्वयोरेतयो वाच्योर्वाचि न श्रद्धातव्य सत्यत्वबुद्धिर्न कार्या विरोधिनो हि प्रायेणासत्यमय वदन्तीत्यर्थः । किञ्च विधिब्रह्मा इमे सख्यौ मायाना कपटाना मिथ्याऽसत्यानाञ्च सिंहासने कपटासत्यमयाधिपत्ये ह्यभ्यषिञ्चन् । योऽनयोर्जनसेका दृश्यते स ब्रह्मकृता मायामिथ्यासिंहासनाभिषेक एवेति भैमी मन्यत इत्यथ । तस्माद्धूर्ताभिरेनयोर्वचनमि न विश्वसनीयमिति भाव ॥ १३५ ॥

धौतेऽपि कीर्त्तिधाराभिस्त्वयेने चारुणि द्विप ।
मृषामषीलवैर्लक्ष्म लेखितु के न शिल्पिन १३६

अनृतवचनमपि न विश्वसनीयमित्येतदेवार्थान्तरन्यासेन समर्थयते । धौतेऽपीति । कीर्तिधाराभि कीर्त्तिपूरै धौते क्षालनात्ते चारुणि मनोज्ञे धवल सर्वविषयेऽपि द्विपपरिते मृषाजल्पा लवै लवै कल्पा लक्ष्म क-

नहु किमितु कि जना शिल्पिनश्चतुरा न भवन्ति अपि तु सर्वेऽप्य-
लीकदोषारोपं कुर्वन्त्येवेति मद्विराधितयोर्वचसि न विश्वसनीयमित्य-
र्थः। अन्येऽपि शिल्पिनो जलधाराताडिते स्मरणीये कुड्यादौ नस्या-
दिवर्णकैश्चित्रं लिखन्ति केचिद्द्विष शिल्पिनो वा ॥ १३६ ॥

ते सख्यावाचचक्षाते न किंचिद्ब्रूमहे बहु ।
वक्ष्यावस्तत्परं यस्मै सख्यौ निर्वासिते वयम् ॥ १३७ ॥

ते इति। ततस्ते सख्यौ इति आचचक्षाते ऊचतुः। इति किं। आ-
वां अन्यत्किञ्चित् बह्वधिकं न ब्रूमहे किन्तु यस्मै प्रयोजनाय सख्यौ
वयं युवाभ्यां गृहाद्बहिर्निर्वासिता निष्कासितास्तदेव परं केवलमावां
वक्ष्यावो वदिष्यावः सखीपार्श्वे सुरतार्थं वयं निष्कासिता इति कथ-
यिष्यावो न चान्यत्किञ्चिदिति ॥ १३७ ॥

स्थापत्यैनं स्म निघ्नस्ते वर्षीयस्त्वचलत्करैः ।
कृतामपि तथावाचि करकम्पेन वारणाम् ॥ १३८ ॥

स्थापत्यैरिति। ते सख्यौ तथावाचि सुरतार्थं वयं निष्कासिता इति
वचनं विषये स्थापत्यैः सौविदल्लैः करकम्पेन कृतामपि वारणां नि-
षेधं न विघ्नं स्म जानीते स्म यस्माद्वर्षीयस्त्वेन वार्द्धकेन चलन्तः करा
येषां तैः। वार्द्धकातिशयजनितदोषवशेन स्वाभाविककरकम्पनत्वात्त्वया
कृतमपि निषेधं न विघ्नं स्मेत्यर्थः। सौविदल्लाः कञ्चुकिनः स्थाप-
त्याः सौविदाः स्युः, इत्यमरः। अतिशयेन वृद्धो वर्षीयान्, इयसुनि
प्रियस्थिरेति (पा० ६।४।१५७) वर्षादेशः ॥ १३८ ॥

अपयातमितो धृष्टे धिग्ग्रामश्लीलशीलते । इ-
त्युक्ते चोक्तवन्तश्च व्यतिद्राते स्म ते भिया ॥ १३९ ॥

अपेति। हे धृष्टे अतिनिर्लज्जे सख्यौ युवामितो गृहात् अपयातं
निर्गच्छतं यस्माद्वां युवयोरश्लीलशीलता ग्राम्यभाषणसंभाषत्वं धिक्
धिक् इति तैः स्थापत्यैरुक्ते गदिते सति ते सख्यौ तेभ्यो मारणभिया
व्यतिद्राते स्म पलायाञ्चक्रतुः, एवमुक्तवन्तस्ते कञ्चुकिनश्च पलायां-
चक्रुः। तयोः पलायमानयोः पश्चाद्गच्छन्ति स्म तयोर्भीगेच्छुता ज्ञात्वा

तदा मलिनं जातं चित्रमेतदित्यर्थः । अथ च पत्रयोर्मूलपुटयोः संध्ये स पाकः स नास्ति यस्य तादृशमपि न भवति यत्तदपत्रपाकं कृतपुटपाकमिति यावत्, एवम्भूतं सुवर्णमेव तव मुखमहो चित्रं मुखस्य सुवर्णसमसाम्यकारीत्यर्थः, यतः सलज्जमतः एव नितरां तापस्य क्रोधाग्नेरर्जने सम्पादने सत्यपि नर्मसखीजल्पनापवादिना सखीकोपे समुत्पादिते सत्यपि, इतः मुखात् सकाशात् दुर्वर्णानां परुषाक्षराणां निर्गमो न स्यात् कोपे सत्यपि लज्जाबाहुल्यात् सखीः प्रत्युत्तरमपि परुषं न भाषसे एतदपि चित्रमित्यर्थः । अथ च कृतपुटपाकसुवर्णस्वरूपं यतोऽतएव पुटरहितं नितरामग्निदाहे सत्यप्यस्मात् सुवर्णाद्दुर्वर्णस्य रजतस्य निर्गमो न स्यात् पुटपाकादेव मिश्रितरजतनिर्गमे सति निर्दुष्टस्य शुद्धरजतस्य पश्चात् सुतरामग्निदाहे कृतेऽपि दुष्टांशस्य पूर्वमेव गतत्वात्तस्माद्रजतनिर्गमो न भवत्येव । तथा सति तापार्जनेऽप्यस्मान्मुखादपि दुर्वर्णनिर्गमो न स्यात् सपत्रपाकजातरूपं ते मुखमित्यर्थः । अथवा वर्णसाम्येन सुवर्णसदृशं ते मुखं यद्यपि तथापि नितरामग्निदाहे तस्य दुर्वर्णं निर्गच्छत्येव । अतितापार्जनेऽपि ते मुखाद् दुर्वर्णनिर्गमो नास्त्येवेत्याश्चर्यमित्यर्थः । अत्युत्तमषोडशवर्णसुवर्णं वर्णोपरूपभाषिणी वासीति भावः । अपत्रपाक पक्षे न कपीति (पा०७।४।१४) ह्रस्वनिषेधः ॥ १४१ ॥

तामथैष हृदि न्यस्य ददौ तल्पतले तनुं । नि
मिष्य च तदीयाङ्गसौकुमार्य्यमसिस्वदत् ॥ १४२॥

तामिति । अथैष नलस्तां हृदि न्यस्य तल्पतले शय्यायां तनुं शरीरं ददौ पपात, शय्यां पस्पर्शेत्यर्थः । तदालिङ्गनसुखवशादेव निमिष्य नेत्रे निमील्य तदीयाङ्गसौकुमार्य्यमसिस्वदत्, अनुबभूव च ॥ १४२ ॥

न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च ।
स पाणेः सफलं चक्रे तत्करग्रहणश्रमं ॥ १४३॥

न्यस्येति । स तस्याः कुचद्वन्द्वे स्वकरं न्यस्य निक्षिप्य तथा नीवो-

तदिति । तस्याः कुचे नखमारोप्य निखाय स्वयमेव चमत्कृत्य स्वं नखं सङ्कोचाभिनयपूर्वं शङ्कमानो नखक्षतपीडाविशेषादेव तया किञ्चित्कोपेनेक्षितः, हे भैमि एष नखस्ते हृदिस्थं मां किं नाभिनद्यपि तु मामपि व्यदारयदेव । अन्यथा कथं त्वदीये हृदि नखे क्षिप्ते ममाहं चमत्कार इति ॥ १५६ ॥

अहो अनौचिती यन्मे हृदि शुद्धेऽप्यशुद्धवत् । अङ्कः
खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥ १५७ ॥

अहो इति । हे भैमि तीक्ष्णमुखैर्नखैरपि सकल्पितस्थिताग्रैर्मम नखैः शुद्धे निष्कपटेऽपि हृदि अशुद्धं रुधिरं वर्तते कल्पते यत्र तद्यथा तथाऽङ्कोऽपराधादिचिह्नमकल्पि आकारीति यत्सा इयं महती अनौचिती अहो चित्रम् । कैरिव । दोषारोपरूपपरुषभाषणवशात् तीक्ष्णमुखैर्दुर्मुखवदनैः खलैरिव । यथा खलैः शुद्धेऽपि पुरुषे अशुद्धवत् सदोषे पुरुष इव अङ्को दोषारोपः कल्प्यते सा यथाऽनौचिती, नखक्षतेन दृष्टा या त्वं नैव नखानामनौचित्यमकटनव्याजेन प्रमादेनाङ्कमकरोदित्यर्थः । अशुद्धवदिति पक्षे सप्तमीसामर्थ्याद्वतिः ॥ १५७ ॥

यन्नु स्पृशति नितम्बोरु यदालिङ्गति च स्तनौ । भु
ङ्क्ते गुणमयं तन्मे वासः शुभदशोचितम् ॥ १५८ ॥

यदिति । हे भैमि गुणमयं सूक्ष्मं शुक्लतरतन्तुकं ते वासः नितम्बोरु जघनमूरू च यद्यस्मान्नु स्पृशति तथा यस्माच्च ते स्तनौ आलिङ्गति तस्मात् कारणाच्छुभानां रमणीयानां दशानां प्रान्ततन्तूनां यद्योग्यमुचितं तद्भुङ्क्ते तादृशं भोगमनुभवतीत्यर्थः । यत्तदी वा सोविशेषणे वा । अथच यो गुणमयः शौर्यौदार्यादिगुणपरिपूर्णो निर्दोषश्च शुभायां दशायां पूर्वाचरितपुण्यपरिपाकोपनतशुभग्रहयोगानुकूलसमयविशेषस्योचितं भोगं लभते स एव सुन्दरतररमणीयनितम्बोरुचुम्बनं तत्कुचालिङ्गनञ्च लभते नान्य इति स्वनितम्बादिस्पर्शनकारिणो मत्तोऽपि वसनमेव धन्यमिति भावः । नितम्बोरु प्राण्यङ्गत्वादेकवद्भाव इति ॥ १५८ ॥

लीनचीनांशुकं स्वेदि दरालोक्य विलोकयन् ।
तन्नितम्बं स निश्वस्य निनिन्द दिनदीर्घताम् ॥ १४९

लीनेति । साच्चिकस्वेदवशादतिसूक्ष्मत्वात् समच्छायीभूय लीनं सलग्नं चीनाख्यं अंशुकं यत्र, तथा स्वेदि साच्चिकस्वेदयुक्त अत एव च दरालोक्यं ईषद्दृश्यं नितम्बं विलोकयन् स कामोन्मत्तो भूत्वा निश्वस्य दिने सुरतनिषेधान्निराशतया निश्वासमोचनेन दु समभिव्यज्य दिनस्य दीर्घतां कथं वा दिनं शीघ्रं गमिष्यतीत्यादिना निनिन्द । सुरतार्थं दिनावसानमभिललाषेत्यर्थः । कामपरवशत्वात् सम्भोगेच्छुरभूत्, दिवा तन्निषेधाच्च सुरते सहसा न प्रवृत्त इति भावः ॥ १४९ ॥

देशमेव ददंशासौ प्रियादन्तच्छदान्तिकं । चकार
चाधरपानस्य तत्रैवालीकचापलम् ॥ १५० ॥

देशमिति । असौ प्रियादन्तच्छदोऽधरस्तस्यान्तिकं समीपवर्तिनं देशं कपोलचिबुकादिभागमेव पूर्वं दशनैर्ददंश, अनन्तरं तत्रैवाधरसमीपदेश एव अधरोपान्तस्यापि मुखे एवाधरपानस्यालीकमेव चापलं पुनरोष्ठपानेन बुक्कारादित्वरां चकार । चापलस्यालीकत्वञ्च तादृगभिनयमात्रकरणात् ताच्चिकचापलकरणेऽपि अधरस्यव्यथाभावात् क्षेम । सायुभक्तातिशयात् यावता तथाधरं चुम्बितुं प्राप्यते तावन्तमपि विलम्बं सोढुमशक्तः सत्वरमधरं चुम्बेति भ्रान्त्या चाऽधरोपान्तदशनादि चकारेति भाव । अतिविरमोरिव जाति ॥ १५० ॥

न क्षमे चपलापाङ्गि सोढुं स्मरशरव्यथां । तत्प्र
सीद प्रसीदेति स तां प्रीतामकोपयत् ॥ १५१ ॥

नेति । स परिहासादिवशादालिङ्गनादिवशाच्च पूर्वं प्रीतां प्रसन्नामपि तां इत्युक्त्वाऽकोपयत् । इति किं । हे चपलापाङ्गि अहं स्मरशरव्यथां सोढुं न क्षमे अशक्तोऽस्मि यतस्तस्मात् त्वं मम प्रसीद प्रसीद मह्यं सुरतं देहि देहीति दिने रतानुचितत्वात् कोपयोग्यमपि दिनं गमयितुं तामकोपयदित्यर्थः । प्रसादनमपि कोपं विना न सम्भवतीति कोपसम्पादन । स्मरव्यथामिति च पाठ । चपलापाङ्गि अङ्ग-

गात्रेति (पा० ४।१।५४ वा० १) ङीष् ॥ १५१ ॥

नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजं । तत
स्तनतटौ ताभ्यां जघनं घनमीयतुः ॥ १५२ ॥

नेत्रे इति । निषधनाथस्य नेत्रे पूर्वं प्रियाया वदनाम्बुजं ततो-ऽनन्तरं स्तनतटौ, अनन्तरञ्च ताभ्यां स्तनतटाभ्यां सकाशाद् घनं पीवरं जघनं ईयतुः प्रापतुः सुरतौत्सुक्यात् सादरं वदनादिक्रमेणालोकयदिति भावः । अम्बुजतटजघनपदैः सादरालोकनादिकं सूचितं । घनमद् सादरालोकनद्योतनार्थं । क्रियाविशेषणत्वेन सर्वत्र वा योज्य ॥ १५२ ॥

इत्यधीरतया तस्य हठवृत्तिविशङ्किनी । झटि
त्युत्थाय सोत्कण्ठमसावन्वसरत् सखीः ॥ १५३ ॥

इतीति । इत्येव वदनादिविलोकनपूर्वं जघने चिरकालं सादरदृष्टिस्थापनद्वारा धीरतया रसोत्सुकतयाऽस्य हठवृत्तौ बलात् सुरतारम्भे विशङ्किनी विशेषत शङ्कमाना सम्भावयन्ती असौ झटिति सद्य उत्थाय चिरनिर्गतसखीगवेषणाय सोत्कण्ठं यथा तथा कलाद्याः सखीरन्वसरत् । सख्यनुसरणोत्कण्ठाव्याजेन प्रियसुरतारम्भं पर्यहार्षीदिति भावः । अतितरां रसपरवशता दोषाय रसत्यागश्च नायकस्य नीरसतामेवापादयतीति तदुभयपरिजिहीर्षया रसान्तराङ्कुरेण सम्भोगशृङ्गारपरां कामशास्त्रपाठयितुं श्रीहर्षेण भैमीनलयोर्भिन्नदेशावस्थापित्वकथनोपक्रम कृत ॥ १५३ ॥

व्यधारीव यथाशक्ति स्पन्दमन्दं वितन्वता ।
भैमीकुचनितम्बेन नलसम्भोगलोभिना ॥ १५४ ॥

व्यधारीवेति । नलसम्भोगलोभिना भैमीकुचनितम्बेन मन्दं शनैः स्पन्दगमनं वितन्वता स्वीयपीवरतातिशयेन शीघ्रं गन्तुमददता मना भैमीशक्तिमनतिक्रम्य शीघ्रगमनप्रतिबन्धकत्वरूपनिजशक्त्यनुसारेणैता रतिगृहं इ इतस्त्वया न गन्तव्यमिति व्यधारीव व्यषेधीव । निर्गताऽपि

नलं प्रति परावर्तितुमपि न शेके यत शालीनया5धृष्टया5तिसलज्ज या अस्मदुद्देशो नागता5पि सुरतार्थं प्रियं प्रति पुनर्गतेति सख्यो वदिष्यन्ति तया च लज्जा स्यादिति भिया पुनर्न निवृत्तेत्यर्थः । नलविषयैव या लज्जा । क्षणमात्र मार्गमध्ये चिन्तावशा तूष्णीं स्थितेति भावः । शालीनयेति गत्यर्थकर्मणीति (पा २।३।१२) चतुर्थी । निवृत्तिमत्यपादानत्वात् पञ्चमी वा ॥ १५७ ॥

अकथयदथ वन्दिसुन्दरी द्वाः सविधमुपेत्य नलाय मध्यमह्नः । जय नृप दिनयौवनातपान्तः पल्वलजलानि पिपासति द्विरेफः ॥ १५८ ॥

अकथयदिति । अथ परिहासपूर्वं भैमीप्रतिनिर्गमनानन्तरं पुरुषस्यान्तःप्रवेशमशक्यत्वादवसरज्ञापकवचनस्यावश्यश्रावणीयत्वाद्वन्दिसुन्दरी विदग्धमागधवनिता द्वाः सविधं द्वारदेशसमीपमुपेत्य इति अह्नो मध्यं मध्याह्नमकथयत् व्यज्ञापयदित्यर्थः । इति किं । हे नृप जय स र्वोत्कर्षेण वर्तस्व दिनस्य यौवनं मध्याह्नस्तत्सम्बन्धिनातपेन तद्भा आतपसन्तापेन कृतसन्तापवती भ्रमरः पल्वलजलानि माध्याह्निकस्नानजलानि पिपासति पातुमिच्छति । माध्याह्निकस्नानावसरो वर्तत इत्यसूचयदित्यर्थः । मध्याह्नसमये हि जलं पातुमिच्छति । अकथयदिति लङ् । अपकथयदिति पाठः यस्तावद् । नलाय क्रियया यमभिप्रैतीति (वा०१।४।३२।वा०१) सम्प्रदानत्वं ॥ १५८ ॥

उपहृतमधिगङ्गमम्बुकम्बुच्छवि तव याऽकुटिकेशपाशसङ्गात् । अनुजनिमनन्तरं तरङ्गा समसमानत्वसमभ्रमावशीनां ॥ १५९ ॥

उपेति । अधिगङ्गं गङ्गामधिकृत्य वर्तमानमुपहृतं भागीरथ्याः सकाशादानीतं कम्बुच्छवि शङ्खधवलमम्बु तव कुटिलतरकुटिलकेशपाशस्य पङ्क्तिभिः कुटिलभावैः सह सङ्गात् सम्बन्धात् अनन्तरं सम्बन्धे गाते तरङ्गैः समा5समा5तुल्यरूपा विषमा वा आतिकुट्या वा शमनस्व

सा यमजगिनी यमुना तया सह मिश्रभावेन मिलितत्वेन सङ्गमेन या शोभा तां गङ्गायमुनासम्भूतप्रयागकामनीकमनुभवितु मातृ वाञ्छति। शुभ्रसरस्य जलस्य कृष्णतरकणवाशमङ्क मति प्रयागजलशोभा भविष्यतीति गङ्गाजलेच्छां पूरय माध्याह्निकस्नानं कुर्वित भाव । अधिगङ्ग विभक्त्यर्थेऽव्ययीभाव. ॥ १५९ ॥

तपति जगत एव मूर्ध्नि भूत्वा रविरधुना त्वमिवाङ्गुतप्रतापः। पुरमथनमुपास्य पश्य पुण्यैरधिगतमेनमनन्तरं त्वदीये. ॥ १६० ॥

तपतीति । हे राजन्, अद्भुतोऽद्भुत प्रकृष्टस्तापः करोष्य यस्य स रविरधुना मध्याह्नसमये जगत एव विश्वस्यापि मूर्ध्नि भूत्वा तपति । क इव । त्वमिव । यथा अद्भुत प्रताप क त्रतेजो यस्य स त्व विश्वस्य मूर्ध्नि चरणमाराप्य तपसि राजलक्ष्म्या दीप्यसे तथेत्यर्थ । मध्याह्नसमया निश्चिता वर्तत इत्यर्थ. । अत अत्र पुरमथनं हरमुपास्याराध्यायाः विजनैरिति शेष । पुण्यैस्त्वदीये. पुण्यैर्दैवपूजानन्तर त्वमेन सूर्यमधरितं मस्तकोपरिभागाच्च्यावित निम्नगगनभागे वर्तमानमेन सूर्य्यं पश्य । देवपूजानन्तर हि सूर्य्याय नमस्क्रियत इत्याचारा सूर्यमप्यपराह्ले सूर्य्यं नमस्कुर्विति भाव. । अधुना तु त्वमत्र य-स्यूजाजनितपुण्यैस्त्वया जिताऽधागतो भविष्यतीत्यर्थः ॥ १६० ॥

स्नानं हरमादरान्निव हरध्यानार्चनादिक्षणस्यासक्तावपि भूपतिः प्रियतमाश्लिष्टः सदा लमः। पश्चाद्वारदिशि प्रति प्रतिमुहुर्द्वागनिर्गतप्रेयसीस्याशङ्कितधिया दिशन् दृशमसौ नर्गन्तुमुत्तस्थिवान् ॥ १६१ ॥

स्नानमिति । असौ भूपति. स्नानाद्यर्थं बहिर्निर्गन्तुं अभ्यायासकाशादुत्थितवान् । किम्भूतः । द्राक् झटिति बहिर्निर्गतया. प्रेयस्या भैम्याः प्रत्यागतिधिया परावृत्यागमनस्य बुध्या पुनरप्यागमिष्यति

किमिति सम्भावनया तद्विलोकनार्थं पत्तद्वारदेशात् पार्श्वद्वारप्रदेशं प्रति लक्षीकृत्य प्रतिमुहुर्मुहुर्मुहुर्दृशं दिशन् ददानः, तथा प्रियतमाया वि- च्छेदो वियोगस्तज्जन्येन खेदेन दुःखेनालमत्यर्थमपि तथा हरध्यानार्चना- दे क्षणमपि मध्याह्नस्यासत्तौ अतिनैकट्ये सत्यामपि हठ यथा स्यादेव बलात्कारेण गमनमभ्यानन्दमाहूयमानमिव परावर्तयन्निव अघनादिरेव क्षण- ऽहरमयस्तदामत्याऽपीति वा विरहखेदायासे सत्यपि नित्याह्निककाल- लोपभिया शिवभक्त्या च सानन्दवशाद्बहिर्निर्गत इत्यर्थः । श्लोकचतुष्ट- येनोत्तरसर्गसङ्गतिः सूचिता इति ज्ञेयम् । प्रतिमुहुरित्यर्थे प्रतेर्मुहु शब्दे- न सह सुप्सुपेति (पा०२।१।४) समासः मुहुर्मुहुरित्यर्थः ॥ १६१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री-
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
अन्वक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महाका-
व्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्व-
लः ॥ १६२ ॥

समाप्तो विंशः सर्गः ॥

श्रीहर्षमिति । पूर्वार्द्धं पूर्ववत् ॥ अन्यैः श्रीहर्षव्यतिरिक्तैः क- विभिरक्षुण्णाः रसस्य शृङ्गारादेः प्रमेयस्य समासासक्त्युत्प्रेक्षादेश्च भणिति- गुम्फना यत्र तादृशोऽपूर्वरसादिमति महाकाव्ये ऽयं सर्गो विंशतेः पूरणः व्यगलत् समाप्तिमित । अन्वक्षुण्णेति । भाषितपुंस्कः विंश तस्य पू- रणे डडिति (पा०५।२।४८) डट ॥ १६३ ॥

इति श्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे विंशः सर्गः ॥

द्रागुपाहियत तस्य नृपैस्तद्दृष्टिदानबहुमानकृतार्थैः । स्वस्वदेश्यमथ रत्नमपूर्वं यत्नकल्पितगुणाधिकचित्रं ॥ ३ ॥

द्रागिति । अथ प्रणामानन्तरं तेन कृत दृष्टिदान नेत्रनिरीक्षण त-द्रूपेण बहुमानेन कृतार्थैः सफलश्रमैर्नृपैः देशे भव देश्य स्वस्वदेश्य स्वोपस्वोपदेशभव तथान्यत्र याऽपूर्वं दुर्लभ अत्युत्तम, तथा यत्नेन सु-द्विपूर्व शिलायत्नेन कल्पितैरारोपितैः सत्वोज्ज्वलत्वादिरमणीयकत्वादि गुणविशेषैरधिक अतितरां चित्रमाश्चर्यरूप सद्भिराहितैः गुणैरतिर रत्नाश्चर्यकारिमणिमुक्ताकरितुरगादिरत्न वस्तु तस्य द्राक् शीघ्र प्रणामानन्तरमव्यहितमेवोपाहियत उपढौकितं । तत्र उपढौकते रत्नजाते दृ-ष्टिदानमेव बहुमान इति वा । केनेदमिदमानीतमित्यादरप्रश्नपूर्वं तेषु दृष्टिदानमेवेति वा यत्नेति पाठे यत् कल्पितगुणाधिकचित्र न भवति किन्तु स्वाभाविकगुणाधिकचित्रमेतद्रत्नमिति सम्बन्ध । देश्य भवार्थे दिगादित्वाद्यत् दिश्यमिति पाठेऽपि, रत्नजातविशेषणम, एवमुत्तरश्लोकेऽपि ॥ ३ ॥

अङ्गुलीचलनलोचनभङ्गिभ्रूतरङ्गविनिवेदितदानं । रत्नमन्यनृपढौकितमन्ये तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥

अङ्गुलीति । अन्ये चिरकालसेविनस्तदानीमेवागता वा नृपा अन्य नृपैर्ढौकित उपढौकितं तत्पूर्वोक्तं मणिमुक्तादिरत्नजातमेव तस्य नलस्य प्रसाद पारितोषिक दान अलभन्त । किम्भूत । अङ्गुलीचलनेन लोच-नभङ्ग्या प्रसादसूचकनेत्रवीक्षणविशेषेण भ्रूतरङ्गेण च एतस्मै एतद्दे-हीति सेवकान् प्रति एतत् त्वं गृहाणैतत् त्वं गृहाणेति राज्ञ प्रत्येक वा विशेषेण निवेदित दान यस्य । अन्यैरानीतमन्येभ्यो दत्तवान् न तु कोषागारे निवेशितवानित्यनेनौदार्यातिशयश्चातुर्यं च सूच्यते । चतु-रो हि तदीयमेव तस्मै न ददाति । अङ्गुल्यादिचालनेन आदानादिवे दनमौद्धत्यजाति. ॥ ४ ॥

तानसौ कुशलसूनृतसेकैस्तर्पितानथ पितेव वि-
सृज्य । अस्त्रशस्त्रखुरलीषु विनिन्ये शैष्यकोपन-
मितानमितौजाः ॥ ५ ॥

तानिति । अथ नूतनागतराजस्वीकृतोपदानानन्तरं चिरागतराजभ्यो वितरणानन्तरं असौ अमितौजा अतुल्यपराक्रमो नलः नूतनागतान् राज्ञः कुशलसूनृतसेकैः कुशलप्रश्नसम्बन्धिसत्यप्रियवचनामृतसेचनैः जयतां राष्ट्रे देहे च कुशलं भवतां कार्यं करिष्यामीत्येवंरूपैः कृत्वा तर्पितान् प्रीणितान् सबहुमानं स्वशिबिरं विसृज्य शैष्यकेण शिष्यभावेन प्रयोजकेनोपनमितान् समीपमागतान् अस्त्रादिशिक्षार्थं समीपमागतानन्यान्नृपान् अस्त्राण्याग्नेयादीनि शस्त्राणि बाणादीनि तेषां खुरलीषु हस्तचरणादिसंस्थानचातुरीविशेषेषु विनिन्ये तद्विषयकौशलमशिक्षयदित्यर्थः । क इव, पितेव । शैष्यकेति भावे योपधाद्वुञ् । शिष्यकेति च पाठः ॥ ५ ॥

मर्त्यदुःप्रचरमस्त्रविचारं चारु शिष्यजनतामनुशि-
ष्य । स्वेदबिन्दुकितगाधिरधीरं स व्यसन्नमवदा-
प्लवनेच्छुः ॥ ६ ॥

मर्त्येति । स नल आप्लवनेच्छुः जलावगाहनाय साभिलाषोऽभवत् । किम्भूतः । मर्त्येषु दुःप्रचरमविद्यमानप्रसरं मर्त्यैः दुःप्रचर्य्यते इति दुःप्रचरं मनुजातिरिक्तैर्मर्त्यैरज्ञाताशेषविशेषं अस्त्राणां आग्नेयाद्यस्त्राणां विचारं मोक्षोपसंहारोपायप्रकारविशेषं चारुः प्रौढप्रतिभः शिष्यजनस्तत्समूहं चारुसम्यक् अनुशिष्य शिक्षयित्वा स्थितोऽनन्तरं श्रमवशाज्जाता ये स्वेदबिन्दुकास्ते सञ्जाता यस्य तादृशो गोधिः ललाटं यस्य अत एव धीरं दीर्घं न धीरमल्पं श्रमन् । बिन्दुकेत्यत्राल्पार्थे कन् । तारकादित्वादितच् । ललाटमलिकं गोधिरित्यमरः ॥ ६ ॥

यक्षकर्दममृदून्मृदिताङ्गं प्राक्तु रङ्गमर्दमीलितमौलिं ।
गन्धशालिभिरनुबन्धितभृङ्गैरङ्गना सिषिचुरञ्जकुचास्तं ७

यदेमि । उच्चकुचा अङ्गनाः ते बहुलपरिमलेनानुयन्धिता मिलन्तो मृज्ञा यथु तैलगन्धवारिभि कर्पूरादिवासितजले सिषिचु अभ्यङ्गस्नानम कारयन्नित्यर्थ । किम्भूत । प्राक् पूर्वं कर्पूरागरुकस्तूरीचन्दनकङ्कोलचूर्णरूपया यक्षकर्दमेन सुगन्धिद्रव्येण कृत्वा मृदु यथा तथा शनै उन्मृदित अङ्ग यस्य तथा पश्चात् कुरङ्गमदेन कस्तूरिकया मीलित सम्बन्ध प्रापित मौलियस्य कस्तूरिकानिर्वासिततैलशिरसमिति यावत् । तथा।

कर्पूरमगरुश्चैव कस्तूरीचन्दन तथा ।

कङ्कोल च भवेदेभि पञ्चभिर्यक्षकर्दम ॥

इति॰ विष्णुपुराणात् ॥ ७ ॥

भूभृत पृथुतपोः घनमास्थित शुचिः स्नपयति स्म पुरोधा । सन्दधज्जलधरस्खलदेघस्तीर्थवारिल हरीरुपरिष्टात् ॥ ८ ॥

भूभृतमिति । अभ्यङ्गस्नानानन्तर शुचि माघार आप्तः हित स्वकुलपरम्परायात पुरोधा पुरोहित जलधराज्जलपूर्णात स्वर्णकलशात स्खलन पतन्तोघ सन्ततधारापरम्परा यास ता प्रभागादितीर्थवारीणा लहरीस्तरङ्गान उपरिष्टात सन्दधत प्रक्षिपन सन् पृथुना तपसा चान्द्रायणादितपस्यैव च पृथ्वे घन पूर्ण त भूभृत नल स्नपयति स्म । पूर्वं सुखोष्णजलस्नानेन शरीरशुद्धि कारयित्वा मङ्गलपूर्वं शीतलोदकेन वेदोक्तमन्त्रस्नानमकारयदिति भाव । शुचिराषाढ पृथुना तपसा माघमासेनाघन माघमारभ्य ग्रीष्मान्त गलितपत्रत्वादुगहन एवम्भूत पर्वतमभिवृष्टी विशिष्टा लहरीरुपरि धारयन् बहुजल विक्षिपन आषाढ पृथुतया यथा तैलपर्व्विभिघन निरन्तरव्याप्त पर्वतमभिवृष्टीति वा । तथा माघ इत्यमर शुचिस्त्वयमाषाढ इति च ॥ ८ ॥

प्रेयसी कुचवियोगमहाव्रग्गजन्मधूमवितर्तीरिव बिभ्रत् । स्नायिन. करसरोरुहयुग्म तस्य गर्जं घनदर्भमराजत् ॥ ९ ॥

* गरुड इति पाठ ।

स्नानक्रमसाह ॥ प्रेयसीति । स्नायिनो मन्त्रपूर्वकं गङ्गायां स्नातवतः नविधिना स्नानं कुर्वाणस्य करसरोरुहयुग्मगर्भयोस्तयोर्नीलमिश्राङ्गुलीराम-यो र्धृतौ दर्भौ येन एवम् भूतमरराजत् शुशुभे । किम्भूतमिति योग्यतेति । प्रेयस्याः कुचवियोग एव कृपया गृहीतः सस्नावित्यन्यामान्ताः धूमविततौ-विच्छदिव दर्भाणां श्यामत्वाद्धूमविततित्वं युक्तम् ॥ ९ ॥

कल्प्यमानममुनाचमनार्थं गाङ्गमम्बु चुलुकोदर-
चुम्बि । निर्मलत्वमिलितान् प्रतिबिम्बाद्द्यामय
च्छदुपनीय करे नु ॥ १० ॥

कल्प्येति । अमुना आचमनमर्थः प्रयोजनं यस्य आचमनं कर्तुं वा कल्प्यमानं स्वीक्रियमाणं चुलुकोदरचुम्बि चुलुकमध्यवर्ति गाङ्गं अम्बु कर्तृ निर्मलत्वेन मिलितस्तस्मिन् जातः प्रतिबिम्बो यस्यास्तां द्यां स्वर्गं उपनीय समीपस्थां कृत्वा हस्तप्राप्यां कृत्वा करे अयच्छत् दानाद् नु तदुत्प्रेक्षायां स्नानप्रारम्भानन्तरमाचमनं चकारेत्यर्थः । अन्य दपि दुर्लभं वस्तु हस्ते आनीय दीयते ॥ १० ॥

मुक्तमाप्य दमनस्य भगिन्या भूर्भरात्सदयितं
धृतरागा । अङ्गमङ्गमनुकं परिरेभे तं मृदा
जलमृद्ग्रहयालुं ॥ ११ ॥

मुक्तमिति । भूमिः आत्मनो भूपतित्वाद्दयितं प्रियं भर्तारं नलं स्नानकाले दमनस्य भगिन्या भैम्या मुक्तं विरहितमाप्य लब्ध्वा धृतो रागो लौहित्यं यया अथ च सानुरागा सती ऊषरादिमृत्तिकानिषेधात्-परिहाराय जलस्पर्शमात्रेण शिथिलावयवाः मृदुतरस्पर्शाः स्नानार्थमानीताः मृदो गङ्गादिमृत्तिका ग्रहयालुं गृह्णन्तं अनुकं आत्मनः कामुकं तं अङ्गमङ्गं प्रत्यङ्गं परिरेभे आलिलिङ्ग । श्रीतमार्गेण ललाटाद्यङ्गेषु रक्तमृत्तिकालगमध्यानेनान्यदा तु प्राप्तं स्ववल्लभं भूरालिलिङ्गेति भावः । प्रतीयमानोत्प्रेक्षा । अन्याऽपि सपत्नीमुक्तं वल्लभं चिरात्प्राप्य सानुरागा सती प्रत्यङ्गमालिङ्गति कं सुखं लघीकृत्य सुखेन दृढमालिलिङ्गेति वा ।

शुक्ला विप्रस्य रक्ता तु क्षत्रियस्याथ मृद्विशः ।

मिश्रा शूद्रस्य कथ्या तु क्रमान्मद वदाहृता ॥

इति स्मृते । अनुक अनुकाभिकाभीकःकमिता (पा०५।२।७४) इति साधु । अनुकिमिति पाठे सर्वाण्यङ्गानि लघीकृत्य परिरेभे किमित्यर्थः ११

मूलमध्यशिखरस्थितवेधा शौरिशम्भुकरकाङ्घ्रिशिरस्थैः । तस्य मूर्ध्नि च करे शुचिदर्भैर्वारि वान्तमिव गाङ्गलग्नैः ॥ १२ ॥

मूलेति । मूलमूलैस्त्रिभिरगर्भैर्दर्भैस्तस्य मूर्ध्नि शुचि निर्मलं कुशाग्रस्पर्शत्वात् पवित्रतरञ्च मार्जनं सम्यक् सःस्पर्शनं वारि च करे विचिक्षिप । क्षिपि । किम्भूतैः ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्कर विद्यात्त्रयो देवा कुशे स्थिता ॥

इति वचनात् मूले मध्ये शिखरे च क्रमेण स्थितानां वेधशौरिशम्भूनां ब्रह्मविष्णुहराणां क्रमेण करके कमण्डलौ अङ्घ्रौ पदाम्बुज शिरसि च गङ्गा सत्र देति पुराणप्रामाण्यस्थितैरेवम्प्रकारेण दर्भैः सम्यग्भिरङ्गासम्बन्धिभिस्तरङ्गैर्वान्तमिव उद्गीर्णमिव कुशमूलादिस्थितब्रह्मादिदेवता यत्र करकादिनिष्ठगाङ्गतरङ्गत्रैरिव पवित्रैर्दर्भाग्रजलैः स्नानाङ्गभूतं मार्जनमकरोदित्यर्थः । कमण्डलौ च करक इत्यमरः । वान्त इदित्व क्त यस्य विभ षति (पा ७।२।१५) निष्ठायामिडिनिषेधः ॥ १२ ॥

प्राणमायतवतो जलमध्ये मज्जिमानमभजन्मुखमस्य । आपगा परिवृढोदरपूरे पूर्णकालमुचितस्य सुधांशोः ॥ १३ ॥

प्राणमिति । सुवर्णघटितमहापात्रस्थतोयस्योपकल्पितमन्त्रकरकृतावगाहनजलमध्ये ।

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ इति ।

य एवलक्षणोक्तलक्षणलक्षितं प्राणं प्राणायामं आयतवतः कृतवतः

वेषमिषेण ॥ १५ ॥

भीमजामिति । राजऋषीणां सदाचारनृपाणां मध्ये इन्द्रः स नलः उत्तरीयस्योपरितनवस्त्रस्य परिवेषमिषेण वेष्टनव्याजेन हृदयं मनः अथ च वक्षःस्थलं समन्तात् प्राकारं यथा पिदधे च । किम्भूतम् । यत् प्रतिवेलं वारं वारं भीमजामनुलक्षीकृत्य अनुरागातिशयादुल्लङ्घ्याभिमुखं धावत् । किम्भूत इव लब्धहृदयं सचिवसुरिव सम्यक् नितरां नियन्तुमिच्छुरिव सखि त्वया न गन्तव्यमिति गाढं संयन्तुं कर्तुमिच्छति वा स्मृत्यादावेकवाससः कर्मानधिकारोक्तेरुत्तरीयवस्त्रधारणं युक्तम् । अन्योऽप्यन्यत्र गमनोत्सुको बलाद्रज्ज्वादिना स्थाप्यते समन्तादिति च पाठः । राजऋषिरित्येक इति प्रकृति भावः ॥ १५ ॥

स्नानवारिघटराजदुरोजा गौरमृत्तिलकबिन्दुमुखेन्दुः । केशशेषजलमौक्तिकदन्ता तं बभाज सुभगाप्लवनश्रीः ॥ १६ ॥

स्नानेति । सुभगा मनोहरा अथ च सौभाग्यवती आप्लवनश्रीः स्नानलक्ष्मीस्तं बभाज सिषेवे स्नानेन नितरां शुशुभे इत्यर्थः । किम्भूता । स्नानार्थं वारि तद्युक्ताः सुवर्णघटास्त एव राजन्तौ उरोजौ कुचौ यस्याः सा तथा ऊर्ध्वं वृत्तं तिर्यगर्द्धचन्द्राकाराः यथोना क्रमात्तिलका इति दक्षवचनात् । ललाटे धृतो गौरमृत्तिलकबिन्दुर्गङ्गातीरमृद्गोपीचन्दनादिरचितो वर्तुलस्तिलकः स एव गौरत्वात्तमुखेन्दुर्यस्याः सा तथा हस्तवस्त्रेण मार्जयेदिति व्यासवचनेन वैधस्नानानन्तरं वस्त्रादिना केशमार्जनस्य निषेधात् केशेषु शेषं जलं केशप्रान्तेभ्यो गलद्विच्छलं जलबिन्दवस्त एव मौक्तिकानि दन्ताश्च यस्याः, यद्वा जलमौक्तिकानि मुक्तावत् स्थूलजलबिन्दवस्त एव दन्ता यस्याः सा एवम्भूता रमणीयदशना तिलकं दधारेति भावः । अन्याऽप्येवंविधा तरुणी कञ्चिद्भजत इति ॥ १६ ॥

श्रैत्यशैत्यजलदैवतमन्त्रस्वादुताप्रमुदितां चतुरा

न्तीति लोकस्य तदानीं बुद्धिरभूदित्यर्थः । भानुमदुपस्थितये गृहीत-
मम्बु स्वकरेण विक्षिपन् यस्मिन् राज्ञि विषये लोकस्य तदानीं भ्रा-
न्तयो नलाङ्गप्रभाप्रसरे प्रकाशमाने सति ग्रावचक्रपरिक्रमसूर्यसमा-
यतां लोकस्य चक्रुरिति वा । राज्ञा यदम्बु गृहीतं तस्मिन् क्षिप्ते स-
ति स्फुरन्ति प्रतिफलन्ति रवितेजसि जायमाना भ्रान्तयो भ्रमणानि स्व-
मूर्त्तत्वं चक्रदर्शं वितर्कयन्त् । उत्तिष्ठा ग्रावो विपति भ्रमस्य
पतन्ति सम्प्रतिबिम्बितेजस्यपि भ्रमणानि जायन्ते सम्भ्रान्तिं इति
वा । अर्घदानं सूर्योपस्थानञ्च कृतवानिति भावः । स्फुरितेजसी-
ति पाठे तत्विशेषणम् ॥ १८ ॥

सम्यगस्य जपतः श्रुतिमन्त्राः सन्निधानमभजन्त
कराब्जे । शुद्धबीजविशदस्फुटवर्णाः स्फाटिका
क्षवलयच्छलभाजः ॥ १९ ॥

सम्यगिति । श्रुतिमन्त्राः सम्यक् जपतः सावित्र्यादिमन्त्रमावृत्त्यो-
पांशु उच्चारयतः अस्य कराब्जे सन्निधानमभजन्त अशोभन्त । किम्भू-
ताः शुद्धैरागमोक्तक्रमोच्चारणनिस्सन्दिग्धैरुपांश्वादिबीजैः कृत्वा विशद-
स्फुटाः मात्रादिमात्राल्योच्चारणेनातिशोभना वर्णा अक्षराणि येषु । अथ
च शुद्धेषु भाराहिदोषरहितेषु बीजेषु स्फटिकगुटिकासु विशदो धवलः
प्रकृष्टो वर्णः कान्तिर्येषां । यद्वा निर्दोषं स्फाटिकबीजान्यत्र धवला
प्रकटा वर्णा अक्षराणि येषु । तथा स्फाटिकानामक्षवलयस्य मालाया
छलं भजन्ति ते तदाकारेण परिणता भक्त्यतिशयात् मूर्त्तीभूय तत्पाणि-
पद्मे वसन्ति स्मेति भावः । उपस्थानानन्तरं स विप्रो जपञ्च कृतवा-
निति भावः ॥ १९ ॥

पाणिपर्वणि यवः पुनरास्यद्देवतर्पणयवार्पणमस्य । न्युप्यमानजलयोगिलिलौघैः स द्विरुक्तकरताङ्कतिलोऽभूत् ॥ २० ॥

पाणीति । अस्य पाणिपर्वणि हस्ताङ्गुलीनां ग्रन्थौ काण्डे यवं मा-
नो यवाकारः सामुद्रिकलक्षणभूतशुभरेखाविन्यासरूपो यवो देवतर्पण-

त्राणि तेषां पटले समूहे विषये तेषामुपरिष्टात् मेचकागरुसमूहैः कृष्णागरुसमुद्भवैर्धूपनैः सौगन्ध्यार्थं रचितैर्धूमोत्पन्नैर्धूमैरेव भ्रमराणां पटलेन गगनं भूषितं स्म जातं । पुष्पाणामुपरि भ्रमरैर्भाव्यं तथा च धूपजधूमा एव तत्स्थाने जाता इत्यर्थः । सुमनसो मालत्याः पुष्पाणां मालापरम्परास्तासां स्थानं तद्रचितमिति यावत् एव पटलं वितानं यत्र तादृशो या देवानामुपरि पुष्पवितानमपि निबद्धं यत्रेत्यर्थः । देवपूजार्थं उपहृतपुष्पमालापरम्पराणां स्थानभूतं पटलं गृहप्रान्तच्छदिर्यत्र तादृशग्रहे न्तरप्रदेशो देवतागारं छि छदिः प्रान्ते । सौरभरमणीयकार्थं पुष्पमाला बध्यन्ते तासामुपरि धूमा एव भृङ्गा जाता इत्यर्थं इति वा । बहुतरा धूपाः पुष्पमालाश्च यत्र सन्तीति च भ० । सुमना मालतीजातिरित्यमरः । प्रान्तोऽथ पटलं छदिः ॥ २२ ॥

साङ्कुरेव रुचिपीततमा यैर्या पुराऽस्ति रजनी रजनीव । ते धृता वितरितुं त्रिदशेभ्यो यत्र हेमलतिका इव दीपाः ॥ २३ ॥

साङ्कुरेति । यत्र देवगृहे ते दीपा हेमलतिका इव त्रिदशेभ्यो वितरितुं धृताः स्थापिताः सन्ति ते के ये यैर्दीपै रुच्या दीप्त्या पीतं प्रस्तं तमो यस्यास्तादृशी सा भूता भविष्यति वा रजनी रात्रिः साङ्कुरेवोद्गतप्ररोहांकुरसहितेव पुराऽस्ति अभूत भविष्यति वा । तथा यैः कृत्वा कान्त्या पीततमा अतितरां पीतवर्णा अत्यन्तगौरी रात्रिः सांकुरवत्-प्रांकुरा रजनीव हरिद्रेव अभूत् भविष्यति वा । रात्रिः पीतीभूततया हारिद्रावत् , प्रदीपकलिकाश्च तदङ्कुरा इवेत्युत्प्रेक्षा वा । निशाख्या काञ्चनी पीतेत्यमरः । पीततमा पक्षे सान्त पक्षे तमसन्त । पुराऽस्तीति पुरि लुङ् चेति ( पा० ३ । २ । १२२ ) यावत् पुरेति ( पा० ३ । ३ । ४ ) भविष्यति वा लट् ॥ २३ ॥

यत्र मौक्तिकमणेर्विरहेण प्रीतिकामनृनवाहुपदेन । कुङ्कुमेन परिपूरितमन्तः शुक्तयः शुशुभिरेऽनुगवन्त्यः ॥ २४ ॥

गर्भमिति । यत्र देवागारे रामणकर्दमेन कस्तूरीपङ्केन सान्द्रं पूर्णं गर्भमध्यं भजन्ति बिभ्राणानि रजतघटितानि भाजनानि पात्राणि अन्तः अङ्कं कलङ्कमृगं तेन कलुषीकृतो मलिनीकृतः कुक्षिर्यस्य तस्यामृतांशोश्चन्द्रस्य साम्यमगमत् । देवपूजार्थं रजतपात्राणि कस्तूरीपूर्णानि यत्र सन्तीति भावः ॥ २६ ॥

उज्झितान्सुकृताङ्कुरशङ्का यत्र धर्मगहने खलु तेने । भूरिशर्करकरम्बदधीनामालिभिः सुगतसौधसखानाम् ॥ २७ ॥

उज्झितानिति । धर्मस्य गहने निबिडे प्रथमे पुण्यकाननमपि यत्र देवपूजार्थरचितगृहे तद्युक्तगुणधवलतराणां सुगतसौधानां बौद्धदेवालयानां वा सखायः सदृशाः तथा भूरि शर्करा येषु तेषां करम्बयणानां दधिसक्तुपदार्थानां दध्योदनापदार्थानां वा आलिभिः पङ्क्तिभिः उज्झितान् उद्गच्छन् सुकृताङ्कुरस्तस्य शङ्का सम्भावना खलु निश्चितं तेने व्यरचि । आम्रादिवने हि आम्राद्यङ्कुर एवाङ्कुरति तथा धर्मकानने धर्माङ्कुर एवेति । यत्र शर्करामिश्रितदध्योदनबलिप्रदायकस्थलाः सन्तीति भावः । सुगतसौधसखानामिति राजाहस्सखिभ्यष्टच् (पा-५।४।९१) टच् ॥२७॥

स्वर्णमास्त चकमौलिनिवासः पर्वतः क्वचन चम्पकसम्पत् । मल्लिकाकुसुमराशिरकार्षीद् यत्र च स्फटिकशैलमनुच्च ॥ २८ ॥

स्वर्णमिति । यत्र क्वचन प्रदेशे विकसितचम्पककुसुमानां सम्पत् उन्नतपुञ्जः चन्द्रमौलेः निवासभूतः पर्वतः मेरुः स्वर्णं कृत्वमास्थित सुमेरुवर्णचम्पकराशिमेरोरप्युन्नतरा यत्रास्तीत्यर्थः । तथा मल्लिकाकुसुमराशिः स्फटिका एव शिखराणि यस्य तं कैलासं पर्वतं अनुच्चं खर्वं अकार्षीत् । शुभ्रतरस्फटिकवर्णकैलासतुल्या मल्लिकापुष्पराशिः कैलासादप्युन्नतरा यत्रास्तीत्यर्थः । पर्यन्वयात् खर्वानुच्चपदद्वयं भिन्नमिति ध्येयम् ॥ २८ ॥

स्वात्मनः प्रियमपि प्रतिगुप्तिं कुर्वती कुलवधूमवजज्ञौ । हृद्यदैवतनिवेद्यनिवेशाद्यत्र भूमिरवकाशदरिद्रा ॥ २९ ॥

स्वात्मन इति । यत्र हृद्यानां चर्चरमादीनां मनोहारिणां देवतोप- स्थापितानां निवेद्यानां पञ्चशाद्याद्युपहाराणां निवेशाद् स्थापनाद्धेतोः तिलमात्रावकाशेनापि दरिद्रा रहिता भूमिः स्वात्मनः प्रियं पतिं प्रत्य- पि लक्षीकृत्य गुप्तिं सर्वाङ्ग सुवर्णरूप गोपनं कुर्वती, शोभनस्य स्वस्य वा देहस्य गोपनं कुर्वती वा, तिलमात्रमपि प्रदेशं द्रष्टुमददाना सती कुलवधूमवजज्ञौ अवमेन कुलस्त्रीतुल्याऽभूदित्यर्थः । कुलवधूरपि स्व- प्रियं प्रति लज्जातिशयात् स्वशरीरं गोपयति । बहूनि निवेद्यानि यत्र स्थापितानि सन्तीत्यर्थः ॥ २९ ॥

यत्र कान्तकरपीडितनीलग्रावरश्मिचिकुरासु विरेजुः । गारमूर्द्धविधुतेरनुविम्बात् कुट्टिमक्षितिषु कुट्टमितानि ॥ ३० ॥

यत्रेति । यत्र वर्तमानासु कुट्टिमक्षितिषु चन्द्रकान्तादिमणिबद्धभू- मिषु देवपूजावसरे गानृणां गायकानां गानवशात् मूर्द्धविधुते शिरः- कम्पस्यानुविम्बात् प्रतिबिम्बाद्धेतोस्तद्व्याजेन कुट्टमितानि हठक्रियया चुम्बनादिपरिहारार्थं कामिनीशिरःकम्पविलसितानीव विरेजुः । कि- म्भूतासु । नीला भासमानस्तद्गत् सूर्यकान्ताश्चन्द्रकान्ता वा तेषां करे किरणे पीडिता पुरस्ताद्गन्तु प्रतिबद्धास्तत्रैव घनीभूता इति यावत् । नीलग्रावरश्मयः नीलमणिकिरणा यत्र चिकुराः मूलाः केशा यासां तासु । कामिन्या दृष्टपरिचुम्बनार्था प्रियपाणिगृहीता नीलमणिरश्मि- तुल्या मूर्धानि केशा यासां । कृतकचग्रहा सत्य चुम्बनादिपरिहा- राय शिरःकम्पनरूपान् विलासान् कुर्वन्ति । मणिबद्धा भूमयो दर्पण- वत् गायक इव यत्र सन्तीति भावः ॥ ३० ॥

नैरयणंसाणिस्तूपणपूर्णै स्फटीन्दुरत्नमयनिवेद्यौ

सीत् निर्मितवान् । नीलोत्पलमालां कण्ठे बध्वा स्फाटिकीमपि शिवप्रतिमां नीलकण्ठपदसहितामकरोदित्यर्थः । कण्ठे एव नीलोत्पलपूजां चकार अन्यत्र तु चन्दनश्वेतपुष्पादिभिः पूजितवानिति भावः ३६

प्रीतिमेष्यति कृतेन ममेदृक्कर्म्मणा पुररिपुर्मदनारिः । तत्पुरं पुरमतोऽयमधाक्षीद्धूपरूपमथ कामशरञ्च ॥ ३७ ॥

प्रीतिमिति । पुराणां दैत्यविशेषाणां रिपुस्तथा मदनस्य शरिः शिवः मम कृते ईदृशा कर्म्मणा पुरकामशरदाहरूपव्यापारेण प्रीतिमेष्यति प्रसन्नो भविष्यति । अतो हेतोरेव इति बुद्ध्येव अयं नलस्तस्य पुररिपोः कामारेः पुरं धूपस्वरूपं अथच धूपवर्णधारिणं पुरं गुग्गुलमधाक्षीत् ददाह । अथ च तद्दाहानन्तरं धूपविशेषरूपं कामशरञ्च ददाह यस्मारिर्यंद्विषु शरश्च यदयं येन दह्यते स तस्मिन् प्रीयत एव । शिवजयेन वेषान्तरधारिणं पुरं दैत्यं कामवाणञ्च मोहनाख्यं ददाहेत्यर्थः । धूपमर्पयामास शिवपूजामकरोदिति भावः । ईदृशपुष्पपूजानेन नक्तिपूर्वकेनापि कर्म्मणा पुररिपुः कामारिः शिवो मम कृते मदर्थं मयि विषये प्रीतिं न यास्यति एतावताऽपि सन्तुष्टो न भविष्यति, अतः कारणादिव तदर्थे पुरं कामशरञ्च ददाह । एवं कृते सन्तुष्टो भविष्यतीति धियेति भाव इति वा । पुररिपुर्मदनारिः इति च योगरूढ्यात्र प्राधान्यात्र पौनरुक्त्यम् । गुग्गुलौ कथितं पुरं इति विश्वः । तत्पुरं इति पष्ठीसमासः । अन्यथाऽव्ययेन सह षष्ठीसमासनिषेधः स्यात् । तदिति लुप्तषष्ठीकविभक्तिप्रतिरूपकमव्ययं पृथक् पदं वा ॥ ३७ ॥

तन्मुहूर्त्तमपि भीमतनूजाविप्रयोगमसहिष्णुरिवायं । शूलिभीतिजलीनतयाऽभूद्ध्यानमूर्च्छननिमीलितनेत्रः ॥ ३८ ॥

तदिति । तन्मुहूर्त्तं तस्मिन् देवपूजाक्षणेऽपीत्यर्थः । भीमतनूजायाः विप्रयोगमसहिष्णुरिव नलः शूलिनि लीनो वर्त्तमानाल्पजिनो भीततया चित्तैकाग्र्येण ध्यानं कृत्वा वक्रापतारतया प्रमथ तेन हेतुना निमी-

लोल । भृङ्गभङ्गिरिव रुद्रपर स्रग्श्रेणिराश्रयत रु-
द्रपरस्य ॥ ४१ ॥

व्यापृतेति । रुद्रशब्दात् परेषां पदानामुच्चार्यमाणानां रुद्राणामि-
त्यर्थः । रुद्रः परा दैवतं येषां ते रुद्रपराः शिवभक्ताः तत्सम्बन्धिनां
तेषां ध्यायमानानामिति यावत् । तादृशानां व्यस्तानां मणीनां श्रेणिर्मा-
ला भृङ्गभङ्गिर्भ्रमरपङ्क्तिरिवास्य नलस्य नवपल्लववल्लीनां यस्य नवप-
ल्लवमित्यर्थः । एवंविधं पाणिं करमाश्रयत सिषेवे । किम्भूतस्य ।
रुद्रपरस्य शिवभक्तस्य शत एव शतं रुद्रा देवता यस्य शतरुद्रसम्ब-
न्धिनः शतरुद्रियसञ्ज्ञस्य "नमस्ते" इत्यादियजुःसूक्तस्य जपो जपे विष-
ये व्यापृतस्य सव्यापारस्य रुद्राक्षाणां रुद्रमितत्वात् नमस्त इत्यादिप्रत्ये-
कं रुद्रजप रुद्राक्षजपमालया चकारेत्यर्थः । भृङ्गमालाऽपि नवपल्लवं से-
वते । शतरुद्रियेत्यत्र शतरुद्राद् घेति वक्तव्यात् (पा॰४।२।२८ वा॰) घः ।
जपो नितुश्चेति (पा॰७।३।२८) इट् निषेधः । "पञ्चाशीत्यैव रुद्राक्षैः" इत्या-
दि हारीतोक्तो हरीतकस्य जपमालाविधिर्द्रष्टव्यः । अणिमादिसिद्धये प-
ञ्चाशीत्यैव रुद्राक्षैरिति ज्ञातव्यम् ॥ ४१ ॥

उत्तम स महति स्म महीभृत् पूरुषं पुरुषसूक्त-
विधानैः । द्वादशापि च स केशवमूर्तीर्द्वादशाक्ष-
रमुदीर्य्य ववन्दे ॥ ४२ ॥

उत्तममिति । स महीभृत् नलः उत्तमं पूरुषं पुरुषोत्तमं पुरुषसूक्तस्य
सहस्रशीर्षेत्यादिषोडशर्चो विधानैरनुष्ठानप्रकारविशेषैः ।

"दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः" ॥

तथा । "ओङ्कारपूर्विकैवेयं वर्णमन्त्रैः पृथक् पृथक् ।
आवाहनासनं पाद्यमर्घ्यमाचमनीयकम् ॥
स्नानं यज्ञोपवीतञ्च गन्धमाल्यादि च क्रमात् ।

धूप दीपञ्च नैवेद्यं नमस्कारं प्रदक्षिणं ।
षोडशश्चोद्वासनं कुर्य्यादेव नारायणो विधिः" ॥

इत्यादिस्मृतिवाक्यविहितमत्यक्रमं निर्दिष्टषोडशोपचारैर्महति स्म अपूजयत । तथा च मन्त्रः "यथादेवमुतातिवरमनोज," इति व्युत्क्रमोक्तं द्वादशाक्षरं वासुदेवमन्त्रं वैरवागमोक्तक्रमेण उद्धीर्य्य सम्यगुच्चार्य्य द्वादशापि केशवमस्यस्थितमूर्त्तीर्व्वयुवो द्वादशशालग्रामशिलामूर्त्तीरवन्दे तुष्टाय प्रतनाम या ता अभ्यपूजयदिति भावः ।

"शिला द्वादश भो वैश्य शालग्राममसुद्भवाः ।
विधिवत् पूजिता येन तस्य पुण्यं वदामि ते ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत्स्याद्द्वादशकल्पेषु दिनेनैकेन तद्भवेत्" ॥

इति विष्णुपुराणादिति,भाव । पूर्व्वोक्तद्वादशाक्षरमुख्यं द्वादशसङ्ख्याका अपि केशवमस्थितमूर्त्तीः सामर्थ्यादेतन्मन्त्राक्षरक्रमसूचिता । "ओँ केशवाय धात्रे नमः" इति प्रकारेण

"द्वादशादित्यसहिता मूर्त्तीर्द्वादश चिन्तयेत् ।
केशवाद्याः क्रमाद्दे वस्त्वनाद्यविधानतः ॥
ललाटे केशव धात्रा कुक्षौ नारायणं पुनः ।
अर्य्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः ॥
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके ।
अंशुना विष्णुमंसे भगेन मधुसूदनं ॥
गले विवस्वता युक्तं त्रिविक्रममनन्तरं ।
वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके ॥
पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतं ।
हृषीकेशं पृष्ठे पद्मनाभं ततःपरं ॥
त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् ।
द्वादशार्णमन्त्रन्तु ततो मूर्द्धि प्रचिन्तयेत्" ॥

द्वादशाक्षरमन्त्रगर्भितमिति ज्ञातव्य । इति प्रकारान्तरमागमोक्तं द्रष्टव्य । महीयानिति पाठे नितरामागमशास्त्रकोविदः परमभक्तश्च-

स्वर्णकेतकशतानि स हेम्नः पुण्डरीकघटनां रजतस्य । मालयाऽरुणमणेः करवीरं तस्य मूर्ध्नि पुनरुक्तमकार्षीत् ॥ ४५ ॥

स्वर्णेति । स नलः तस्य पुरुषोत्तमस्य मूर्ध्नि हेम्नः सुवर्णघटितपुष्पाणां मालया कृत्वा स्वर्णकेतकीपुष्पाणां शतानि, तथा रजतस्य रूप्यघटितपुष्पाणां मालया कृत्वा पुण्डरीकाणां सिताम्भोजानां घटनां समर्पणां, तथाऽरुणमणेः समर्पितमाणिक्यपद्मरागादिरक्तवर्णमणीनां मालया च कृत्वा करवीरपुष्पाणि एतत् सर्वं पुनरुक्तमकार्षीत् । सुवर्णेनाप्यनेनैव पूजायाः सिद्धत्वात् स्वर्णकेतकादिनिरर्थकं चकारेत्यर्थः । स्वर्णकेतकादिभिः सुवर्णघटितपुष्पादिभिश्च श्रीपुरुषोत्तमपूजयदिति भावः । विष्णुपूजायां कमलकरवीरजपावाणपुष्पव्यतिरिक्तानां रक्तपुष्पाणां निषेधः । मूर्तारोपितकरवीरकुसुमपूजानिषेध इत्यविरोधः । पुनरुक्तं नपुंसकमनपुंसकेन (पा०१।२।६९) इत्येकशेषैकवद्भावौ ॥ ४५ ॥

नाल्पभक्तबलिरन्ननिवेद्यैस्तस्य हारिणमदेन स कृष्णः । शङ्खचक्रजलजातवदर्चः शङ्खचक्रजलपूजनयाऽजनि ॥ ४६ ॥

नाल्पेति । स पुरुषोत्तमः तस्य नलस्यान्ननिवेद्यैः तेन समर्पितैर्नानाविधौदनानामुपहारैः कृत्वा नाल्पोऽतिमहान् भक्तबलिः, ओदनोपहारो यस्य, अथ च अतिमहानभक्तः श्रद्धापरो बलिर्वैरोचनिर्यस्य तादृशोऽभूत् । तथा नलसमर्पितेन हारिणमदेन कस्तूर्या कृष्णवर्णोऽथ च कृष्णनामाऽभूत् । तथा हैमरूप्यादिघटितपाञ्चजन्यादिशङ्खानां चक्रं समूहस्तत्र स्थितेन जलेन कृत्वा या पूजना अभिषेकार्घ्यदानादिरूपा तया कृत्वा शङ्खचक्रजलेन जातवती सम्पन्नाऽर्चा पूजा यस्य, स च शङ्खः पाञ्चजन्यः चक्रं सुदर्शनं जलजातं पद्मं तानि विद्यन्ते यस्यास्तादृशी शङ्खचक्रपद्मयुताऽर्चा प्रतिमा यस्यैवम्भूतोऽजनि । पुरुषोत्तमसम्बन्धिनामेतेषां शब्दानामन्वर्थत्वं । एतत्कृतान्ननैवेद्यादिसमर्प

प्रतिपत्तिं । इत्युदग्रपुलकं बलिनोक्तं त्वां नमामि कृतवामनमायं ॥ ६३ ॥

एवं वामनेनोक्ते बलिरुत्तरमाह । दानेति । हे वामन अथ कृता वामनस्य ह्रस्वपुरुषस्य माया येन तथाऽहमनेन छल इति ज्ञात्वा तात्पर्यवशादुदग्रपुलकं सञ्जातरोमाञ्चमिति पूर्वोक्तप्रकारेण बलिना कर्त्रा उक्तं जल्पितं त्वां नमामि । इति किं । हे ब्रह्मन् अस्ति मह दानधारिणिद्विरमित्राय कृताभिलाषाय ते तुभ्य विभूते श्रीमत्सम्पदः श्रुण्वता प्रतिपत्तिं सङ्कल्पेन दानं पशिन इच्छामि । सर्वामपि सम्पदं तुभ्यं दातुमिच्छामि । अथ त्वं दानवानामरिः शत्रुरसि तत् तत्र का प्रविभूते शरीरवैभवस्य प्रतिपत्तिं च न निवरामहमिच्छामि कीदृशं महच्छरीरं धारयिष्यसि तद्द्रष्टुमिच्छामीत्यर्थः । यद्वा तव कायवैभवस्य प्रतिपत्तिं रूपान्तरं धारयिष्यामीति त्वया सूचितं श्रुतेन धारणीयमित्यहं कामये इत्यर्थः । अस्मोत्यहमर्थेऽव्ययं ॥ ६३ ॥

भोगिभिः क्षितितले दिवि वासं बन्धमेष्यसि चिरं भ्रियमाणः । पाणिरेष भुवनं वितरीति च्छद्मवारिभरयं वामन विश्वं ॥ ६४ ॥

एवं बलिनोक्ते वामनः प्राह । भोगिभिरिति । हे वामन इति एषः रूपाभिः छद्मवारिभिः कपटवचनैरुपलक्षितस्त्वं विश्वं अथ ददा । इति किं । भो बले चिरं चिरायुषेण बहुकालं क्षितितले भूलोके दिवि वा भ्रियमाणोऽवतिष्ठमानस्त्वं भोगिभिः सुखिभिर्मित्रज्ञातादिभि सह सम्बन्धं सर्पाणां एष्यसि प्राप्स्यसि यदि, यदि भूलोकेऽवस्थितिमिच्छसि तर्हि तत्र, यदि दिवि तत्र वा मित्रादिभि सह सुखेन चिरकालमवस्थितिं प्राप्स्यसीत्यर्थः । इत्याशीः । एष प्रतिग्रहं प्रसार्यमाणः मत्प्रदत्तपयो मम करोऽस्ति तस्मादत्र पाणौ यद्दानमम्बुभिर्भुवनं जलपितर देहीति । अथ च क्षित्यास्तले पातालतलगे दिवि रमणीयत्वात् स्वर्गे भोगिभि सर्पैर्भ्रियमाणो बध्यमानः सन् चिरकालं वासं दु खबहुलत्वाद् बन्धनरूप बन्धनं प्राप्स्यसि । यद्वा चिरञ्जीवन् पाताले सर्पै-

कार्त्तवीर्यभिदुरेण दशास्ये रैणुकेय भवता सुखनाश्ये । कालभेदविरहादसमाधिं नौमि राम पुनरुक्तिमहं ताम् ॥ ६८ ॥

कार्त्तवीर्येति । हे रैणुकेय रेणुकापुत्र कार्त्तवीर्यभिदुरेण यदीयकारागारे नियद्धो रावणोऽपि बहूनि वर्षाण्यत्यतिष्ठत् तं कार्त्तवीर्यं सहस्रार्जुनं हतवता भवता दशास्ये रावणे सुखेन अनायासेन नाश्ये हन्तुं शक्ये सति कालभेदस्य विरहादुभयोरवतारयोरेककालीनत्वादसमाधिं परिहाररहितां मनुष्यावतारेण क्षत्रियेण दाशरथिना रामेण विधेयान्तराभावात् तस्मिन्नेव काले किमर्थमवतीर्णोऽसीति वक्तुमशक्यत्वात् प्रयोजनाभावादत्र ते भो राम पुनरुक्तिं दाशरथिरूपजामदग्न्यरूपां दाशरथिरूपा वाऽहं नौमि स्तौमि । अन्यत्र पुनरुक्तेः कार्यभेदात् कालभेदाद्वा परिहारः कर्तुं शक्यते । वीप्सायामप्येककालप्रयुक्तस्यापि शब्दस्य भयादरभक्त्यादिना परिहारोऽस्त्येव, अत्र तु पूर्वेणैवोत्तरावतारकार्यस्यापि कर्तुं शक्यत्वात् कार्यभेदाभावाच्च परिहारो नास्तीत्यर्थः । स्वतन्त्रस्य तव केनाप्यनुयोगः कर्तुं न शक्यत इति भावः । जामदग्न्यस्य सानुपपत्तेऽपि हैहयानस्य तथैव सद्भावाद् याज्ञवल्क्यस्य रावणं यूनत्वात् तस्य तेन हन्तुमशक्यत्व द्रावणवधपर्यन्तं च श्रीरामस्य हैहयानाजावान्मानुपत्येन तेनैव तस्य हन्तुं शक्यत्वात् कार्यभेदादेकस्मिन्नपि कालेऽवतारान्तरस्य युक्तत्वात् सूक्ष्मः परिहारोऽस्त्येव । तथापि स्थूलदृष्ट्या परिहाराभाव उक्त इति ध्येयम् । गर्भदासः शतक्रीडः कार्त्तवीर्यसहस्रार्जुनेन रावणः कारागारे निक्षिप्त इतीतिहासः । रैणुकेय इति क्षत्रियत्वसूचनम् । अपत्यार्थे स्त्रीभ्यो ढक् (पा० ४ । १ । १२०) इति ढक् ॥ ६८ ॥

हस्तलेखमसृजत् खलु जन्मस्थानरेणुकमसौ भव दर्थम् । राम राममधरीकृततत्तल्लेखकः प्रथममेव विधाता ॥ ६९ ॥

दशभिः श्लोकैः श्रीरामचन्द्रं वर्णयति । हस्तेति । भो राम दाशरथे असौ विधाता भवदर्थं त्वादृशासमशिल्पनिर्माणार्थं जनस्थाने रेणुकेव यस्य तादृशः राम प्रथमः त्वदपेक्षयाऽऽद्यः जामदग्न्यः खलु निश्चितं हस्तलखमेवासृजत् चक्रे । त्वन्निर्माणार्थं जामदग्न्यं हस्ताभ्यासमेवाकरोदित्यर्थः । शिक्षार्थं वा हस्तलखमिव चक्रे । किम्भूतः । अपरीकृताः एतादृशनिर्माणसमर्थत्वाज्जितरा हीनाः कृताः ते प्रसिद्धा लेखकाः देवाः इन्द्रादयो दक्षप्रभृतयोऽष्टौ प्रजापतयो वा येन तादृशः । अथ वा न अपराः स्वर्गस्थाः अप्यपराः, कृताः भूमौ अवतारितास्ते हनुमत्सुग्रीवादिरूपाः इन्द्रादयो देवाः येन सः । प्रथमस्यैव हस्तलेखरूपत्वेन हीनत्वं न तु द्वितीयस्य त्वयोक्तं । प्रथमत्वाद्रामैव राम न तु द्वितीय इत्यामिति वा । उत्तमशिल्पनिर्माणाय हि हस्तलखः पूर्वं क्रियते । हीनाः कृतास्ते तेऽतिप्रसिद्धा लेखकाः लिपिकराः येन स इति वा । अभ्यासोऽप्येवमेव क्रियते । जनस्थाने रेणुः घृष्टेष्टकादिचूर्णरूपः पांशुस्तेनादृशः । हस्तलेखः ग्रंथ द्विभागेति ( पा० ५ । ४ । १२४ ) कप् । ६९ ॥

उद्भवाजतनुजादज काम विश्वभूषण न दूषणमत्र ।
दूषणप्रशमनाय समर्थं येन देव तव वैभवमेव ७०

उद्भवेति । हे अज जन्मरहित श्रीरामचन्द्र । अजस्य रघुपुत्रस्य तनुजाद्दशरथात् सकाशात् काम स्वेच्छया उद्भव उत्पत्तिर्यस्य भो विश्वविभूषण जगदलङ्कारभूत अत्र दशरथादपि जन्मविषये अजस्याऽपि जन्मविषये दूषणं दोषलेशोऽपि नास्ति । यस्य पितामहेनाप्यजेनात्पन्नस्तत्पुत्रः स्वपिता कुतस्तस्मादुत्पन्नः तत्पुत्रः स्वयं कुतस्तस्मादुत्पन्नस्ते । तथा स्वयमप्यजः कथ जायत इत्याशङ्काया स्वेच्छामात्रविलसितमित्याशङ्कापरिहारः । ब्रह्मैव हि स्वाविद्यया संसरति मुच्यते चेति न्यायात् । विश्वभूषणस्य तव दूषणरूपत्वाज्ञायादपि दूषणलेशोऽपि तव नास्तीत्यर्थः । अथ वा ऽजतनुजादजस्योत्पत्तिर्युक्तैव यतः हि छागस्तत्पुत्रोऽप्यज एव जातिनामत्व दशरथस्येत्यपि दूषणाभाव ।

दूषणाभावे हेत्वन्तरमप्याह । येन कारणेन हे देव श्रीराम तव येन-यसैव प्रभाव एव दोष वा प्रपंचेण गमनाय नाशाय समर्थ परस्परया दिविभयाद्न्यषामपि भक्तानां दोषा नश्यन्ति तस्य हषैं दोषलवस्य-ग्रीऽपि कथङ्कार स्यादपि तु न कथञ्चिदित्यर्थ । अथ च दूषणाख्य-राक्षसविनाशाय तवैव सामर्थ्य यतस्तस्मादत्र तयोरपद्दी सत्या दूष-णाभावो युक्त एवति छल । अथ च परशुरामे सत्यपि तस्मिन्नेव का-ले त्व दशरथात् सुखेनोत्पन्नस्य । अत्र तवास्पतिविपये दूषण पुनरु-क्तिदोषो नास्ति । यतो दूषणादिराक्षसान्तराक्षसविनाशाय तवैव सा-मर्थ्य न तु परशुरामस्येत्यत्र दूषणशब्द उपलक्षणपर । तस्मादेकका-लोत्पन्नत्वेऽपि कार्यभेदान्न पुनरुक्तिदोष । एतेनावतारमयागतानु-क्त । अनुकाममिति पाठे काम लक्षीकृत्य यथेच्छमित्यर्थ ॥ ७० ॥

नो ददासि यदि तत्त्वधिय मे यच्छ मोहमपि त रघुवीर । येन रावणचमूर्युधि मूढा त्वन्मय जगदपश्यदशेषं ॥ ७१ ॥

नो ददासीति । हे रघुवंश्यानां मध्ये वीर, ईश्वरतम श्रीरघुनाथ त्व तत्त्वधिय मायामयामिनमात्मतत्त्व साक्षात्कार यदि मे मह्यं नो ददासि तर्हि ॥ मोहमपि तां विशिष्टां भ्रान्तिमेव यच्छ देहि । त क । येन मोहेन भयसञ्जातभ्रान्तिविलासेन युधि मूढा भ्रान्ता राव-णचमूरपि सकल जगत त्वन्मय श्रीरामचन्द्ररूपमपश्यत् । रावणसेन-या च मोहेन जगद्रामात्मक दृष्टमिति मधुपुराणे ॥ ७१ ॥

आज्ञया च पितुरज्ञभिया च श्रीरहीयत महीप्रभवा हि । लङ्घितश्च भवता किमु न द्विर्वारिराशिरुदकाद्भुगलक्ष्म ॥ ७२ ॥

आज्ञयेति । हे श्रीरामचन्द्र भवता महीप्रभवा कृष्यादुपायैर्भूला-कारका श्री राज्यलक्ष्मी, अथ च भूमेरुत्पन्ना लक्ष्म्यवताररूपा जान की त्वमेव पितुराज्ञया च अज्ञेभ्यो भिया च मूढजनापवादभयेन च द्विर्द्विवारमहीयत त्यक्ता । यनयामाज्ञीकाराद्राज्यलक्ष्मी, जनाप-

यादृशयापि मह्यां विशुद्धाऽपि सीता त्यक्ता, इत्येवं द्विप्रकारं त्वत्तो-ऽन्यः । एवं पितुराज्ञाकारी लोकापवादभीरुश्च कोऽपि नास्तीति भावः । चायन्योन्यसमुच्चये । तथा वारिराशिररिराशिश्च द्विवारं द्विधा च न लङ्घितः किमु ; अपि तु सेतुं बद्ध्वा समुद्रोऽपि लङ्घित एव । तथा रावणादिशत्रुसमूहोऽपि पराभूत एव । वा चार्थे इवार्थे वा । अरिराशिश्च अरिराशिरिव वागन्यताधोद्धातो क्विपि वाशीति वा स चासौ वारिराशिश्च स यकारो वैरमङ्क इत्यर्थः । किम्भूत । उदकाङ्कगा जलमध्यगा लङ्का यस्य यदीयजलमध्ये लङ्कास्तीत्यर्थः । अरिराशिरपि समुद्रजलमध्यवर्तिनी लङ्का यस्य । समुद्रपक्षे यस्येत्यस्योदकेन सम्बन्धः । अरिराशिपक्षे तु लङ्कायाः । एतावान् विशेषः । दारुणमकं दुःखं यस्यास्तादृशी अलङ्का लङ्का यस्येति वा । उदकाङ्कक कर्तनलक्षणं दुःखमुदकं तदेवाङ्कश्चिह्नं येषां तादृशा गताः यव्ठा यत्र क्रियायां यथा तथा कः किमु शत्रुसङ्घो न लङ्घितः, अपि तु सर्वोऽपीति वा । सागरस्यापि बन्धनाद्रावणस्यापि वधाच्च एतादृशो महाप्रतापः शूरश्च च त्वदन्यः कोऽपि नास्तीति भावः ॥ ७२ ॥

कामदेवविशिखैः खलु नेशं मार्पयज्जनकजामिति रक्षः ।
देवतास्मरणे वरवाक्यं तथ्ययत्स्वमपुनाद्भवदस्त्रैः ॥ ७३ ॥

कामदेवेति । रक्षः रावण इतीव हेतोर्देवतास्मरणाभावविषयं देवाद्धेतोर्न मरिष्यामीति ब्रह्मणो वरवाक्यं यत् सत्यं कुर्वन् स्वमात्मानं भवदस्त्रैरपुनात् धूतकल्मषं चकार । इति किं । जनकजां सीतां रामायार्पयद्ददद्रक्षः कामदेवस्य मोहनशोषणादिभिर्विशिखैः खलु निश्चितं मा नेशं तद्विरहसन्तापवशान्मृतो मा भूवमिति । सीताप्रत्यर्पणे कामदेवस्य देवत्वात् तद्बाणैर्मरणे वरवाक्यमसत्यं स्यादितीव तामददद् वरवाक्यसत्यत्वार्थं सानुतापतरकामकूपभवद्बाणैरात्मानं नाशितवानित्यर्थः । कामबाणात् शरीरविनाशमात्रं त्वद्बाणात्तु मरणे समारहेतुनि दोषकल्मषक्षय इति महान् विशेषोऽपुनादित्यनेन सूच्यते । नेश नाशोमादङ् भावः । तथ्ययत् तत्करोतीति (वा०३।१।२६ वा०)

णयन्तान्निष्ठा ॥ ७३ ॥

तद्यशो हसति कम्बुकदम्बं शम्बुकस्य न किम
म्बुधिचुम्बि । नामशेषितदशास्यदशास्यादस्तमा
प यदसौ तव हस्तात् ॥ ७४ ॥

तद्यश इति । हे रघुनाथ नामशेषितः कथाशेषीकृतो हत येनया म-
खितो दशास्यो येन तस्मात् तव हस्तादसौ शम्बुक यत् अस्तं वि-
नाशं आप तत् शम्बुकस्य शम्बुकनाम्नः शूद्रस्य अम्बुधिचुम्बि समुद्रग
व्यापि यश कम्बु कदम्बं शङ्खवृन्दं धवलतया किं न हसति अपि तु
हसत्येव तत्तुल्यं भवतीत्यर्थः । येन त्वत्करेण अतिशूरो रावणो हत
स्तेनैवास्त्यधमोऽधमो दुर्बल शम्बुकोऽपि हत इति महत् तस्य भा-
ग्यमित्यर्थः । यो ह्युत्कृष्ट बलिनं हन्ति तेनैव हीने दुर्बले हते दुर्बल-
स्य महद् यशो भवति । ब्राह्मणस्य बालपुत्रमरणनिमित्तं शूद्राणाम-
विहितधूमपानमधोमुखं कुर्वन्तं शम्बुकं शूद्रं श्रीरघुनाथो हतवानिती-
तिहासः । अथ च शम्बुकस्य जलशुक्तेः श्वैत्यरूपं यशः समुद्रमध्यस्थ
शङ्खवृन्दं हसति तत्तुल्यं भवतीति युक्तमेव । नामशेषितेति । तत्करो-
तीति (पा०३।१।२६वा०१) णयन्तान्निष्ठा ॥ ७४ ॥

मृत्युभीतिकरपुण्यजनेन्द्रत्रासशानजमुपार्ज्य य
शस्तन् । ह्रीणवानसि कथं न विहाय क्षुद्रदुर्ज
नगिरा निजदारान् ॥ ७५ ॥

मृत्युभीतीति । यस्मात् मृत्योर्यमादन्येषां भीतिस्तस्यापि मृत्योर्भी-
तिकरः पुण्यजनेन्द्रो राक्षसेन्द्रो रावणस्तस्यापि मरणपर्यन्तं त्रासदा-
नात् भयार्पणात् हेतोर्जातं तत् अतिप्रसिद्धं लोकत्रयेऽपि गीयमानं
यश उपार्ज्य सुष्ठोऽत्यल्पको दुर्जनस्तस्माद्गिरा वचनेन पामरलोकापवा-
दभिया निजदारान् आत्मनः प्रियां सीतां विहाय परित्यज्य कथं न ह्री-
णवान् लज्जितवानसि लज्जितव्यं तावत् त्वयेत्यर्थः । यो रावणाय
भयं दत्तवान् तस्य दुर्जनभीत्या निष्ठुरजनापवादभयेन प्रियापरित्यागे
लज्जैव युक्ता । अभिमानाभिमान्योऽप्यसौ रावणो नाशितो लोकापवा-

स्मिन् व्याधेन हतेऽन्यस्य दुःख शोकमपि वीक्ष्य तिर्यग्योनेरपि तस्य दुःखं दृष्ट्वा तत्पद्यरूपा शुचा शोकेन हेतुना ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।

इत्यादिकमेकं श्लोकमसृजत् । स कविस्त्वयि उत्पन्न करुणारसो यस्य सीतावियोगविह्वलमहानुभावभवद्दर्शनोत्पन्नशोक इव श्लोकानां सिन्धुः सागररूपं चतुर्विंशतिसहस्रमितरामायणाख्यं काव्यमुचितं योग्यं प्रववन्ध । तिर्यग्योनिविषये शोकेन येन श्लोकः कृतः तस्य उत्तमपुरुषविषये महाकाव्यनिर्माणमुचितमेव । अथ च त्वया सिन्धुर्बद्ध । अयमपि त्वदेकचित्तः सिन्धुं बबन्धेत्युचितं । परित्यक्तसर्वसङ्गो मुनिरपि त्वद्गुणैर्वशीकृतवान् । एतादृशः परमपुरुषोऽसीति तात्पर्यम् ७७

अविश्रव पितृकयाप्यमनर्हं सश्रवस्त्वमनयेत्युचितज्ञः । त्वं चकर्तिथ न शूर्पणखायाः लक्ष्मणेन वपुषा श्रवणौ वा ॥ ७८ ॥

विश्रव इति । हे रघुनाथ, इति हेतो उचितं जानाति य स उचितज्ञः त्वं चतुर्थो वत्तोऽपत्यात् लक्ष्मणलक्षणेन स्वीयेनैव वपुषा शूर्पणखायाः श्रवणौ कर्णौ त्वं न चकर्तिथ अपितु कर्तितवान् एव । इति किं । विश्रवा मुनिः पिता यस्याः, अथ च कर्णरहितः पिता यस्यास्तयाऽनया शूर्पणखया सश्रवस्त्वं सकर्णत्वं अप्राप्तमनर्हमयोग्यमिति स्वीयवस्त्वानौचित्यात् कर्णौच्छेद एवोचितः, यतः अकर्णपितृकाया अकर्णत्वस्यौचित्यात्कर्णौ लक्ष्मणेन कर्तयामासिथेत्येवंविधः समुचितकारी महाप्रभावोऽसीति भावः । वा इवार्थे वा इतीव हेतोरिति योजना । विश्रव पितृकया न द्यूनयेति ( पा० ५ । ४ । १५३ ) कप् । शूर्पणखा पूर्वपदात् संज्ञायामिति ( पा० ८ । ४ । ३) णत्व । नखस्य स्वाङ्गत्वेऽपि नखमुखात् संज्ञायामिति ( पा० ४ । १ । ५८ ) ङीषभाव । स्वागतं वृत्तं । ७८ ॥

ते हरन्तु दुरितप्रततिं मे यैः स कल्पविटपी तव

द्रोणभुजाजंघच्छेदनार्थं कर्परीभिरभिहत्य तदङ्गनयन यदकारि तद् बालक्रीडनमस्मानवतु इत्यर्थः । कर्पर्याघाते ते तदङ्गच्छेदनमिति बालशातिः । अवतारप्रयोजनञ्चोक्तं ॥ ८० ॥

कर्णशक्तिविफलां खलु कर्त्तुं सज्जितार्जुनरथाय नमस्ते । केतनेन कपिनोरसि शक्तिं लक्ष्मणं कृतवता हृतशल्यं ॥ ८१ ॥

कर्णेति । हे कृष्ण ते नमोऽस्तु । किम्भूताय । ते उरसि लग्ना इन्द्रजिन्मुक्ता शक्तिर्यस्य तं लक्ष्मणं द्रोणाचलानीतविशल्यकरीपधिप्रलेपेन हृतं निष्काशितं शक्तिलक्षणं शल्यं यस्य तादृशं कृतवता । केतनेन ध्वजस्यपताकारूपेण कपिना हनुमता कृत्वा कर्णस्य शक्तिमाङ्क्रिक बल, अथ च इन्द्रदत्तां शक्तिं अफलां कर्त्तुमिव सज्जितो योजितो अर्ज्जुनरथो येन तस्मै नरनारायणरूपाय । यो हि यत्र कर्म्मणि शक्तः स तत्र नियोक्तुमुचित स हनूमान् शक्तिविफलीकरणे दृष्टप्रभावस्तस्मात् कर्णशक्तिविफलीकरणार्थमिवाऽर्ज्जुनरथे त्वं स्थापितवानसीति भक्तवत्सलाय तुभ्यं नम इत्यर्थः । यो मर्मभूता उरःस्थितां शक्तिं विफलीकरोति सम्रथस्था सुतरां विफलीकरोत्येवेति उत्प्रेक्षोक्तिः, खलु इवार्थे. उरसि शक्ति. अमूर्द्धमस्तकादिति अलुक् (पा०६।३।१२) ॥ ८१ ॥

नापगेयमनघः सशरीरं द्यां वरेण नितरामपि भक्तं । मा स्म भून् सुरवधूसुरतज्ञो दिव्यपि व्रतविलोपमियेति ॥ ८२ ॥

नेति । हे कृष्ण त्वं नितरां भक्तमपि आपगेयं भीष्मं सशरीरेण प्रमादेन एत्या इति विचार्य्य कारणात् वा द्यां स्वर्गं न अनय न प्रापितवानसि । इति किं । स भीष्म अनेन शरीरेण सुरतं न करिष्याम्यद्यप्रभृति मम ब्रह्मचर्य्यमिति नियमवान् अतस्य व्रतलोपाङ्गीतस्या भिया हेतुना दिव्यपि स्वर्गेऽपि सुरवधूनां रम्भादीनां सुरतज्ञो मा भूत् इति । भक्तजनस्य वरदानेन यद्यपि तेनैव शरीरेण स्वर्गप्रया

समर्पितं तथाऽपि तस्य शरीरस्य स्वर्गप्रापणेऽपि न कोऽप्युपयोगस्तेन तच्छरीरस्यातितुच्छत्वात् तच्छरीरं विनाश्य यत् स्वर्गमनयः न तु तुच्छशरीरसहितस्य प्रापणं तवाशक्तिरिति भावः । यद्वा मुक्तेरतितुच्छत्वाच्छरीरं विनाश्य मुक्तिमेव प्रापितवानिति हेतुः । प्रापणय अपत्यार्थे स्त्रीभ्य इति (पा०४।१।१२०) ढक् ॥ ८२ ॥

घातितार्कसुतकर्णदयालुर्जैत्रितेन्दुकुलपार्थकृतार्थः । अर्द्धदुःखसुखमभ्यनयस्त्वं साश्रुभानुविहसद्विधुनेत्रः ॥ ८३ ॥

घातितेति । अर्कसुतेन प्रयोज्येन समरे घातितो योऽर्कसुतः कर्णस्तस्मिन् विषये दयालुः सकरुणः । तथा स्वसामर्थ्येन जैत्रितो जेता कृतो हतशत्रुः इत्यर्थः । इन्दुकुलं सोमवंशभूतः पार्थोऽर्जुनस्तेन कृत्वा कृतार्थः सम्पादितावतारप्रयोजनः कृतकृत्यत्वात् सहर्षः, अत एव क्रमेण साश्रुः पुत्रशोकवशाद् रुदन् भानुः सूर्यः पुत्रविजयाद् विशेषेण हसन् हर्षानुभवं कुर्वन् विधुश्चन्द्रः तावेव दक्षिणवामनेत्रे यस्य एतादृशः त्वं यथाक्रमं अर्द्धदुःखं अर्द्धसुखञ्च अभ्यनयः, अभिनयेन युगपद्दर्शयामासिथ । परमार्थतोऽविद्यमानमभ्यनाट्यविद्याविलासाद्विनाटितवानसीत्यर्थः । सूर्य्यचन्द्रयोर्विष्णुनेत्रत्वात् कर्णस्य च सूर्य्यपुत्रत्वात् नाशे शोकात् सूर्यस्य साश्रुत्वं अर्जुनस्य च सोमवंशत्वात् तद्विजये चन्द्रस्य हर्षेण विहसितत्वात् ताभ्यामर्द्धसुखदुःखाभिनयेन अर्द्धसहर्षोऽसीति भावः । घातितेति हेतुमण्ण्यन्तान्निष्ठा । जैत्रितेति तत् करोतीति (पा०३।१।२६वा०) ण्यन्तान्निष्ठा । पार्थेति कुरुत्वात् ऋष्यन्धकेत्यण (पा०४।१।११४) अर्द्धञ्च तद् दुःखसुखे इति द्वन्द्वगर्भः कर्मधारयः ॥ ८३ ॥

प्राणवत्प्रणयिराधनराधापत्रशात्रुसरसता मदृशी ते । श्रीप्रियस्य सदृशैव तव श्रीवत्समात्महृदि धर्तुमजस्रं ॥ ८४ ॥

प्राणेति । प्राणवत् प्रणयिनी निरुपाधिपरप्रेमास्पदं राधाख्या गोपिका यस्य तत्सम्बुद्धौ हे श्रीकृष्ण ! ते तव राधापुत्रः कर्णः तस्य शत्रुरर्जुनस्तस्मिन् तन्मैत्री सदृशी योग्या न । राधावल्लभस्य हि राधापुत्रशत्रुमैत्री कथङ्कारमुचिता, अपि तु अयुक्तैव विरोधादित्यर्थः । अत्र राधा गोपिका अन्यत्र तु कर्णपालनकारिणी कैवर्तवधूरिति परिहारः । श्रियः प्रियस्य श्रीवल्लभा यस्य वा तस्य तव श्रीवत्स आश्रयः दन्यापि कृपालाञ्छन । अथ च श्रिया वत्स पुत्रस्तत्त्वं आत्महृदि तु मदृगीव उचितमेव, यस्य श्रीवल्लभा स तत्पुत्रं त्वयत्नसि सदा विभर्तीति युक्तमेवेत्यर्थः । एतादृशः स्वपक्षपातदक्षो लोकशिक्षार्थं आप्तस्वभक्तिवरदः कोऽपि नास्तीति भावः । प्रणयिराधेति स्त्रियाः पुंवदिति (पा० ६ । ३ । ३४) ॥ ८४ ॥

तावकापरतनोः सितकेशस्त्वं हली किल स एव च शेषः । साऽवसाऽवतरस्तव धत्ते तज्जराचिकुरनालविलसं ॥ ८५ ॥

तावकेति । हे श्रीकृष्ण हली लाङ्गलधरो बलभद्रः स एव च शेषो ऽनन्तस्त्वमेव शेषावताररूपोऽपि बलभद्रो भवानेव न तु न त्वत्तो भिन्न इत्यर्थः । त्वं बलभद्रः स एव शेषः त्वत्तो हली न भिद्यते । हलिनश्च शेषो न च भिद्यत इति वा । यत कायस्य सम्बन्धाज्जरसा सितकेशः धवलितकच इत्यागमे । विष्णुपुराणादौ च यदुक्तं "उज्जहारात्मनः केशौ सितकृष्णौ ततः प्रभुः" इति । तव इयं तावकी न विद्यते परा उत्कृष्टाऽन्या यस्याः सा तावकी अपरा तनुस्त्वामन्यसिनो सर्वोत्कृष्टा मत्स्यमूर्तिस्तस्याः सितकेशः श्वेतकेशरूपो हली तव अवतारः अंशावताररूपोऽसौ हली त्व किल स्वदवयवभूतकेशरूपत्वात् तस्य, स च हल्येव शेष इति वा । शेषरूपबलदेवस्तत्त्वोऽसाववतारो मूर्तिः, एष यत्र तस्याः त्वदीयाया अपरतनोर्जरसा धवलीकृतस्य चिकुरजालस्य केशवृन्दस्य विलासं वर्णमाकृत्यं साधु यथा तथा धत्ते । अतिगौरो बलदेवस्त्वदीयापरतनुधवलकेश इव भातीत्यर्थः । केशस्या-

पि दीर्घत्वधवलत्वाभ्यां तराधवलदीर्घकेशमारूप्यधारणं युक्तमेव । का रणगुणा हि कार्ये गुणानारभन्त इति न्यायाच्च युक्तमेव । अत्र सतारो धवलकेशो इति पाठः । अत्र श्वेतकेशः सहज एव न तु जरायोगादिति वा । यतो हरिर्नित्यतरुण इति पुराणादिप्रसिद्धिः । वस्तुतस्तु कस्य ब्रह्मणुरस्य सदृशौ सुखस्वरूपावित्यर्थः । प्रकाशत्वेन शुक्लस्य सितत्व- स्वधाध्यत्वात् माहकत्वेन च तमसः कृष्णशब्दवाच्यत्वात् सितकृष्णौ सत्त्वतमोगुणद्वयात्मकावेतावेवतारौ भूभारोत्तारणार्थं प्रजुरादिन रावण स्वस्मात् प्रकटीचकारेति विष्णुपुराणस्थसितकृष्णपदस्यार्थः । "कृ- ष्णस्तु भगवान् स्वयं" इति श्रीभागवतवचनेन कृष्णस्तु लीलाविग्रहधारी परब्रह्मैव । "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय" इति भगवद्व- चनात् । बलभद्रस्तु अवतारः, रामो रामश्च रामश्चेति वचनात, अन्य- था बलभद्रस्य सत्त्वमूर्तित्वं कृष्णस्य तमोगुणमूर्तित्वं प्राप्नोत्, न च तथास्तीति बलभद्रस्य तत्र प्रधानत्वदर्शनादित्याशयः । शितिकेश इ- ति पाठे शिती धवलमेचकावित्यभिधानात् । त्वदीयपुराणनो स- म्बन्धी शितिकेशः श्यामकेशरूपस्त्वं हली च धवलकेशरूपः स एव च हलीति शेषः । बलभद्रः शेषावतार इति पुराणादौ । स त्वदीयधव- लकेशविलासः धत्ते तत्साधु । कृष्णस्य कृष्णवर्णत्वाद् हलिनश्चासितगौर त्वाद्यथा कमश्यामलितगौरत्वमौचित्यकत्वं नैव व्याख्येयमित्यलमति विस्तरेण । तावकापरेति पाठः साधीयान्, यतः युष्मदस्मदोरिति ख- ञि (पा०४।३।१) तवकादेशे सृष्टौ च यद्विमिमित्तस्यति (पा०६।३।३४) पु वद्भावप्रतिषेधे प्रसक्तेऽपि कस्य धारयत्वात् पुंवत्कर्मधारयेति (पा०६। ३।४२) प्रतिप्रसवात् पुंवद्भाव अवतर पूर्ववत् ॥ ८५ ॥

हृद्यगन्धवह ज्ञोगवतीश शापरूपमपि विग्रहशेषः । ज्ञोगभूतिमदिरार्कचरश्रीरुल्लसत्कुमुदबन्धुरुचिस्त्वं ॥ ८६ ॥

हृद्येति । हृद्यो हृदयानन्दकारी गन्धचन्दनादिसौरभं तं वहसि धा रयसितत्सम्बोधने हे एवंविधरम्यसौरभधारिन् श्रीकृष्णस्त्वं शेषरूप य-

लभद्ररूपं । अथ च नागाधीशरूपं बिभ्रन् धारयन्नपि अशेष उभयवि-
धोऽपि शेषो न भवसि इति विरोध अथ च न विद्यते शेषः शिष्ट-
भिन्नं यस्मात् असौ अशेष सकलजगदात्मकत्वमिति तत्परिहारः ।
अथ च बलभद्रोऽप्यतिशङ्करित्यादु हृद्यगन्धवह, अत एव भोगवती-
नां सुखीनां गोपिकादीनां ईशः प्राणप्रिय. । अथ च भोगवत्या अति-
तरां सुखिन्याः रेवत्या ईश पतिरिति । श्रीकृष्णोऽपि हृद्यगन्धशरीरं
स्वाभाविक चन्दनादिजन्यञ्च गन्ध वहतीनां भोगवतीनां सुखिनीनां
गोपिकादीनामीश । शेषोऽपि जलक्रीडाक्षालितचन्दनकर्पूराद्यङ्गराग-
सम्बन्धिहृद्यसौरभधारिण्याः भोगवत्या पातालनद्याः पति । कर्पूरा-
दिबहुलसौरभयुक्तायाः नागर्यां वा तत्सिद्धेतुत्वाद् हृद्यो गन्धवहो वायु-
र्यस्य स चासौ नागपुर्यां नद्या वा पति । तथा कलत्ररूपस्य भोग-
स्य सुखस्य भूतेर्हेतोः मदिरावत् रुचि सुख राति जनयति या तादृशी
श्रीःकायकान्तिर्यस्य स । भोग शेषफणा नरकायो वा स एव भू स्था-
नं तस्या रुति छायन स्वाधिष्ठानेन रमण तेन माद्यति हृष्यतीति भो-
गभूतिमत्तो । तथा इराया भूमेरिव रुचिरा रमणीया दूर्वादलश्यामला
श्रीः कान्तिर्यस्य स, स्निग्धश्यामलकायकान्तिरित्यर्थः । इरायाः भार-
त्या· प्रियायाः चरण्या वा रुचिरा रमणी श्री कान्तिर्यस्मादिति वा ।
तयोरुभयोः सदयुवारपि रुचि प्रीतिं ददाना समवर्तिनी श्री हृदिस्था
लक्ष्मीर्यस्येति वा । भोगानां कालियफणानां भूतिरैश्वर्यं जनितो दर्पः
स मत्तोऽस्ति तादृशो वा । पचाद्यच् । गोपिकादिसम्भोगसुखसमृद्धि-
र्भोगभूति तद्वान् स चासौ अक्रीत्या इराकृचिरश्रीश्चेति वा । अथ
च बलभद्ररूपस्य भोगस्य सुखस्य भूतिरुत्पत्तिर्हेतुः तादृशी या मदि-
रा तया कृत्वा रुचिरा रमणीया सरागा कान्ति शोभा यस्य । बलदे-
वो हि सर्वदा मदिरामत्तः । अथ च शेषरूपस्य भोगस्य स्वकायस्य
फणाना वा भूति. समृद्धि तद्वान् अतिदीर्घशरीरकाय. सहस्रफणासमृ-
द्धिमान् वा । तेन माद्यति स चासौ स्वशिरःसु धारणेन भूमेः रुचि-
राति ददातीति रुचिरा श्री. कायकान्तिर्यस्य स. । तथा कृष्णरूपस्य
जलमसौ कुमुदबन्धोः चन्द्रस्य सम्बन्धिनी रुचिः प्रीतिर्यस्मिन् तस्यां

ह्लादकारित्वाच्चन्द्र इव सत्वप्रेमास्पदभूत इत्यर्थः । कुमुत् श्वेत कैरव तस्य स्वबन्धु तद्विराधिनी कृष्णा रुचि श्रीयस्य जलदश्याम इत्यथ इति वा । उल्लसन्ती कुमुदाख्ये वानररूप सुहृदि रुचि प्रीतियस्य रा मावतारे इति वा । पृष्ठे दष्ट्राया वा उल्लसन्ती कु पृथ्वी यस्मिन्स द- न्त इति मुद स चासौ स च तथा बन्धुषु बन्धौ वा बलभद्रे वा रु- चि प्रीतियस्य स चासौ स चेति वा । उल्लसन्ती कुमुदतुल्येऽतिगौर बन्धौ बलभद्रे रुचि प्रीतिर्यस्यासि वा । उल्लसन्ति कुमुदानि येन स चन्द्र एव तद्दीपकत्वाद्र् यस्सुतस्य स प्रद्युम्नावतार काम तत्र रुचि पुत्रत्वात प्रीतियस्येति वा । अथ च बलभद्ररूपस्त्व उल्लसन्ती कुमुद बन्धु कैरवसदृशी गौरतरा कमुदबन्धोश्च द्रस्यत्र वा गौरतरा रुचि का न्तियस्य । उल्लसन्ती कु पृथ्वी यस्मात तस्मिन्मुदे सहर्षे बन्धौ स्वनुज श्रीकृष्ण रुचि प्रीतियस्य वा । उत्कर्षेण लसन् कुमुदबन्धु चाद्रश्चन्- द्र तस्यत्र रुचियस्य । उल्लसत् कुमुद्य यो उक्तप्रकारेण प्रद्युम्ने रु- चियस्येति वा । अथ च शेषरूपस्त्व उल्लसन्ती कुमुदना म्न सूर्ये सु- हृदि प्रीतियस्य । उल्लसन्ती चन्द्रस्येव धवला कान्तियस्य वा । उल्लस न्ती कुमुदस्य चन्द्रस्य बन्धु सदृशी कान्तियस्य वा । उल्लसत्पुण्डरीक सहय सुहृत्प्रीतियस्य वा । कुमुदेऽपि कुमुन्प्रोक्तमिति विश्व । गौरा कु पृथ्वी पृथ्वान्तर । भोग सुख वधे वाहे शरीरफणयोर्मत इ- ति विश्व । इरा वारिसुराभूमिभारतीषु इति च । इति । सवले क्तिमि वरस्यरेति (पा०६।४।९०) यस्यावधायाश्च ऊठि । मत् इति मा- द्यतमप्यतेश्च क्विपि । मुद इगुपधलक्षण क ॥ ८६ ॥

रेवतीद्वितयमा किल नीलस्याम्बरस्य रुचिरा
तनुभासा । कामपाल भवतः कुमुदाविर्भावना
वितरुचरुचितैव ॥ ८७ ॥

रेवतीति । हे रेवतीनाम्न्या प्रियाया इश, तथा हे कामपाल पूरक कु पृथ्वी तस्या मुदा हर्षस्याविर्भावेन प्रादुर्भावेन भाविता रु- च्यारिता रुचि प्रीतिरिच्छा वा यस्य तस्य भवतः श्रीकृष्णतनुश्यामा कायकान्त्या कृत्वा नीलाख्य अम्बरस्य तत्तुल्यस्येत्यथ । तव रुचिरा

शोभना लोकानां रुचिं प्रीतिं ददाना या । रेवतीशसुषमा चन्द्रमस्य-म्बिनीपरमा शोभा उचितेव किल । आकाशस्य चन्द्रशोभा उचितेव । अथ च बलभद्रस्वरूपत्वाद् रेवतीशसुषमा बलभद्रस्य परमशोभा उचि तेव । किम्भूतस्य । कुः पृथ्वी तस्या मुदस्य हर्षस्य आविर्भावेन प्र-कटनेन भाविनी त्रिलोकानां रुचिः प्रीतिर्येन । कुमुदस्य चन्द्रस्य आ-विर्भावेण या । अथ च रेवतीनाम्नी प्रिया सदृशी । तथा हे कामपा-ल बलभद्र कुः पृथ्वी तस्या मुदस्य हर्षस्याविर्भावेन प्रादुर्भावेन भा-विता सञ्चारिता रुचिः प्रीतिरिच्छा वा यस्य तस्य भवतः तव तनु-भासा कायकान्त्या नीलस्याम्बरस्य वस्त्रस्य रुचिं दीप्तिं राति ददाति एवंविधा सुषमा उत्कृष्टशोभा उचिता योग्यैव किल । चवलवस्तुस-म्पर्कान्नील अतिशयेन शोभते । अथ च हे कामपाल कन्दर्पपोषक रेवतीश चन्द्रकुमुदानां कैरवाणां अविकासेन भाविता स्फुरिता रुचि-कान्तिः प्रीतिर्वा यस्य भवतः तनुभासा विम्बतेजसा नीलस्य अम्बरस्य आकाशस्य सुषमा परमा शोभा उचितैवेति ध्वनिः ॥ ८७ ॥

एकचित्ततिरद्वयवादिन् न त्रयीपरिचिताध्वबुधस्त्वं । पाहि मां विधुतकोटिचतुष्कः पञ्चबाणविजयी षडभिज्ञः ॥ ८८ ॥

चतुर्भिः श्लोकैर्बुद्धं वर्णयति ॥ एकेति । हे अद्वयवादिन् द्वैतवाद्य-पटपटादिभेदानामसत्यतया प्रतिपादनेनैकस्य ज्ञानाकारस्यैव सत्य-ताङ्गीकाराद्द्वैतवादिन् त्वं मां पाहि । किम्भूतः । एकैव चित्ततिः ज्ञानसन्ततिर्यस्य दीपकलिकान्यायेन क्षणिकज्ञानप्रवाह एवैकोऽस्य म-तेन तु तदतिरिक्तं न किञ्चिदप्यस्ति तादृश । अत एवाद्वयवादि-न्निति योजना । तथा त्रय्या अपरिचितो ज्ञातस्तादृशो न भवसीत्यत्र-यीपरिचितो नञ् समासो वा । नेति पृथग्वा । वेदत्रयीगम्योऽपि न भवसीत्यर्थः । अथ च वेदत्रय्या परिचितः कृतपरिचयः वेदत्रयी परि-चिता अभ्यस्ता येन तादृशो वा न भवसि । सर्वस्य क्षणिकताङ्गीका-रात्कर्माधर्माभावव्यवस्थाया निरासादनङ्गीकृतवेदप्रामाण्य इत्यर्थः । अत एव बुध पण्डितः । न हि पण्डित विना वेदादिप्रामाण्यदूषण-

यां त्रय्यश्च बुद्धिः सम्भवति । अथ च त्रय्योपरिचितोऽपि बुध इति विरोधाभासः । न हि वेदत्रयमजानानस्यापि पण्डितत्वं सम्भवति । अथ च यः पण्डित एकमेवाद्वितीयं ब्रह्मेति मन्यमानो वेदान्ती स वेदत्रयीं न मन्यत इति विरोधः । वेदान्तिना हि वेदप्रामाण्यस्य स्वीकृतत्वात् । अथ च षड्दर्शनाद् द्वित्वसङ्ख्यामपि यो नाङ्गीकरोति स त्रित्वसङ्ख्यां न मन्यत इति युक्तमेवेत्यर्थः । तथा माध्यमिकानामपि किञ्चिन्मात्रमतभेदेन बौद्धसिद्धान्तपातित्वात् ।

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
*चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

इति । अनिर्वचनीयप्रपञ्चवादित्वाद् विवृतं निराकृतं सत्, असत्, सदसत्, तद्विलक्षणं, कोटिचतुष्कं प्रकारचतुष्टयं येन, अथ च *त्रित्वनिषेधान्निरस्तचतुष्टय, तथा विरुद्धत्वाद्विगम्बरस्यापि पञ्चतया कामस्तद्विजयी मारजित्, अथ च पञ्चशर्मेत्यस्मात् पञ्च बाणशरः । तं पञ्चसङ्ख्यावाचिनं पञ्चशब्दं न सहत इत्यर्थः । यो हि चतुष्टयं न सहते स पञ्चापि न सहत इति युक्तमेवेत्यर्थः । तथा देशाद्यव्यवहितवस्तुदर्शनं देशाद्यव्यवहितशब्दश्रवणमतीतजन्मानुस्मृतिस्मरणं परचित्तज्ञानमविद्यास्मितारागद्वेषाभिनिवेशाख्यपञ्चक्लेशक्षयः, अणिमादिसिद्धिश्चेति षडभिज्ञा ज्ञानप्रकारा यस्य स षडभिज्ञः । वेदानुसारिभिर्दैत्यैः पराभूता देवा ब्रह्माणं शरणं गताः, ब्रह्मणः प्रसादितो नारायणो बुद्धरूपेणावतीर्य दैत्यबुद्धिं वेदार्थेभ्यश्च्यावयित्वा बौद्धमतमुपदिदेश, ततस्तु देवानां जयः सम्पन्न इति । अत एव चैतदीयमतपरिभावयैव स्तुतिरकारि । परिचिता अप्ययुः बुधस्त्वमिति पाठे नेति पदं भित्त्वा त्वया वेदत्रयी न परिचिता न स्वीकृतमानाज्ञा । आप्त्यविरोधः । तथापि बुधस्त्वमित्यर्थः । परिचिताध्वबुध इति पाठे त्रयीपरिचितानां वैदिकानामध्वनि मार्गे बुधः पण्डितो न भवसि अवैदिकमार्गमेव जानासीत्यर्थः ॥ ८८ ॥

तत्र मारजयिनि त्वयि साद्रं स्तुवति क्षणिक
तात्मनिषधौ । पुष्पवृष्टिरपतत् सुरहस्तात् पु

* चतुष्कोटीति पाठान्तरम् ।

प्यशस्त्रशरसन्ततिरेव ॥ ८९ ॥

तत्रेति । तत्र तस्मिन्नवतारूपे सौन्दर्य्याज्जितेन्द्रियस्यास्य मारजयिनि कामस्य जैत्रे त्वयि साक्षिकता, सर्व्वं साक्षिकं मरणात्, तथा आत्मनिषेधश्च, "समनस्केन्द्रियजन्यनीलपीताद्याकारसविकल्पकनिर्विकल्पकयासमोपहितचित्सन्ततिरेवात्मा, भूतान्येव चेतयन्ते मनसा संयोगेन ज्ञानमुत्पद्यते, तस्मादिह एवात्मा न तु नित्योऽन्यः कश्चित्" इत्यादिप्रकारेण सर्व्वभावाना, क्षणमात्रावस्थायिना नैरात्म्यस्य स्वदर्शनोक्तसमाधिना साक्षात् कुर्व्वति सति पुष्पशस्त्रस्य कामस्य शरसन्ततिव्रीणपरम्परारूपा सुरहस्तात् पुष्पवृष्टिरेवापतत । अभिबल हि शत्रौ भीतानां करादायुधानि पतन्ति । कामोऽपि त्वत्तो भीतः, पुष्पशरश्च तया च तस्य करात् त्वद्भयेन पतिता पुष्परूपबाणपरम्परा क्षणिकतात्मनिषेधौ साक्षात् कुर्व्वति त्वयि विषये सुरमुक्ता पुष्पवृष्टिरिवापतदित्युत्प्रेक्षा । कामोऽपि देव तव पुष्पवृष्टिमोचने हेतुः । यो हि लोकोत्तरं वस्तु प्रत्यक्षगोचरं करोति यश्च कश्चन विजयते तयोरुपरि दैवैः पुष्पवृष्टिः क्रियत इत्यादि ज्ञातव्यं ॥ ८९ ॥

तावके हृदि निपात्य कृतेयं मन्मथेन दृढधैर्य्यतनुत्रे । कुण्ठनादतितमां कुसुमानाञ्छत्रमित्रमुखतेव शराणां ॥ ९० ॥

तावक इति । मन्मथेन दृढमभेद्यं धैर्य्यमेव तनुत्रं कवचं यस्य तस्मिंस्तावके हृदि मनसि अथ च वक्षसि अर्पात शरान् निपात्य नितरां दृढपातपूर्व्वं यथा तथा पातयित्वा दृढतनुत्रत्वादेव अतितमां कुण्ठनात् तैक्ष्ण्यत्यागादेभिः कुसुमरूपाणां शराणां छत्र मित्रस्य येषां तानि, छत्रस्य वा मित्राणि मुखानि येषां ते अग्रस्थादिशकलितमुखाः तेषां भावस्तत्ता सूचीमुखतापरित्यागेन छत्रतुल्यवृत्तमुखतैव प्रत्यक्षदृश्या कृता । दृढतनुत्रे हि पतितो बाणः कुण्ठितत्वाद्वृत्तमुखो भवति । स्मारशराः शरत्वात् पूर्व्वं सूचीमुखा आसन्, इदानीं धैर्य्यकञ्चुके त्वदीये हृदि निपात्य नितरां कुण्ठनादेव तेषां पुष्परूपाणां शराणां छत्राकारमुखता जातेत्युत्प्रेक्षोपमा वा । विकसितानि पुष्पाणि छत्र-

तुल्यानि भवन्ति। अथ च छत्रं छायाकारित्वात् सुखदमेव न तु दुःखदं यथा तथा कामशरा अपि रुद्रहृदयस्य निर्वापका एव जाता, न तु त्वां जेतुमशकन्नित्यर्थः। एतादृशो जितेन्द्रियः कोऽपि नास्तीति भावः। निपात्य यणन्तात् क्यप् ॥ ९० ॥

यत्तव स्तवविधौ विधिरास्यैश्चातुरीं चरति तच्चतुरास्यः। त्वय्यशेषविदि जाग्रति शर्वः सर्वविद्ध्रुवतया शितिकण्ठः ॥ ९१ ॥

यदिति। विधिः तव स्तवविधौ स्तुतिविधौ बहुभिरास्यैर्मुखैः चातुरीं वैदग्ध्यं यद् यदि चरति प्राप्नोति नानाप्रकारैर्यदि वर्णनं करोति तत् तदैव। चतुराणि वर्णननिपुणानि आस्यानि यस्य वा तादृशो भवेत्नान्यः। अथ च त्वद्वर्णनविधौ यस्माच्चातुरीं प्राप्नोति तस्मादेव हेतोश्चतुराण्यास्यानि यस्येति चतुरास्यो न तु चत्वार्यास्यानि यस्येति विग्रहेण चतुरास्यः। आस्यानां चतुष्टं सत्यपि तत्रार्थे गौरवाभावात्, अत्र तु गौरवसद्भावात् तथैवोच्यत इत्यर्थः। त्वदीयस्तुतिपरत्वाद् ब्रह्मणो लोकत्रयेऽप्येव कीर्तिरजनीति भावः। तथा शर्वो हरः त्वयि बुद्ध एव अशेषविदि सर्वज्ञे जाग्रति सति सर्वविदं सर्वज्ञमात्मानं ब्रूते स सर्वविद्ध्रुवत्तयैव। परगुणस्यात्मन्यारोपणेन हेतुना कलङ्केन शितिकण्ठो नीलकण्ठः न तु कालकूटभक्षणेन नीलकण्ठः त्वत्स्पर्धितया लोकत्रयेऽपि महेशस्य एवमपयशो जातमित्यर्थः। ब्रह्ममहेशाभ्यामपि सकाशात् त्वमेव परमपुरुषः सर्वज्ञश्चेति भावः। अन्यस्य यथाऽऽत्मस्तुत्या सर्वज्ञसन्निधौ लज्जया मालिन्यं भवति ९१

धूमवन्नु कलयता युधि कालं म्लेच्छकल्पशिखिना करवालम्। कल्किना दशमतयं मम कल्कं त्वं व्युदस्य दशमावतरेण ॥ ९२ ॥

श्लोकद्वयेन कल्किनं स्तौति॥ धूमवदिति। त्वं धूमवत्कालं करवालं खड्गं युधि म्लेच्छैः सह युद्धे कलयता धारयता कालं मृत्युरूपं करवालं खड्गं धूमवद् धूममिव धारयता वा। अत एव म्लेच्छानां

फलशिखिना प्रलयकालानलरूपेण म्लेच्छा एव म्लेच्छाः पातकिनस्तेषां वा, म्लेच्छप्रायाणां वा, एवम्भूतेन कल्किना कल्किमूर्त्त्या दशमावतारेण कृत्वा मम दृशनं दशावयवकं कल्कं पाप क्षुद्रस्य निराकुरु समूलमुन्मूलयेत्यर्थः । अथ च यः स्वयं कल्की सोऽन्यकल्कं विनाशयतीति विरोधः, कल्किशब्दस्य विष्णुनामत्वात् तत्परिहारः । म्लेच्छकरवशिखिनेत्यवतारप्रयोजनमुक्तं । अदत्तस्य वस्तुनः स्वयं ग्रहणं, पाणीयातिरिक्ता हिंसा, परस्त्रीगमनञ्चेति त्रिविधं कायिकं । पारुष्यं, अनृतं, पैशून्यं, असम्बद्धप्रलापञ्चेति चतुर्विधं वाचिकं । परद्रव्येष्वभिध्या, पराऽनिष्टचिन्ता, वृथैव परेषु दोषाभिध्यानञ्चेति त्रिविधं मानसं । इति दशविधं पापं । चक्षुस्त्वक्श्रोत्रघ्राणजिह्वापाणिपादपायूपस्थमनोजन्यं वा दशसु मासेषु भवतीत्याहुः गर्भवासलक्षणं दुःखमिति वा । कल्कः पापाशये पापे, इति विश्वः ॥ ९२ ॥

देहिनेव यशसा भ्रमतोर्व्यां पाण्डुरेण रणरेणुभिरुच्चैः । विष्णुना जनयितुर्भवताऽभून्नाम विष्णुयशसश्च सदर्थं ॥ ९३ ॥

देहिनेति । हे कल्किन् विष्णुयशस्तदाख्यस्य जनयितुः पितुः विष्णुरितिनाम भवतैव त्वयैव कृत्वा सदर्थं सान्वयमभूत् । किम्भूतेन भवता । रणरेणुभिरुच्चैः पाण्डुरेण धवलतरेण शरीरधारिणा तथा दुष्टगवेषणार्थं उर्व्यां भ्रमता विष्णुना व्यापकेन विष्णुनामकेन च पाण्डुरत्वाद् व्यापित्वाच्च देहिना शरीरधारिणा यशसेव यशोरूपेणेव विष्णु व्यापकं यशो यस्य त्वया पुत्रेणेति यावत् । तस्य तव पितुर्नाम सान्वयमभूत् तत्प्रायमेवेति भाविन्यपि भूतवदुपचारः । अतीतकलियुगावतारापेक्षया अभूदिति निर्देशो वा । पूर्वं तु हित्यादिवत्तस्याभूत् स्वप्युपपत्तौ तु सार्थकमभूदित्यर्थः ॥ ९३ ॥

सन्तमद्वयमयेऽध्वनि दत्तात्रेयमर्जुनयशोऽर्जुनबीजं । नौमि योगजनितानघसञ्ज्ञं त्वामलर्कभवमोहतमोऽर्कं ॥ ९४ ॥

मन्तमिति । दत्तात्रेय स्तौति । अहं दत्तात्रेयनामानं त्वां नौमि । किम्भूतं । अद्वयमपेऽध्यानि अद्वैतमार्गे सकलस्यवादे मन्तं वर्तमानं । तथा अर्जुनस्य कार्त्तवीर्य्यार्जुनस्य यशसो यदर्जनं तस्य च ज मूलं । पूर्व कार्त्तवीर्य्येणाराधिता दत्तात्रेय, तव यशो लोकत्रयव्यापि भविष्यतीति वरं दत्तवान् । अर्जुनं इति पाठ अर्जुनयशः एव अर्जुनवृक्षस्तस्य बीजं । यशस्यात्पत्तिबीजादेव युक्ता । यद्वा अर्जुनं धवलं यशो यस्य एवंविधाऽर्जुनं कार्त्तवीर्य्यस्तस्य बीजं । तथा योगेनाहूत्र्योगेन जनिता उत्पादिता मायादिराहित्यादमघ इत्यपरा सञ्ज्ञा यस्य तदा हि देवैर्योगबाहुल्यादनघेति सञ्ज्ञा कृता । अलर्कनाम्न ऋतुध्वजमदालसापुत्रस्य राज्ञः अवमाहो ममतादिरूपं तमामोह म एव तमाऽन्धकारं तस्य विनाशहेतुत्वादर्कस्तं । योगोपदेशेन तस्य मोहं चिच्छेदेति पुराणकथा ॥ ९४ ॥

भानुसूनुमनुगृह्य जय त्वं राममूर्त्तिहतवृत्रहपुत्रः । इन्द्रनन्दनमपक्षमपि त्वां नौमि कृष्ण निहतार्कतनूज ॥ ९५ ॥

एवं दशावतारानभिवर्ण्य भक्त्यतिशयेन पुनरपि कियतस्तानेवावताराम् त्रिविक्रम हरिहरौ बालमुकुन्दञ्च सद्रूपम चतुर्विंशतिश्लोकैर्वर्णयति । भानुसूनुमिति । हे विष्णो भानुसूनुं सूर्य्यपुत्रं सुग्रीवमनुगृह्य बालिनं हत्वा तद्वधूं तारां तस्मै दत्वा राज्याभिषेकद्वारा कृतार्थीकृत्य राममूर्त्या रामावतारेण हतो मारितो वृत्रहस्य इन्द्रस्य पुत्रः वाली येन स त्वं रामो जय उत्कर्षेण वर्त्तस्व । नमस्योऽसीत्यर्थः । तथा भावतारे अहं इन्द्रनन्दनस्य अर्जुनस्य सपक्षं मित्रभूतं अत एव निहतो मारितोऽर्कतनूजः कर्णो येन तं त्वामपि नौमि स्तौमि । अविशब्दाद्रामत्वमपीत्यर्थः । कालेन अर्जुनेन कृत्वा निहतोऽर्कतनूजो येनेति वा । यो भानुसूनुमनुगृह्णाति स निहतार्कतनूजः । कथं । तथा या हतेन्द्रपुत्रः स इन्द्रपुत्रमित्रं कथमिति विरोधार्थोऽपिशब्दः । तियाद्यानुग्राह्ययास्तत्पुत्रयोरामकृष्णावतारयोश्च भेदाद् विरोधपरिहारः । यतादृग्विरुद्धचरितत्वाद् दुर्विज्ञेय । परमपुरुषोऽसीति भावः ॥९५॥

वामनादणुतमादनु जीयास्त्वं त्रिविक्रमतनूभृत दिक्कः । धीतहिंसनकथादथ बुद्धात् कल्किना हतसमस्त नमस्ते ॥ ९६ ॥

वामनादिति । वामनकल्की वर्णितौ । हे विभो अणुतमात् ह्रस्वतमशरीरात् वामनात् वामनावतारादनु पश्चात् त्रिविक्रमस्य त्रिविक्रमावतारस्य तन्वा शरीरेण, त्रिविक्रमावतारतन्वा वा तया भृता व्याप्ता दिशो येन स त्वं जीयाः, सर्वोत्कर्षेण वर्तस्व । त्रिविक्रमेति सम्बुद्धिर्वा । तथा धीता निरस्ता हिंसनकथा प्राणिवधवार्ताऽपि यस्मादेवम्भूतात् बुद्धावतारात्, अथ पश्चात् कल्किना दशमावतारेण हत्वा हतं मारितं कलिमलदूषितं समस्तं प्राणिजातं येन तादृशविभो ते तुभ्यं नमः । यो ह्यणुतमः स तनुभृद्दिक्को व्यापकदेहः कथं । तथा यश्च धीतहिंसनकथः स एव हतसमस्तः कथमिति विरोधः । अवतारभेदेन परिहार इति भावः । वामनत्रिविक्रमौ वर्णितौ ॥ ९६ ॥

मा त्रिविक्रम पुनीहि पदे ते किं लगन्नजनि राहुरपानत् । किं प्रदक्षिणनकृद्भ्रमिपाशं जाम्बवानदित ते बलिबन्धे ॥ ९७ ॥

मामिति । हे त्रिविक्रम त्वं मां पुनीहि, तथा गगनव्यापिनी ऊर्ध्वीकृतं ते पदे विष्णुपदे लगन् नक्षत्रमालामध्यवर्ती ग्रहरूपो राहुरपानत् पादत्राणमिव जातः किं । एतावदतिमहच्छरीरं धृतं । यस्य चरणस्थाने गगनस्थो राहुरुपानदिव जात इत्यर्थः । सोऽपि ग्रहो चरणे च लगति । तदा प्रदक्षिणं प्रदक्षिणाख्यं षोडशमुपचारं कुर्वन् जाम्बवान् ऋक्षराजो ब्रह्मावतारो बलिबन्धननिमित्तं ते तुभ्यं भ्रमिपाशं भ्रमणकृद्वलयाकारवेष्टनमेव पाशं बन्धनरज्जुमेव अदित दत्तवान् किं । यो हि कश्चिदुपद्रुतमुपक्रमते तस्मै कश्चित् पाशो दीयते । यद्यपि दैवेन च बलिर्योग्यस्यैव प्रापितो न तु रज्ज्वादिबन्धनं तथाऽपि लोके यद् इति प्रसिद्धिवशाद् बन्धशब्दश्रवणेन कविः मार्गि मार्गि एवं प्रायुङ्क्त । जाम्बवान् किल तदा त्रिविक्रमाय षोडशोपचारपूजा

मकरोतीति प्रयाद । अत्रापि त्रिविक्रमो वर्णित. । द घ इति पाठे तृजन्त द्रु-धेयतुर्यो । ते इत्यस्य विशेषण । वन्ध इति पाठे तस्मादेव मम्युद्दि ॥ ९७ ॥

छद्र्धचक्रवपुपाऽर्ज्जुनबाहून् यो लुनात् परशुना ऽपि सहस्रं । तेन किं सकलचक्रविलूने बाणबाहुनिचये ऽश्वति चित्रं ॥ ९८ ॥

अर्द्धेति । यो जामदग्न्यो यथात् चक्रस्य ह्र मसो भागस्तस्येव वपु स्वरुप यस्य तदाकारेण परशुना कृत्वा सहस्रमपि नवाहून् शीघ्रमेव अलुनात् चिच्छेद । तेनैव भवता सकलेन सम्पूर्णेन चक्रेण सुदर्शनाख्येन विलूने छिन्ने बाणासुरबाहुनिचये विषये लोकचित्रमाश्चर्यमद्युति किं, अपि तु न प्राप्नोति । अथ च किमश्चति किमिति प्राप्नोति, अपि तु वृथैव तत् । येन पूर्वं एकस्य बाहुसहस्रं छिन्न तनैव यदान्यस्य बाहुसहस्रं छिन्नं न किञ्चिच्चित्र तस्य तत्र क्रमप्रशंसित्वादित्यर्थं । येन च अर्द्धेणैव चक्रेण बाहुसहस्रं छिन्नं तेन समग्रेण चक्रेण बाहुसहस्रे छिन्ने पुनरा न किञ्चिच्चित्रमित्यर्थः । परशुरामकृष्णौ वर्णितौ ॥ ९८ ॥

पाञ्चजन्यमधिगत्य करेणापाञ्चजन्यमसुरानि व वह्निः । चेतनाश्च किल पश्यत किं नाचेतनोऽपि मयि मुक्तविरोधः ॥ ९९ ॥

पाञ्चजन्यमिति । हे विष्णो त्वं वामकरेण पाञ्चजन्यनामानं शङ्खमधिगत्य धृत्वा तया अपा जलानां जन्यत्वं उत्पाद्य कमलवद्दक्षिणकरे इत्वा असुरान् दैत्यान् इति वदीय रतिवद्दर्शय । इति किं । हे दैत्या अचेतनोऽपि अयं शङ्खः मयि विषये मुक्तविरोध किं न, अपि तु त्यक्तविरोध एव । किल यस्मात् पाञ्चजन्यत्वे सत्यपि अपाञ्चजन्यत्वमङ्गीकरोतीति यूय पश्यत । यत सचेतना यूय चैतन्ययुक्ता वर्तध्वे कस्मान्मयि विषये विरोध कुरुथेति । अचेतना अपि मयि विरोध नाचरन्ति किमुत मरणभीताः सर्वथा, तस्मान्मयि विरोध

मात्सारुद्व । प्रश्न एव विरोधोऽर्थद्वयेन तत्परिहार: । अथ वा मचेतन एव मयि मुक्तविरोध शङ्खवत्, यूयं तु मचेतना स्थ त-स्मान्मयि विरोध माऽऽचरथेति शङ्खवद्भवतोऽपि यावदचेतनात्न बुध्ये तावद्विराधो न त्यज्यत इति । अथ च अचेतनोऽपि शङ्खो मयाऽद्या पि न माच्यते अचेतनास्तु शङ्खादयो भवन्त कथ वा मया मोच्यरन्, अपि तु युष्मान् नारविन्द्यास्यवति यतीत्यथ । अभिगत्य च अभिग-त्यैथति पक्षे सम्बन्ध । अचतनोऽपि मयि मुक्तविरोध किं न पश्य-तेति वा । अपामिति कृत्यानां कर्तरि (पा०२।३।७१) इति षष्ठी ॥९९॥

तावकोरसिलसद्बुनमाले श्रीफलद्विफलशालिक येव । स्थीयते कमलया त्वदजस्रस्पर्शकण्टकि तयोत्कुचया च ॥ १०० ॥

तावकेति । कमलया लक्ष्म्या लसन्ती पत्रपुष्पफलमयी माला वन-माला यस्मिंस्तस्मिंस्तावकोरसि श्रीफलस्य बिल्ववृक्षस्य द्विफलशालि-कयेव फलद्वययुक्तया कुक्षवीमलशालयेव स्थीयते । किंभूतया श्रिया । तव अजस्र अनवरत स्पर्श आश्लेषस्तेन कण्टकितया सञ्जातमाक्षिक-रोमाञ्चया, तथा उत्कुचया च उन्नतपीवरस्तनया च । यत्र हि व-नाना माला पङ्क्तिर्विलसति तत्र सकण्टकया फलसहितया च बि-ल्वशाखया स्थायते । तथाऽपि लसद्वनमालस्याद्विश्रिया लक्ष्म्या विशिष्टबिल्वशाखयेव स्थीयत इत्युपमानिमेत्रा वा । शालिका । अल्पे इति ह्रस्वे इति वा ( पा० ५ । ३ । ८५ । ८६ ) कं ॥ १०० ॥

त्यज्यते न जलजेन करस्ते शिक्षितुं सुभगभू यमिवोच्चै: । आननञ्च नयनायितमित्र: से वते कुमुदहासकराशः ॥ १०१ ॥

त्यज्यत इति । जलजेन शङ्खेनाब्जेन च पद्मेन ते कर कदाचिदपि न त्यज्यते भवत्कमलहस्तत्वात् तथैवेत्यर्थः । तत्राप्युत्प्रेक्षते । उच्चैरत्यन्त सुभगभूय सौकर्यमनगोहरत्वादिगोभाग्य शिक्षितुमिव । सुभगस्य हि विद्याया हेतुः । तथा कुमुदहासकर: कैरवविकासकारिणोऽशवो य-

र्थानामपि वादिनां त्वत्समाधिरेव सिद्धान्त इत्यर्थः । मुक्तिहेतुस्त्वमेवेति भावः । न तावत् स्फुरतीति वा ॥ १०४ ॥

ऊर्ध्वदिक्कदलनाद्विकार्यौ किं तनू हरिहरौ भवनाय । किञ्च तिर्यगभिनो नृहरित्वे कः स्वतन्त्रमनु नन्वनुयोगः ॥ १०५ ॥

ऊर्ध्वेति । हे विभो त्वं हरिहरौ भवनाय अहरिहरयोरपि हरिहरयोर्भवनाय हरिहरमूर्तीन्वितुं ऊर्ध्वो दिग्यस्मिन् तदूर्ध्वदिक्कमेवम्भूतं दलनं विभागो यस्यास्ताद्रूशौ तनु द्वि प्रकार किं किमर्थमकार्षीः हरिहरमूर्त्तौ चरणादिमूर्द्धपर्यन्तं तत्र द्विमद्भागयोर्विधारयोऽधोभागमारभ्योर्ध्वभागपर्यन्तं किमर्थमकार्षीः । नृहरित्व इव तिर्यग्विभागमेव किमिति नाकार्षीरित्यर्थः । चरणादेशरस्य देवताश्रयणस्य कर्तुं युक्तत्वादूर्ध्वदिकेत्युक्तं । यदि च हरिहरतनु स्वमूर्द्ध्वदिक्कविभागमकार्षीस्तर्हि नृहरित्वं च नरहरीभवितु तिर्यग्यथा तथा किमित्यभिन्न विभक्तवान् । कण्ठादधोभागे नरत्वेन ऊर्ध्वभागे सिंहत्वेनैव तिर्यग्दिक्कविभागं किमित्यकार्षीः । हरिहरस्य इव ऊर्ध्वदिक्कविभागमेव किमिति नाकार्षीरित्यर्थः । अथ स्वपक्षे स्वयमेव परिहरति । ननु भो विभो स्वतन्त्रं त्वां अनु त्वा प्रति अनुयोग प्रश्न कः, अपि तु न युक्तोऽयं प्रश्नद्वारक आक्षेपः । समर्थो हि स्वेच्छया यत्किञ्चित् करोति परं किमर्थमेव करोषीत्याक्षेपार्हः स न भवतीत्यर्थः । न खलु परतन्त्रः प्रभुरिति न्यायेन स्वेच्छामात्रेण तथारूपं करोषीति भाव, अत्र हरिहरनरहरिवर्णनं । ऊर्ध्वदिकेति बहुव्रीहौ कप् ॥ १०५ ॥

आप्तकाम सृजसि त्रिजगत् किं किं भिनत्सि यदि निर्मितमेव । पासि चेद्भवतीर्य मुहुः किं स्वात्मनाऽपि यदवश्यविनाश्यम् ॥ १०६ ॥

पासीति । हे आप्तकाम अवाप्तसकलाभिलाष विभो त्वं त्रिजगत् किं सृजसि । यदि निर्मितमेव तर्हि निष्प्रयोजनमेव किं भिनत्सि । यदि चेद स्वात्मनाऽपि यदवश्यं विनाश्यं स्वयमपि निश्चयेन संहर-

याह । तदिति । यस्मादुक्तहेतुभिर्भेदस्तद्विशिष्टं वस्तु वा न घटते त-
स्मादनिर्वाच्यानाद्यविद्यारूपेण त्वदीहितेन स्वकल्पितेनानिर्वचनीय-
स्यादिना अतिप्रसिद्धेन त्वदीहितेन वा करणेन कर्त्रा वा विजृम्भितः
प्रकटीभूत इतो वाऽविद्यमानोऽप्यारोप्यत्वेन प्रत्यायित घटपटादिरू-
पो भेदो यस्य तादृशमेव तद्वस्तु भातमित्येव तत्त्वस्य प्रामाणिकस्यार्थ-
स्य निरुक्तिर्निर्वचनं निश्चिनोति । अभेददर्शनोक्तयुक्तिगलबधात् त-
च्छ्रुतिविरोधाच्च तत्त्वतो वस्तुभेदाभावे प्रतिभासमानस्य च भेदस्य
द्विचन्द्रबुद्धिवदप्रामाणिकत्वे सकलमिदं जगदभिन्नमिति श्रवणमनना-
दिक्रमेण मज्ज्ञानमभवत् । साक्षात्कारस्य सर्वं सदानन्दघनस्त्वमेको न तु
त्वदतिरिक्तं किञ्चिदस्ति बाध समर्दनीति तत्त्वनिर्णय इति भावः ।
एतेन तत्त्वमसीत्याद्युपनिषदर्थोऽपि सङ्गृहीत इति ज्ञेय । योक्तेति म-
त्वर्थे ऽण् । युक्त्यन्तरग्रन्थान्तरात् सुधिया ज्ञातव्य विस्तरभयादत्र न
लिखित ॥ १०८ ॥

वस्तु विश्वमुदरे तव दृष्ट्वा बाह्यवत् किल मृक-
ण्डुतनूजः । स्वं विनिश्चितमुभय न विविञ्चन्
व्यं यो स कतमस्त्वमवैपि ॥ १०९ ॥

वस्त्विति । किलेत्यागमे हे विभो मृकण्डुतनूजो मार्कण्डेयो बा-
ह्यवत् बाह्ये त्रिजगति यथा वर्तते तथैव तवोदरे वर्तमानं विश्वं त्रै-
लोक्यमन्यदपि घटपटादिकं वस्तु दृष्ट्वा विश्वपर्याप्ति सकलेवोदरे
द्वयोरपि स्थितत्वादविविक्तमुभयं पूर्वं बहिरन्तर्वा वर्तमानस्वात् वि-
विध स्वात्मानं न विविञ्चन् आन्तरिकत्व बहिष्ठो वाऽहमुदरे प्रवि-
ष्ट सक, यत्र पूर्वमेवोदरे वर्तते स क इति भवन्मायापन्नवित-
स्याद्विनोपयाञ्जानन् स कतमो द्वयोरन्तर्बहिश्चरयोर्मध्ये कः इति वि-
वेक्तुमशक्नुवन् सन् विस्मयी । मायाबालको जगन्ति ग्रसन् महोदर
प्रविश्य तत्र लोकत्रयं प्रदर्श्य मार्कण्डेयस्तस्य वक्त्रान्निर्गमितस्तत् स
कतम इति त्वमेवावैषि जानासि नान्य इत्यर्थः । अयमितिहासो हरि-
वंशादेव ज्ञेयमित्यलम् । बालमुकुन्दरूपोऽपि त्वमेवासीति भावः । प-

लीलयापि तव नाम जना ये गृह्णते नरकनाश
करस्य । तेभ्य एव नरकैश्चकिता भीस्ते तु बि
भ्यतु कथं नरकेभ्यः ॥ ११२ ॥

इदानीं कतिचिद्भिः श्लोकैर्भगवन्नामसङ्कीर्तनमाहात्म्यं वर्णयति ।
लीलयेति । हे विष्णो ये जना नरकस्य भौमासुरस्य नाशकरस्तस्य, अथ च पुण्यश्लोकत्वान्निरयनाशकारिणस्तव नाम राम विष्णो इत्यादिमङ्गलं सङ्केतपरिहासादिप्रसङ्गान्तररूपया लीलया विलासमात्रेणापि गृह्णते उच्चारयन्ति तेभ्य एव त्वन्नामग्राहिभ्य एव सकाशात् पातकियातनास्थानभूतैर्महारौरवादिनरकैर्भीस्त्रासकर्त्री तदधिकरणा वा भीतिश्चकिता योग्या तेभ्य एव तैर्भयं प्राप्तुमुचितमित्यर्थः । ते तु नरकनाशकारिभवन्नामग्राहिणः क्षीणपापा नराः पुनर्नरकेभ्यः सकाशात् कथं नाम बिभ्यतु भयं प्राप्नुवन्तु, अपि तु न कथञ्चित् । तदुक्तं श्रीभागवते ।

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ इति ।

लीलयाऽपीत्यपिशब्देन ये बुद्धिपूर्वं भवन्नामग्रहणमेव कुर्वन्ति तेभ्यो नरका बिभ्यतीति किमु वक्तव्यमिति सूचितम् । नरकैर्भीरिति कर्तृकर्मणोः कृतीति (पा० २ । ३ । ६५) षष्ठी प्राप्तावपि भीरिति सम्पदादित्वात् क्विपि । खयधिकारविहितत्वात्भीप्रत्ययत्वे कर्तृकरणयोरिति (पा० २ । ४ । १८) कर्तरि तृतीया ॥ ११२ ॥

मृत्युहेतुषु न वज्रनिपाताद् भीतिमर्हति जन
स्त्वयि भक्तः । यत् तदोच्चरति वैष्णवकण्ठा
न्निष्प्रयत्नमपि नाम तव द्राक् ॥ ११३ ॥

मृत्युहेतुष्विति । हे विष्णो त्वयि विषये भक्तो जनोऽनेकेषु मृत्युहेतुषु मध्ये वज्रनिपातान्मृत्युकारणात् सकाशाद्भीतिं नार्हति भयं प्राप्तुं योग्यो न भवति । यद्यस्मात् कारणात् तदा वज्रपातसमये तस्य वैष्णवस्य कण्ठान्निष्प्रयत्नं निरन्तरं हरिस्मरणाभ्यासवशेन तस्मिन्

काले विशिष्टमुद्यमं विनापि तव श्रीरामकृष्णादिनाम द्राक् शीघ्रमुच्चरति निर्गच्छति । वज्रनिपातान्मरणे सञ्जातेऽपि तस्मिन् समये उक्तरीत्या नामोच्चारणसद्भावात् तावन्मात्रेण मोक्षप्राप्तेः पुनर्जन्माभावान्मृत्योरयं वैरस्यस्य नास्तीति भावः । मृत्युहेतुषु मध्ये ध्वन्यापेक्षया दारुणात् मृत्युहेतोर्वज्रनिपातादपि सकाशाद्विभ्यो भयं नार्हति, अन्येभ्यो नार्हतीति किं वाच्यमित्यर्थः । तस्मान्मृत्युसमये वैरस्यकण्ठाक्लिष्टप्रयत्नमपि तव नाम द्राक् निर्गच्छति । व्याघ्राद्यनेकेषु मृत्युषु हरिस्मरणादेव मृत्युभयं नास्तीति ज्ञातव्यं । उच्चरति सकर्मकत्वाभावात् तङभावः ॥ ११३ ॥

सर्वथाऽपि शुचिनि क्रियमाणे मन्दिरोदर इवात्रकिरा ये । उद्भवन्ति भविचेतसि तेषां शोधनीभवदनुस्मृतिधारा ॥ ११४ ॥

स्मरणमाहात्म्यमाह । सर्वथामीति । हे विष्णो सर्वथा मनोवाक्कायनियमाद्यनेकप्रकारैर्निर्धूतपापतया शुचिनि शुद्धे ब्रह्मार्पितफलत्वेन बन्धककर्मरहिते वा क्रियमाणेऽपि भविनां संसारिणां चेतसि मनसि ये अज्ञानप्रमादकृता अवकरा रागादिदोषा उद्भवन्ति तेषां दोषाणां भवतोऽनुस्मृतिर्ध्यानं तस्या धारा परम्परैव शोधनी क्षालनहेतुर्नान्यः कश्चित् । कस्मिन्निव । मन्दिरोदरे गृहमध्य इव यथा पुनः पुनर्मार्जनेन विरलस्के क्रियमाणे गृहमध्ये ये अवकरा पुञ्जाः तथा तथा उद्भवन्ति तेषां शोधनी सम्मार्जनी भवति तथेत्यर्थः । त्वदनुस्मृतिरेव चित्तशुद्धिसम्पादनद्वारा नैष्कर्म्यसम्पादनेन मोक्षहेतुरिति भावः । भुवीति पाठे चेतस्येव भुवि स्थाने इत्यर्थः । सम्मार्जनी शोधनी स्यात् । सङ्करोऽवकरस्तथेत्यमरः ॥ ११४ ॥

अस्मदाद्यपिपर्ययोऽपि विशेषे रामनाम तव धाम गुणानां । अन्त्यमन्त्यि भवतेव तु कस्मादन्यथा न नु जनुस्त्रितयेऽपि ॥ ११५ ॥

पुनरपि नानान्तरापेक्षया रामनाम्नो माहात्म्यमाह । अस्मदिति ।

अत्रैते गुणाः सन्तीति विशेषाकारेण विशेषे अस्मदादीनामज्ञानामपि पथे बुध्यगोचरे सत्यपि तव सहस्रनामसु मध्ये रामेति नाम गुणाना धाम स्थान । यद्वा हे राम तव नाम गुणाना स्थान । अद्यातऽपि विशेषे कृते एव तन्निर्णीतमित्याशङ्क्य अर्थापत्तिं प्रमाणयति । अन्यथा तु पुनर्यद्येव न स्यात् तर्हि ननु जन्मत्रितयेऽपि जामदग्न्यदाशरथिबलभद्ररूपजन्मत्रयेऽपि भवतैव कस्माद्धेतो आग्रहेण पीन पुन्येन वा रामरामेत्येव नाम अन्वजन्मि अङ्गीकृतं । अनेकजन्मस्वेतस्य त्वयैव स्वीकारात् तवाप्येतत् प्रियतममिति ज्ञायते । तस्माद्रामनाम गुणगणस्थानमित्यर्थापत्ति । तथा च शिवेनापि राम रामेति रामेत्यादि पार्वतीं प्रत्युक्त ॥ ११५ ॥

भक्तिभाजमनुगृह्य दृशा मां भास्करेण कुरु वीततमस्कं । अर्पितेन मम नाथ न ताप लोचने न विधुना विधुनासि ॥ ११६ ॥

भक्तीति । हे नाथ त्व भास्करेण सूर्यरूपया दक्षिणया दृशा त्वयि भक्तिभाज मामनुगृह्य मयि प्रसाददृष्टिपात कृत्वा वीततमस्क गताज्ञान कुरु । प्रसाददृष्टिपातनात् मम सकलामप्यविद्या विनाशये त्यर्थ । सूर्येण च तिमिर निरस्यते । तथा मयि अर्पितेन प्रसादनिहितेन विधुना चन्द्ररूपेण वामलोचनेन कृत्वा मम त्रिविधमपि ताप न विधुनासि न दूरीकरोषि, अपि तु निराकुर्विति काकु । चन्द्रेण च शीतलत्वात तापशान्ति क्रियते । एव स्तुवन्त मा प्रसाद दृष्ट्या विलोक्य कृतार्थीकुर्विति भाव ॥ ११६ ॥

लङ्घयन्नहरहर्भवदाज्ञामस्मि हा विधिनिषेधमयीं य । दुर्लभ स तपसाऽपि गिरीश त्वत्प्रसादमहमिच्छुरलज्ज ॥ ११७ ॥

लङ्घयन्निति । हे स्वामिन योऽहं, सन्ध्यावन्दनादि कुर्यादिति विधि , ब्राह्मणहननादि न कुर्यादिति निषेध , तन्मयीं तद्रूपा भ-

यदाज्ञा श्रुतिस्मृतिरूपामहरह प्रतिदिनं लङ्घयन्नतिक्रामन् । यत् कर्त्तव्यतया त्वयोपदिष्टं तन्न करोमि, यन्न कर्त्तव्यमित्युपदिष्टं तत् करोम्येवेति त्वदाज्ञां लङ्घयन्नस्मिन् वर्त्ते । हा कष्टं, अनुचितकारी सोऽहं महीयसा तपसा दुर्लभं त्वत्प्रसादं इच्छुः प्रसीदेति गिरैव प्रार्थयमानः सन् अलज्जो निर्लज्जोऽस्मि । यो हि एकदाऽपि प्रभोराज्ञां करोति सोऽपि कथञ्चित् स्वामिप्रसादं लभते । यस्तु कदापि स्वाम्याज्ञां न करोति स दण्ड्योऽपि भवति य स्तत्रैव प्रसादमिच्छन्निर्लज्ज एव । अत एव दयालुस्त्वं प्रसीद प्रसीदेति भावः । त्वत्प्रसाद न लोकेति षष्ठीनिषेधः ( पा० २ । ३ । ६९ ) ॥ ११७ ॥

विश्वरूप कृतविश्व कियत् ते वैभवाद्भुतमणौ हृदि कुर्वे । हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः ॥ ११८ ॥

विश्वेति । हे विश्वरूप स्थावरजङ्गमात्मक, तथा कृतविश्व स्थावरजङ्गमकारिन् विष्णो, अहं ते तव वैभवाद्भुतं सामर्थ्यातिशयजन्य तद्रूपं वा आश्चर्यं अणौ परमाणुरूपे हृदि मनसि कियत् किं परिमाणं कुर्वे, अपि तु आधारस्याल्पीयस्त्वादाधेयस्य च महीयस्त्वात् सर्वं वैभवाद्भुतमणौ हृदि धारयितुं न शक्नोमीत्यर्थः । यद्यपि ते सामर्थ्यं महत् तथापि कियदल्पमेव धारयामीति वा युक्तमेतत् । यस्माद् दरिद्रोऽकिञ्चनो जनः काञ्चनाद्रिं सुमेरुमधिगत्य प्राप्य स्वर्णहरणाभिलाषोऽपि सन् शतधा शकलीभूते अत्यन्तजीर्णे निजचीरे स्वीये वस्त्रे कियत् किं परिमाणं हेम नह्यति बध्नाति, अपि स्वल्पमेव ग्रन्थौ बध्नाति असामर्थ्यात्, तथा सकलगुणवर्णनाभिलाषे सत्यपि सामर्थ्याभावात् कियन्मात्रं गुणवर्णनं करोतीति भाव इति स्तुत्युपसंहारः ॥ ११८ ॥

इत्युदीर्य स हरिं प्रति सम्प्रज्ञातवासिततमः समपादि । भावनाबलविलोकितविष्णोः प्रीतिभक्तिसदृशानि चरित्रैः ॥ ११९ ॥

इतीति । स नलो हरिं प्रति इत्युक्तप्रकारेण उदीर्य प्रमोदं सम्प्राप्य द्विविधसमाधिमध्ये सम्प्रज्ञाताख्येन समाधिना तत्र वासिततमः अतितरां वासितमनाः तदेकतानः समपादि जातः, अत एव भावनाबलेन सम्प्रज्ञाते ध्यानबलेन विलोकिते साक्षात्कृते विष्णुविषये प्रीतेः प्रेम्णः भक्तेश्च सदृशानि याम्यानि कर्माणि आनन्दबाष्पगीतनृत्यादीनि चरितुं कर्तुं शीलं यस्य सः । यदुक्तं भागवते ।

> शृण्वन् सुभद्राणि रथाङ्गपाणे-
> र्जन्मानि कर्माणि च यानि लोके ।
> गीतानि नामानि तदर्थकानि
> गायन् विलज्जो विचरेदसङ्गः ॥ इति ।

अथ सम्प्राप्य प्रतिमादिसाकारध्यानेन विष्णुं साक्षात्कृतेति भावः । विष्णुरिति पाठे भावनाबलेन विलोकितो विष्णुर्येन सः, अत एव प्रीतिभक्तिसदृशानि चरितुः । विष्णुप्रीत्यर्थे भक्तियोग्यान्युपचारादीनि स्वयं । ध्यानसमाधिर्हि द्विविधः सम्प्रज्ञातोऽसम्प्रज्ञातश्च । ध्येयध्यातृभावयुक्तः साकारध्यानसमाधिः सम्प्रज्ञातः । सम्बित्सवेद्यभेदविलोपिनः निराकारस्वप्रकाशपरमाणुलक्षणात्ममात्रध्यानसमाधिरसम्प्रज्ञात इति योगशास्त्रं ॥ ११९ ॥

**विप्रपाणिषु भृशं वसुवर्षी पात्रसात्कृतपितृक्रतुकव्यः । श्रेयसा हरिहरौ प्रतिपूज्य प्रह्व एष शरणं प्रविवेश ॥ १२० ॥**

विप्रेति । एष नलः प्रह्वः सन् शरणं भोजनगृहं प्रविवेश, नद्यस्त्वं गृहप्रवेशितो भाति । किम्भूतः । विप्रपाणिषु भृशं नित्यदानरूपभिक्षुगोभूतिलहिरण्यादि वर्षत्येवंशीलः । तथा पात्रसात्कृतः विद्यातपोव्रतयुक्तपात्रभूतब्राह्मणाधीनं देयं कृतं पितृक्रतुकव्यं नित्यश्राद्धरूपपितृयज्ञसम्बन्धि कव्यं येन । तथा श्रेयसा स्नानदेवपूजादिनित्यश्राद्धोत्तरकर्मानुष्ठानजन्येन पुण्येन पुष्पादिना च हरिहरावभेदबुद्ध्या विष्णुशिवरूपनारायणं परिपूज्य तस्मिंस्तदर्पणेन तं परितोष्य भक्तिनम्रः सन् नमस्कारं कृत्वा नित्यश्राद्धान्तर्ब्रह्मार्पणं कृत्वा भोजनार्थं गृहं प्रा-

भीमात्मजापि कृतदैवतभक्तिपूजा पत्यौ च भुक्तवति भुक्तवती ततोऽनु । तस्याङ्कमङ्कुरितसत्परिरिप्सुमध्यमध्यास्त भूषणगणातिभरालसाङ्गी ॥ १२२ ॥

भीमेति । ततो नलभोजनादारभ्यानन्तरं भीमात्मजाऽपि तस्याङ्कमध्यास्त । कीदृशी । कृता गौर्यादिदेवतानां भक्त्या षोडशोपचार-पूजा यया । तथा पत्यौ च भुक्तवति सति स्वयमपि भुक्तवती । अ-नन्तरञ्च भूषणभरेण अलङ्कारबाहुल्येन योऽतिभरो गौरवं तेन अल-साङ्गी यस्याः सा । भूषणबाहुल्येन अतितरां यथा वा भूषणभारमपि वोढुमसमर्था अतिमृद्वी स्तुत्यान्मन्दगतिर्वा । कीदृशमङ्कं । अङ्कुरिता सम्यगुद्गता सत्परिरिप्सा भैम्यालिङ्गनवाञ्छा यस्य तादृशो मध्यो म-ध्यदेशो यस्य । उक्तविशेषणविशिष्टा सती नलाज्ञया तदङ्कं समुपावि-शदिति भावः । अपि समुच्चयार्थः । पत्यौ भुक्तवतीति पतिव्रतात्यु-क्तिः । परिशुद्धमध्यमिति पाठान्तरं चिन्त्यं । अङ्कं अधिशीङ्स्थासा-मिति (पा० १ । ४ । ४६ ) कर्मत्वं ॥ १२२ ॥

तामन्वगाद्द्राग्नवबिम्बविपाकचञ्चोः स्पष्टं शलाटुपरिणत्युचितच्छदस्य । कीरस्य कापि करसरोरुहे वहन्ती सौन्दर्यपुञ्जमिव पञ्जरमेकमाली ॥ १२३ ॥

तामिति । काऽप्यनिर्दिष्टनामा अतिसुन्दरी बाला सखी तां भै-मीं अनुलक्षीकृत्य पश्चात् अगात् जगाम । कीदृशी । कीरस्य शुकस्यैकं पञ्जरं करसरोरुहे पाणिपद्मे वहन्ती । उत्प्रेक्षते । शुकस्य स्वात्मनो वा सुवर्णादिघटितत्वात् पञ्जरस्यैव वा मूर्त्तं सौन्दर्यं पुञ्जमिव पद्म-करे पञ्जररूपेण वहन्तीति सम्बन्धः । किम्भूतस्य कीरस्य । द्राग्शितस्य भक्षितस्य पक्वस्य बिम्बीफलस्य विपाकः परिणामस्तद्रूपा चञ्चुर्यस्य अ-तिप्रियभुक्तपक्वबिम्बीफलमेव तदीयचञ्च्वाकारेण परिणतमिति यावत् । तादृशस्यातिरक्तचञ्चोरित्यर्थः । तथा स्पष्टं सत्यमपि शलाटु अपरि-पक्वं यत्किञ्चित् फलं भुक्तबिम्बीफलमेव वा तस्य परिणतिः अति-

नीलता तया रचिता तद्योग्यास्तत्तुल्या अतिनीलाः छदाः पत्रा य-
स्य । अपक्वानि श्यामानि जम्बितानि यानि फलान्तराणि बिम्बीफला
न्येव वा यदीयच्छदाकारेण परिणतानीति यावत् । तादृशस्य अति-
हरितपत्रस्य रक्तचञ्चुत्व नीलपक्षत्वस्य जातिः । पाठितशुकादिपञ्जरा-
दिधारिण्या कस्या अपि नायिकानुगमन जातिः । भोजनानन्तरं पा
ठितशुकसारिकादिशब्दानां गीतस्य च श्रवणेन नृत्यादिदर्शनेन च क्री-
डन राज्ञामपि जातिः । आमे फले शलाटुः स्यादित्यमरः ॥ १२३ ॥

कूजायुजा बहुलपक्षशितिम्निसीम्ना स्पष्टं कुहू
पदपदार्थमिथोऽन्वयेन । तिर्यग्धृतस्फटिकद
ण्डकवर्त्तिनैका तामन्वगर्त्तत पिकेन महाधिकेन ॥ १२४

कूजेति । एका सखी पिकेन कोकिलेन सह उपलक्षिता वा तां
भैमीं अन्वयर्त्तत अनुलक्षीकृत्य जगाम । किम्भूतेन पिकेन । कूजया
मधुराव्यक्तेन शब्देन सह आत्मानं युनक्तीति युजा युक्तेन कुहू-
शब्दं कुर्वतेत्यर्थः । तथा बहुलं भूयान् पक्षयोः शितिमा कृष्णत्वं
तस्मिन् सीम्ना अवधिभूतेन अत एव विशेषेण कुहूरिति पदस्य तथा
तदर्थस्य तत्पदवाच्यस्य अमावास्यारूपस्य च मिथो अन्योन्यसम्बन्धो
यत्र तादृशेनैव स्पष्टमुच्चरितायां कुहूपदयोगित्वात् कृष्णत्वाच्च अमा
वास्याविषयं कुहूपदपदार्थयोस्तादात्म्यरूपणमिति यावत् । अमावास्या
ऽपि कृष्णपक्षस्यान्तिमी मर्यादा भवति । अत एव कुहूशब्दवाच्या
च । तथा तिर्यक् तिरश्चीन करधृतस्फटिकदण्डकः दण्डः तत्र
वर्तिना स्थितेन तथा महाधिकेन महोत्सवेनेत्यर्थः ॥ १२४ ॥

शिष्याः कलाविधिषु भीमभुवो वयस्या वीणा
मृदङ्गुणनकर्माणि याः प्रवीणाः । आसीनमेन
मुपवीणयितुं ययुस्ता गन्धर्वराजतनुजा मनु
जाधिराजं ॥ १२५ ॥

शिष्या इति । या भीमभुवो भैम्या वयस्याः सख्य कलाविधिषु

चतुःषष्टिकलाकर्मसु विषये भैम्या सव शिष्या, तथा वीणाया मृदुक्वाणनकर्मणि मधुरशब्दरूपे व्यापारे प्रवीणास्ता गन्धर्वराजो विश्वावसुस्तस्य तनूजा कन्या तत्तुल्या प्रासाद आसीन एव मनुजाधिराज नल उपवीणयितुं वीणयोपगातुं ययुः प्रापुः ॥ १२५ ॥

तासामभासत कुरङ्गदृशां विपञ्ची किञ्चित् पु
रः कलितनिष्कलकाकलीका । भैमीतथामधुरक
ण्ठलतोपकण्ठे शब्दायितुं प्रथममप्रतिभावती
व ॥ १२६ ॥

तासामिति । तासां कुरङ्गदृशां विश्वावसुकन्यानां विपञ्ची वीणा अभासत शुशुभे । किम्भूता । किञ्चित् पुरः ईषत्पूर्वं प्रारम्भसमये कलिता अङ्गीकृता निष्कला गम्भीरमन्द्रस्वरगुणविशिष्टाभिव्यक्तिरहिता काकली सूक्ष्ममधुरा अव्यक्तरागविशेषा यया । अत एवोत्प्रेक्षते । भैम्यास्तथा अनिर्वचनीयमधुरस्वरयुक्तायाः कण्ठलताया उपकण्ठे शब्दायितुं तस्याः पुरस्ताच्छब्दं कर्तुं प्रथमं प्रारम्भे अप्रतिभावतीव प्रतिभारहितेव अधृष्टेव । अन्योऽप्यधिकविदुषः पुरस्ताद्गायितुं गातुं वा अधृष्टत्वादशब्दं सन् प्रथमं मन्दमेव भाषते गायति वेति सङ्गीतविद्याविदामियं जातिः । प्रथमं गायमाना प्रारम्भे काकलीमाश्रयन्तीति काकल्यादिसङ्गीतशास्त्राद्यवगन्तव्यम् । काकलीकेति नद्यृतश्चेति कप् ( पा० ५ । ४ । १५३ ) शब्दायितुं शब्दवैरेति (पा० ३ । १ । १७) क्यङ् ॥ १२६ ॥

सा यद्धृताखिलकलागुणभूमभूमीभैमीतुलाधिग
तये स्वरसङ्गतासीत् । तं प्रागसावविनय प
रिवादमस्या लोकोऽधुनापि विदिता परिवादि
नीति ॥ १२७ ॥

सेति । सा विपञ्ची धृतानामखिलानां गीतनृत्यादिचतुःषष्टिकलानां सौन्दर्यादिगुणानाञ्च भूम्नो बाहुल्यस्य भूमी स्थानभूता भैमी तस्या-

स्तुलाधिगतये साम्यप्राप्तये स्वयमपि पूर्वोक्तप्रकारेण तादृशी सती भै-मीस्वरतुल्यत्वप्राप्तये यत् स्वरैः षड्जादिभिः सङ्गता सम्बन्धा आसीत् । अथ च भैम्या सार्द्धं साम्यप्राप्तये स्वरस्वाच्छन्द्याभिलाष गताऽभूत । असौ विपञ्ची तु भैमीसाम्यस्वाच्छन्द्याभिलापरादात्मनविगयमत्यु त-मावमाननमेव परिवादं लोकमुखे स्फुटं दोषं प्राक् पूर्वं इत्य प्राप्य । अथ च परिवादं वीणावादनसाधनं तद्रूपमपिनय प्राप्य अधुनाऽप्य-द्य यावदपि लोके परिवादिनीति विदिता ख्याता परिवादयोगात् परिवादिनीत्यद्यापि गीयत इत्यर्थः । अथ च वीणावादनसाधनयु-क्ता । यद्वा सप्ततन्त्रीयुक्ता वीणा परिवादिनी । भीतो भयानि पश्य-तीति न्यायेन पूर्वमपि लोके दुष्टता प्राप्ता पुनरपि तत्तस्य पुरस्तात् प्रागल्भ्ये दोषान्तरं शङ्कमानेव अप्रतिभायतीति प्राचीनश्लोकार्थहेतु-तया वाच्यं । परिवादः कलङ्कः स्याद्वीणावादनवस्तुनीति विश्वः ॥१२७॥

नादं निषादमधुरं ललमुज्जगार साऽभ्यासभाग
अनिभृतकुलकुञ्जरस्य । स्तम्बेरमीव कृतसश्रुति
मूर्द्धकम्पा वीणा विचित्रकरचापलमाभजन्ती॥१२८॥

नादमिति । अनिभृता कुलं वंशस्तत्र कुञ्जरः श्रेष्ठस्तस्य नलस्य अभ्यासभाक् समीपवर्तिनी सा तन्त्री वीणावाद्यरूपा निषादस्वरेण मधुरं श्रव्यं नादं उज्जगार उद्गीर्णवती । किम्भूता । कृत सश्रुतीनां द्वाविंशतिश्रुतियुतानां षड्जादीनां मूर्द्धनि नादप्रान्ते कम्पः कम्पि-तस्वरो यया, कृतः सह श्रुतिभिर्यया तथा मूर्द्धनि वीणाया एव उ-परितनभागे कम्पितः स्वरो यया वीणोर्द्धं मध्याङ्गुलि संयोगाद्धि नि-षादस्वरो जायते तादृशी वा । कृत सश्रुतीनां द्वाविंशतिविधा स-ङ्गीतशास्त्रविदा मूर्द्धनि कम्पो यया वा । तथा विचित्रं करचापलं नानारूप-आरोहावरोहादिक्रमेण अङ्गुलिप्रान्तस्पर्शवशेन वादकपाणि-चाञ्चल्यं तल्लक्षणमेवानेकस्थानावस्थानलक्षणं श्रा सामस्त्येन भजन्ती निषादप्रधानं रालितादिमङ्गलगीतं प्रकटीयकारेत्यर्थः । कथ । स्तम्बे-रमी हस्तिनीव । साऽपि अनिभृत पर्वतः कुलं वंशं उत्पत्तिस्थानं यस्य तादृशपर्वतभवस्य हस्तिश्रेष्ठस्य राजमन्त्रिणो वा हस्तिनः

गृह्यकस्ताः कीरः किरन्मुदमुदीरयति स्म विश्वा १३०

तदिति । अथ काकल्युद्गिरणानन्तरं गन्धर्वराजकन्यानां वीणा त योर्ह्यस्त्योः श्रुतीनां कर्णानां मधूनि अमृततुल्यानि भैमीनलप्रियस्तुतिकारिणीनां चाटुगाथाः श्लोकान् तथा तेन प्रकारेण अतिस्फुटो यर्णबन्धः तन्त्रीविनिबद्धाक्षरविन्यासो यस्मिंस्तद्यथा तथा जगुः । यथा येन प्रकारेण वसुमत्या भूमौ रतिरूपाया भैम्याः गृह्यकः पञ्जरबद्धः कीरः शुको मुदं किरन् श्रातॄणां हर्षमुत्पादयन् विश्वाः सर्वाः तत्तद्वर्णमात्रादिसहिता गाथा इत्यं वक्ष्यमाणरीत्या उदीरयति स्म । तिर्यग्योनिः शुकोऽपि यथा श्रवणमात्रेण सर्वा अपि गाथा अनुवदितुं शक्नोति तथा तन्त्रीषु स्फुटतराक्षरबन्धान् भैमीनलस्तावकश्लोकान् वीणाः स्फुटं गायन्ति स्मेति भावः । एतेन गन्धर्वराजकन्यानां वीणाप्रावीण्यं शुकस्यापि प्रज्ञातिशयः सूचितः । गृह्यासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते, इत्यमरः ॥ १३० ॥

अस्माकमुक्तिभिरवेप्यथ एव वुद्धेर्गाधं युवाम

तिमती स्तुमहे तथापि । ज्ञानं ह वागवसरा

वचनाद्भवद्भ्यामेतावदप्यनवधारितमेव न स्या

त् ॥ १३१ ॥

इत्यसितिं यदुक्तं तदेवाह । अस्माकमिति । यद्यपि अतिशयिता मतिः प्रज्ञा ययोस्तौ युवा अस्माकमुक्तिभिर्गाथारूपाभिरेव अस्मद्वाग्वचनाभिः अस्माकं बुद्धेर्गाधं तलानार्थत्वं अवेष्यथ एव ज्ञास्यथ एव तथापि वयं युवां स्तुमहे स्तुम एव । हि यस्मात् भवद्भ्यां वागवसरे स्तावकादिवचनावसरे सत्यपि अवचनात् अभाषणाद्धेतोरेतावत् अत्यन्तार्थेऽत्यल्पमपि अस्मदीयं ज्ञानं नावधारितमेव न स्यात् अज्ञातमेव न स्यान्मास्तु इत्यर्थः । तस्मात् स्तुम एव । वर्णनाया क्रियमाणाया अपमल्पज्ञानी बहुज्ञान इति वा ज्ञातुरग्रे प्रसिद्धो भवसि तस्माद्वर्णयाम इति भावः । इत्येव वीणानिबद्धगन्धर्वपुत्रीवचनं शुके अन्ववददित्यर्थः । एवमुत्तरत्रापि ज्ञेयं । एतेन गन्धर्वपुत्र्योऽपि स्वमीद्वत्य परिहृतं ॥ १३१ ॥

भूभृद्भवाङ्कभुवि राजशिखामणेः सा त्वञ्चास्य
भोगसुभगस्य समः क्रमोऽयं। यन्नाकपालकल
नाकलितस्य भर्त्तुरत्रापि जन्मनि सती भवती स
भेदः ॥ १३२ ॥

भूभृदिति । सा भूभृद्भवा हिमाचलसुता पार्वती भोगैर्भुजङ्गादिस
र्पशरीरैः सुभगस्य भूषितस्य राजा चन्द्र शिखामणिर्यस्य चन्द्रमौलेः
अङ्कभुवि उत्सङ्गदेशे, वर्तत इति शेषः, प्रियतमत्वात् । त्वञ्च त्वमपि
भोगपुष्पचन्दनादिभोगैर्मनोहरस्य राज्ञः मुकुटमणेः श्रेष्ठतमस्यास्य न-
लस्य उत्सङ्गदेशे वर्तसे, इत्ययं क्रमः समः । परिपाटी उचिता । पा-
र्वत्या महेशस्य च तव नलस्य च राजन्यायाः राजश्रेष्ठस्य च अन्योन्य-
सम्बन्धः समुचित एवेत्यर्थः । अयं च समस्तुल्यः । यथा तयोः सम्ब-
न्धः तथा युवयोरपीत्यर्थः । अयं याऽयं शब्दश्लेषरूपः सम्बन्धस्तुल्यः ।
एवं यद्यपि क्रमः समस्तथापि स पुनर्भेदो विसदृशत्वं यत् नाकपालस्ये
न्द्रस्य कलनाशक्त्येन एव भवन तया कलितस्य ख्यातस्य राजत्वादि-द्रा
घत्वेन प्रसिद्धस्य भर्तुर्नलस्य सम्बन्धिनी अत्राप्यस्मिन्नपि जन्मनि भव
ती सती पतिव्रता । अपि शब्दान्न केवलमत्रैव किन्तु जन्मान्तरेऽपि
त्वं सत्येव । अन्यथाऽत्रापि सतीत्वानुपपत्तेः । पार्वती तु ब्रह्मकपा
लस्य कलनया करे धारणया कलितो विदितो न भवति अकपालक-
लनाकलितस्तादृशोऽपि न भवति । कपालित्वेन ख्यातस्य भर्तुर्म-
हेशस्य सम्बन्धिनी पूर्वजन्मनि दक्षापत्यत्वे एव सती न तु हिमवद-
पत्यत्वेऽपीति महद्वैषम्यं । हरस्य नलस्य चोक्तमकलश्लेषसाम्येऽपि
पार्वत्यास्तव किञ्चिदेव शब्दश्लेषसाम्यं न तु सर्वं तवत्यास्त्वया अधिक
त्वादित्यर्थः । हिमवदपत्यत्वे पार्वत्याः सतीत्वाभावोक्तेर्निन्दा, न चाशङ्कनी-
या भैमीस्तुतिपरस्य सतीशब्दस्य पार्वत्या नामपरत्वमात्रव्यावर्तकत्वे
नोक्तेर्निन्दापर्यवसानाभावात् ॥ १३२ ॥

एषा रतिः स्फुरति चेतसि कस्य यस्याः सूते र
ति द्युतिरयं त्वयि चातनोति । त्रैव्यक्वीकृणवि

लीकृतनिर्जरत्वसिद्धायुरध्वमकरध्वजसंशयं कः

॥ १३३ ॥

एषेति । एषा भैमी कस्य वा चेतसि रतिः कामप्रियेति स्फुरति । अपि तु न कस्यापि यतो यस्या एतस्या द्युतिः कायकान्तिः रतिः कामप्रिया सूते । अथ च अनुरागं प्रसूते अर्थात् त्वयि अङ्गजत्वात् कान्तिः पुत्री । रतिश्च सत्पुत्री ना यस्मान्न स्त्री. सेयं रतिरिति कस्य वा चेतसि मतिः स्यान्न कस्यापीत्यर्थः । अथ वा त्वय्यपि विपर्यं त्रैयम्बकेण हरसम्बन्धिना वीक्षणेन तृतीयनेत्रेण खिलीकृत न्यूनीकृतः निर्जरत्वेन देवत्वेन सिद्धोऽमरत्वरूप आयुषोऽध्वा मार्गो यस्य तादृशस्य मकरध्वजस्य कामस्य संशयं रूपसादृश्यात् किमयं काम इति सन्देहं को वा तनोति अपि तु न कोऽपि करोति । कामस्य हरेण दग्धत्वात् सन्देहनिवृत्तिरित्यर्थः । आ इत्याश्चर्ये । यस्य तव अङ्गजा कान्तिर्यतो रतिं सूते ततो रतिः सा तथापि न स्त्री । सा कामस्य स्त्री । तस्मात् त्वयि कामसंशयं कोऽपि न करोतीत्यर्थः इति नलं प्रति तद्वचनं शुकेन अन्ववादीदिति वा । रतिकामाभ्यामपि युवामतितमां सुन्दराविति भावः । त्रैयम्बकेति सम्बन्धे अणि नस्याभ्यामिति (पा०७।३।३) वृद्धिनिषेधे पूर्वमैजागमः ॥ १३३ ॥

एतां धरामिव सरिच्छविहारिहारामुल्लासितस्त्व-
मिदमाननचन्द्रभासा । बिभ्रद्विभासि पयसामिव
राशिरन्तर्वेदिश्रियं जनमनःप्रियमध्यदेशाम् ॥१३४॥

एतामिति । हे नल त्वं विभासि । किंभूतः । एतां भैमीं बिभ्रत् अङ्के धारयन् । किंभूताम् । सरितां नदीनां छविं कान्तिं हरन्ति तथाभूता उज्ज्वलतरा मौक्तिकहारा यस्यास्ताम् । तथा वेद्याः अन्तः अन्तर्वेदि वेदिकामध्यं तद्वदतिकृशा श्रीः शोभा यस्याः, अन्तर्मध्ये वेदिवदतिकृशा श्रीर्यस्या वा । तथा जनमनसां प्रियः आनन्ददायी मध्यदेशः शरीरमध्यभागो यस्यास्ताम् । किंभूतस्त्वम् । अस्या भैम्या आननचन्द्रस्य भासा कान्त्या उल्लासितः हर्षं प्रापितः । क इव ।

चन्द्रनामा वृद्धिं प्रापितः पयसां राशिः समुद्र इव । कामिव । धरा भूमिमिव । यथा पृथ्वीं अङ्के धारयन् समुद्रः शोभते । किम्भूता धरा । सरितो नद्यः एव छव्या कान्त्या हारिणो मनोहरा हारा यस्यास्तां । तथा अन्तर्वेद्याख्या या गङ्गायमुनामध्यजस्रा श्रीर्यस्यास्तां । तथा जनमनसां प्रियो मध्यदेशो विन्ध्यहिमाचलान्तरभूभागरूप आर्यावर्तपरपर्याय. पुण्यभूर्मध्यदेशो यस्यास्तां ।

हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥

इति मनुः । इदमाननं पश्चीमनामः ॥ १३४ ॥

दत्ते जयं जनितपत्रनिवेशनेयं साक्षीकृतेन्दु
वदना मदनाय तन्वी । मध्यस्थदुर्बलनमत्यफल
किमेः द्भुक्तिर्यदत्र तव जातिसंनमत्स्यकेतोः ॥ १३५ ॥

दत्त इति । जनितानि सखीभिः कस्तूर्य्यादिविरचितानि पत्र निवेशनानि मकराद्याकारपत्रवल्लीलिखितानि यस्यां सा पत्रवल्लीविभूषिता, तथा छविभ्यां सह वर्त्तमान साछ. छसाक्ष साक्षकृत सन्निधिना प्रापित साक्षीकृतः स चासाविन्दुश्च स यत्र वदन यस्याः सा चन्द्राधिकवदना इयं तन्वी कृशाङ्गी भैमी मदनाय जय दत्ते । एवविधभैमीदर्शनेन कामो नितरामुल्लसतीत्यर्थ । अथ च कामाय जय दत्ते । एवविधभैमीदर्शनवशीकृतस्त्व कामेन जीयस इत्यर्थः । यच्च नायकान्त्या सदृशेनो जितो मत्स्यकेतु कामो येन तस्य तव अत्र भैम्या विषये भुक्तिर्येतच्छरीरोपभोगः एतन्मध्य उदरभागे स्थितस्य वर्त्तमानस्य दुर्बलनमत्यस्य कार्श्यस्य फल परिपाक किमिति प्रश्न, सम्भावना वा । अतिसुन्दरस्य तवैतच्छरीरभोगेऽतिकृशेन दुरवगमत्वाय कमेव प्रयोजकमित्यर्थः । अथ च मध्यदेशवर्त्तिनोऽतिकार्श्यस्य फल एतदेव यदति सुन्दरस्य तवात्र भुक्तिर्नामेत्यर्थः । कामेन तव विजयी एतन्मुखचन्द्रस्य च साक्षाद्द्रष्टव्यत्वात साक्षित्व युक्तं । अथ च कामेन जितमिति कामस्य जयदाने साक्षीकृता इन्दुवदनाः स्वमस्य उपयाता । अपि हि कामेन नलो भैमीवशीकृत इति जानन्ति एव सत्यपि क्रूरोक्त्यादिना

र्जितः कामो येन तस्य तव अन्यस्मिन् भैमीविषये वा विवादविष-योपभोगो लब्धजय कामं करोत्विति मन्तव्यं मदीयमन्यं भैमीरूपं वा विषय स्वं भुङ्क्ष्व । एतदुदरमध्यवर्तिनो कार्श्यस्य फलं किं रागगौ-यकातिशयात् परित्यक्तभूशङ्कः सन् अन्यदीयमपि विषयं बलादन्योऽपि नैव भुङ्क्ष्व इत्यर्थः । अथ च मध्यस्थानां सभ्यानां दुर्बलमध्यस्य बालदौर्बल्यस्य नियन्तृसमासमर्थ्यस्य स्वदत्तजयनिर्वहणाशक्तस्य वा फलं परिपाकं किमियमिति सम्भावना, अत्रापि विवादपदं साक्षिवा-दन कृत्वा जयपत्रदानपुरःसरं एकस्मै जयपत्रं दीयते । तत्र निर्णये कृ-तेऽपि मध्यस्थाश्च दुर्बला भवन्ति तर्हि पराजितोऽप्यधिको लब्धजयम-पि द्वितीयं तिरस्कृत्य तदीयं विवादं पदं क्षेत्रादिकं बलाद्भुङ्क्ते, क-थमन्यथा समाप्तिकजयपत्रहस्त निर्भरम्ये अन्योन्यदीयभुक्तिं करोती-त्यर्थोक्तिः । साक्षीकृतानि तेन मर्हति सुप्सुपेति इति (पा०२।२।३८) बहुव्रीहिः । बहुव्रीहौ सक्थ्यक्ष्णोरिति (पा०५।४।११३) षचित्यत्र । प-क्षे नावाद्वृद्धरीति (पा०५।२।९१) इनौ त्वेव ॥ १३५ ॥

चेतोभवस्य भवती कुचपत्त्रराजधानीयकेतुम
करा ननु राजधानी । अस्यां महोदयमहस्पृशि
मीनकेतोः के तोरण तरुणि न ब्रुवते भ्रुवौ
ते ॥ १३६ ॥

चेत इति । ननु भैमी भवती चेतोभवस्य राजधानी । कीदृशी । कुचपत्रेषु राजानः श्रेष्ठाः पत्रवल्य इत्यर्थं, तेषु धानीय स्थापनीय । यद्वा कुचपत्रमेव राजधानी यो राजधानीसम्बन्धीकेतुध्वजचिह्नभूतो मकरो मत्स्यो यस्यां स यथो मुख्यावस्थानगरयां राजधान्यां साभि-ज्ञानचिह्नरूपः पताकादिध्वजो भवति । तथा च केतुभूतस्य मकरस्य स्वकुचपार्श्वतमानत्वात् त्वं कामराजस्य राजधानी साक्षान्मदननग-री । मदनस्त्वय्येव वर्तत इत्यर्थः । अत एव हे तरुणि आरूढयौवने प्रेति के जना मीनकेतोर्मकरध्वजस्य सम्बन्धिन महोदयरूप महं उ-त्सवं महान् अभ्युदयो यस्मि स्तादृशं वा उत्सवं स्पृशन्त्यां त्वय्यामि-

कामोत्सवयत्यां अस्यां भवद्रूपायां राजधान्यां ते तव भ्रुवौ तोरणं न ब्रूयते । अपि तु सर्वेऽपि जनास्त्वद्भ्रूयुगं कामाभ्युदयोत्थितपक्षि-तशिख यंशद्वयनिबद्धं आम्रादिमाङ्गलिकसुनानपल्लवरूप तोरणमेव व दन्ति । कामस्त्वदेकाश्रय सन् सर्वोत्कर्षेण वर्तत इति भाव । पत्रराजीत्यपि पाठः स्वप्नार्थं राजेति पाठो मुख्य । राजाह इत्यादिना (पा०५।४।९१) समासान्तष्टच् ॥ १३६ ॥

अस्या भवन्तमनिशं भवनस्तथैनां कामः श्रमं न कथमृच्छतु तामगच्छन् । छायेव यामथ ग तागतमाचरिष्णोस्तस्याऽभवच्छ्रमहरा मकरध्वजस्य ॥ १३७ ॥

अस्या इति । हे नल अस्याः भैम्याः सकाशात् भवन्त अनिशं ग च्छन्, तथा भवतः सकाशात् एनां भैमीं अनिशं गच्छन् प्राप्नुवन् यातायातं कुर्वन् कामः कथं नाम श्रमं ऋच्छतु गच्छतु अपि तु श्रमं न गच्छत्येव । सदा यातायातं कुर्वन् श्रमं गच्छतीति युक्तमेव । अथ वा यस्मात् या युवयो छाया कायकान्तिरेव तत्करीत्या गतागतमाच रिष्णोस्तस्य मकरध्वजस्य अध्वनि जातं श्रमं हरति श्रमहरा एवम्भूता भवतीति शेष । दृश्यमानभरच्छायाश्रय देशे यातायातश्रमं न वेत्ती-त्यर्थः । अथ च वृक्षच्छायादिनिर्मितच्छायाभागे गतागतं कुर्वतः पुरु-षस्य श्रमं हरत्येव । भैम्यास्त्वय्येव कामस्तव च भैम्यामेव नान्यत्रेत्येव परस्परानुरागः कुत्रापि नास्तीति भाव ॥ १३७ ॥

स्वेदाप्लवप्रणयिनी तव रोमराजी रत्यै यदाचरति जागरितव्रतानि । श्यामासितेन नरनाथ मधुव्रतसान्द्रमरन्दमेदुरकेसरदन्तुराङ्गः ॥ १३८ ॥

स्वेदेति । हे नरनाथ स्वेदो घर्मजल तस्मिन् तेन वा आप्लव स्ना न तत्र प्रणयिनी प्रीतिमती सात्त्विकमज्जनस्वेदपूरस्नाता तव रोमरा-जिः रत्यै सुरतार्थे जागरितस्य उद्बुद्धस्य व्रतानि उद्गतरोमाञ्चनिचयान्

यदाचरति वन्दित्रा जयतीति यावत् । तेन कारणेन रोमाञ्चेन वा त्व मधुन पुष्परसस्योत्पानेनोदयेन सान्द्र पुष्परसपूरेण निरन्तरं व्याप्त्वाच्छरीरान्तःप्रविष्टा असमेषोः कामस्य पुष्परूपा शरास्तेषां कसरे पिच्छप्रायैर्दन्तुर उद्ग्रावधीकृत अङ्गं यस्य एवम्भूतस्य स्वेदरोमाञ्चौ युक्तत्वात् प्रत्यङ्गमन्तर्मध्ये समधुकामवाणसम्बन्धियद्विरवस्थितौ यत्र न रागस्यानाङ्ग इवाभासि मैनीयोगात् सस्वेदरोमाञ्चो विरसु कामशास्त्रयोजितः सुतरां शोभसे इत्यर्थं । अथ च रोमराजिदृ तीस्थानीया तया च तव दूती रोमराजि कृततोपंस्नाना रत्यै कामप्रियां त्वद्धीना कर्तुं यस्य जागरणादिनियमान् करोति तेन कारणेन विशिष्टनिसानकामबाणपिच्छमञ्जत इव शोभसे । अन्याऽपि तरुणीः तत्र ना रत्यर्थं कान्तेन सह स्वेदात् सकला रात्रिं जागर्ति ॥ १३८ ॥

प्राप्ता तवापि नृप जीवितदेवतेयं घर्माम्बुशीकरकरम्बनमम्बुजाक्षी । ते ते यथा रतिपतेः कुसुमानि बाणाः स्वेदस्तथैव किमु तस्य शरक्षतास्र ॥ १३९ ॥

प्राप्तेति । हे नृप अम्बुजाक्षी तव जीवितदेवता प्राणेश्वरी इयं भैम्यपि घर्माम्बुशीकरकर बन स्वेदजलबिन्दुमिश्रणं प्राप्ता । इयमपि त्वदीयस्पर्शवशात् सात्त्विकस्वेदयुक्ताऽभूदित्यर्थः । न केवल त्वमेव स्विन्नः अपि तु इयमपीत्यपेरर्थं । अथ च देवतायाः स्वेदो नास्ति इ यत्र देवताऽपि सस्वेदेति चित्रमित्यपि शब्दार्थः । अतश्च कुसुमान्येव यथा येन प्रकारेण ते ते नैमीकरचरणादिरूपेण प्रसिद्धपराक्रमा मोहनशोषणादिका कामबाणा तथैव तेनैव प्रकारेणाय स्वेदस्तस्य कामस्य मन्यन्ति कामेन वचित शरक्षतास्र स्रोपयाणघृणरुधिर किम् । यतस्याः कामबाणविद्धत्वात् स्वेदः । तज्जन्यव्रणरुधिरस्य नैव सम्भावयितुं युक्त यादृशो यत्र तादृशो बलिरिति न्यायेन पुष्पबाणानां धवलत्वात् तज्जन्य रुधिरमपि तादृशेय युक्त इति स्वेदजलस्य रुधिरत्वं युक्तमित्यर्थं । कुङ्कुमानुरागमगनाद्वा रक्तत्वात् स्वेदजलस्य रुधिरत्वं युक्तं । इयमपि कामबाणविद्धा विरसुरस्तीति भावः ॥ १३९ ॥

तमिव नृपं प्रति जातनेत्ररागः ॥ १४३ ॥

प्रकृतेति । यस्याः पूर्वं नागीत परभृत काकिलोऽपि उन्मनत्वात् स्वभावाच्च जातो नेत्रयो रागो लौहित्यं यस्य एवंविधं मन स्तुहिस्तुहीत्येव रूपं शब्दमकृत, पिकः स्वभावादेव स्तुहिस्तुहीत्यव्यक्तं कूजत्यर्थः । सभोगप्रसक्ते । पठिता समाप्तिं प्रापिता नलस्य नृपस्तुतिर्येन तं स्तुतिं कृत्वा तूष्णीभूतं कीरं शुकं प्रतीव उद्दिश्येव स्तुहिस्तुहीत्यकृत । हे कीर किमिति तूष्णीम्भूतोऽसि इतः परं नलस्य स्तुतिं कुर्विति नलस्तुतौ बुद्धिं प्रावर्तयदित्यर्थः । एवं वचनं पिकस्य कथं सामर्थ्यमित्याशङ्क्याह । श्रुता वीणानिषद्धशुकानुदितवचनस्रक् यया अनूक्तिं स्वीकृतवाद् तया श्रिता प्रसिद्धा यथावाचध्वंसस्य तादृशं शुकानुदितं स्तुतं मनुष्य इव परमपि स्तुहिस्तुहीत्याहेत्यर्थः । नेत्ररागत्युत्प्रेक्षते तं नलं प्रतीव लक्षीकृत्येव जातनेत्रप्रीतिसुन्दरतरं नयनानन्दकारिणं नलं दृष्ट्वा जातनेत्रप्रीति स्तुहिस्तुहीत्यकृतेत्यर्थः इति रागशब्दोऽत्र प्रेमार्थः । अनूक्तिपुष्पुरिति तेन चित्त इति (पा०५।२।२६) पुष्पप ॥ १४३ ॥

तुङ्गप्रासादवासादथ भृगकृशतामायती केलिकुल्यामद्राक्षीदर्कबिम्बप्रतिकृतमणिना भीमजा राजमाना । वक्रं वक्रं व्रजन्ती फणियुवतिरिति त्रस्नुभिर्व्यक्तमुक्तान्योन्यं विद्रुत्य तीरे रथपदमिथुनैः सूचितामाश्रिकृत्या ॥ १४४ ॥

तुङ्गेति । अथैव वीणाकथनानुयायिशुकालापानन्तरं भीमजा कलिकुल्यां क्रीडाकृत्रिमनदीमद्राक्षीत् । किम्भूता भैम्या तुङ्गे उच्चतरे प्रासादे धामात् स्थितैर्हेतोः भृशं कृशता आयता प्राप्नुवती । अधोदेशे स्थिता स्वयं महीयस्युच्चतरदेशे स्थिता जेत्री प्रत्यक्षायमाणत्वेन प्रतिभासमाना तामित्यर्थः । तथा अस्तगामिनोऽर्कबिम्बस्य प्रतिकृत्या प्रतिबिम्बरूपेण महाप्रकाशेन मणिना राजमाना । तथा वक्रं वक्रं स्वभावकुटिलं व्रजन्तीं गच्छन्तीं अत एव फणियुवतिरिति कृष्णसर्पोपमिति त्रस्नुभिः त्रासशालिभिः रथपदमिथुनैश्चक्रवाकस्त्रीपुंसयुगलैः व्यक्तं स्पष्ट

मक्तमन्योन्यं परस्परं यथा तथा तीरे विषये विहृत्य पलाय्य कमं भूते वा द्वे तीरे प्रतिगत्य श्लिष्टं कृत्वा विरहपीडामस्वप्तिना क्रतेन कृत्वा सूचितं प्रकटीकृता। दूरस्थत्वात् मान्द्यतमसावृतत्वाच्च स्पष्टतरमदृश्यमानाऽपि नदीयमिति चक्रवाककूजितेन ज्ञापिता। कथिषुत्थितिरिति सूचितामिति वा। कृशमप्यंपि कृशः भवति मूर्च्छितमतुल्यं न शिरस्थेन मणिना शोभते च। चक्र चक्र कूजितामश्च दृष्ट्वा जनाः पतिगौ वा पलाय्य दीनस्वरोपलक्षिता परस्परमाश्वास मुञ्चन्ति। सूर्यं मस्त जिगमिषु दृष्ट्वा चक्रवाकमिथुनानि मान्ध्यविरहपीडया कत कृत्वाऽन्यान्य मुक्त्वा पलाय्य कलिकुल्यापरावारे तीरे तिष्ठन्तीति भैमी दर्शितेत्यर्थः।। उपतेऽस्मिन्निति यामः। तुङ्गप्रासादमारुह्य अद्राक्षीदिति वक्तव्यो वा॥ १४४॥

अथ रथचरणौ विलोक्य रक्तावतिविरहौ सततादृतावित्रास्त्रैः। अपि तमकृत पद्मसुप्तिकालं श्वसनविकीर्णसरोजसौरभं सा॥ १४५॥

अथेति। अथ कलिकुल्यादर्शनानन्तरं सा भैमी रक्तौ परस्परानुरक्तौ स्वभावेन रक्तवर्णौ च अतिविरहौ सततं नितरां वियोगासहिष्णु तयाऽऽहतौ कामशरैर्विद्धौ, अस्त्रैः रुधिरैरिव रक्तौ रथचरणौ चक्रवाकौ विलोक्य त वर्तमानपद्मानां सुप्तिकालं सङ्कोचसमयं सायं सन्ध्यासमयमपि विरहपीडितकोकदर्शनदुःखेन सञ्जातश्वसनो निश्वासभरस्तं निर्गमेन कृत्वा विकीर्णं सरोजसौरभं यस्मिन्, तादृशं अकृत, सन्ध्यासमये पद्मसङ्कोचात् सौरभनाशेऽपि निश्वासमोचनेन पद्मिनीत्वात् पद्मसौगन्ध्यं तदानीमपि विस्तारयति स्मेत्यर्थः। तौ तादृशौ दृष्ट्वा भृशं निश्वासेत्यर्थः। अन्योऽप्यस्त्रयुतरक्तपादं दृष्ट्वा भृशं नि श्वसिति। विरहातिशयमाहृतावित्यास्त्रैरिति पाठः सुबोध्य। रथचरणौ पुमान् स्त्रिया (पा० १।२।६७) इत्येकशेष॥ १४५॥

अभिलपति पतिप्रति स्म भैमी सदयविलोकय कोकयोरवस्थां। मम हृदयमिमौ च भिन्द

ह्रिया गरुत्मतोऽग्रजेन अरुणेन समारब्धाऽश्विरामा नितरां भ्रमिर्भ्रमणं यस्य तस्मिन् सदा अरुणेन कृतभ्रमण । अथ वा आकर्षणरज्जुग्राहिभि अरुणमभिसद्वृत्तं अश्विभिर्विलिभि पृथ्वी आरब्धनिरन्तरभ्रमणौ तथा दण्डसप्तकेन सूर्यपार्श्ववर्त्तिना भ्राजिनि शोभनशीले । अथ च ग्रावचक्राधारभूतेन आकर्षणरज्जुसंयुक्तेन दारुमयेन दण्डेन शोभमाने सन्निहितास्तमयसूर्य्यसायमध्यासमयसान्निध्याच्चक्रवाकयुग तीक्ष्णतरखड्गविदारितमिव विधिवशाद्वियुक्तं सत् व्यथत इति भाव । अन्योऽपि किञ्चिच्छेत्तुं खड्गमुत्तेजनापाषाणविशिष्टे शाणचक्रे तीक्ष्णं करोति । किरणप्रवहौ रश्मी नाडर पिङ्गलौ दण्डदण्डाशौ परिपार्श्वका इत्यमर । भ्रमाविति भ्राजिन पुस्त । जिह्यतेति विजिरप्रीथे इत्यस्मात् कर्म्मणि यक् । मकारतकारस्थाने स्थैव तिजयत इति पठन्ति तदसत् ॥१४९॥

इति स विधुमुखीमुखेन मुग्धालपितसुधासव-
मर्पितं निपीय । स्मितशबलबलन्मुखोऽवदत् ता
स्फुटमिदमीदृशमीदृशं यथात्थ ॥ १५० ॥

इतीति । स नलोऽपि तां भैमीमिति अवदत् । इति किं । हे प्रिये त्वं यथा आत्थ तत् स्फुटं निश्चितं ईदृशं सत्यमेवेत्यर्थः । किम्भूत । इति पूर्वोक्तरीत्या विधुमुख्या भैम्या मुखेनार्पितं दत्तं मुग्धं मनोहारि आलपितं मञ्जुभाषितमेव सुधासवं रसवाहुल्यादमृतं उन्मादकत्वाच्च मधु निपीय आस्वाद्य सादरमाकर्ण्य च स्मितेन शबलं मिश्रितं वलत् भैमीसम्मुखं भवत् मुखं यस्य स । कामिनो हि कामिनीमुखार्पितं मद्यं सानुरागं पिबन्ति अनन्तरं चलितमुखा सहासं किञ्चिद्वदन्ति च ॥ १५० ॥

स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचित्ययोर्नम्रां वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ । त्वन्नासाच्छलनिह्नुता द्विनलिकी नाली कमुत्क्षेपिणोस्त्वन्निश्वासलते मधुव्रजनजं वा

यच्यमस्त्रं तयोः ॥ १५१ ॥

स्त्रीति । अयि प्रिये अह यक्रतरे त्वद्भ्रुवौ इति प्रसूनशर कामस्तथा लेभ्रा स्त्रीजयाय त्वा पुंजयाय च कामेन आकर्णमाकृष्य चक्रिता चापद्वयी वेद्मि । त्वद्भ्रुवावेव तयोर्धनुषी इत्यर्थ । किम्भूतयो । अखिलौ त्रिजगति वर्तमानौ तत्तज्जातीयौ स्त्रीपुंसौ प्रविभज्य विभाग कृत्वा पृथग जंतु आलोचित विचारित औचित्य याभ्या तयो । स्त्रियः स्त्र्येव जेतु योग्या । पुमश्च पुमानेवेति आलोचितौचित्ययोरित्यर्थ । तथा नालीकाना चितस्तिमात्रनालीकाख्यशरविशेषाणा मुक्ति मोक्षणनिष्कल एवशीलया । रतिकामयो सम्बन्धिनी द्विनलिकीं नालीकमोचनोपायभूतरन्ध्रयशद्वयपर्यद्वय त्वन्नासाच्छलेन त्वदीयवामदक्षिणनासापुटद्वयव्याजेन निह्नुता गोपिता जानामि । त्वन्नासापुटद्वयमेतन्न भवति किन्तु नालीकद्वयमुक्त्युपायभूता रतिकामयो द्विनलिकीत्यवाह शङ्के इत्यर्थ । तथा त्वन्निश्वासलते वामदक्षिणनासानिश्वासश्रद्वय तयो रतिकामयो प्रत्यक मधुश्वसनज वसन्तकालीनमलयानिलप्रजय वायव्य वायुदैवत्यं अस्त्रमेवाह वेद्मि, सुन्दरत्वद्भ्रूनासाद्यवयवदर्शनमात्रेण कामवश्यत्व भवतीति भाव । द्विनलिकीं समाहारे द्विगौ ङीप । वायव्य साऽस्य देवता (पा०४।२।२४) इत्यर्थे वाय्वृतुपित्रुषसोयत (पा०४।२।३१) ॥ ११ ॥

पीतो वर्णगुणस्तवातिमधुर कायेऽपि सोऽयं य
था य बिभ्रत् कनक सुवर्णमिति कैराहृत्य नोक्षी
यते । का वर्णान्तरवर्णना धवलिमा राजैव
रूपेषु यस्तद्योगादपि यात्यदोऽसि रजत दुर्वर्णतादु
यशः ॥ १५२ ॥

पीत इति । हे भैमि वर्णेषु शुक्लादिषु मध्ये गुणो वैशेषिकादिभिर्गुणपदार्थत्वेन निर्दिष्ट पीतो हरिद्राभो वर्णं स च स एव अतिमधुरो रमणीयतरो न [illegible] वर्णान्तर मधुरमित्यर्थं । यथा येन कारणेन च पीता वर्णः सोऽपि तथापि काये देहे वर्तते, अत्युत्तमया त्वया-

पि देहे धार्य्यते तस्मादयमत्युत्तम इत्यर्थः । अथ च रूपान्तरापेक्षया शुक्लरूपस्यैव प्रधानत्वादन्येषां चाप्रधानत्वाद् वर्णेषु मध्ये गुणो प्रधानभूतोऽपि पीतो हरिद्राभो वर्णः स यथातिमधुरः प्रधानभूत इत्यर्थः । यस्मादयं ते काये वर्त्तते । अप्रधानस्यापि कस्यचिदत्युत्तमेनाङ्गीकृतत्वाद्धि प्राधान्यं भवति, तथा च त्वयाङ्गीकृतत्वात् प्राधान्यं युक्तमेवेत्यर्थः । अथ च गुणः पीत एव नान्यो गुणः पीतवर्ण एव गुणरूपोऽन्ये तु दासरूपा इत्यर्थः । स एव च अतिमधुरः । उभयत्रापि हेतुः । पीतोऽयं तव काये वर्तते तस्माद्गुणोऽतिमधुरश्चेत्यर्थः । अथ च तव काये वर्तमानोऽयं प्रत्यक्षगम्योऽतिमधुरो रसो यथा पीतः सन्नत्युत्तमस्वानुभूयमानास्वादितः, तथा तव काये सोऽतिप्रसिद्धो वर्णगुणो गौरिमाऽपि पीतः सादरं निराक्षितोऽयं च हरिद्राभ इत्यर्थः । अपिशब्दान्यत्समुच्चये । सोऽतिमधुरोऽधरो यथा पीतस्तथायं वर्णगुणोऽपि पीत एवेति वा सम्बन्धः । अथ च तव अतिमधुरो वर्णगुणो वर्णात्मकमङ्गलवर्णो यथा पीतः आस्वादितः अतिमधुरा तव वाणी पीतेत्यादि यातव्य एव कनत्वेनोक्तः प्रकृतपीतरूपवर्ण एव युक्तिमाह । स्वच्छरीराश्रयः पीतवर्णो विज्ञातः कनकचम्पकशोभना वर्णो यस्य तत् सुवर्णमिति कैश्चित् अतुल्य आदरेण नास्कीर्त्यते नोद्भाव्यते । अपि तु त्वदङ्गधृतसुवर्णतुल्यवर्णधारणादयं वर्णः सुवर्णमित्युच्चैः कीर्त्यते । अथ च स्वच्छरीराश्रयः पीतवर्णः धारयच्चामीकरः शोभनो वर्णोऽस्येति व्युत्पत्त्या सुवर्णमिति केवलैरादरेण नोद्भाव्यते अपि तु स्वच्छरीराश्रितपीतवर्णमिति त्वदीयाङ्गमेव सुवर्णमिति कीर्तिं लेभे इत्यर्थः । अथ च शोभनो वर्णः स्तुतिमस्य त्वदङ्गस्य विज्ञदर्शितरा स्तुत्य न तु स्वत इति मुख्यया वृत्त्या सुवर्णमिति त्वदीयमङ्गमेव, कनकं तु त्वदङ्गसवर्णसाम्यधारणाद्गौण्या वृत्त्या लोकेन कथ्यत इत्यर्थः । अत एव पीतवर्णस्य पुरस्ताद् प्रधानानां वर्णान्तराणां नीलरक्तादीनां वर्णानां का अपि तु सा नैव कुत्राप्युपयुज्यते, तत्कथा न कार्यैव यावत् यत कारणात् यो धवलिमा शुक्लगुणः षड्विधेषु रूपेषु मध्ये राजेव श्रेष्ठतम एव निर्मलत्वादभ्यर्हितत्वाद् रूपविभागयत्नाया वैशेषिके प्रथमाङ्गीकृतत्वाद्य प्रधानभूत एव तस्य प्रधानभूतस्यापि योगात् सम्बन्धाद् र

जत दुष्टोऽसमीचीनो वर्णो यस्य तस्य भावस्तया दुर्वर्णशब्दवाच्यता तद्रूप दुर्यश अकीर्तिं रतिनिन्दितनीलादिवर्णान्तरयुक्तत्, दुर्वर्णता प्राप्नोतीति किं वाच्यमित्यर्थं । यावत् सकल रजतमिति वा । अत्र प्रधानस्यापि पीतरूपस्य भैमीशरीरेणाङ्गीकृतत्वादेव वक्तव्य तद्योगा त् काञ्चने सुवर्णमिति कीर्ति । भैमीशरीरेणाङ्गीकृतत्वादेव च वचन स्यापि धवलिम्नाऽनुसमता । धवलिमा वर्णयाचित्याद्गुणवचनत्वाद्वा इमनिच् ॥ १५२ ॥

खण्डक्षोदमृदि स्थले मधुपय कादम्बिनीतर्पणा
त् कृष्टे रोहति दोहदेन पयसा पिण्डेन चेत्
पुण्ड्रक । स द्राक्षाद्रवसेचनैर्यदि फल धत्ते
तदा त्वद्गिरामुद्देशाय तताप्नुयुर्द ति मधुराधार
स्तमप्प्रत्यय. ॥ १५३ ॥

इदानीं नवभि श्लोकैर्भैम्या वाणीं वर्णयति । खण्डेति । हे नेमि पुण्ड्रक स्थूलक्षुविशेष पयसा पिण्डेन दुग्धानामत्यन्ताग्निसंयोगाद्घनी-भूतेन गोलकेनैव दोहदम एवम्भूते स्थले इत्र चेत् रोहति साङ्कुरो भवति । किम्भूते स्थले । खण्ड शर्करा तस्य क्षोद चूर्णमेव मृत मृत्ति का यस्मिन् तथा मधु अमृत माक्षिकमेव वा पयो यस्य तथा का-दम्बिन्या मेघमालया तर्पणात पूर्णजलकरणाद्धेतोर्हि कृष्णकृष्टमेघमा-लावृष्टजल हि क्षेत्र पुन कृष्यते तादृशे ममीकृते, रूपत हि बीज अङ्कुरार्थं पुन पयोऽपेक्षेत तस्स्थानेऽत्र दुग्धगोलक । दोहदेत्यनेन निरातङ्कमभिवृद्धिं सूचिता । अनन्तरञ्च प्ररूढाङ्कुर सन् पुण्ड्रक फ-लात्पत्तिसमयपर्यन्त द्राक्षाया द्रव पक्वफलनिष्पादितरसस्तस्य सेचनै कृत्वा इक्षुदण्डादपि परिवृत्तमाधुर्यातिशय फल यदि धत्ते तदा तर्हि सतोऽपि विशिष्टादिक्षुफलादपि सकाशात् त्वद्गिरा तव वाणीनामुद्देशाय निर्देशार्थं मधुरशब्द व्यापारो गुणप्रकर्षस्य तान्शस्तमप् प्रत्यय उ-देति प्राप्यते । कीदृग्भैम्या वाणीति पदे उक्तविशेषणविशिष्टादिक्षु-फलादतिमधुरतमेति तदा निर्दिष्टु शक्यत इति अतिशयने तमप त-

त्यर्थं ।

घयाल सम्प्रवक्ष्यामि शर्कराचलमुत्तमं ।
यस्य प्रदानाद्विष्णवकरुद्रास्तुष्यन्ति सर्वदा ॥

इति दानखण्ड । आह्वयेत स्पर्द्धायामाङ् ( पा० १ । ३ । ३१ ) इति तङ् ॥ १५४ ॥

आस्ये या तव भारती वसति तल्लीलारविन्दो
ल्लसद्वासे तत्कलवेणनिक्वणमिलद्वाणीविलासा
मृते । तत्केलिभ्रमणार्हगैरिकसुधानिर्म्माणहर्म्या
धरे तन्मुक्तामणिहार एव किमयं दन्तस्रजा
राजते ॥ १५५ ॥

आस्य इति । हे प्रिये तवास्ये या भारती सरस्वती वसति । किम्भूते आस्ये । तस्या भारत्या एव हस्ते स्थितस्य लीलारविन्दस्येव उल्लसन् प्रसरन् वासो गन्धो यस्मिन् पद्मिनीत्वात् पद्मतुल्यपरिमले । तथा तस्या एव कलो वेणो निक्वण मधुर स्फुटा वीणा सम्बन्धी नाद तद्रूत मिलत् सम्बध्यमान वाणीविलासरूप वक्रोक्त्यादिनानाविध वाग्विलासरूप अमृत यस्मिन् । तथा तस्या एव केलिभ्रमणार्हं लीलागमनयोग्य गैरिकमोक्षधातुविद्रावण सुधया धवलतया धवलसाधनचूर्णद्रव्येण च चित्रादिनिर्म्माण यत्र तादृश यत हर्म्यं गृह तद्रूपस्तुल्यो ऽधरो यस्मिन् तादृशे आस्ये पुरा दृश्यमाने ये दन्तस्रजौ द्वे दन्तमाल राजत शोभेत । तद्रूपः अयं पुरो दृश्यमान तस्या भारत्या मुक्तामणिरचिता हार एव किं तद्वत् रेजाते इत्यर्थं । सरस्वती वीणा क्वणितमतुल्या तव वाणीत्यर्थ । अत्र प्राधान्येन वाणीवर्णन, भार्यप्रासङ्गिक । पद्मगन्धादिभिर्मुखे भारतीवासोऽनुमीयते । ईश्वराणां गृह गैरिकादिविचित्र भवति गैरिकयुक्ता सुधेति वा ॥ १५५ ॥

वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्विनी कापि
ते रसदा खण्ड इतीदमीयपुलिनस्याल्पते

वालुका । एतन्नीरमृदैव किं विरचिताः पूताः सिताश्चक्रिका. किं पीयूषमिदम्पयांसि किमिदन्तीरे तवैवाधगे ॥ १५६ ॥

वाणीति । हे भैमि ते वाणी काऽपि वर्णयितुमशक्यत्वात् लोकोत्तरा, अथ वा निर्दिष्टमाना उज्ज्वलरसस्रोतस्वती शृङ्गाररससम्बन्धिनी वा नदी, अथ च निर्मलजलसम्बन्धिनी वा नदी अत एव मन्मथस्य तोये कामोद्दीपिका,तथा इदमीयस्या अस्या नद्याः सम्बन्धि पुलिनस्य सम्बन्धिनी वालुकैव इक्षुविकाररूपः खण्ड इति आलप्यते गीयते । तथा पूता निर्मला. सिता शुभ्रा चक्रिका शर्कराकृतचक्राणि एतस्यास्तीरस्य मृदैव धवलमृत्तिकयैव रचिताः किं । तथा पीयूष अमृत अस्या सम्बन्धीनि पयांसि इदम्पयांसि किं अस्या जलान्येव अमृतत्वेनालप्यन्ते किं । तथा तवाधरावेव इदन्तीरे अस्या नद्यास्तीरे उभौ तटौ किं । शृङ्गाररसप्रधाना कामोद्दीपिका त्वद्वाणी मधुरतमेति भाव ॥ १५६ ॥

परभृतयुवतीनां सम्यगायाति गातु न तव तरुणि वाणीव सुधासिन्धुवेणी । कति न रसिकण्ठं कर्तुमभ्यस्यन्त्यसौ भवदुपविपिनाम्रे ताभिराम्रेडितेन ॥ १५७ ॥

परेति । हे तरुणि प्रादुर्भूतयौवने सुधासिन्धुवेणी सुधानदीप्रवाहरूपा तव इयं वाणी परभृतयुवतीनां सम्यग्यथास्मेन गातुं भाषितुं नायाति, यस्मात्ताभिः कोकिलाभिरसौ त्वद्वाणी भवत्या उपविपिने उपवने स्थितो य आम्रवृक्षः तस्मिन् स्थित्वा रसालाङ्कुरास्वादेन रसिकेऽतिमधुरे, अथ च मम प्येव वाणी भवत्येव साभिलाषे कण्ठे कर्तुं कण्ठस्थां कर्तुं आम्रेडितेन पुन पुनर्घोषणेन कतिवारानाभ्यास्यते अपि तु बहुवारमभ्यस्यत एव । तस्मादद्यापि ताभ्यः भवद्वाणी सम्यग् नायातीति ज्ञायत इत्यर्थः । कोकिलालापादपि त्वद्वाणी मधुर-

तमेति भाव । भिक्षाटनेन विद्याभ्यासः सुकर इति सूचनार्थं परजन पद । युगपेक्षया व्याख्या विशेषतस्तरुणीनामिति सूचनार्थं युवतिपद॥१५७॥

ऊर्ध्वस्ते रदनच्छदः स्मरधनुर्बन्धूकमालामयं
मौर्वी तत्र तदाधराधरतटाग्रःसीमलेखालता ।
एषा त्वामपि तावकी ननु धनुर्वेदः प्रिये मान्मथः
सोऽयं कोणधनुष्मतीभिरुचितं वीणाभिरारभ्यते ॥ १५८ ॥

ऊर्ध्व इति । हे प्रिये ते ऊर्ध्वो रदनच्छदः ओष्ठ एव बन्धूकमाला-मय स्मरधनु तदाधराधरतटस्य अग्र सीमापर्यन्त मर्यादाया वर्त-माना लखा सैव देर्ध्याल्लता तत्र कामचापे मौर्वी एषा । तावकी या-नपि मान्मथ कामसम्बन्धी कामाङ्गप्रतिपादक धनुर्वेदएव सोऽय विशिष्टस्त्वद्वाणीरूपो मान्मथधनुर्वेद उचित योग्य यथा तथा कोण-धनुष्मतीभिर्वीणावादनसाधनधनुष्काभि वीणाभिः आरभ्यते अभ्य-स्यते परमद्यापि नायातीत्यर्थ । त्वद्वाणी वीणाक्वणितादपि मधुरत-मेति भाव । धनुर्वेदश्च धनुर्धरैरेवाभ्यस्यत इत्यौचित्य, अभ्यस्यते तत्तदुचितमिति वा । यत् स्वस्य नायाति तदागमनार्थमभ्यासोऽप्यु-चित एवेत्यर्थः ॥ १५८ ॥

स प्रत्यग्रविदग्धसमाधि सदा गच्छत्यपाङ्क्ते
यता तत्र स्पष्टमपि स्मरस्य विशिखा मुग्धे
त्रिगानान्मुखः । य. किं मध्विति नाधरं
तत्र कथं हेमेति न त्वद्वपु. कीदृङ्नाम सुधेति
पृच्छति मनो दत्त गिरं चोत्तर ॥ १५९ ॥

स इति । हे मुग्ध सुन्दरि य पुरुष मधु किं नामेति पृच्छति प्र-श्न कुर्वाणे जने विषये तवाधरमेव उत्तर ■ दत्ते स धाम्ना पामरोऽ-चतुर, न नु तव मनसमिवानुयान्य इत्यर्थः । तथा हेम किं प्रकारक

गिति प्रश्नं कुर्वाणे जने विषये यस्त्वद्गुरेव उत्तरं न दत्ते । स चिट-
प्रधाना चतुराणां समाद् सभाया मदा अपाङ्क्तेयता पङ्क्तिबहिर्भू-
तत्वं याति गच्छति तेषां पङ्क्तौ नोपवेश्यते सोऽप्यचतुर इत्यर्थः ।
तथा सुधा नाम कोट्टगिति पृच्छति प्रश्नं कुर्वाणे जने यत्ते गिरश्च उ-
त्तरं न दत्ते स्वरस्य विशिखास्तश्च पुरुष स्प्रष्टुमपि विगानात्मता जु-
गुप्सायै कृतोऽसौ नीरसोऽयमिति जुगुप्सया न स्पृशन्ति न भिन्द-
न्तीति किं वाच्य सोऽप्यचतुर इत्यर्थः । त्वद्वाणी सुधाया अपि मधुर-
तमेति भावः । श्रवरादिवर्णनं तु प्रासङ्गिकम् । प्र स्प । पापाद्यखजौ
( पा० ४।२।९४) इति मत्वर्थे च । पाङ्क्तेय न ढ्यादित्वाद्धक् । १५९॥

> मध्ये बद्धाणिमा यत्सगरिममहिमश्रोणिवक्षो-
> जयुग्मा जाग्रत्पत्यौवशित्वा स्मितघनलघिमा
> मत्प्रतीशित्वमेषि । सूक्तौ प्राकाम्यरम्या दिशि
> विदिशि यशोलब्धकामावसाया भूतीरष्टावदी-
> शस्तदनु मुदितः स्वस्य शिल्पाय तुभ्यम् ॥ १६० ॥

मध्य इति । हे प्रिये त्वं यद् यस्माद्धेतोर्मध्ये उदरभागे बद्धो धृत
अणिमा सौक्ष्म्यातिशयो यया सा कृशोदरी, तथा गरिममहिमभ्यां
गुरुत्वमहत्त्वाभ्यां सह वर्तमानं श्रोणिनितम्बं वक्षोजयुग्मं स्तनयुगञ्च
यस्याः सा गुरुस्थूलनितम्बा महोच्चकुचा च, तथा जाग्रत् स्फुरद्रूपं पं
तिं वशित्वं जितेन्द्रियता यस्याः सा पतिव्रता । तथा स्मिते ईषद्धा-
स्येऽपि घनो लघिमाऽल्पत्वं यस्याः सा, अल्पहासेत्यर्थः । तथा मा
मत्प्रति ईशित्वं स्वामितामेषि, मम प्राणेश्वरी । तथा सूक्तौ वच-
नचातुर्यविषये प्राकाम्येन प्रकारबाहुल्येन रम्या वक्रोक्त्यादिनानाप्र-
कार वाणीं वक्तुं यो यथा वाञ्छति तथा वक्तुं त्वमेव जानासि ना-
ऽन्या । तथा दिशि प्राच्यादौ विदिशि आग्नेयादौ च यशसा सौन्द-
र्यादिविषयकीर्त्या यशसा वा कृत्वा लब्ध कामेन स्वेच्छया अगतिप्र-
तप्रसराऽवसाया गतिर्यया सा त्रैलोक्यप्रसरकीर्तिः, एवंविधा यस्मा
त् तस्मात् कारणात् मुदितो हृष्टः ईश ईश्वरः त्वां निर्माय सौन्दर्या-

दिना मुदितः परितुष्टः सन् अणिमादीरष्टावपि भूतीः महासिद्धीः तुभ्यं स्वशिल्पाय त्वद्रूपाय निजनिर्माणाय अदित प्रायच्छत । मनुष्यो हि पित्रादि अपत्यादिभ्यः स्वयं धृतमलङ्कारादि ददाति । तथेश्वरेण सन्तुष्टेन स्वयं धृतमणिमा महिमा गरिमा लघिमा वशित्वमीशित्वं प्राकाम्यं कामावसायिता चेत्येवमष्टविधमैश्वर्यं तुभ्यं दत्तं, अन्यथा एतत्त्वयि कथं स्यादित्यर्थः । एवं सूक्तिः कस्याश्चिदपि नास्तीति भावः । शब्दश्लेषशक्तिच्छलेनैतत् सर्वं सूक्तमिति ज्ञेयम् । वाणीवर्णनं एव तात्पर्यम् । मध्यादिवर्णनं प्रासङ्गिकम् । अणिमादौ गुणवचनत्वादिमनिच् । वश इन्द्रियाणां स्वाधीनत्वं तदस्यास्तीति वशी तद्भावो वशित्वं जितेन्द्रियत्वं ईशनमीशः ऐश्वर्यं तदस्यास्तीति ईशी तद्भाव ईशित्वम् ॥ १६० ॥

त्वद्वाचः स्तुतये वयं न पटवः पीयूषमेव स्तुम-
स्तस्यार्थे गरुडामरेन्द्रसमरः स्थाने स जानेऽज-
नि । द्राक्षापानकमानमर्दनमृजा क्षीरे दृढावज्ञ-
या यस्तन्मधुनोऽनया निजपदप्रक्षालनानुग्र-
हः ॥ १६१ ॥

त्वदिति । हे प्रिये वयं त्वद्वाचः स्तुतये न पटवः, तस्मात् पीयूषममृतमेव स्तुमः तस्य अमृतस्य यः स पुराणादिप्रसिद्धः गरुडस्यामरेन्द्रस्य च समरः अजनि स्थाने युक्तं तदित्यहं जाने मन्ये । तस्य यस्मात् मधुनोऽनया तव वाचया यस्मिन्नमृते निजपादयोः प्रक्षालनेनैवानुग्रहो धृतः कृतः । किम्भूतया द्राक्षापानकस्य पक्वद्राक्षासम्बन्धिनः संस्कृतरसविशेषस्य मानोऽहङ्कारस्तस्य मर्दनं खण्डनं मृजति तया । तथा क्षीरे दुग्धे विषये दृढा अन्येन त्याजयितुमशक्या अवज्ञा यस्यास्तया । अथ च यस्मिन् पीयूषे त्वद्वाक्यभूतया वाचया स्वीयसुमिष्टत्वरूपाणां पदानां प्रक्षालनादनुग्रहाद् यद्वाचा यत् कृतोऽस्त्येव, अमृतमालिन्यतयैव निर्दोषमधुरत्वं यदमीत्यर्थः । द्राक्षाक्षीरे तिष्ठतः पीयूषादपि त्वद्वाणी मधुरमेति भावः । अभीष्टेऽस्मिन्ननुपमातिशय

स एव चरणक्षालनादि करोति ॥ १६१ ॥

शोकश्चेत् कोकयोस्त्वां सुदति नुदति तद्व्या
हराज्ञाकरस्ते गत्वा कुल्यामनस्तं व्रजितुमनुन
ये भानुमेतज्जलस्थं। बद्धे यद्यञ्जलावप्यनुनयवि
मुखः स्यान्ममैकग्रहोऽयं दरबैवाभ्यां तदम्भो
ञ्जलिमिह भवतीं पश्य मामेष्यमाणं ॥ १६२ ॥

शोकेति। हे सुदति कोकयोर्विरहजनित शोकः सदयहृदयत्वात् त्वां चेन्नुदति तर्हि व्याहर आज्ञापय। ते आज्ञाकरः अहं कुल्यां गत्वा एतस्याः कुल्यायाः जलस्य उदकप्रतिबिम्बितं भानुं सूर्यं अनस्तं अस्ताभाव व्रजितुं प्राप्तुं अस्तमगन्तुं, यद्वा अनस्तं अस्ताचलप्रतियोगिभूतं उदयाचलं गन्तुं अनुनये प्रार्थये। इदानीं त्वया अस्तो न प्राप्तव्यः पुनरुदयाचले गन्तव्यं इत्येवं सूर्यं करसम्पुटयोजनया सम्प्रार्थ्य पुनः प्राचीं नेष्यामीति यावत्। यदि मया अञ्जलौ बद्धेऽपि अयं सूर्यः मामनुनये प्रार्थनायां विमुखः स्याद् यतः एकः केवलो ग्रहोऽभिनिवेशो यस्य एवंविधः, अयं च एको मुख्यो ग्रहराजः तर्हि सूर्यार्घ्यदानसम्बन्धिनं अम्भोऽञ्जलिं आभ्यां कोकाभ्यामेव दत्वा इह प्रासादे भवतीं प्रति पुनरेष्यमाणमागमिष्यन्तं मां पश्य, एवं कोकमिथुनाभ्यां अपि कष्टमुपागतेति ययमाल सायङ्गन्थ्यापारमनालिनित बहिर्निर्गमनार्थमनुज्ञा याचितवानिति भावः। सुदतीत्यनेनात्यादरं कम्रमत्र कविदन्तकिरणप्रकाशेन महामानन्दाभिष्यति तदर्थं व्याहरेति प्रार्थ्यत इति सूच्यते। दत्येति पाठे उत्प्रेक्षा। एष्यमाण गत्यर्थादिङो लटः शानच् ॥ १६२ ॥

तदानन्दाय त्वत्परिहसितकन्दाय जगतो निजां
लीनां लीनां स्थितिमिह मुहूर्तं मृगयतां। इति
व्याजात् कृत्वाऽऽलिषु वलितचित्तां सहचरीं स्वयं
सोऽयं सायन्तनविधिविधित्सुर्बहिरभूत् ॥ १६३ ॥

तदिति । सोऽयं नलः स्वयं सायन्तनं विधिं सन्ध्याग्निहोत्रादिकं कर्म विधित्सुः कर्तुकामः सन् प्रासादाद्बहिरभूत्, निरगादित्यर्थः । किं कृत्वा इति व्याजादेवप्रकारेण सूर्याञ्जनयमसोमगवेषणाभिषेण सह चरीं भैमीं आलिषु सखीषु विषये चालिङ्गनापाद् वलितं चित्तं य- स्यास्तां तूष्णीं कृत्वा । इति किं हे प्रिये अहं सूर्याञ्जनयार्थं नदीम्प्रति गमिष्यामि प्रयतो च निशातोना निजसखीना दृष्टाग्रैव कस्मिंश्चित् प्रदेशे त्वया न द्रष्टव्यमिति लीना गुप्ता स्थिता स्वरकर्तृकं कर्म्मकं या परिहसित परिहासित परिहासक्रीडैव कन्दो मूलं तत्र हेतुर्यस्य ता दृशाय लज्जितायै तासां सखीनामानन्दाय मुहूर्तं मृगयता गवेषयतु इति । एवं तद्वचनाद्भैमी क्वचिल्लीना सखीभिर्येषितु निर्गता । नलो- ऽपि सायंसन्ध्यां कर्तुं बहिर्निर्गमनादिना तद्वंशगमङ्गलि सूचिता । विधित्सुः द्वितीयेति योगविभागात् समासः ॥ १६३ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तस्यागादयमेकविंशगणनः काव्येऽति नव्ये कृतौ भैमीभर्तृचरित्रवर्णनमये सर्गो निसर्गोज्ज्वलः ॥ १६४ ॥

श्रीहर्षमिति । तस्य कृतौ श्रीहर्षकृते अतिशयेन नव्ये अपूर्वतर- प्रमेयपरिपूर्णे भैमीभर्तुः चरित्रवर्णनं प्राचुर्येण प्रस्तुतं यत्र तादृशे का- व्ये एकविंशतेः पूरणः एकविंशगणना सङ्ख्या यस्य यद्वा एकविंशानां पू- रणी एकविंशा गणना सङ्ख्या यस्य स सर्गोऽगात् समाप्त ॥ १६४ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते उत्तरनैषधीयव्याख्याया एकविंशः सर्गः ॥ २१ ॥

ष्ठाय तां भैमीमपि अधिवास्य तत्रोपवेश्य । पर्य्यङ्कं अधिशीङ् ( पा० १।४।४६ ) इति कर्मत्वम् । अधिवास्य ण्यन्ताद्वस्तेर्ल्यप् तस्य धात्वन्तरत्वात् उपान्वध्याङ्वस (पा०१।४।४८) इति कर्मत्वाप्राप्तेस्तामधिवास्येत्यत्र सामर्थ्यात्तत्रैवेति ज्ञेयं । उपश्लोकयति सत्यापपाशेति (पा०३।१।२५) णिचि स्म योगे भूते लट् ॥ २ ॥

विलोकनेनानुगृहाण तावद्दिशं जलानामधिपस्य दारान् । अस्त्वालि लाक्षापयसेव येयमपूरि पङ्कैरिव कुङ्कुमस्य ॥ ३ ॥

विलोकनेनेति । हे भैमि त्वं जलानामधिपस्य वरुणस्य दारान् भार्यां पश्चिमां दिशं विलोकनेनानुगृहाण कृतार्थीकुरु तावदादौ विलोकनेनानुगृहाण वर्णनया तु पश्चादित्यर्थः । यावच्चन्द्रोदयादिना प्राच्या रामणीयकं भवति तावत्सन्ध्यारागेण कृतरामणीयकां पश्चिमां दिशं विलोकयेति वा तावच्छब्दार्थः । जलाधिपस्य च भार्या दुःखिता विलोकनादिना अनुगृहीतुमर्हा भवतीत्युक्तिः । येयं पश्चिमा दिक् लाक्षापयसाऽलक्तरसेन कृत्वा कयापि अस्नापीव क्षालितेव । तथा कुङ्कुमस्य पङ्कैः कृत्वा कयापि अपूरीव । एवंविधा रक्ता दृश्यते यतस्तस्माद्रमणीयामेतां विलोकयेत्यर्थः ॥ ३ ॥

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः । तस्यैव पातेन विचूर्णितस्य सन्ध्यारजोराजिरिहोज्जिहीते ॥ ४ ॥

उच्चैरिति । हे प्रिये रविरेव गैरिकाख्यधातुविशेषसम्बन्धी गण्डशैलः उच्चैस्तरादत्युन्नतादम्बरशैलस्य गगनगिरेर्मौलेः शिखरात् सकाशाच्च्युतः पतितः स्खलपादाच्च्यवाय पतितोऽयमत्र सांप्रदितः पातनो नभरगिरिशिखरादथ पतनेन हेतुना विचूर्णितस्य विशेषेण सूक्ष्मचूर्णीकृतस्य तस्यैव गैरिकगण्डशैलस्य सम्बन्धिनी सन्ध्यैव रजोराजिः सन्ध्यासम्बन्धी राग इत्यर्थः । इह सायङ्काले पश्चिमदिशि वा उज्जिहीते उपरिष्टात् प्रसरति । अस्तमयसमये सूर्यस्य रक्तत्वाद्गगनगिरिशिखरात्-

च्युतत्वाच्च गैरिकगण्डशैलत्व । उन्नतरात् प्रदेशात् पतितो गण्डशैल-चूर्णीभवति । चूर्णीभूतस्य रजोराशिरूर्द्ध्वं प्रसरति । तद्रजोराशिरेव स-न्ध्यारागः प्रायेणोर्द्ध्वं गच्छति प्रसरतीत्यर्थः ॥ ४ ॥

अस्ताद्रिचूडालयपक्कणालिच्छेकस्य किं कुक्कुटपेटकस्य । यामान्तकूजोल्लसितैः शिखौघैर्दिग्वारुणी द्रागरुणीकृतेयम् ॥ ५ ॥

अस्तेति । हे प्रिये कुक्कुटानां पेटकस्य समूहस्य यामान्ते प्रहरान्ते या कूजा शब्दित तद्वशादुल्लसिते प्रकाशमाने किञ्चिदुच्चीभूते उत्फु-ल्लजपाकुसुमतुल्ये. शिखाना शिरसि रक्तचर्म्मनयकमरावामौघैर्न्दे किमिय वारुणी दिक् द्राक् अकस्मादरुणीकृता रक्तीकृतेत्युत्प्रेक्षा । किम्भूतस्य । अस्ताद्रेश्चूडा शिखर सैव लय स्थान यस्य स च पक्क-णा शबरगृह तस्यालि समूहस्तत्र छेकस्यासक्तस्य शबरैर्गृहेषु सङ्गृही-तस्य, कुक्कुटाना कूजने उन्नमितशिखत्व जाति , ते च यामान्ते कू-जन्ति साय समये कूजनादुत्फुल्लशिखावृन्दमस्त्यतो दरुणीभवनसम्भवाये यामान्तेत्याद्युक्तम् । पक्कण शबरालय । गृहासक्ता पक्षिमृगाश्छे-कास्ते इत्यमर । पेटक पुस्तकादीना मञ्जूषाया कदम्बकमिति विश्व ॥ ५ ॥

पश्य द्रुतास्तद्रुतसूर्य्यनिर्य्यत्कराग्रलीहैङ्गुलेवैष याऽत्र । निषिध्यमानाहनि सन्ध्ययाऽपि रात्रिः प्रतीहारपदेऽधिकारम् ॥ ६ ॥

पश्येति । सन्ध्याऽत्र सायसमये चन्द्रस्य नायिका रात्रि सदन-स्वन्धिन. प्रतीहारस्य दौवारिकस्य पदेऽधिकारमास्पदमपि पश्य वि-लोकय । किम्भूतया । द्रुत शीघ्र अस्तद्रुतस्य सूर्यस्य निर्य्यन्तो बहि-र्निर्गच्छन्तो करावली किरणपरम्परैव हैङ्गुल हिङ्गुलाख्य रक्तकरक्तद्रव्य विशेषेण रक्त वेत्र दण्डविशेषोऽस्यास्तया । किम्भूते पदे । निषिध्य-मानं निवार्य्यमाणप्रवेश अहो दिनं यस्मिन । स्त्रिया हि दौवारिकी रूपेण युक्तेति सन्ध्येव रात्रेर्दौवारिकी जातेत्यर्थ । सूर्य्योऽस्तमितो

वा अपिशब्दार्थः । अथ च स प्रसिद्धो महानटस्ताण्डवनृत्तकर्त्ता शिव
भानोः सूर्यस्य रागे सति अस्तमितार्द्धे सूर्ये सतीति यावत् । तत्र
सन्ध्यासमये मत्त शिलातुल्यवर्णा अचिरस्थायित्वात् कुत्सितनर्त्तकीरू-
पा या ईशा देवीं सन्ध्याय सम्यग् ध्यात्वा सायं सन्ध्यावन्दनं कृत्वा-
ऽष्टमूर्तिषु मध्ये तारापरम्परैव माला यस्याः तया गगनरूपयाऽपि अ-
मूर्त्तयाऽपि कृत्वा इदानीं सन्ध्यावन्दनानन्तरं अङ्गहारं भुजकरपादादी-
नामङ्गानां विक्षेपं करोति किमिति वितर्कः । अमूर्त्तस्याङ्गहारकरणं वि-
चित्रमिति विरोधार्थोऽपिशब्दः । न केवलं चन्द्रसूर्यभोगादिभूषित-
यैव तन्वाऽङ्गहारं करोति किन्तु वियताऽपि तन्वेति समुच्चयार्थो वा ।
ईश्वरोऽपि सायं समये नृत्यति । भानुरागे मत्त शिलातुल्यवर्णा सन्ध्या
सपीशा सहचरीं पार्वतीं विचिन्त्य विशिष्टया वियद्रूपयाऽपि तन्वा-
ऽङ्गहारं तनोति । पार्वतीसमीपेऽपीश्वरो नृत्यति । अथ च महान-
तिप्रवीणो नटः कुत्सितां नटीं नृत्तेऽनतिचतुरामपि सन्ध्या वय सन्धौ
वर्त्तमानां तरुणीं रसभावसन्धौ वर्त्तमानां वा रसभावज्ञां । अत एव
सभाया अनुरागे ईशां सभ्यानुरागजनने समर्थां सञ्चिन्त्य वियत्तुल्य
याऽतिविशालया शुद्धमौक्तिकपरम्परारूपया मालयोपलक्षितया तन्वा
अङ्गहारं तनोति तदसाम्प्रतं किन्तु रसभावादिजनयन्त्या तया सभ्या-
नुरागे समुत्पादितेऽपि नृत्तकर्म्मकौशलेनापि सभ्यानुरागार्थं स्वयमङ्ग
हारं तनोतीति युक्तमेवेत्यर्थः । अथ च महान्नर्त्तको वय सन्धौ रसा-
दिसन्धौ वा वर्त्तमानां तथा समृद्धिमतीमपि किन्तु कुत्सितां नटीं नृ-
त्तानभिज्ञां ज्ञात्वा सभानुरागे निमित्ते विशिष्टया तन्वा स्वयमङ्गहारं
तनोति तदसाम्प्रतं किन्नु अपि तु तस्या नृत्तकौशलाभावान्नृत्तेन स-
भानुरञ्जने सामर्थ्याभावात् सभानुरञ्जनार्थं स्वयमेव निपुणो नृत्यतीति
युक्तमेवेत्यर्थः । अथ वा अन्योऽपि महानतिसमृद्धो अटति सर्वत्र ग-
च्छति तादृशोऽतिचञ्चलोऽतिप्रसिद्धो नटः कुनटीमपि नृत्तविद्याया-
मपि मया कान्त्या कृत्वाऽपि या ऽनुरागस्तद्विषये ईशां सौन्दर्याति-
शयेनैव रागमुत्पादयन्तीं तथा शैशवतारुण्ययोः सन्धौ वर्त्तमानां प्रा-
दुर्भूतयौवनां रसभावसन्धिस्थत्वाद्रसभावज्ञां वा सञ्चिन्त्य कायकान्त्या

ऽनुरागे सति कुनटीमपि तरुणीं रमजावशां वा तयोर्वा सम्पन्नात्व विचिन्त्य तन्वा तदीयशरीरस्यातिविशिष्टतया शुद्धमौक्तिकमालया हारं विरचयति तत्रानुरक्तः सन् तस्यै मुक्ताहारं वितरतीत्यर्थः । एवमन्या अपि योजना सुधियोहनीयाः । सभानुरागैः सन्ध्ययेति पाठो बहुषु पुस्तकेष्वदृष्टत्वादुपेक्ष्य । अतः यथाद्यम् । सन्ध्या दिगादित्वाद्यत् । तारशब्दस्य नक्षत्रकमौक्तिकाभिधायित्व दशमसर्ग एवोक्तं ॥७॥

भूषास्थिदाम्नस्त्रुटितस्य नाट्यात् पश्येडुकोटी
कपटं वहद्भिः । दिङ्मण्डलं मण्डयतीव खण्डैः
सायं नटस्तारकराट्किरीटः ॥ ८ ॥

भूषेति । हे भैमि तारकराट् चन्द्रः किरीटे यस्य स शम्भुः सायं नटति सायं नटनशीलः सन् उद्धतात् नाट्यात् नृत्ताद्धेतोस्त्रुटितस्य भूषास्थिदाम्नो भूषणास्थिमालाया उच्छलितैः खण्डैः शकलैः तैरेव उडुकोटीकपट कोटिनक्षत्रव्याज वहद्भिर्धारयद्भिरिह सायं समये दिङ्मण्डलं मण्डयति पश्य । एतानि नक्षत्राणि न किन्तु ताण्डवत्रुटितास्थिमालोच्छलदवयवान्येव दिक्षु शोभन्त इत्यर्थः । अन्योऽपि चन्द्रतुल्यकिरीटो नटो नृत्यंस्त्रुटितहारखण्डैर्भूवृन्दं मण्डयति । मण्डयतीयेति पाठे सम्प्रेक्षा ॥ ८ ॥

कालः किरातः स्फुटपद्मकस्य वधं व्यधाद्यस्य
दिनद्विपस्य । तस्यैव सन्ध्या रुचिरास्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि ॥ ९ ॥

काल इति । हे प्रिये कालः सन्ध्यासमय एव किरातो ऽथ च कृष्णवर्णो हिंसकत्वान्मृत्युरूपो वा कालो गिरिगह्वरवनसञ्चारी शबरः स्फुटानि विकसितानि पद्मानि यस्मिन्, यद्वा विकसितकमलं कं जलं यस्मिन्, अथ च प्रकटीभूतगुण्डदण्डाग्रे प्रकाशमानं पद्मकं रक्तबिन्दुवृन्दं यस्मिन् तादृशस्य दिनरूपस्य द्विपस्य वधं व्यधात्करोत् । तस्यैवेह मत्त करिणो रुचिरा रम्या सन्ध्याऽस्रधारा रुधिरधारा । ताराश्च नक्षत्राणि विदारितमदीयकुम्भस्थलमौक्तिकानि, सन्ध्यारागो र-

क्तधारा ताराश्च स्थूलमुक्ता इव शोभन्त इत्यर्थः । स्फुटपद्मकरपेति च ह्रुश्रीह्रौ कप् ॥ ९ ॥

सन्ध्यासरागः ककुभो विभाग शिवाविवाहे वि भुनाश्यमेत्र । दिग्वाससा पूर्वमवैमि पुष्पसि न्दूरिकापर्वणि पर्य्यधायि ॥ १० ॥

सन्ध्येति । विभुना प्रभुणा हरेण पूर्वं शिवाया पार्वत्या विवाहावसरे सन्ध्यया सरागो रक्तवर्णोऽयमेव ककुभ पश्चिमाशाया विभाग प्रदेश पुष्पवसंयुक्ता सिन्दूरिका रक्तवस्त्र तत्सम्बन्धिनि तद्योगात् पुष्पसिन्दूरिकाख्ये पर्वण्युत्सवे पर्यधायि परिहित । यता दिग्वासमव वासा यस्य तेन रक्तवस्त्रपरिधानावसरेऽपि दिग्वसनादौचित्या रक्तदिग्भाग एव परिहित इत्यवैमि शङ्के । विवाहस्य चतुर्थे दिने प्रथमदिनपरिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिकाख्यपर्वणि कौसुम्भादिरक्तवस्त्राणि वधूवरेण परिधीयन्त इति वृद्धाचार । तत्रेशस्य दिग्वसनत्वाद्रक्तपश्चिमभाग प्रधानेन परिहित इत्यर्थ । अत्र कमलपुष्पस्थाने तारा सिन्दूरिकास्थाने सन्ध्यासराग पश्चिमदिग्भाग इति भाव ॥ १० ॥

सतीमुमामुद्वहता च पुष्पसिन्दूरिकार्थं वसने सुनेत्र । दिशौ द्विसन्ध्यीमभि रागशोभे दिग्वाससोभे किमलम्भिपाता ॥ ११ ॥

प्रात सायसन्ध्ययो प्राचीप्रतीच्योर्द्वयोरपि तुल्यवस्तुत्वात सायसन्ध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकात्व कथं वर्ण्यत इत्याक्षेपे तस्य परिहारार्थं प्राच्या अपि तद्भावमाह । सतीमिति । हे सुनेत्रे सतीं दाक्षायणीमुमा पार्वतीं च उद्वहता परिणयता दिग्वाससा हरेण पूर्वं रक्तपुष्पसिन्दूरिकार्थं द्विसन्ध्यीमभि द्वे अपि प्रातःसायसन्ध्ये लक्षीकृत्य द्वे प्राचीप्रतीच्यौ दिशावेव रागेण रक्तवर्णेन शोभा ययोस्ते रक्तवर्णेन शोभेते इति वा । तादृशे रक्ते उभे द्वे वसने ऽलम्भिपाता

प्राप्ते कि । विवाहद्वये सन्ध्याद्वयरक्तदिग्द्वयमेव दिग्वसनत्वाद् रक्तव-स्त्रद्वयं शिवेन लब्धमित्यद्य मन्य इत्यर्थः । शिवेन द्वे दिशावेव वस्त्रे द्वे सन्ध्ये लक्षीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभ कर्म्मभूते ते प्रापिते कि । विवाहे वस्त्र रञ्जनाय कस्यचित् करे समर्प्यते तस्मा-च्छिवेन दिग्द्वयरूपे मम वस्त्रे भवतीभ्या रक्तशोभे प्रापनीये इति स-न्ध्याद्वय आज्ञप्त स दिग्द्वय रक्तशोभ चकारेत्यर्थः इति वा । सुनेत्रीति पाठे सयागोपधादिति ( पा०४।१।६३ ) निषेधात् ङीप् चिन्त्य । द्विस-न्ध्यी समाहारे द्विगोरेकत्वे आवन्तो वेति ( पा०२।४।३०। वा०४ ) स्त्री-त्वे च द्विगोरिति (पा०४।१।२१) ङीपि सन्ध्याशब्दस्य तद्धितान्तपदत्वा द्धलस्तद्धितस्येति (पा०६।४।१५०) यलोप, अभिरभागे इत्यभे (पा० १। ४।९१) कर्म्मप्रवचनीयत्वात् तद्योगे द्वितीया । गत्यर्थत्वाद्णौ कर्तु-र्णौ कर्म्मत्व ॥ ११ ॥

आदाय दण्ड सकलासु दिक्षु योऽयं परिभ्राम्य
ति भानुभिक्षुः । अब्धौ निमज्जन्निव तापसोऽयं
सन्ध्याभ्रकाषायमधत्त साय ॥ १२ ॥

आदायेति । योऽय भानुरेव भिक्षु परिव्राट दण्ड पारिपार्श्विकमेव वेणयष्टिमादाय सकलासु दिक्षु परिभ्रामति सोऽय तापस परिव्राट् सायङ्काले अब्धौ निमज्जन् पाताल प्रविशन्नय च बहुजले जलाशये स्नान कुर्वन सन्ध्यासत्त्र गगन तदेव काषाय रक्तवस्त्रमधत्तेव, उप रि स्वस्योर्द्धभाग अथ चास्ततटस्योपरि दण्डस्योपरि वा निजमस्तको-परि वा धृतवानिव । एव यतिरपि बहुकालायस्थानस्य निषिद्धत्वाद्-त्फलानः सन् परिभ्रमन काषाय वस्त्र धारयति । काषाया इव स-न्ध्या शोभत इत्यर्थः । माठर पिङ्गलो दण्ड, भिक्षु परिव्राट कर्म्म-न्दीति चामर । काषाय तेन रक्त (पा०४।२।१) इत्यण् ॥ १२ ॥

अस्ताचलेऽस्मिन्निकषोपलाभे सन्ध्याकषोल्लेख
परीक्षितो यः । विक्रीय त हेलिहिरण्यपिण्ड
ताराबराटानियमादित द्यौः ॥ १३ ॥

अस्तेति । यः सूर्य्यः अस्मिन् प्रतीच्या वर्त्तमाने निकषोपलाभे सु वर्णपरीक्षापाषाणतुल्ये अस्ताचले सन्ध्याराग एव कषोत्थरेखः घर्षणोत्थ रक्तेन परीक्षित इव द्यौरेव हेलि सूर्य्यमेव हिरण्यपिण्डं विक्रीय वि निमयेन कस्मैचिद्दत्वा ताराख्यान् वराटकान् कपर्द्दकान् आदित ज ग्राह । उत्तमं सुवर्णं रक्तपीतं भवति तथा च रक्तपीतसुवर्णसूर्यगोल कस्य निकषपरीक्षितसुवर्णरेखेव सन्ध्या दृश्यते । ताराः वराटका इ व दृश्यन्त इत्यर्थः । द्यौरिति लोकव्यवहारानभिज्ञत्वद्योतनार्थं स्त्रीनि र्द्देशः । स्त्री हि सुवर्णं दत्वा मूर्खतया वराटकान् गृह्णाति धूर्त्तैन वञ्च्यते च । वराटकस्य व्यवहारे देशे सुवर्णमपि दत्त्वा वराट एव गृह्यते ॥ १३ ॥

पचेलिमं दाडिममर्कबिम्बमुन्नाद्य सन्ध्या त्व गिवोज्झिताऽस्य । तारामयं बीजभुजाऽऽदसीयं कालेन निष्ठ्यूतमिवास्थियूथं ॥ १४ ॥

पचेलिममिति । दाडिमबीजभुजा कालेन रक्तमर्कबिम्बमेव पचेलि म तरोरुपर्य्येव स्वयं पक्वं दाडिमफलमुन्नाद्य गगनतरोस्त्रोटयित्वा बी जग्रहणार्थे भित्त्वा वा सन्ध्याऽस्यैव अस्य दाडिमस्य पक्वत्वाद्रक्तकान्ति रेवोज्झिता परित्यक्ता, तद्बीजभक्षणार्थमुपरितनबीजकोशवत् सन्ध्या पृथक् कृता । तथा बीजभक्षणानन्तरं तारमयं ताराख्यं अदसीयममुष्य दाडिमस्य अमीषां बीजानां वा सम्बन्धि अस्थ्ना बीजाभ्यन्तरस्थश्वेतक णानां यूथं वृन्दं निष्ठ्यूतमिवोद्गीर्णमिव, बीजानि भक्षयित्वा गृहीतं रसमन्तर्गतश्वेतकणावृन्दं पुनः फूत्कृतमिव । न हि कालादृते सूर्यदा डिमं भक्षितुं समर्थः । अन्योऽपि दाडिममुन्नाद्य तत्त्वचं परित्यज्य बी जान्यास्वाद्य गृहीतरसान् बीजकणान् फूत्कृत्य त्यजति ॥ १४ ॥

तारातति बीजमिवाऽस्माटमिव निरष्ठीवि यद स्थियूथं । तन्निष्कुलीकृत्य रविं त्वगेषा स न्ध्योज्झिता पक्त्रिमदाडिमत्वा ॥ १५ ॥

तारेति । सामर्थ्यात् कालेन कान्ता रविमेव तत् पक्त्रिमं पचेलिमं

दाडिमं निष्कुलीकृत्य निर्गतबीजकुलं कृत्वा बीजरूपं सारं गृहीत्वा तदीया त्वगेवैषा सन्ध्या उज्झिता, यागश्च सम्भावनायामुज्झिता किमित्यर्थः । तत्किमित्याशङ्क्याह । बीजानि आदमाद भक्षयित्वा अस्य सूर्यरूपस्य पक्वदाडिमस्य सबन्धि अस्थियूथमिव इयं तारासतिः निरष्ठीवि निष्ठ्यूता । जग्ध्वाजग्ध्वा इति आदमादं अदेराभीक्ष्ण्येन द्विर्वचनञ्च । निरष्ठीवि कर्मणि चिण् निष्कुलीकृत्य निष्कुलान्निष्कोषणे (पा०५।४।६२) इति डाच् । रूपकोऽयं श्लोकः ॥ १५ ॥

सन्ध्यावशेषे कृतताण्डवस्य चण्डीपतेर्यत्पतनाभिघातात् । कैलासशैलस्फटिकाश्मखण्डैरभावि पद्योत्पतयालुभिर्द्यौः ॥ १६ ॥

सन्ध्येति । हे प्रिये सन्ध्यावशेषे सन्ध्यावन्दनान्ते कृतं ताण्डवं नृत्यं येन तस्य चण्डीपतेः पदोः चरणयोर्द्वयस्य पतनेनाभिघाताद्धेतोः उत्पतयालुभिरुत्पतनशीलैरुच्छलितैः कैलासशैलसम्बन्धिस्फटिकात्मना खण्डैः द्यौः अलङ्कृता पश्य, कैलासस्फटिकखण्डा एव गगने ताराकारेण शोभन्ते । उत्पतयालुभिः स्पृहिगृहीत्यालुच् (पा०३।२।१५८) १६॥

इत्थं ह्रिया वर्णनजन्मनेव सन्ध्यामपक्रान्तवतीं प्रतीत्य । तारागणोदन्तुरमन्तरिक्षं निरीक्षमाणः स पुनर्बभाषे ॥ १७ ॥

इत्थमिति । स नलः पुनर्भैमीं बभाषे । किम्भूतः । इत्थमुक्तप्रकारेण वर्णनजन्मना स्तुतिजातया ह्रियेव अपक्रान्तवतीं निर्गतां सन्ध्यां प्रतीत्य निश्चित्य अन्तरिक्षं गगनं तारागणोर्भ्यां दन्तुरितं मिश्रितं निरीक्षमाणः । अन्योऽप्युत्तमो निजवर्णनजातलज्जयाऽपक्रामति १७॥

रामेषुमर्मव्रणनात्विवेगाद्रत्नाकरः प्रागयमुत्पपात । ग्राहौघकिर्मीरितमीनकम्बु नभो न भोः कामशरासनभ्रूः ॥ १८ ॥

रामेति । भो हे कामशरासनभ्रूः कामशरासनमेव भ्रुवौ यस्याः

धूदर्शनमात्रेण कामोदयकारिणि भैमि रामस्य राघवस्य जामदग्न्यस्य वा इषुणा मर्मणो भेदनाद्धेतोरुत्पन्ना आर्तिः पीडा तस्याः वेगादाधिक्याद्धेतोर्निजस्थानं स्थातुमशक्तः सन् भीत्या रत्नाकर एवायं प्राक् तस्मिन्नवसरे उत्पपात ऊर्ध्वमागात्, नेदं नभो यः पूर्वमुत्पपात सः श्यामजलः स्फुटरत्नगर्भो रत्नाकर एवायं न त्वेतन्नभ इत्यर्थः । कीदृशः । ग्राहाणां जलचारिणां जन्तूनामोघैः किर्मीरिता मिश्रिता तत्सहिता मीनाः मत्स्याः शङ्खाश्च यस्मिन् । नभस्तु ग्रहसम्बन्धि ओघः शुक्रबृहस्पत्यादिताराग्रहसमूहो ध्रुवमण्डलग्रहसम्बन्धी समूहो वा, तेन मिश्रितो मीनाख्यो राशिः कम्बुः शङ्खकारविशाखानक्षत्रं यस्मिन् । रघुनाथेन किल सेतुबन्धसमये शरेण समुद्रो भेत्तुमारब्ध इति तावन्मात्रेण पीडातिशयादुत्पतित इत्युच्यते । परशुरामेणापि निजवसत्यर्थं समुद्रो बाणेन परास्तः समुत्पतितः, समुद्रजलस्यैवायं कालिमा न तु गगनस्येत्यर्थः । समुद्रस्याधोदेशे स्थितानि रत्नग्राहादीनि अधःस्थितेन जलेन सुरेण द्रष्टुं शक्यन्ते । मकरकर्कटादयः साक्षाद्ग्राहादय एव । न तु राश्यादिभूताः शिष्टाश्च ताराः समुद्रमौक्तिकान्येव न तु तारा इत्यादि ज्ञातव्यं । शरासनन्यूरित्युक्तस्यानन्याकाशोत्थानावादुत्वाभावः । इत्यर्थास्तु सर्वैकवंशप्रभवाविति यत् समर्थनीयः । यद्वा श्लिष्टकविप्रयोगदर्शनाद् ज्ञातव्यं ॥ १८ ॥

मोहाय देवाप्सरसां विमुक्तास्ताराः शराः पुष्प
शरेण शङ्के । पञ्चास्ययत् पञ्चशरस्य नास्ति
प्रपञ्चवाची खलु पञ्चशब्दः ॥ १९ ॥

मोहायेति । हे भैमि पुष्पशरेण कामेन देवानामप्सरसाञ्च मोहायान्योन्यमत्यन्तानुरागजननार्थं देवादीनामुपरि वर्तमानत्वादूर्ध्वमुक्ता ऊर्ध्वं क्षिप्ताः, शुभ्रपुष्परूपाः शरा एव तारा इत्यहं शङ्के । ननु कामस्य पुष्पशरत्वेऽपि पञ्चबाणत्वात् ताराणां बहुतरत्वात् कथं कामबाणत्वमित्याशङ्क्य समर्थयते । खलु यस्मात् पञ्चशरस्य नाम्नि पूर्वपदत्वेन वर्तमानः पञ्चशब्दः प्रपञ्चवाची प्रकृष्टः पञ्चो विस्तारः तद्वाचकः, न तु सङ्ख्यावाचकः, पचि विस्तारवचने इति स्वार्थणिजन्ताद्धातोः, पचा

द्यपि पद्मपन्ति विस्मृता भवन्ति पञ्चाः शरा यस्येति विग्रहो न तु प
द्मसङ्काकाः शरा यस्येति, तस्मात् पुष्पबाणत्वं ताराणां युक्तमेवेत्यर्थः।
कस्येव। पञ्चास्यवत् "सिंहो मृगेन्द्रः पञ्चास्यः" इति सिंहाभिधायि
नि पञ्चास्यशब्दे सिंहस्य पञ्चमङ्गमुखत्वाभावात् पञ्चयति विस्तृतं भ
वति पञ्चं विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या पञ्चशब्दो य
था विस्तारवाची तथेति भावः। प्रपञ्चो विस्तार इति हलायुधः॥१९॥

नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकु
लस्य। दृगोरपां सन्ति पृषन्ति तारा: पत
न्ति तत्सङ्क्रमणानि धाराः॥ २०॥

नभ इति। नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः
कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशो
र्नेत्रयोरपामश्रुजलानां पृषन्ति बिन्दवः सन्ति त एव तारका अधःस्थि
तैर्जनैर्दृश्यन्ते। तथा तासां ताराणां सङ्क्रमणानि पुरुषलवशाद्भू
मिं प्रत्यागमनानि गलद्वाष्पजलानां धारा एव पतन्ति। दृशोः सन्ति
चिरस्थितिमन्ति यानि वाष्पपृषन्ति तानि तारा इति वा। तत्सङ्क्र
मणानि स्थिततारप्रतिबिम्बभूतानि तत्तुल्यानि पतन्त्यधःपातीनि या
नि पृषन्ति तानि धारा अश्रुप्रवाहाः तासां ताराणां सङ्क्रमणानि वी
थयो मेघादिसङ्क्रान्तयो वा। धारा अश्रूणां प्रवाहा इति वा। स्त्रि
यो हि विरहमसहमाना रुदन्ति। पतन्तीति तिङन्तं। पृषद्विशेषणं
वा॥ २०॥

अमूनि मन्ये सुरनिर्झरिण्या यादांसि गोधा
मकरः कुलीरः। तत्परखेलत्सुरस्त्रीतिदूरमग्ना
न्यथः संप्रमितः प्रतीमः॥ २१॥

अमूनीति। हे प्रिये गोधाख्यास्तारा गोधा मकरराशिसम्बन्धिन्य-
स्तारा: मकरः कुलीरः कर्कटराशिताराः सम्बन्धिन्यस्ताराः अमूनि प्रत्यक्ष
दृश्यानि सुरनिर्झरिण्या मन्दाकिन्या यादांसि जलजन्तव एवेत्यहं
मन्ये। गोधा मत्स्याः कर्कटा अपि जले वसन्ते उपरि च दृश्यन्ते त-

स्माद्‌गेयनद्या यादास्येतानीत्यर्थः । तर्हि उपरिवर्त्तमानेन द्रष्टुं योग्या न त्वध स्थितेनेत्यत आह तस्या नाकनद्याः पूरे प्रवाहे खेलन्तः क्रीडन्तः सुरास्तस्य प्रकाशाद्दीप्त्या दूरतलपर्यन्तमग्नानि अत एव जलतलगामित्वादधोभागे स्थिता नृदेशादपि स्पष्टं सुखेन जानीम । भूभागे स्थिता अपि जलगामित्वाद्गाधादियादांसि व्यक्तं जले पश्याम इत्यर्थः । गोधाकारं भ्रुवमण्डलं गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्य कम्बुः किमयं चकास्ति दिवि त्रिलोकीजयवादनीयः । कस्यापरस्योडुमयैः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य सम्बन्धी अयं मत्यमूर्त्या विशालाननमत्स्यरूपः कम्बुः शङ्खः दिवि चकास्ति किं । उज्ज्वलदेशे वादितयाद्य शङ्खमाकर्णयत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य भटस्य उडुमयैस्ताराकपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, स्मरस्यैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात् । ताराकुसुमरूपः कामशङ्खः एवायं गगने भ्राजते न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं याऽजीजिवत् पद्ममममूमुहच्च । योगर्द्धिमस्या महतीमलग्नमिदं वदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति । इयं रजनी योगिनी स्त्रीपुंसयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनाद्यभिज्ञा स्त्री किं । या रतीशं दिवा निर्जीवमिव वीजसन्निधेरजीजिवत् सञ्जीवं चक्रे, पद्ममममूमुहत् पद्मानि च समकोचयत् । रात्रौ च स्त्रीपुंसयोगे कामः उदितो भवति पद्मानि च सङ्कुचन्ति । अलग्नं निराधारं अम्बरचुम्बि आकाशवासि तारामात्रात्मकत्वादलग्नमराशिभूतं वा इदं मत्स्यरूपं कम्बु

स्माद्रेयनद्या यादांस्येतानीत्यर्थः । तर्हि उपरिवर्तमानेन द्रष्टुं योग्या न त्वधःस्थितेनेत्यत आह तस्या नाकनद्याः पूरे प्रवाहे खेलन्तः क्रीडन्तः सुरास्तेभ्यः मत्स्याशङ्कोत्था दूरतलपर्यन्तमग्नानि, अत एव जलतलगामित्वादधोभागे इतो नृदेशादपि स्पष्टं सुखेन जानीमः । भूभागे स्थिता अपि जलगामित्वाद्गोधादियादांसि व्यक्तं जले पश्याम इत्यर्थः । गोधाकारं ध्रुवमण्डलं, गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्य कम्बुः किमयञ्चकास्ति दिवि त्रिलोकीजयवादनीयः । कस्यापरस्योडुमयैः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य मन्मथस्यायं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किं । उच्चतरदेशे वादितयाद्य सर्वं ब्राकर्ण्यत इति गगनं स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बु किमित्यर्थः । यस्मादपरस्य कस्य न टस्योडुमयैस्ताराकूपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, स्मरस्यैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात् । ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं याऽजीजिवत् पद्ममम्मुहच्च । योगर्द्धिरस्या महतीमलग्नमिदं यदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति । इयं रजनी योगिनी स्त्रीपुंसयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनादयभिज्ञा स्त्री किं । या रतीशं दिवा निर्जीवमिव योजयन्निधेरजीजियत् सञ्जीवं चक्रे, पद्ममम्मुहत् पद्मानि च समकोचयत् । रात्रौ च स्त्रीपुंसयोगे काम उद्दितो भवति पद्मानि च सङ्कुचन्ति । अलग्नं निराधारं अम्बरचुम्बि आकाशगत्वादपि ताराभात्रात्मकत्वादलग्नमराधिभूतं वा इदं प्रत्यक्षरूपं कम्बु

द्यपि पञ्चयन्ति विस्तृता भवन्ति पञ्चाः शरा यस्येति विग्रहो न तु प
ञ्चसङ्ख्याकाः शरा यस्येति, तस्मात् पुष्पबाणस्य ताराणां युक्तमेवेत्यर्थः ।
कस्येव । पञ्चास्यवत् "सिंहो मृगेन्द्रः पञ्चास्य" इति सिंहाभिधायि
नि पञ्चास्यशब्दे सिंहस्य पञ्चसङ्ख्यमुखत्वाभावात् पञ्चयति विस्तृतं भ
वति पञ्चं विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या पञ्चशब्दो य
था विस्तारवाची तथेति भावः । प्रपञ्चो विस्तार इति हलायुधः ॥१९॥

नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकु
लस्य । दृशोरपां सन्ति पृषन्ति ताराः पत
न्ति तत्सङ्क्रमणानि धाराः ॥ २० ॥

नभ इति । नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः
कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशो
र्नेत्रयोरपामश्रुजलानां पृषन्ति बिन्दवः सन्ति त एव तारका अधःस्थि
तैर्जनैर्दृश्यन्ते । तथा तासां ताराणां सङ्क्रमणानि पुण्यक्षयवशाद्भू
मिं प्रत्यागमनानि गलद्बाष्पजलानां धारा एव पतन्ति । दृशोः सन्ति
चिरस्थितिमन्ति यानि बाष्पपृषन्ति तानि तारा इति वा । तत्सङ्क्र
मणानि स्थितताराप्रतिबिम्बभूतानि तत्तुल्यानि पतन्त्यधःपातीनि या
नि पृषन्ति तानि धारा अश्रुप्रवाहाः तासां ताराणां सङ्क्रमणानि वी
थयो मेषादिसङ्क्रान्तयो वा । धारा अश्रूणां प्रवाहा इति वा । स्त्रि
यो हि विरहमसहमाना रुदन्ति । पतन्तीति तिङन्तं । पृषद्विशेषणं
वा ॥ २० ॥

अमूनि मन्ये सुरनिर्झरिण्या यादांसि गोधा
मकरः कुलीरः । तत्परखेलत्सुरनीतिदूरमग्ना
न्यग्रः स्पष्टमितः प्रतीमः ॥ २१ ॥

अमूनीति । हे प्रिये गोधाख्यास्तारा गोधा मकरराशिसम्बन्धिन्य
स्तारा मकरः कुलीर कर्कटराशिसम्बन्धिन्यस्ताराः अमूनि प्रत्यक्ष
दृश्यानि अमरनिर्झरिण्या मन्दाकिन्या यादांसि जलजन्तव एवेत्यहं
मन्ये । गोधा मत्स्याः कर्कटा अपि जले वर्तन्ते उपरि च दृश्यन्ते त-

स्मादेवनद्या याद्यास्येवैतानीत्यर्थः । तर्हि उपरिवर्तमानेन द्रष्टुं योग्या न त्वधःस्थितेनेत्यत आह तस्या नाकनद्याः पूरे प्रवाहे खेलन्त क्रीडन्तः मृगास्तेभ्यः मकराग्राह्मीत्या दूरतलपर्यन्तमग्नानि, अत एव जलतलगामित्याद्योजाने इतो नूदेशादपि स्पष्टं सुखेन जानीम । भूभागे स्थिता अपि जलगामित्वाद्गोधादियादांसि व्यक्तं जले पश्याम इत्यर्थः । गोधाकारं ध्रुवमवइलं गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्य कम्बुः किमयञ्चकास्ति दिवि त्रिलोकीजयवादनीयः । कस्यापरस्योडुमयैः प्रसूनै र्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य सम्बन्धी अयं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किं । शङ्खवद्दैर्घ्यं वादितवाद्य सर्वत्राकर्णयत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य भटस्याद्भुतयैताराराह्रूपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, तारयैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात् । ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं याऽजीजिवत् पद्ममममूमुहच्च । योगर्द्धिमस्या महतीमलग्नमिदं वदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति । इयं रजनी योगिनी स्त्रीषु संयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनादयभिज्ञा स्त्री किं । या रतीशं दिवा निर्जीवमिव योजनविधेरजीजिवत् सञ्जीवं चक्रे, पद्मममूमुहत् पद्मानि च समकोचयत् । रात्रौ च स्त्रीषु संयोगे काम उदितो भवति पद्मानि च मङ्कुचन्ति । अलग्नं निराधारं अम्बरचुम्बि आकाशवासि तारामात्रात्मकत्वादलग्नमाश्रिभूतं वा इदं प्रत्यक्षरूपं कम्बु

तारारूपः शङ्खोऽस्या रात्रियोगिन्या महतीं योगर्द्धिं वदति, दिवा दर्श-
नाभावादिदानीं दृश्यमान. शङ्खा रात्रिजातेति कथयति । योगशक्तिं वि-
ना निराधारं वस्तु कथं स्थापयेत् । योगिन्यपि मृतमपि जीवयति कि-
ञ्चिच्च मोहयति मूर्च्छां प्रापयति भ्रान्तं करोति वा, तस्माद्योगिनी
किमित्युत्प्रेक्षा । कम्बुशब्दस्य ननु सकत्वमप्यस्तीति पूर्वमेवोक्तं
स्मर्तव्यं । अशीतिरदमूर्द्धहदिति श्रीषडीत्युपधा ह्रस्वः ॥ ॥ २३ ॥

प्रबोधकालेऽहनि बाधितानि ताराः खपुष्पाणि
निदर्शयन्ती । निशाऽऽह शून्याध्वनि योगिनी
यं मृषा जगद्दृष्टमपि स्फुटाभं ॥ २४ ॥

प्रबोधेति । हे प्रिये प्रबोधकाले जागरणसमयेऽथ च सम्यग्ज्ञा-
नोत्पत्तिसमयेऽहनि दिवा बाधितानि सूर्यदीप्तिध्वस्तकान्तीनि ताराः
नक्षत्ररूपाणि खपुष्पाणि गगनसम्बन्धीनि कुसुमानि नितरां दर्शयन्ती
प्रकाशयन्ती, अथ च दृष्टान्तीकुर्वती शून्याध्वनि बौद्धाध्वनि शून्या-
दिदर्शने विपक्षयोगिनी काचित् प्रव्रजितेवेयं निशा स्फुटाभमतितरां
दृष्टमपि प्रत्यक्षेण प्रतीयमानमपि स्थावरजङ्गमात्मकं सकलं जगन्मृषा
ऽसत्यमाह ब्रूते । बौद्धादिदर्शने हि मानसैव घटाद्याकारस्याना-
तिरिक्तं सर्वं मिथ्येति बोध्यते । योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति
तथैवमपि रात्रिरप्यन्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगात् गगने
दर्शयतीति भाव । निदर्शनं करोति येति प्रतीयमानोत्प्रेक्षा ॥ २४ ॥

एण स्मरेणाङ्कमयः सपत्नीकृतो भवद्भ्रूयुगध
न्वना यः । मुखे तवेन्दौ लसता स तारापुष्पा
लियाणानुगतो गतोऽयं ॥ २५ ॥

एण इति । हे भैमि तव मुखे सचेन्द्रावाह्लादकत्वादिगुणयोगा-
च्चन्द्रे नमसा प्रकाशमानेन, तथा भवद्भ्रूयुगमेव धनुर्यस्य तेन स्मरेण
तव मुखेन्दौ विगतो मृगचांचन्द्रत्वात् सम्प्रतिपन्नवदित्यनुमानप्रसिद्धो
योऽङ्कमयः स्वमृगरूप एणो मृगः सपत्नीकृतः मुखे, तथापदर्शनाज्ज

ठरावस्थितपत्रस्यैव बाणस्यापरपार्श्वे निर्गमनं यथा भवति तथा व्यधित, स एव मृगः तारापुष्पालिनक्षत्ररूपपुष्पपङ्क्तिस्तल्लक्षणो बाणस्तेनानुगतः सन् सहित एव पलाय्य गतोऽयं गगने दृश्यते किं । चन्द्रे मृगेन त्वाव्य स चात्र नास्ति, तथापि कामस्य सुरे लसति, गगने च मृगशिरो नक्षत्रं मृगाख्यबाणाकारपुष्पतुल्यताराऽनुगतं दृश्यते तर्हि कामेन बिम्बान्तर्गतपत्रपार्श्वबहिर्निर्गतबाणसहितो व्यधितः पलाय्य गतः स एवोऽयं मृगो दृश्यते किमिति प्रतीयमानार्थेन । सपत्रनिष्पत्रादतिव्यथन इति (पा० ५।४।६१) डाच् ॥ २५ ॥

लोकाश्रयो मण्डपमादिसृष्टेर्ब्रह्माण्डमाभात्यनु-
काष्ठमस्य । स्वकान्तिरेणूत्करनालि सन्ति घुणव्र-
णद्वारनिभानि भानि ॥ २६ ॥

लोकेति । हे भैमि ब्रह्माण्डं आदौ सृष्टेस्तदपि पूर्वं सृष्टिर्निर्मितिर्यस्य अथ च चिरकालनिर्मितं पुराणं मण्डपमिति आभाति तदिव शोभत इत्यर्थः । मतस्थायाणामपि लोकानामाश्रयः ब्रह्माण्डाधारत्वाज्जगतां मण्डपोऽपि लोकानामाश्रयः तच्छायानिवासित्वाल्लोकानामाश्रयत्वाच्च तस्य । अत एवास्य ब्रह्माण्डमण्डपस्याऽनुकाष्ठं दिशि दिशि एतत्सम्बन्धिनीषु सर्वासु दिक्षु अथ चैतत्सम्बन्धीनि काष्ठानि दारूणि लक्षीकृत्य तेषु भानि नक्षत्राणि स्वकान्तिरूपस्य रजसा रेणूत्करस्य सम्बन्धीनि कान्तिरूपरेणुयुक्तानि सन्ति घुणाख्यकीटनिर्मिता व्रणाः छिद्राणि तस्य द्वारं मुखं तन्निभानि तत्तुल्यानि घुणोत्कीर्णदारुरजोयुक्तानि दारुच्छिद्रमुखानीव दृश्यन्त इत्यर्थः । जनाश्रयतया मण्डपोऽप्यतिजीर्णो यदा भवति तदा तदीयकाष्ठेषु घुणाः पतन्ति घुणोत्कीर्णरजोयुक्तानि घुणकृतच्छिद्रमुखानि वृत्तानि च दृश्यन्ते तानीव भानीति भावः । मण्डपोऽस्त्री जनाश्रय इत्यमरः । अनुकाष्ठं वीप्सायामव्ययीभावः ॥ २६ ॥

शचीसपत्न्या दिशि पश्य भैमि शक्रेभदान-
द्रवनिर्झरस्य । पाथःप्लवते वासरसेतुनाशादुच्च

द्बलः पूर इवान्धकारः ॥ २७ ॥

इदानीं सर्वदिग्व्यापितमोवर्णनं प्राच्यादिक्रमेणोपक्रमते । प्र चीति । हे भैमि अन्धकारः प्राच्याः सपत्नी दिक् प्राची तस्या वास- रूपस्य सेतोः सूर्यस्य प्रभामर्यादाया नाशादुच्छृङ्खलो निरर्गलः शक्रेभस्य दानद्रवो दानोदकं तस्य निर्झरप्रवाहस्तस्य श्याम' पूर इव पोप्लूयते भृशं प्रसरति प्राचीं प्राप्नोतीत्यर्थः । त्व पश्य प्राच्यामैर्य वैरावतदानजलप्रवाहपूरसम्बधः जलपूरो ऽपि चर्म्योपगमादप्रतिहत- प्रसरः सुतिरां प्रसरति । पुङ् गतौ इत्यस्माद्भृशार्थे यङ् ख्रियंचन ॥ २७ ॥

रामालिरोमावलिदिग्गजाहि ध्वान्तायते वाह नमन्तकस्य । यद्वीक्ष्य दूरादिव बिभ्यतः स्वा नश्वान् गृहीत्वाऽपसृतो विवस्वान् ॥ २८ ॥

दक्षिणदिग्व्यापितमो वर्णयति । रामेति । श्रीरामस्यालिः सेतुः सेतुबन्ध एव श्यामत्वाद्रोमावलिर्यस्यास्तस्या दक्षिणस्या दिशो विगाहि नितरां व्यापकं अन्तकस्य दिक्पतित्वाद्दक्षिणदिक्स्थं तद्वाहनं महिष एव ध्वान्तायते कज्जलमीलो ऽन्धकार इवाचरति । विवस्वान् सूर्यः यद्वाहनं दूराद् वीक्ष्य महिषयोरत्वाद्बिभ्यतः स्वभयान् स्वानश्वान् गृहीत्वाऽपसृतः पलायित इव । दक्षिणदिशि तिमिर मन्तकमहिष इवेति इत्यर्थः । अन्तकपदेन तद्वाहनस्य दारुणत्वं सूचितं अत एव ततोऽश्वानां भयं युक्तं । ध्वान्तायते उपमानादा- चारे कर्तुः क्यङ्ङिति (पा० ३।१।११) क्यङन्तात् लट् । सेतुरालौ स्त्रियां पुमानित्यमरः ॥२८ ॥

पङ्कं महाकालफलं किलाभीन् प्रत्यग्गिरेः सा नुनि भानुबिम्बं । जिह्मस्य तस्यैव दृशामिषा त्तादृशानि जानामितमां तमांसि ॥ २९ ॥

प्रतीचीव्यापितमो वर्णयति । पक्वमिति । भानुबिम्बं प्रत्यग्गिरेः

प्रतीच्यां यत्र मानस्यास्ताचलस्य भानुनि कालयशात् पक्व महाकाल-स्यैन्द्रयारुण्याः फलमासीत् किलैवमहं मन्य इत्यर्थः । तथाऽऽमति-पक्वत्वादतिशयस्यादुच्चतरदेशादधस्ताद् दृषदि शिलाया निपातात् तदभिघाताद्धे नोर्जितस्य विदीर्णस्य तस्य भानुबिम्बरूपस्य महाकाल-फलस्य कृष्णतमानि बीजान्येव तमांसीति जालासितमां नितरां मन्ये । पक्वतादिकठिनभूमसुद्भवं जम्बीरवर्तुलं पक्वं सदतिरिक्तरक्तबीजं महाकालफलं गृहोपसर्गनिवारणार्थं गृहद्वारे स्थितं बध्यते । अस्तमय-सम्बन्धात् परिणतकालं रक्तं भवतः कालस्य फलभूतश्च भानुबिम्बं महाकालफलमिव । तमांसि विदीर्णस्य तस्य कृष्णतमानि बीजानीव प्रसरन्तीत्यर्थः अन्यदिगपेक्षया प्रतीच्यां सायसमये सूर्यस्तत्परासम्ब-न्धिनः प्रकाशस्यासत्त्वादल्पान्धकारसूचनार्थं तमसा बीजत्वेन नि-रूपणं ॥ २९ ॥

पत्युर्गिरीणामयशः सुमेरुप्रदक्षिणाद्भास्वदनादृतस्य । दिशस्तमश्चैत्ररथान्यनामपत्रच्छटाया मृगनाभिशोभि ॥ ३० ॥

उदीचीव्याप्तितमो वर्णयति । पत्युरिति । चैत्ररथं कुबेरवनं तदेवान्य-नाम यस्यास्तादृशी पत्रच्छटा पत्रवल्ली यस्याश्चैत्ररथाख्यवनरूपपत्रवल्लि-काया उत्तरस्या दिशो मृगनाभिः पत्रवल्लीरचनासाधनभूता कस्तूरी तद्वच्छोभते एवशीलं कृष्णतम तमोगिरीणां पत्युर्हिमाचलस्यायश एव, यतः सुमेरोः प्रदक्षिणीकरणाद्भास्वता सूर्येणानादृतस्यायशस्तस्य । हिमाद्रिर्यद्यपि गिरीणां पतिस्तथापि सूर्येणानादृतत्वाद्धीन एव । मेरुरेव महान् । अस्योद्यानं चैत्ररथमित्यमरः ॥ ३० ॥

ऊर्द्ध्वं धृतं व्योम यदुष्णरश्मेर्दिवा सहस्रेण करैरिवासीत् । पतत्तदेवांशुमता विनेदं नेदिष्ठतामेति कुतस्तमिस्रं ॥ ३१ ॥

ऊर्ध्वदिग्व्याप्तितमो वर्णयति । ऊर्द्ध्वमिति । तमालश्यामलं

यद्व्योम दिवा सहस्ररश्मेः सहस्रमह्व्यैः करैः किरणैश्च च हस्तै-रूर्द्ध्वं दूरोच्चप्रदेशे धृतमिवासीत् तदेव नभ एवेदं तमालश्यामलं अंशु-मता विना सायंसमये सूर्य्यविनाशाद्धारकेणानेन विनाऽधःपतत् सत् नेदिष्ठतामतिलगां नैकट्यमेति, तमिस्रं कुतः कस्मादकस्मादागतमपि तिमिरं नाम किमपि नास्ति, किन्तु निकटीभवद्गगनमेव तमिस्रमित्यर्थः । पतद्व्योद्गमैव तमिस्रं कुतो भूमौ निकटतामेति, न तु तदतिरिक्तं तमोऽस्तीति वा । अन्यदपि यत् कस्यचित्, कराभ्यामूर्द्ध्वं धार्य्यते तदभावेऽधः पतत्येव । नेदिष्ठतां अन्तिकबाढयोरिति (पा० ५।३।६३) नेदादेशः । कुतः । पञ्चम्यर्थे विभक्तिकस्तसिः ॥ ३१ ॥

ऊर्द्धार्पितन्युब्जकटाहकल्पे यद्व्योम्नि दीपे
न दिनाधिपेन । न्यधायि तद्भूमिलद्गुरुत्वं
भूमौ तमः कज्जलमस्खलत् किं ॥ ३२ ॥

अधोदिग्व्यापितमो वर्णयति । ऊर्द्ध्वेति । सामर्थ्याद्विधिना ऊर्द्ध्वं सूर्य्यदीपस्यैवोपरिभागेऽर्पिता न्युब्जा कज्जलधारणार्थमधोमुखोऽलितमा-महाकटाहः कर्परं तत्कल्पे तत्तुल्ये कृष्णतमे व्योम्नि अधिकरणे प्रकाशका-रिणा कज्जलधारणार्थेन दिनाधिपेनैव दीपेन करणेन यत् कज्जलं न्य-धायि न्यस्तं तत्कज्जलमेव तमो भूत्वा क्रममज्ञाततयानुरूपेण कृत्वा नि-लत् पूर्णं भवत् पतनस्य कर्म्मकारणं गुरुत्वं यस्य तादृशमत् भूमावस्ख-लत् किं, अतिभारेण पतितं किं। गुरुत्वाद्धि पतनं युक्तं तत् कज्जलमेव भूमौ पतितं किं, अपि तु तमो नाम न किञ्चिदित्यर्थ इति वा । क-ज्जलमपि कर्परधृतं क्रमेण बहु भवद्गुरुत्वाद्धः पतति कटाहः कर्परे सर्पसि निघण्टुः । ईषदसमाप्तौ कल्पप्प्रत्ययः ॥ ३२ ॥

ध्वान्तैणनाभ्या शितिनाम्बरेण दिशः शरीरैः
सूनशरस्य तारैः । मन्दाक्षलक्ष्या निशि नाम
निन्दोः सख्यो भयायान्त्यभिसारिकाभाः ॥ ३३ ॥

ध्वान्तेति । ध्वान्तमेवैणनाभ्या कस्तूर्या तथा शितिना नीलेन-

म्बरेण गगनेनाथ च वस्त्रेण । यद्वा । ध्वान्तैकनाम्ना कृत्वा नीलेन गगनेनोपलक्षितास्तथा निशित्वात् पुष्पतुल्यरूपत्वाच्चोज्ज्वलैस्तारैर्नक्षत्रैरेव सूनशरस्य कामस्य शरैरुपलक्षिताः, अथ च तारैरुज्ज्वले पुष्पैरुपलक्षितास्तथा प्रकाशाभावान्मन्दाक्षैर्मन्दनयनैर्नरैर्लक्ष्या लक्षणीयाः, अथ च मन्दाक्षस्य लज्जाया विषयभूता सलज्जा अत एवाभिसारिकाभाः स्वैरिणीतुल्याः दिशः, अमिन्दौ चन्द्ररहितायां अनुदितचन्द्रत्वात्स्वच्छायाया निशि आयान्ति प्रत्यागच्छन्ति तस्मात् सपत्नीत्वात्त्वया त्वं सेर्ष्यां भव । अभिसारिका अपि शुक्लाया रात्रौ शुक्लवस्त्राद्याभरणाः, कृष्णायास्तु रात्रौ कृष्णवस्त्राद्याभरणाः समायान्तीति । ता अपि कस्तूरीकृताङ्गरागा नीलवसना प्रच्छन्नधृतपुष्पाः कामबाणपीडिताः सलज्जाः सत्य कामुकं प्रति समायान्ति तदीयनायिकाय सेर्ष्यां जनयन्ति, तथा दिशोऽपीत्यर्थः । सर्वा अपि दिश एकत्र मिलिता इति प्रतीतिः । तिर्यग्व्यापितमो वासितमनेन । कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिकेत्यमरः । मन्दाक्षमन्दा इति पाठे मन्दनयनानामल्पदृश्यास्तमोबाहुल्यात् । अथ च तमोबाहुल्यान्मन्दाक्षा अत एव मन्दगमनाः, लज्जया वा मन्दगमना इत्यर्थः । तारशब्दः पूर्ववत् ॥ ३३ ॥

भास्वन्मयीं मीलयतो दृशं द्राङ् मिथो मिलद्
दृग्द्वयचलमादिपुंसः । आचक्ष्महे तन्वि तमांसि
पक्ष्म, श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥ ३४ ॥

भास्वदिति । हे तन्वि कृशाङ्गि भास्वन्मयीं रविरूपां दक्षिणां दृशं नयनमस्तमयव्याजेन द्राक् शीघ्रं मीलयतः सङ्कोचयतः आदिपुंसः श्रीविष्णोर्मिथोऽन्योन्यं मिलन्तौ द्वावप्यञ्चलावूर्ध्वाधःपुटे यस्य निमीलनवशादन्योन्यसंलग्नपुटत्वान्निबिडरोमकं, अत एव श्यामत्वलक्ष्म्या विजितं नितरां पराभूतं इन्दुलक्ष्म येन तादृशं पक्ष्म नेत्रसम्बन्ध्यूर्ध्वाधःपुटे पुनर्घनीभूतरोमाण्येव तमांसि वयमाचक्ष्महे ब्रूमः, न तु ततोऽन्यानि तमांसीत्यर्थः ॥ तिमिरव्याप्तत्वात् किमपि न दृश्यत इति भावः । पक्ष्मेति जात्येकवचनं ॥ ३४ ॥

त्रिवस्वतानायिपतेव मिश्राः स्वगोसहस्रेण स मज्जनानां। गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥ ३५ ॥

विवस्वतेति। विवस्वता नेत्रमित्यपरनामधेय यासां ताश्चतुरूपा जनानां गावोऽपि स्वस्य गवां किरणानां सहस्रेण सम सह मिश्रा दिने निमीलिता सत्य अनायिषतेव नीता इव यस्मात् तेन खलु तेनेदमान्ध्य प्रकाशाभावान्नेत्रापगमाच्च रूपाग्रहण, नत्वन्धकारै. कृतमिदमान्ध्य, तमोवशात् किमपि न दृश्यत इति भाव.। अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिता परेषामपि गावो नीयन्त इति ३५॥

ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारु मतं मतं मे। औलूकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय ॥ ३६ ॥

ध्वान्तस्येति। हे वामोरु अतिसुन्दरोरु ध्वान्तस्य विचारणायां तमस्वरूपनिरूपणे विषये वैशेषिक मत षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मक काणाददर्शन चारु सदुपपत्तिकं न त्वन्यदिति मे मत सम्मत। खलु यस्मात् कारणात् सम्प्रदायविद तद्दर्शन वैशेषिक शास्त्रमौलूकमाहुर्वदन्ति। अत एव तमसस्तत्त्वनिरूपणाय अनारोपितस्वरूपनिरूपणाय क्षम समर्थमुलूकस्य घूकस्य सम्बन्धि, दृश्यते अनेनेति दर्शनं चारु सदुपपत्तिक न त्वन्यदिति मे मतं सम्मत। खलु यस्मात् कारणात् तद्दर्शनं वैशेषिक शास्त्रमौलूकमाहुर्वदन्ति। वैशेषिकमप्युलूकापरनाम्ना काणादमुनिना प्रोक्तमित्यौलूकदर्शन, ततश्चैतदपि तमस्तत्त्वनिरूपणाय समर्थमिति युक्तमित्यर्थ इति शब्दच्छल। वैशेषिकदर्शने च किमिद तमो भावरूप, अभावरूप वेति सन्देहे भाभावमात्र एव तम इति सूत्राविरोधेन व्योमशिवाचार्यादयः षट्पदार्थवैधर्म्याभावरूपमेव तमो न्यरूपयन्। श्रीधराचार्यास्त्वारोपितं भूरूपमेव तम इति निर्वर्ण्य भाभावे सत्येव तम प्रतीतिर्भाभाव एव तम इत्युक्तमिति सूत्रविरोध पर्यहार्षु। एतदसहमाना श्रीमदुदयनाचार्या

दयः पुनर्मामामजायमेव तमस्त्वेन निरनैषुः, यस्मात्तदौलूकं दर्शनं वैशेषिकशास्त्रं समस्ततत्त्वनिरूपणाय समामनुरिति वाऽन्वयः । महत्यन्धकारे सत्यपि घटादिपदार्थं को वा पश्यतीति ध्वान्तविचारणायां क्रियमाणायां घूकनेत्रमेव चारु सर्वेभ्योऽप्यधिकमिति मे मतं पुनः पुनः सम्मतमित्यर्थः । उलूकनेत्रमेव महान्धकारे घटादिविलोकयितुं समर्थं, अन्यदीयनेत्राणां त्वान्ध्यमेव जातमिति भावः । यतो वैशेषिकं घटादीन् विशेषयन्वेति तादृशं महान्धकारे घूकनेत्रमेव घटादीन् भेदेन जानाति न त्वन्यदीयं नेत्रं, तस्मात् तदेव चारिवति । तत्र युक्तमस्त्यर्थमनुत्तराद्ं । उलूकवृत्त्या कणानर्हतीति कणादस्यैवोलूक इति नाम तेन प्रोक्तत्वादौलूकं । वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे, इति विश्वः । वामोरु संहितवक्त्रेत्यादिना (पा० ४ । १ । ७०) ऊङ् नदीत्वाद्ध्रस्वः । औलूकं तेन प्रोक्तं (पा० ४ । ३ । १०१) इत्यण् पक्षे तस्येदमिति च (पा० ४ । ३ । १२०) ॥ ३६ ॥

म्लानिस्पृशः स्पर्शनिषेधभूमेः सेयं त्रिशङ्कोरिव
सम्पदस्य । न किञ्चिदन्यत् प्रति कौशिकीये
दृशौ विहाय प्रियमातनोति ॥ ३७ ॥

म्लानीति । म्लानिस्पृशः कालिमस्पर्शिनः श्यामस्य च चैडालत्वान्मालिन्ययुक्तस्य निःश्रीकस्य तथाऽभावरूपत्वात् स्पर्शगुणनिषेधस्य भूमे स्थानस्य च चण्डालत्वादेवास्पृश्यस्यास्य तमसः राज्ञस्त्रिशङ्कोरिव सेयं प्रसिद्धा प्रत्यक्षेण गृह्यमाणा च सम्पद् बाहुल्येन स्वरूपलाभोऽपि च राज्यसमृद्धिः कौशिकीये औलूकेऽपि च विश्वामित्रदृशौ नेत्रे विहायान्यत् किञ्चित्प्रति अपरं किमपि वस्तु लक्षीकृत्य प्रियं हितं नातनोति, किन्तु तदीय एव नेत्रे लक्ष्यीकृत्य हितं करोति । अन्यप्रति किञ्चिदल्पमपि प्रियं नातनोतीति वा । अन्धकारे ह्युलूकनेत्र एव पदार्थान् पश्यत इति तत्सम्पत्तयोः प्रिया । त्रिशङ्कोश्च सम्पद्विश्वामित्रस्यैव नेत्रयोः प्रिया नान्यस्य । एतदुपाख्यानं रामायणादौ प्रसिद्धं । कौशिकीये वृद्धाच्छः (पा० ४ । २ । ११४) ॥ ३७ ॥

मूर्द्धाभिषिक्तः खलु यो ग्रहाणां तद्भासमास्कन्दितनक्षत्रशोभां । दिवान्धकारं स्फुटलब्धरूपमालोकतालोकमुलूकलोकः ॥३८॥

मूर्द्धेति । यो रविस्तेषां ग्रहाणां मध्ये खलु निश्चितं मूर्द्धाभिषिक्तो राजा, उलूकानां लोकः सङ्घः तस्य रवेर्भासा दीप्त्या समास्कन्दिता नितरां पराभूता नक्षत्रशोभा नक्षत्रकान्तिर्यस्मिन् तस्मिन् तया स्फुटं उपलब्धानि अन्यजनेन दृष्टानि घटादिस्वरूपाणि यस्मिंस्तादृशमपि दिवा कर्मीभूतं दिनमन्धकारमेवावलोकत, अपश्यत् दिने तस्य दर्शनाशक्तेः दिनमन्धकाररूपत्वेनैव मेने इत्यर्थः । तथा व्यक्तं लब्धानि घटादिरूपाणि यत्र तादृशमन्धकारमेवालोकमपश्यद्दर्शनसहकारिप्रकाशरूपत्वेनैव मेने, अर्थाद्रात्रावित्यर्थः । अन्धकारं स्फुटलब्धरूपमित्यावृत्त्या योज्यं तेन तामसा विपरीतदृश एव भवन्तीति व्यज्यते । एवंविधमन्धकारञ्च स्फुटमतिप्रसिद्धं शुक्लभास्वरात्मकं लब्धं रूपं येन तादृशमालोकमेवापश्यत् । कृष्णरूपमपि तमः शुक्लभास्वरालोकत्वेनापश्यदिति विरुद्धमित्यर्थः । अथ च यो ग्रहराजः सूर्यः, आक्रान्तनक्षत्रलक्ष्मीकान्तद्भासं सूर्यदीप्तिमेवापश्यदुलूकलोको दिवा दिनेऽन्धकारमपश्यत्, रात्रौ चान्धकारमालोकमपश्यत्, दिने सूर्यालोक एव तमो रात्रौ च तम एव सूर्यालोक इति ददर्शेत्यर्थः । कीदृशीं तद्भासं कीदृगन्धकारं स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन तादृशीं स्फुटं यद्वा तत्स्वरूपलाभ इत्यन्धकारस्य नपुंसकत्वात्पुंसकैकशेषैकवद्भावेन वा व्याख्येयं सूर्यदीप्त्याऽसमास्कन्दिताऽपराभूता नक्षत्रलक्ष्मीर्यत्र तं, अन्धकारविशेषणं वा । रात्रौ सूर्यदीप्तेरभावादतिरस्कृतनक्षत्रशोभमित्यर्थः । सूर्यदीप्तेरेव समास्कन्दनसामर्थ्यात् तमसैव रात्रौ यत् तिरस्करणं तेनैव नक्षत्रशोभा यस्मिन्निति वा, इत्यादिव्याख्यानानि द्रष्टव्यानि । नक्षत्रशोभामिति पाठे नदीत्वेऽपि समासान्तविधेरनित्यत्वात् कबभावः । "मूर्द्धाभिषिक्तो राजन्यः, अन्धकारोऽस्त्रियाम्" इत्यमरः ॥ ३८ ॥

दिने मम द्वेषिणि कीदृगेषां प्रचार इत्याक

लनाय चारीः । छाया विधाय प्रतिवस्तुल
ग्ना प्रावेशयत् प्रभुमिवान्धकारः ॥ ३९ ॥

दिन इति । अन्धकार इत्याकलनाय सामस्त्येन ज्ञानार्थं प्रतिव-
स्तुलग्ना पदार्थमात्रसम्बद्धा प्रतिच्छाया एव चारी गूढार्थवदिका-
श्चारनारीर्विधाय चारपदं ताभ्यो दत्वा दिन प्रति सम्प्रेष्य समाग-
तास्ता तत्रत्यवृत्तान्तं प्रभुमिव पुन प्रावेशयत्, निभृतैकत्यमित्य-
र्थात् । इति किं । समान्धकारस्य द्वेषिणि भासमाने दिने विपक्षे
एना वस्तुना कीदृक् प्रचारो विहरण तदादिव्यवहारश्चेति । दिवा
प्रतिपदार्थसम्बद्धा छाया एव रात्रौ समागत्य मिलिताः नितरामि-
तमन्धकार माविशन् । रात्रौ हि प्रकाशाभावे छायाः अन्धकारेण सर्वै-
कीभवतीति तत्सम्बन्धादेव महानन्धकार प्रतीयत इति भाव । ए-
तेन प्रतिच्छायाऽपि तम एवेति ध्वनितं । अन्योऽपि राजो लोकस्थि-
ति ज्ञातुकाम स्त्रीणां सर्वत्र प्रवेष्टु शक्यत्वात् चारनारी सम्प्रेष्य
तत्रत्यवृत्तान्त विचार्य समागतास्ता प्रभुमात्मसविध प्रवेशयति ।
छाया एव चारी प्रतिवस्तुलग्ना विधायेति वा । चारपदं दत्वा य-
द्दिन प्रत्येव प्रेषयामास, अत एव ता दिने प्रतिवस्तुलग्ना दृश्यन्त
इति वा । चारी पुयागान्डीप् ॥ ३९ ॥

ध्वान्तस्य तेन क्रियमाणयेत्य द्विषः शशीवर्त्म
नयाऽय रुष्टः । उदस्नुप श्रीकि जपारुणश्री
र्नराधिपेनानुनयेच्छयेव ॥ ४० ॥

इदानीं चन्द्रोदय वर्णयितुमुपक्रमते । ध्वान्तस्येति । तेन नरा-
धिपेन मलनेत्य क्रियमाणया द्विष शत्रुभूतस्य ध्वान्तस्य वर्त्तनया रु-
ष्ट क्रुद्ध इव जपाकुसुमवदरुणा श्रीयस्य स उदयन उदय प्राप्नुवन् श
शी तेनैव राज्ञा अथानन्तर अनुनयच्छयेव प्रसादनवाञ्छयेवोपाशाकि
शाकितानुमारभि । अन्योऽपि वैरिवर्त्तनया रुष्ट सन् अरुणो भ-
वति, तत्परिहारायमुदित सन् वर्णकेन प्रसादनार्थं स्तूयत इति प्र-
तीयमानार्थमेवा । इव शब्दस्यात्रयत्र योजना वा । नृपासाद्दि इत्यति

( पा० ३ । १ । २५ ) णिजन्तात् कर्मणि णिच् ॥ ४० ॥

पश्यावृतोऽप्येष निमेषमद्रेरधित्यकाभूमितिरस्करिण्या । प्रवर्षति प्रेयसि चन्द्रिकाभिश्चकोरचञ्चूचुलुकान् प्रतीन्दुः ॥ ४१ ॥

पश्येति । हे प्रेयसि प्राणप्रिये एष इन्दुश्चन्द्रिकाभिश्चकोराणां चन्द्रिकाम्बुवदमृतपायिनां पक्षिणां चञ्चू एव चुलुकास्तान् प्रति पूरयित्वा प्रकर्षेण वर्षति सुधामित्यर्थात् । यावता चकोरचञ्चुपूरणं भवति तावत्प्रमाणं वर्षतीत्यर्थः । त्वं पश्य । किम्भूतः । अद्रेरुदयाचलस्याधित्यकाभूम्योर्ध्वशिखरेणैव तिरस्करिण्या जवनिकया निमेषलक्षणमत्यल्पकालमावृतोऽपि सन् सम्पूर्णानुदितोऽपि प्रथमचन्द्रिकाभिरेव चकोराणामानन्दं करोति किं पुनरुदितः सन्निति भावः । अन्योऽप्युपकारी दूरस्थोऽप्युदयोन्मुखोऽन्येषामुपकरोति ॥ ४१ ॥

ध्वान्ते द्रुमान्तानभिसारिकास्त्वं शङ्कस्व सङ्केतनिकेतमाप्ताः । छायाच्छलादुज्झितनीलचेला ज्योत्स्नानुकूलैर्वलिता दुकूलैः ॥ ४२ ॥

ध्वान्त इति । हे प्रिये त्वं चन्द्रोदयात् पूर्वं ध्वान्ते सति द्रुमान्तान्, तन्निकटदेशानेव वृक्षाधोभागानेव सम्भोगार्थं कामुकदत्तसङ्केतनिकेत प्राप्ताः ता अभिसारिकाः स्वैरिणीः शङ्कस्व सम्भावय । तथा इदानीं चन्द्रोदये सति वृक्षाधोभागवर्तिच्छायाच्छलादुज्झित पूर्वधृत नीलोऽनुकूल चेल वस्त्र याभिस्ताः दृशीः सती. सवर्णत्वाज्ज्योत्स्नानुकूलैश्चन्द्रिकानुगुणैर्धवलतरैर्दुकूलैरुपलक्षिता सतीर्वलिताः सम्भोगं कृत्वा स्वगृहं प्रति पुनः परावृत्तास्त्वं सम्भावय । तमसि सत्येव केनापि न ज्ञातव्यमिति बुद्ध्या नीलं वस्त्रं परिधाय सङ्केतस्थानमागताः, चन्द्रोदये पुनर्नीलवस्त्रपरिधाने पूर्वं वक्ष्योत्या तत् तत्रैव त्यक्त्वा श्वेतं दुकूलं सवर्णत्वात् परिधाय केनापि न ज्ञाताः । नीलचोला इति पाठे चोलः कूर्पासः ॥ ४२ ॥

त्वदास्यलक्ष्मीमुकुरं चकोरैः स्वकौमुदीमादय मानमिन्दुम् । दृशा निशेन्दीवरचारुभासा पीवोरु रम्भातरुपीवरोरु ॥ ४३ ॥

त्वदिति। हे रम्भातरुपीवरोरु रम्भातरुवदतिपीवरौ ऊरू यस्यास्तत्स-म्बुद्धिः त्वं निशायामिन्दीवरं नीलोत्पलं तद्वच्चारुभा यस्यास्तया दृशा ऊरु सादरमिन्दुं पिब विलोकय । किम्भूतं । तवास्यलक्ष्म्याः मुखशो-भाया अवलोकनार्थं मुकुरं दर्पणमिव । तथा चकोरैः प्रयोज्यैः स्वकौमुदीमादयमानं निजकौमुदीं चकोरान् पाययमानं । उदिते चन्द्रे चकोराः सानन्दा जाता नीलोत्पलानि च विकसितानीति भावः । एतेनेन्दोः परोपकारित्वं सूचितं । विकसितन्दीवरतुल्यया दृशा पिबेत्यनेन चन्द्रोदये हीन्दीवरं विकसति त्वं चैवम्भूतया दृशा यदा चन्द्रमवलोकयिष्यसि तदा जगत्त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवरमेवेदमिति ज्ञास्यतीति सूचितं । पिब सङ्काशादनादृत्यमिति । इन्दीवर-स्य विकसितत्वद्योतनार्थं निशापदं । चकोरैः गतिबुद्धीति (पा० १ । ४ । ५२) कर्मत्वप्राप्तावपि आदिखाद्योर्न (पा०१।४।५२।वा-२) इति प्रतिषेधात् कर्तरि तृतीया । आदयमानं निगरणचलनार्थत्वात् परस्मैपदप्राप्तावपि अदेः प्रतिषेधो वक्तव्य (पा०१।३।८७।वा १) इति नियमात् पि-बतेति (पा० १ । ३ ७४) तङ् ॥ ४३ ॥

असंशयं सागरभागुदस्थात् पृथ्वीधरादेव मथे पुराऽयं । अमुष्य यस्मादधुनाऽपि सिन्धौ स्थितस्य शैलादुदयं प्रतीमः ॥ ४४ ॥

असंशयमिति । पुरा पूर्वं सागरभाक् समुद्रगतस्योऽयं चन्द्रः मथो-दण्डभूतात् पृथ्वीधरात् पर्वतान्मन्दराद्रेरेव हेतोरुदस्थादुत्पन्न इत्यसं-शयं निश्चितं पुराणादौ यदेव श्रूयते तत् सत्यमित्यर्थः । पुरा उदस्थात् प्रथमसम्भवावसरे तस्य देव समुत्थितं इति वा । तत्र हेतुमाह यस्माद्वेतारधुनाऽपि सम्भवान्तरावसरेऽपि सिन्धौ स्थितस्य सागरगर्भस्थस्याप्यमुष्य चन्द्रस्य शैलादुदयाचलादेवोदयमुत्पत्तिं प्रतीमः जानीमः ।

प्रत्यह सागरस्यस्याप्यस्याचलोदयशिखोलस्यरूपलिङ्गदर्शनात् समुद्रमध्ये प्रथमसम्भवावसरेऽप्ययमचलादेवोत्पन्न इति निश्चिनुमइत्यर्थः । उदयाचलशिखरं चन्द्रोऽतिक्रामतीति भावः ॥ ४४ ॥

निजानुजेनातिथितामुपेतः प्राचीपतेर्वाहनवारणेन । सिन्दूरसान्द्रे किमकारि मूर्द्धनि तेनारुणश्रीरयमुज्जिहीते ॥ ४५ ॥

निजेति । निजानुजेन एकस्मात् सिन्धोरुत्पन्नतया अस्माच्चन्द्रात् पश्चाज्जातेन कनीयसा भ्रात्रा प्राचीपतेरिन्द्रस्य वाहनवारणेन प्राच्यां स्थितेनैरावतेनातिथितामुपेत प्राप्तः प्राच्यामुदितत्वात् तत्सविध प्राप्त सन्नय चन्द्रोऽग्रजत्वात् सिन्दूरेण सान्द्रे मूर्द्धि अकारि कृत किं । गौरवान्नमस्कारपूर्वं शिरस्यारोपित किमित्यर्थ । तेन सान्द्रसिन्दूरशिर स्थापनेन हेतुना लग्नसिन्दूरवशादयमरुणश्रीरारक्तशोभ उज्जिहीते, उदयते । उज्जिहीते किमिति वा । उदयचन्द्र. सिन्दूररक्तो दृश्यत इत्यर्थ ॥ ४५

यत् प्रीतिमद्भिर्वदनैः स्वसाम्यादचुम्बि नाकाधिपनायिकानां । ततस्तदीयाधरयावयोगादुदेति बिम्बारुणबिम्ब एषः ॥ ४६ ॥

यदिति । वृत्तत्वादिगुणयोगेन स्वसाम्यात् प्रीतिमद्भि. नाकाधिपस्येन्द्रस्य नायिकानां वदनैर्यस्मात् स्वसविधमागत एष चन्द्रोऽचुम्बि तस्माद्धेतोस्तस्माच्चुम्बनाद्वा तदीयानां देवेन्द्रनायिकानामधरेषु न्यस्तो यावोऽलक्तकस्तस्य योगात सम्बन्धाद्धेतो बिम्बवत् पक्वबिम्बीफलवदरुण बिम्ब मण्डल यस्य तादृश उदेति । अन्याऽपि समान सवर्णाविधमागत मन् सत्या प्रीत्या चुम्ब्यते । मुखैरिति बहुवचनेन तत्र प्रदेशे युगपदेव चुम्बनाद्बहुलयावकयोगात् सकलस्यापि चन्द्रबिम्बस्य रक्तत्व युक्तमिति सूचितम् ॥ ४६ ॥

शिलामिवाङ्कातिकरणादुदुरूढदृगादिना द्रष्टया

लोचनादि । विधिर्विधत्ते विधुनावधूनां किमाननं काञ्चनसञ्चकेन ॥ ४७ ॥

विलोमितेति । विधि विधुना चन्द्रेणैव काञ्चनस्य सञ्चकेन चि-त्रकेण कृत्वा वधूनामसिरमणीयमाननं विधत्ते किं । किम्भूतेन । वि लोमितः पराङ्मुखः कृतः स्वप्रभया जितोऽङ्कः कलङ्को येन एतादृशा दुष्कष्टादतितेजस्विनः किरणाद्धेतोर्दुरूहो दुस्तर्क्यं दृगादिर्नेत्राद्यव-यवो यस्य, अथ च विपरीतीकृतानामङ्गानां नेत्रादिनिम्नांशार्थं निम्नो-न्नताद्यवयवस्थानानामुत्किरण सञ्चुद्दन तस्माद्धेतो, साक्षादलक्ष्यनेत्रक-र्णनासिकाद्यवयवेन, आननञ्च साक्षाद्दृश्या विलोचनादयो नासाकर्णा द्यवयवा यस्य तादृशं, तस्मिन् ब्रह्मा स्त्रीमुखं चन्द्ररूपेण महाराष्ट्रभा षया ठसा इत्याख्येन स्वर्णस्य मञ्जूषेण निम्मसे, सञ्चके हि निष्पाद्य-स्य वस्तुनो निम्नोन्नतभागा विपरीता एवोत्कीर्य्यन्ते तत्र च नेत्राद्यव-यवा दुर्ज्ञेया भवन्ति भवन्निर्म्मितमुखादौ च दृश्या भवन्ति तस्मादेव तर्क्यं इत्यर्थं । उदितमात्रश्चन्द्रोऽत्यन्तमसुवर्णसञ्चकमङ्गको दृश्यत इ ति भावः । उत्तम सुवर्णं रक्तवर्णं भवति । आननमिति जात्येकव-चनं ॥ ४७ ॥

अनेन वेधा विपरीतरूपविनिर्म्मिताङ्गोत्किरणाङ्ककेन । त्वदाननं दृश्यदृगाद्यलक्ष्यदृगादिनैवाकृत सञ्चकेन ॥ ४८ ॥

अनेनेति । वेधा विपरीतरूपं यथा तथा विनिर्म्मितमुक्तविध-मङ्गोत्किरणं यत्र तादृशमङ्कं यस्य तेन तथाऽलक्ष्यदृगादिना अनेन चन्द्रेणैव सञ्चकेन दृश्यं सुन्दरमथच मत्यद्दर्शनयोग्य दृगादि यस्य तादृशं त्वदाननमकृत त्वदाननमेव कृत, नत्वन्याननमिति वा, अय-मेवात्र श्लोके विशेष । अयं श्लोकः दीपकं ॥ ४८ ॥

अस्याः सुराधीशदिशः पुराऽऽसीद्यदम्बरं पीतमिदं रजन्या । चन्द्रांशुचूर्णव्यतिचुम्बितेन तेना

घना नूनमलोहितायि ॥ ४९ ॥

अस्या इति । हे भैमि अस्याः सुराधीशस्येन्द्रस्य दिशः यदम्बरं गगनं वस्त्रञ्च पुरा चन्द्रोदयात् पूर्वं रजन्या रात्र्या हरिद्रया च पीतं तमोव्याप्तत्वाददृश्यं पीतवर्णं वा आसीत्, तेन गगनेन वस्त्रेण वा अधुना चन्द्रोदये चन्द्रांशुना चूर्णं श्लक्ष्णसूक्ष्मतेजोलेशैः कर्तृभिर्व्यति-षुस्थितेनातितरां स्पर्शेन सता चन्द्रांशुवच्छुभ्रतरेण चूर्णेन ताम्बूल-साधनचूर्णद्रव्येण स्पृष्टेन सता नूनमलोहितायि, आरक्तीभूतं । यत् तमसा पूर्वं नीलमभूत् तदेवेदानीमुद्यच्चन्द्रलोहितकरसंस्पर्शाद्रक्त-मासीदित्यर्थः । हरिद्रया पीतवर्णं वस्त्रं चूर्णेन युक्तं सद् रक्तं भवति । देवस्त्रियश्च वस्त्राणि नानावर्णयुक्तानि । चन्द्रांशव एव चूर्णमिति वा । अलोहितायि लोहितादिडाज्भ्य इति ( पा०३।१।१३ ) क्यषन्ता-ल्लुङि चिण् ॥ ४९ ॥

तानीव गत्वा पितृलोकमेनमरञ्जयन् यानि स्स जामदग्न्य । छित्वा शिरांस्यस्राणि सहस्रबाहो र्विस्राणि विश्राणितवान् पितृभ्य ॥ ५० ॥

तानीति । सोऽतिवीरो जामदग्न्यः सहस्रबाहोः शिरांसि छित्त्वा वि-स्राणि आमगन्धीनि यान्यस्राणि रक्तानि पितृभ्यो जमदग्न्यादिभ्यो विश्राणितवान् दत्तवान् यैः रक्तैः प्रतिज्ञातं पितृतर्पणं कृतवान् तान्येव रक्तानि मन्त्रबलात् पितृलोकं गत्वा प्राप्य पितृलोकाधीशमेनं चन्द्रमरञ्जयन्, रक्तं चक्रुरिव । "चन्द्रो वै पितृलोकः" इति श्रुतेः । चन्द्रो रक्तवर्णो दृश्यत इति भावः । परशुरामः सहस्रार्जुनं हत्वा तदीयैः रक्तैः पितृतर्पणं कृतवानितीतिहासः । विस्रं स्यादामगन्धि यदित्यमरः ॥ ५० ॥

शुक्रस्य नामग्रपते मुखं ते पश्यन्ति सीतास्यमिवाभिरामं । रक्तोऽस्त्वयशी यत लक्ष्मणाभिभूतः शशी नृपेन्द्रगामगुणामः ॥ ५१ ॥

सूच्यते । सज्जनस्य तु ग्रन्थविवेचनोपायमाह । श्रद्धेति । श्रद्धया गुरौ दैवतैक्यबुद्ध्या राद्धेन पूजितेन गुरुणा पूर्वं मयापि श्रया कृता व्याख्यया सुबोधा कृता दृढा स्वरूपतो दुर्बोधा ग्रन्थयोऽसौ न गुरुसम्प्रदायावगतार्थोऽत एव दर्पराहित्यात् सज्जन माधुरैतत्काव्यस्य रसोर्मिरमृतलहरी तस्यां मज्जनं तज्जनितसुखेषु विश्रमेण च समन्तादवगाहनं च मज्जनमवस्थानं समासादयतु प्राप्नोतु, गुरुपरम्परया ऽपि विना एकस्यापि पद्यस्यार्थो बोद्धुं न शक्यत तस्माद् गुरुपरम्परया सुवाध्येयमिदं काव्यमित्यर्थः । यश्चेदं गुरुपरम्परया अधीते स सततं सुखी भवति इति महाकविस्तस्याशिषं ददाति । अस्मिन् पद्विनीत्यस्य च विषयस्येति कर्मणि सप्तमी । आराद्धेति राधेरनुदात्तत्वादिड्भावः ॥ १५४ ॥

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरा
द्यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदा
र्णवं । यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु य
स्योक्तयः श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्या
भ्युदीयादियम् ॥ १५५ ॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते । ताम्बूलेति । यः कान्यकुब्जेश्वरात् सकाशात् सकलपण्डिताधिकव्यञ्जनम् ताम्बूलद्वयं विद्वद्योग्यमासनञ्च लभते । न केवलं राजपूज्य एव किन्तु, यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमादार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते । न परं पूर्वोक्तगुणविशिष्टो ब्रह्मविदेव किन्तु, यदीयं काव्यम् मधुवर्षि„ अतिसरसत्वादमृतवर्षि । न परं पूर्वोक्तगुणविशिष्टोऽतिसरसो महाकविरेव„ किन्तु, तर्केष्वपि यस्योक्तयः धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः । तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः सुकृतिना सुधिया मुदे आनन्दायाभ्युदीयात्„ कृतिनामानन्दं कुर्वती सती अक्षरयमतिवृद्धिं प्राप्नुयादित्याशीः । अत्र च मध्वन्दि-

धांहो गुरु एव । अभ्युदीयादिति इण् गताविल्यस्य रूपम् ॥ १५५ ॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
यस्मिन्नेव पथि प्रवर्त्तनपराः सत्कीर्त्तयश्चापरे ।
अन्ये निःस्पृहयाश्रितश्रुतिपथा दीव्यन्तु भव्याशयाः
काकन्तः कलहप्रियाः खलजना नश्यन्तु जीवन्तु वा ॥
वासनामस्य रामस्य किङ्करस्य जगत्पतेः ।
न चेत्पूरय कल्पेश कल्पते तव किङ्करः ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते चन्द्रनैषधीयप्रकाशे द्वाविंशतितमः सर्गः ॥ २२ ॥

समाप्तोऽयं ग्रन्थः ॥

